2.4 Scan

# न्यायसिद्धान्तमुक्तावली

# NYĀYASIDDHĀNT - MUKTĀVALĪ

OF

ŚRĪ VIŚVANĀTH-PAÑCĀNAN-BHATTĀCĀRYA

WITH

'PRABHĀ' - COMMENTARY,

BY

ŚRĪ NṚISIṆHA - DEV - ŚĀSTRĪ

VYĀS PRAKĀSHAN

VARANASI

## About the Book

When obserevations and purceptions are adjudged on the basis of prescribed criteria; inferences and results can easily be drawn.

This method of inductive logic is comparable with the school of Nāyya, with a notable difference that the earlier is used for objective results whereas the later, giving subjective inferences, has become a prominent school of Indian philosophy.

After having written a critical commentary — Kārikāvali — on the Ṅyāyasūtras, the great scholar Viśvanāth Pañcanan Bhattacārya found that his commentary could not be understood by his student Rajīv. Therefore, in Śaka 1556 (1634 A./D. ), he wrote Muktāvali a lucid and explainatory treatise on the concept of Nyāya.

This edition is comprised of Muktāvali along with a commentary 'Prabhā' written by Lri Nṛisiṃhadeva, a scholar of the first quarter of this century.

श्री विश्वनाथपञ्चाननभट्टाचार्यप्रणीता

# न्यायसिद्धान्तमुक्तावली

श्रीनृसिंहदेवशास्त्रिणा विरचितया
'प्रभा'ख्यया व्याख्यया समुद्भासिता

व्यास प्रकाशन
वाराणसी

# NYĀYASIDDHĀNT - MUKTĀVALI

OF

ŚRĪ VIŚVANĀTH-PAṄCĀNAN-BHATTĀCĀRYA

WITH

'PRABHĀ' - COMMENTARY

BY

ŚRĪ NṚISINHA - DEV - ŚĀSTRĪ

VYAS PRAKĀSHAN

VARANASI



# अथ "न्यायतत्त्वसमीक्षा" भूमिका ।

**न्यायदर्शनम्**—प्रमाणैरर्थपरीक्षणं "न्यायः" दृश्यतेऽनेनेति "दर्शनम्" न्यायस्य दर्शनम् "न्यायदर्शनम्" "न्यायशास्त्र"मिति. यावत् । शास्त्रं दर्शनमित्यनर्थान्तरम् । "**असाधारण्येन व्यपदेशा भवन्ति**" इति न्यायेन परार्थानुमानापरपर्यायस्य सकलविद्यानुग्राहकतया सर्वकर्मानुष्ठानसाधनतया च प्रधानत्वेन तथा व्यपदेशोपि युज्यते । उक्तञ्च सर्वदर्शनसंग्रहे—"सोऽयं परमो न्यायः, विप्रतिपन्नपुरुषप्रतिपादकत्वात् तथाप्रवृत्तिहेतुत्वाच्च" इति । तदिदं गोतममुनिप्रणीतं "**प्रमाणप्रमेयसंशयप्रयोजन.**" (न्या० १-१-१) इत्याद्यारभ्य "**हेत्वाभासाश्च यथोक्ताः**" (न्या० ५-२-२५) इत्येतत्पर्यन्तं पञ्चाध्यायात्मकं सूत्रोपनिबद्धं शास्त्रं "न्यायशास्त्रं "न्यायदर्शनम्" वेत्युच्यते । उक्तञ्च "**वात्स्यायान**"मुनिना "प्रत्यक्षागमाश्रितमनुमानं न्यायः" । "प्रत्यक्षागमाश्रित" मिति प्रत्यक्षागमाऽविरोधि । यदि ह्यनुमानाधिगतोऽर्थः प्रत्यक्षागमाभ्यामनुसन्धीयते, अथ स्फुटतरप्रत्ययो भवतीति न्यायवार्त्तिकेऽप्युक्तम् । इयमेव "आन्वीक्षिकी विद्या" इत्युच्यते । सेयम्ः—

प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम् ।
आश्रयः सर्वधर्माणां विद्योद्देशे प्रकीर्त्तिता ॥

ततश्च—"वेदार्थाविरोधितर्कोपयिकवैदिकतत्त्वसंरक्षणोपयोगिप्रमाणादिपदार्थप्रतिपादकत्वं "न्यायशास्त्रत्व"मित्युक्तम्भवति । मनुरप्याह—

आर्षं धर्मोपदेशञ्च वेदशास्त्राऽविरोधिना,
यस्तर्केणाऽनुसन्धत्ते स धर्मं वेद नेतरः । इति—

(मनु० अ० १२-श्लोक १०७)

मोक्षधर्मेऽपि—

तत्रोपनिषदं तात ! परिशेषन्तु पार्थिव ! ।
मथ्नामि मनसा तात ! दृष्ट्वा चान्वीक्षिकीं पराम् ॥

इत्युक्तम् । यद्यपि वेदशास्त्राऽविरोधितर्कपदेन पूर्वोत्तरमीमांसारूपस्यैव तर्कस्य साक्षादुपादानानं कर्तुं योग्यम्, तथैव च विवादितम्, तस्यैव विचाररूपस्यासम्भावनाविपरीतभावनानिवर्त्तकतया वेदात्मकप्रमाणानुग्राहकत्वात्, अत एव "स्वाध्यायवन्न करणं घटते विचार" इत्यादि सर्वज्ञात्ममुनिभिरप्युक्तं, ततश्च तदितरतर्कवैयर्थ्यमागतं भवति, तथापि तदुपका-

राय प्रवृत्तस्यास्यापि दर्शनस्य तच्छेषतया तत्पदव्यवहार्यत्वं न दोषाय, राजोपकारार्थं प्रवृत्तस्य प्रधानामात्यस्योपकारे प्रवर्त्तमानभृत्यवत्। भवति हि प्रधानामात्योपकारी भृत्योपि राजोपकारीति। एतदभिप्रेत्यैव "सर्वेषां शास्त्राणां भगवत्येव तात्पर्य"मिति **प्रस्थानभेदे** "मधुसूदनसरस्वतीनां" सरस्वती समवातरत्।

ननु--आस्तिकानां कृते वैदिकतत्त्वनिर्णयाय ईश्वरप्रभवत्वेन निरस्तसमस्तपुन्दूषणतया वेदा एव प्रमाणं तत्किमर्थमेवमुच्यते तर्कस्योपयोग इति ? उच्यते--सत्यमेवमेतत् तथापि महाजनपरिगृहीतागमप्रामाण्यविप्लावनतत्परचार्वाकादिकुतर्ककुठारकुण्ठीकरणक्षमतयाऽस्य शास्त्रस्य वैदिकसिद्धान्तरक्षणे परमोपयोगं मन्यन्ते आगमविद, नहि निरीश्वरवादिदुर्दान्तचार्वाकादिकुमतपरासनमनायासेन न्यायशास्त्राश्रयणमन्तरा भवितुमर्हति। उक्तञ्च स्वयमेव महर्षिणा--

**"तत्त्वाध्यवसायसंरक्षणार्थं जल्पवितण्डे बीजप्ररोहसंरक्षणार्थं कण्टकशाखावरणवत्"** (न्या० ४। २। ४८) इति। अत एव "जल्पस्थले संशयस्यावश्यकत्वेऽपि वादस्थले न तथा, इति संशयमन्तरेणापि अनुमित्साधीनानुमितिनिर्वाहाय न्यायप्रयोगसम्भवात्" इति अवयवग्रन्थनिरूपणे "**गदाधरभट्टाचार्य**" उक्तवान्। तथाच "सन्दिग्धेऽर्थेन्यायः प्रवर्त्तते इति नियमस्तु जल्प एव नतु वादे" इति चान्यत्राप्युक्तम्। संशयादीनामाहृत्य स्वरूपप्ररूपणञ्चास्मिन्नेव शास्त्रे कृतमिति कथं न स्यादस्यापि वेदार्थनिर्णया * योपयोगः।

**अयमभिसन्धिः**—एवं हि निरीश्वरवादिनश्चार्वाकप्रभृतय आचक्षते, आकस्मिकमिदञ्जगत्। नास्य कश्चिद् रचयिता ईश्वरो नाम सर्वज्ञः सर्वशक्तिशाली पुरुषविशेषः। भूमिवार्यनलानिलानां भूतानां विजातीयसंयोगात् किण्वेभ्यो मदशक्तिरिव चितिशक्तिरुत्पद्यते उत्तरोत्तरञ्च पदार्थस्वभावा विकसन्तो नानाविधरचनाभिर्वीचित्रयन्तो दरीदृश्यन्ते। यत्र च "अहं स्थूलः अहं कृश" इति सामानाधिकरण्यप्रत्यय उदेति स एव भोक्तापरपर्यायो देह आत्मा, तदतिरिक्त आत्मनि प्रमाणाभावात्। प्रत्यक्षातिरिक्तञ्च नास्ति प्रमाणम्। नवा परलोकः सुकृतासुकृतसन्धानक्षमो नियन्तृविशेषापेक्षोऽपीत्यादि। तत्रैवञ्जातीयकानां कुतर्काणां समूलोन्मूलनं तर्कशास्त्रादेव भवितुमर्हति। अतएवोत्तरमीमांसायमपि दुर्दान्तवादिमतदलदलनाय श्रुतिप्रमाणापेक्षां परिहाय शास्त्रार्थाहवे केवलस्तर्कपादः पदातिमुख्यतां नीतः। तच्च तत्रैव कणेहस्य निरीक्ष्यम्। यदि प्रत्यक्षातिरिक्तमनुमानं प्रमाणं न स्यात् कथं तर्हि अप्रतिपन्नाः सन्दिग्धाः विपर्यस्ताश्च पुरषाः प्रतिपद्येरन्। अर्थात् "अयमज्ञानी, अयं संशयाकुलः, अयं भ्रान्तिमान्" इति ज्ञातुं चार्वाकादिः कथं प्रभवेत् यदि नामानुमानं प्रमाणं न स्यात्। नहि कश्चिदपि गौरत्वादिदेहधर्ममिव पुरुषान्तरवार्त्तिनोऽज्ञानादीन् कल्पकोटिभिरपि प्रत्यक्षेणाध्यक्षीकर्तुं क्षमते। मा नाम योगिप्रत्यक्षविषयान् परकीयाज्ञानादीन्

---

* वेदार्थ ईश्वरादिः।

चार्वाको वराको ज्ञासीत् अज्ञातापरकीयाज्ञानसंशयविपर्यासस्तु यं कञ्चनापि पुरुषं प्रति वर्त्तमानोऽनवधेयवचनतया प्रेक्षावद्भिर्नितान्तमुपेक्षणीयः सतां संसदि । तस्मात्परपुरुषवर्त्तिनोऽज्ञानादयोऽभिप्रायभेदा वचनभेदात्मकलिङ्गबलान्नास्तिकेनाप्यनुमेया मन्तव्याः अन्यथा सकलव्यवहारोपप्लवप्रसङ्ग इत्यकामेनाप्यनुमानं मानमभ्युपेयम् । एवं सति प्रत्यक्षाभावेऽपि कार्यलिङ्गेनानुमानेन ईश्वरसिद्धौ न किमपि बाधकं पश्यामः । अर्थात् यद्यपि रूपरसाद्यभावादीश्वररूपोऽर्थो न प्रत्यक्षगोचरः, तदभावादेव च व्याप्तेरभावान्नानुमानगम्योऽपि, सादृश्याभावान्नोपमानमान्यः, तदभावादेव च तत्कर्तृकागमाभावःतदविषयश्च, दुर्जनतोषन्यायेनागमस्वीकारेऽपि इतरेतराश्रयादिदोषगणग्रस्ततयाऽऽगमस्य तत्साधने सर्वथाऽसामर्थ्यमेवेति कुचोद्यजातमवतरति तथापि कार्यलिङ्गकमनुमानमीश्वरसाधने युक्तमीक्षामहे-तथाहि—"**क्षित्यङ्कुरादिकं कर्त्तृजन्यं कार्यत्वाद् घटवद्**" इति । "यद् यद् घटादिकार्यमुपलभ्यते तत् तत्सर्वमेव कुविन्दादिकर्तृजन्यमेवोपलभ्यते अस्ति च क्षित्यङ्कुरादिकमपि कार्यत्वधर्मोपेतं तत् कथं कर्त्तारमन्तरोत्पद्येतेति भवितव्यं तस्यापि केनचित् कर्त्रा, अस्माकमल्पज्ञानशक्तिमतां तु तत्कर्त्तृत्वं स्वप्नेऽपि नार्हति भवितुम् । जडश्च ( परमाण्वादि ) स्वयं किमपि कुर्वन्नोपलभामहे तस्माद्यस्तस्य कर्त्ता स एवेश्वरः सर्वज्ञः सर्वशक्तिमांश्चेति निष्कण्टकः पन्थाः ।

नन्वत्र किं पक्षतावच्छेदकम् ? न तावत् क्षितित्वम्=पृथिवीत्वम् अङ्कुरादेरपि क्षितित्वेन पृथक्तदुपादानवैयर्थ्यात्, पृथिवीत्वस्यैव पक्षतावच्छेदकत्वे अङ्कुरस्यापि पृथिवीकार्यतया पृथिवीत्वेन पृथक् तदुपादानं व्यर्थमेवेत्याशयः । अथ ब्रूषे पक्षकुक्षिनिक्षिप्तक्षितिपदस्य भूमण्डलपरतया भूमण्डलाङ्कुरादीनां सर्वेषामेव पक्षत्वलाभः, ततश्च सर्वानुगतं पक्षतावच्छेदकं किमिति पृष्टे सति "पृथिवीत्व" मेवेत्युत्तरे नाङ्कुरादिपदोपादानवैयर्थ्यं तदा पृच्छ्यते किं प्रकृते क्षितित्वसामानाधिकरण्येन=पक्षतावच्छेदकसामानाधिकरण्येन साध्यसिद्धिरुद्देश्या ? पक्षतावच्छेदकावच्छेदकसामानाधिकरण्येन वा ? । आद्ये दृष्टान्तभूतघटादौ अंशतः सिद्धसाधनम् । नहि तत्र कार्यत्वेन कर्त्तृजन्यत्वे कस्यचिद्विवादः । द्वितीये पृथिवीपरमाणौ क्षितित्वसत्त्वेऽपि कार्यत्वहेतोर्बाधः । नहि भवता तत्र कार्यत्वं स्वीकर्तुं शक्यं क्षितित्वसत्त्वेऽपि । अथ जन्यक्षितित्वं पक्षतावच्छेदकं चेत् ? तदा व्यर्थविशेषणं परमतेऽजन्यक्षितेरभावात् । किञ्च जन्यत्वस्यैव पक्षतावच्छेदकत्वे पक्षतावच्छेदककोटौ क्षितित्वनिवेशो व्यर्थः । अपि चैवं जन्यत्वकार्यत्वयोरविशेषात् पक्षतावच्छेदकहेत्वोरैक्यप्रसङ्गोऽनिवार्य इति । **अत्रोच्यते**—"स्वरूपसम्बन्धविशेषरूपकार्यत्वं पक्षतावच्छेदकं प्रागभावप्रतियोगित्वरूपं कार्यत्वं हेतुतावच्छेदक"मिति न पक्षतावच्छेदकहेत्वोरैक्यापत्तिरिति सकलदोषपरिहारः ।

विवेचितः पक्षः साध्यमिदानीं विवेचयामः—कर्त्तृजन्यत्वं साध्यं न तावत्स्वोपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमज्जन्यत्वम् यतः कार्यमात्रं प्रति अन्वयव्यतिरेकाभ्यां कृतिरेव कारणं, कृतिजन्यज्ञानचिकीर्षयोर्घटं प्रति रासभस्येवान्यथासिद्धत्वम्, तेन च तत्त्रितयजन्यत्वरूपस्य साध्यस्य बाधः । अपि च यादृशं स्वत्वं दृष्टान्तभूतघटादौ न तादृशं पक्षवृत्तीति

दृष्टान्तपक्षसाधारणस्य स्वत्वस्यैकस्याभावात् तद्घटित"स्वोपादानगोचरे"त्यादिसाध्यस्य सुतरामसम्भव एवेति चेन्न ? कार्यमात्रं प्रतिकृतित्वेनान्वयव्यतिरेकाभ्यां ज्ञानत्वेन इच्छात्वेन च हेतुत्वस्वीकारात्। तादृशज्ञानजन्यत्वस्य कृतिजन्यत्वरूपस्य वा साध्यस्य विवक्षितत्वे बाधानवतारात्।

अत्राहुरार्हताः*—नोक्तानुमानेनेश्वरसिद्धिः कार्यत्वहेतोरेवाऽसिद्धेः। नच "क्षित्यादि कार्यं सावयवत्वात् पटवद्" इति वाच्यम्, सावयवत्वस्यैवानिरुक्तेः। तथाहि—सावयवत्वं (१) किमवयसंयोगित्वं (२) अवयवसमवायित्वं वा ? (३) अवयवजन्यत्वं वा ? (४) समवेतद्रव्यत्वं वा (५) सावयवबुद्धिविषयत्वं वेति पञ्च विकल्पाः। न तावदाद्यः पक्षः क्षोदक्षमः ? आकाशस्य कपालवयवसंयोगित्वेऽपि कार्यत्वाभावात्, तेन "सावयवत्वं" हेतुरनैकान्तः। द्वितीयोऽपि न सामान्यादौ व्यभिचारात्, नहि अवयवत्वरूपं सामान्यमवयवेषु समवायसम्बधेन न वर्त्तते इति तवापि स्वीकारः। नच तृतीयः साध्यविशिष्टत्वेन साध्यसमत्वात्, यथा क्षित्यादिषु कार्यत्वं साध्यं तथाऽवयवजन्यत्वमपि साध्यं, तेन साध्येनाविशिष्टत्वात् साध्यसमो हेत्वाभासः। चतुर्थे तु विकल्पद्वयमवतरति—किमिदं नाम समवेतद्रव्यत्वम् ? (१) समवायसम्बन्धमात्रवद्द्रव्यत्वमिति चेत् १ आकाशादौ व्यभिचारः गुणादिसमवायस्य तत्र सत्त्वात् द्रव्यत्वस्यापि च विद्यमानत्वात्। अथान्यत्र (२) समवेतद्रव्यत्वं विवक्षितं तदा पूर्ववत्साध्याविशिष्टत्वेन साध्यसमता। वस्तुतस्तु समवाय एव नास्ति प्रमाणाभावात्। नापि पञ्चमः, सावयवबुद्धिविषयत्वेऽपि कार्यत्वाभावादात्मन्यनैकान्तिकता यतः।

किञ्च—यद्येकः कर्त्ता साध्यते तदा विशिष्टकार्येषु प्रासादादिषु व्यभिचारः, तत्र स्थपत्यादीनां बहूनां पुरुषाणां कर्त्तृत्वोपलम्भात्। कर्त्तृबहुत्वं चेत् ? तदा तवैवापसिद्धान्तः। तस्माज्जगत्कर्त्तुरीश्वरस्याङ्गीकारो युक्तिपराहतः तथासति रागादिविशिष्टतया तस्यानीश्वरत्वप्रसङ्ग एव। उक्तञ्च वीतरागस्तुतौ—

कर्त्तास्ति नित्यो जगतः सचैकः
स सर्वगः सन्स्ववशः स सत्यः।
इमाः कुहेयाः कुविडम्बनाः स्यु-
स्तेषां न येषा-मनुशासकस्त्वम्। इति ॥

तदेतदनालोचितकर्कशतर्कस्वरूपाणां विसिचामभिधानमाकाशमुष्टिहननायते। तथाहि—"कार्यत्वं" हेतुर्नासिद्धः सावयवत्वेन तस्य साधनात्। "सावयवत्व"ञ्च समवेतद्रव्यत्वम्। तच्च—जन्यत्वे सति समवायसम्बन्धावच्छिन्नस्वाश्रयवृत्तिमत्त्वम्। तेन नैव जन्यगुणादिमदाकाशादिषु व्यभिचारः। जन्यत्वे सत्यवयवसमवायित्वं वा" तेन सामान्ये नानैकान्तिकता। अवयवजन्यत्वं वाऽस्तु। नच साध्यसमता क्षित्यादिष्वजन्यत्वस्य भवताऽप्यस्वीकारादिति सूक्ष्ममीक्ष्यताम्।

सावयवबुद्धिविषयत्वं वा कार्यत्वमस्तु तावतापि न दोषः। नचात्मन्यनैकान्तिकता।

---

* प्रमेयकमलमार्त्तण्डीयपक्षमर्थत उपक्षिप्य प्रतिक्षिपति।

तादृशबुद्धिविषयत्वे तत्र कार्यत्वावश्यम्भावस्वीकारप्रसङ्गात् तत एवच तत्रानात्मत्वापत्तेः। अपिच "आत्माऽनित्यः सावयवत्वात् घटादिवद्" इत्याभाससाम्यप्रसङ्ग आर्हतपक्षेऽनिवार्यः, कथञ्चित्तदिष्टमितिचेदनात्मत्वप्रसङ्गः तदपि तथैवेति चेत् ? तदा व्यवसायात्मकप्रत्ययमनासादयतो जैनस्य सर्वथानाश्वस्ततया लोकालोकबाह्यत्वेन नितान्तमेव कल्याणेप्सुभिरनादरणीयतैवेति निष्पक्षदृशा समीक्ष्यम्। नच समवाय एव नास्तीति वाच्यम् "रूपी" इत्यादि विशिष्टबुद्ध्यनुपपत्तेः। स्वरूपसम्बन्धे चानन्तस्वरूपकल्पनाऽपरिहार्या। तत्स्थाने च भवतापि स्वीक्रियमाणे कथञ्चित्तादात्म्यलक्षणसम्बन्धे * विविधदूषणगणप्रसरप्रसङ्गात्। ननु—वेदविदभिमतौपनिषदराद्धान्तनुयायिनस्तवाचार्यविरुद्धसमवायाङ्गीकारः कथं शोभते ? उच्यते—आचार्याणां समवायखण्डनस्यानिर्वचनीयतापर्यवसायित्वेन तादृशाधिकारिजनौपयिकव्यवहारभूमिमाश्रित्य तदखण्डनत्वेन विरोधाभावात्। भवता तथाङ्गीकारेऽपसिद्धान्तापत्तेः। मम तु सकलशास्त्रमहावाक्यैकवाक्यतायां निर्णीयमानायां सर्वास्तिकपरमाचार्योक्तिषु विरोधसम्भावनाया अपि दूरोत्सारित्वात्।

तदेतत् कृतविस्तरमस्मत्प्रणीत**दर्शनाऽविरोधसमीक्षायाम्**। एवञ्च सावयवत्वेन "कार्यत्वं" हेतुर्नासिद्धः। अथवा "**क्षित्यादि कार्यं भावत्वे सति विनाशित्वात् पटवत्**"। यत्र यत्र भावत्वे सति विनाशित्वं तत्र तत्र कार्यत्वम्। किंवा "यत्र यत्र कार्यत्वे सति भावत्वं तत्र तत्र विनाशित्वम्" इति विनाशित्वकार्यत्वयोः समैव व्याप्तिः। उक्तञ्च **कुमारिलभट्टेन**—

> तेन यत्राप्युभौ धर्मौ व्याप्यव्यापकसम्मतौ।
> तत्रापि व्याप्यतैव स्यादङ्गं न व्यापिता मितेः॥
>
> (मी० श्लो० वा० अनु० खं० श्लो० ६।)

**पार्थसारथिमिश्रोऽप्याह**—"यत्र न्यूनाधिकभावेन व्याप्यव्यापकभावत्वमसङ्कीर्णं यथा गोत्वविषाणित्वयोः तत्र व्याप्यमेव गोत्वं विषाणित्वमनुमापयति ननु व्यापिका विषाणिता गोत्वम्, अतः समोदाहरणेऽपि व्याप्यतैवानुमितेरनुमानस्याङ्गं न व्यापकते'ति। एवमीश्वरवादविद्विषां "कार्यत्वं" हेतुः स्वरूपासिद्ध इत्यभिधानमसत्। नापि कार्यत्वं व्यभिचारि पक्षादन्यत्र साध्याभावाधिकरणे आत्मादौ वृत्तेरप्रसिद्धेः। नच वनस्थतरुतृणादिषु व्यभिचारोद्भावनसम्भावना स्वप्नेऽपि सुसम्पादा तेषां पक्षान्तर्गतत्वेन पक्षैकदेशत्वात्। पक्षैकदेशे व्यभिचारोद्भावनस्य सकलकथकसम्प्रदायविरुद्धत्वाच। नचायं हेतुर्विरुद्धः साध्याभावव्याप्तेरभावात्। नापि कालात्ययापदिष्टः बाधकस्यानुपलम्भात्। नच सत्प्रतिपक्षः साध्याभावसाधकस्य हेत्वन्तरस्याऽदर्शनात्।

---

* अयमेव "अविष्वग्भावलक्षणः सम्बन्ध" इत्युच्यते आर्हतैः। तथाच "स्याद्वादमञ्जर्यां" **मल्लिषेणसूरिणा**—तस्माद्धर्मधर्मिणोरविष्वग्भावलक्षण एव सम्बन्धः प्रतिपत्तव्यो नान्यः समवायादिरिति।

एवमेव "भूभूधरादयो बुद्धिमत्कर्तृका: सन्निवेशविशिष्टत्वात् गृहादिवद्" इत्यनुमानमपि ईश्वरसाधकं बोध्यम् । अत्राहुः—

सन्निवेशविशिष्टानामुत्पत्तिं यो गृहादिवत् ।
साधयेच्चेतनाधिष्ठां देहानां तस्य चोत्तरम् ॥
कस्यचिद्धेतुमात्रत्वं यद्यधिष्ठातृतेष्यते ।
कर्मभि: सर्वजीवानां तत्सिद्धे: सिद्धसाधनम् ॥
इच्छापूर्वकपक्षेऽपि तत्पूर्वत्वेन कर्मणाम् ।
इच्छानन्तरसिद्धिस्तु दृष्टान्तेऽपि न विद्यते ॥
अनेकान्तश्च हेतुस्ते तच्छरीरादिना भवेत् ।
उत्पत्तिमांश्च तद्देहो देहत्वादस्मदादिवत् ॥ इति ॥

अस्यायमाशय:- सन्निवेशविशिष्टत्वेन प्रासादादिवत् भूभूधरादीनां यदबुद्धिमच्चेतनकर्तृजन्यत्वं साध्यत ईश्वरवादिभिस्तत्र पृच्छयते—किमिदं चेतनाधिष्ठातृत्वं नाम ? । "कारणमात्राधिष्ठतृत्व" मिति चेद् ? अदृष्टद्वारा क्षेत्रज्ञजीवाधिष्ठातृत्वेन सिद्धसाधनम् । अथ इच्छापूर्वकचेतनाधिष्ठातृत्वं" ( देहिकर्तृजन्यत्वं ) विवक्षितम् तदा साध्यहीनो दृष्टान्त: नहि "गृहं कुर्याम्" इतीच्छोत्तरमेव गृहोत्पत्तिर्दृष्टचरी । किञ्च—कार्यत्वसन्निवेशविशिष्टत्वहेतुभ्यां सिषाधयिषित: कर्त्ता कुलालवत्सशरीर एव स्यात् अशरीरित्वे तु व्याप्तेरसिद्धेः । तथा सतीश्वरस्यानीश्वरताप्रसङ्गो दुरुद्धरः, साध्यवैकल्यादयो दोषाश्चानन्ताः प्रसज्येरन्, अस्मदादिवदेव चेश्वरे भ्रमप्रमादादिसम्भावना समुज्जृम्भेतेति । अत्र ब्रूम:—सन्निवेशमात्रं ( रचनामात्रं ) चेतनाधिष्ठानमन्तराऽनुपलभ्यमानं स्वव्यापकं कर्तृमात्रमनुमापयति="कार्यत्वं कर्तृमात्रव्याप्य" मित्येव गमयति तत्र शरीरित्वादिविशेषणोपादानं व्यर्थमेव व्यावर्त्याभावात् ।

इदमत्राकूतकम्—धूमत्वेन वन्हित्वेन व्याप्यव्यापकभाव: ननु फूत्कारजन्यत्व-कृशरेखावत्त्व-प्रबलवायुवेगादिप्रसृतत्वधर्मावच्छिन्नतयापि धूमवन्ह्योर्व्याप्यव्यापकभावः कस्यापि प्रेक्षावतः सम्मतो युक्तियुक्तो वा आभाति, तद्वत् प्रकृतेऽपि कर्तृजन्यत्वकार्यत्वयोरेव व्याप्यव्यापकभाव:=कर्तृनिष्ठं शरीरित्वाशरीरित्वादिकं च नापेक्षितम् । अत एव "नच समानाधिकरणवन्हिधूमयो र्व्याप्ति" रित्यादिव्याप्तिमर्मविदुषो विश्वनाथस्य पूर्वपक्षीयव्याप्तिग्रन्थोऽपि सङ्गच्छते, अन्यथा महानसीयवन्हिधूमयोरेव व्याप्तौ गृह्यमाणायां पर्वतीयधूमेन कदापि पर्वते वन्ह्यनुमितिर्नोदीयात्, तस्य पर्वतीयवन्हिना पूर्वं व्याप्तेरग्रहणात्, अगृहीतव्याप्तिकस्य वन्ह्यनुमितेः स्वप्नेप्यसम्भाव्यमानत्वाच्च । नच यथा वन्हिसिद्धौ धूमो दृष्टं लिङ्गं न तथेश्वरसिद्धौ "कार्यत्वं" दृष्टं लिङ्गमिति कथं तद्वदस्य गम्यगमकभाव इति वाच्यम् सामान्यतोदृष्टलिङ्गेनापि साध्यसिद्धेः । लिङ्गसामान्यस्य लिङ्गिसामान्येन व्याप्तिग्रहात् यदनुमानं तत्सामान्यतोदृष्टव्याप्तिकत्वात्सामान्यतोदृष्टम्, यथा स्पर्शादिलिङ्गेन वाय्वनुमानम्, यथा वा ज्ञानादिना लिङ्गेनात्मानुमानम् ,यथा वा क्रियावत्त्वसामान्यस्य करणसाध्यवत्त्वसामान्येन अविनाभाव-

दर्शनात् वास्यादिसाध्यच्छिदादिक्रियामुदाहृत्य गन्धादिज्ञानानां क्रियात्वेन तत्करणभूतघ्राणादीनामनुमानमित्याद्यूह्यम्। एवं प्रकृतेऽपि कार्यत्वजन्यत्वयोः घटादौ सामान्यव्याप्तिं गृहीत्वेश्वरसाधने नैव किञ्चिद्बाधकमिति राजमार्ग एवानीश्वरवादिनां जगत्कर्तृत्वसाधनभ्रान्तिस्तेषां प्राक्तनदुरदृष्टसमुत्थैव वेदितव्यः। अतश्च हेतौ यादृक्तादृक्कविशेषणोपन्यासेन व्याप्त्युत्थापनमपि वादिनां मुधैव। अन्यथा छिदाम्प्रति कुठारादिसाधनवत् ज्ञानम्प्रति चक्षुरादिष्वपि करणेषु काठिन्यादिधर्माङ्गीकारापत्तिरनिवार्या स्यात्। तस्माच्छरीरित्वादिविशेषणानां गुरुधर्मतया साध्यतानवच्छेदकत्वात् "शरीरी वा स्याद्" इत्यादिविकल्पजालमपि व्युदस्तम्।

अयमभिसन्धिः—यत्कार्यं तच्छरीरिकर्तृजन्यमिति व्याप्त्यनुसारं जगत्कर्तुः सशरीरत्वं तेऽभीष्टम्। तत्र पृच्छामः—किं पक्षभूतमीश्वरमङ्गीकृत्य कर्तृत्वेन तत्र शरीरित्वं सिषाधयिषितम्? शरीराभावत्वेनेश्वरो जगत्कर्त्तैव नास्तीति विवक्षितम्? किं वा पृथिव्यादि पक्षयित्वा कार्यत्वेन हेतुना तस्य शरीरित्वमभीष्टम्? शरीराजन्यत्वेन पृथिव्यादीनां कार्यत्वमेव नास्ति? आहोस्वित् शरीराजन्यत्वेन तत्र अकर्तृकत्वं=(कर्त्रभाव) एवाभिमतम्? किं वा सिद्धान्त्यभिमतव्याप्तिस्तम्भनार्थं विपरीतव्याप्त्युद्भावनमात्रम भीष्टमिति षड् विकल्पाः। तत्र न तावत् प्रथमद्वितीयौ पक्षौ आश्रयासिद्ध्यपसिद्धान्तप्रतिज्ञाविरोधबाधैः कवलितत्वात् अर्थात् प्रथमे पक्षे वाद्यभिमतोऽनुमानस्यायमाकारः "ईश्वरः शरीरी कर्तृत्वात् कुलालवत्"। अत्र कर्तृत्वं हेतुराश्रयासिद्धः। नह्यनीश्वरवादिना मते पक्षभूत ईश्वरः प्रमाणान्तरसिद्धः। ईश्वरे शरीरित्वसाधनलोभेन कर्तृत्वमङ्गीक्रियेत तदाऽपसिद्धान्तः। ईश्वरः "शरीरी अकर्त्ता चे"ति प्रतिज्ञाविरोधोऽपि। प्रत्यक्षादिप्रमाणैः ईश्वरे शरीररूपसाध्याभावनिश्चय उक्तो हेतुर्बाधितोऽपि। उक्तञ्च—वर्धमानाचार्यैः कुसुमाञ्जलिप्रकाशे "ईश्वरपदस्याशरीरकर्तृवाचकत्व" मिति। ईश्वरपदमेव तत्र ज्ञानक्रियाशक्त्योः स्वाभाविकत्वं बोधयतीति तदीयग्रन्थार्थः। श्रुतिरपि "स्वाभाविकी ज्ञानबलक्रिया च" इत्येवञ्जातीयका तथैवाह। तृतीयोऽपि न "यत्कार्यं तच्छरीरिकर्तृजन्यम्" इति व्याप्तेरनिश्चयात्। लघुधर्मस्यैव प्रायोऽवच्छेदकत्वात्। कार्यत्वस्य कर्तृत्वेन व्याप्तिः" नतु शरीरिकर्तृत्वेनेत्यभिप्रायः। नच चतुर्थः पक्षः—बाधानैकान्तिकाभ्यां दूषितत्वात्, अर्थात् "भूभूधरादिकं कर्त्रजन्यं=अकार्यम् शरीराजन्यत्वात्" इत्येव वादिमतेऽनुमानाकारः तत्र पृथिव्यादिवस्तुमात्रस्य पक्षत्वे शरीराजन्यत्वहेतोः घटादौ प्रत्यक्षबाधः, एकदेशस्य पक्षत्वे कर्त्रजन्यत्वाभावरूपसाध्याभाववति पृथिव्यादावेव शरीराजन्यत्वहेतोर्वृत्तितायां व्यभिचारः स्फुट एव। "पृथिव्यादिकमकर्तृकं शरीराजन्यत्वात्" इति पञ्चमोऽपि पक्षोऽयुक्तः अजन्यत्वमात्रस्यैव हेतुभावसत्त्वे शरीररूपविशेषणस्य व्यर्थत्वादित्यसकृदवोचाम। नापि षष्ठः अर्थात् यत्र शरीराजन्यत्वं तत्र कर्तृजन्यत्वाभाव" इति व्याप्त्या "यत्कार्यं तत्कर्तृजन्य"मिति सिद्धान्तव्याप्तेः स्तम्भनमात्रं कृतं मयेति चेत्? तत्र पृच्छामः स्तम्भनपदेन यदि बाधोऽभिप्रेतः तन्न सम्यक्, शरीराजन्यत्वहेतोः पक्षधर्मताया एवाऽसिद्धेः। उक्तञ्चाचार्यैः—

**न बाधोऽस्योपजीव्यत्वात्प्रतिबन्धो न दुर्बलैः।**

**सिद्ध्यसिद्ध्योर्विरोधो नो नासिद्धिरनिबन्धना ॥ इति ।**

तस्मात् "**यद्विशेषयो: कार्यकारणभावः तत्सामान्ययोरपि**" इति नियमानुसारं यथा घटत्वधर्मावच्छिन्नघटमात्रं प्रति कुलालत्वधर्मावच्छिन्नस्य, यथा वा पटत्वधर्मावच्छिन्नपटमात्रं प्रति तन्तुवायत्वधर्मावच्छिन्नस्य कारणतेति विशेषधर्मावच्छिन्नतयाऽनन्तकार्यकारणभावः कल्प्यते तथैव "कार्यत्वधर्मावच्छिन्नम्प्रति कर्तृत्वधर्मावच्छिन्नस्य कारणते"ति सामन्यधर्मावच्छिन्नकार्यकारणभावकल्पनायामपि न काचिदनुपपत्तिः, ततश्च पृथिव्यादिकार्यं बुद्धिमच्चेतनकर्त्रधिष्ठितमिति सिद्धम्भवति। तत्राल्पशक्त्यादिमत्त्वाज्जीवाधिष्ठातृत्वं न भवितुमर्हति, जडत्वाच्च जीवादृष्टेष्वधिष्ठातृत्वसम्भावनैव नास्ति, भवितव्यञ्च केनापि जडानामधिष्ठात्रा, परिशेषाद्यस्तेषामधिष्ठाता स एव सर्वज्ञः सर्वशक्तिमाञ्जगत्कारणमस्माकं परमेश्वरः। यद्यत्र कश्चन निरीश्वरवादी एवमाशङ्केत यद् भूभूधरादौ कार्यत्वं हेतुरस्तु बुद्धिमत्कर्तृजन्यत्वं मास्तु तत्र किं बाधकमिति" तदा अत्रेश्वरवादी व्याघाताख्यं तर्कं प्रयोजयेत् अर्थात् यथा घटघटप्रागभावयोर्द्वयोः सहानवस्थानविरोधात् समानाधिकरण्यं नास्ति तद्वत् "यदि बुद्धिमत्कर्तृजन्यं न स्यात्तदा कार्यत्वमपि न स्यात्" अस्ति च कार्यत्वमतो बुद्धिमत्कर्तृजन्यत्वं निराबाधमेव इत्यनया दिशा प्रत्यवतिष्ठते। एतेन साध्यवैकल्यादिकमपि व्युदस्तं वेदितव्यम्। यत्तु—कर्तृत्वसामान्यसाध्यविवक्षायां ईश्वरात्मकविशेषकर्तुः सिद्धिर्दुर्घटेत्युक्तम् तदपि दुरुक्तम् अधिकरणसिद्धान्ततया तद्विशेषप्रतिपत्तेः। "**द्यावाभूमीजनयन्देव एकः**" (यजु० १७।१९) इत्याद्यागमोऽपि विशेषसाधक इति सर्वं चतुरस्रम्।

ननु क्षित्यादिकं "कर्त्रजन्यं शरीराजन्यत्वात् गगनवदि"ति कथं न तवानुमानस्य सत्प्रतिपक्षितत्वमिति चेन्न ? अजन्यत्वस्यैव समर्थतया शरीरविशेषणस्य व्यर्थत्वात्। नचाजन्यत्वमेवास्त्विति वाच्यम् तदसिद्धेः। नन्वास्तां तर्हि भवत्स्थापनानुमाने "शरीरजन्यत्व" मुपाधिः तस्य घटादौ साध्यव्यापकत्वात्, अङ्कुरादौ साधनाव्यापकत्वाच्चेति चेत् ? अत्र ब्रूमः—"**उपाध्यभावेन साध्याभावानुमाने यदि तत्र किमप्युपाध्यन्तरमागच्छेत् तदा पूर्वोद्भावित उपाधिरनुपाधिर्मन्तव्य**" इति हि दार्शनिकानां सम्प्रदायः। अनेन नियमेन वादिप्रदर्शितोपाध्यभावेन साध्याभावानुमानाकारोऽयमस्ति यत्—"क्षित्यङ्कुरादिकं कर्त्रजन्यं शरीराजन्यत्वात् खादिवत्" इति। अत्र "**प्रागभावाप्रतियोगित्वमुपाधिः**"। तस्य कर्त्रजन्येषु खादिषु साध्यव्यापकत्वम्, शरीराजन्येषु क्षित्यादिषु च साधनाव्यापकत्वमस्त्येवेति कृत्वा सिद्धान्त्यनुमाने प्रदर्शितः "शरीरजन्यत्व"मुपाधिरनुपाधिरेवेति विमलः पन्थाः। अधिकन्तु मत्प्रणीत "**स्याद्वादध्वान्तमार्त्तण्डे**" उदयनाचार्यकृतकुसुमाञ्जल्यादिग्रन्थेषु च द्रष्टव्यम्।

अपिच मनुष्येषु यदिदं प्रत्यहमुपचीयमानं ज्ञानैश्वर्यादिकं पश्यामः तन्न स्वाभाविकं भवितुमर्हति, तथासति तस्य परसाहाय्यापेक्षानुपपत्तेः। नहि किञ्चिदपि स्वाभाविकं सत् परसाहाय्यापेक्षि दृष्टचरम्, यदात्मलाभाय परसाहाय्यमपेक्षते न तत् स्वाभाविकम्, अपितु नैमित्तिकम्। उपलभ्यमानञ्च ज्ञानैश्वर्यादिकं नियमेन परसाहाय्यमपेक्षत इति प्रत्यक्षदृष्टमेतदस्माकम्, कथमन्यथा प्रत्यहं महाविद्यालया विश्वविद्यालया वा स्थाप्यन्ते, समाहृत्य समा-

इत्थं च तत्र विशिष्टा आचार्या महोपाध्यायाश्च तासु तासु विद्यासु ख्यातिभाजा विनियोज्यन्ते, तदुपचयाय च महापुस्तकालया विनिवेश्यन्ते । एवं ज्ञानैश्वर्यस्य नैमित्तिकत्वे साम्प्रतमिव सर्गादावपि भवितव्यं तस्य केनचिन्निमित्तेन, नैमित्तिकस्य निमित्तमन्तराऽनुपलब्धेः । नह्यन्तरेण निमित्तं कस्यचिन्नैमित्तिकस्य सत्तामुपलभेमहि, नैमित्तिकं च स्वाभाविकञ्चेति विप्रतिषिद्धम् । सर्गादिभुवो मनुष्यास्त्वनधीतविद्यत्वेनाऽनधिगतार्थत्वेन च समानमतयः कथं परस्परं ज्ञानैश्वर्यविनिमयाय निमित्तभावमुपगच्छेयुः, असति च ज्ञानैश्वर्यशालिनि कस्मिंश्चिदलौकिके शक्तिभाजि अद्य यावज्जगदान्ध्यमेव प्रसज्येत । जडञ्च प्रधानादि स्वयं तादृशज्ञानैश्वर्यपरिणामाय विभवितुमसमर्थमिति पारिशेष्यात्सर्वज्ञं सर्वशक्ति पारमार्थिकं किमपि वस्त्वेव तेभ्यो वेदलक्षणया वाचा ज्ञानैश्वर्यं प्रददातीति नूनं स्वीकार्यम् । यत्रेदमुक्तम्—"**स एष सर्वेषामपि गुरुः कालेनानवच्छेदात्**" ( यो० १ । २६ ) इति । यथा ह्येदानीन्तनानामस्माकं वेदशास्त्रेण ( परम्परया ) ज्ञानैश्वर्यं प्रददद्गुरुः तथा सर्गादिभुवां पूर्वेषामपि तादृशशास्त्रेण ज्ञानैश्वर्यं प्रददद् गुरुरस्तीति मन्तव्यम् । सच नास्मदादिवत् कालेनावच्छिद्यते । एतादृशं शास्त्रञ्च न निर्मूलं भवितुमर्हति, यच्च तन्मूलं तदेवास्माकं ब्रह्म शास्त्रयोनि, जगत्कर्त्तेश्वर इति च । यत्रेदमुक्तम्—"**नकिरिन्द्र ! त्वदुत्तरो न ज्यायाँ अस्ति वृत्रहन् ! नकिरेवा यथा त्वम्**" ( ऋ० ३ । ६ । १६ । १ ) इति । "**न तत्समश्चाभ्यधिकश्च दृश्यते**" ( श्वे० ६ । ८ ) इति । जगत्कर्त्तारमीश्वरमनङ्गीकुर्वन्त आर्हतवर्या अपि श्रेयोमार्गसिद्धिं परमेष्ठिनः सकाशादेव मन्यन्ते—**परमेष्ठी हि भगवान् परमोऽर्हन् तत्प्रसादात् परमागमार्थनिर्णयोऽपरस्य परमेष्ठिनो गणधरदेवादेः समुपद्यते, तस्माच्चापरपरमेष्ठिनः परमागमशब्दसन्दर्भो द्वादशाङ्ग**" इत्यादि बहूक्तं "**माप्तपरीक्षायाम्**" । तच्च भङ्ग्यन्तरेण वैदिकसिद्धान्तानुसरणमेव व्यनक्तीति सन्त एवेह साक्षिणः । एवञ्चेश्वरसाधनेनानीश्वरवादिकुतर्कजालकृन्तनाऽकुण्ठकर्त्तरीभावङ्गतमिदं न्यायशास्त्रं महदुपकरोत्यास्तिकमार्गाणाम् । एतेनास्य शास्त्रस्य भूतचैतनिकवादादिनिरासपूर्वकोप्युपकारो व्याख्यातः । सोऽयमुपकारस्तर्कापरपर्यायमीमांसाद्वयसाहाय्यपर्यवसायी वैदिकमार्गसंरक्षणार्थं परमोपादेय इत्यध्येतव्यं न्यायशास्त्रम् ।

**ननु**—सर्वत्र जगतीतले प्रसिद्धमिदं यत्पूर्वमीमांसाशास्त्रमनीश्वरवादिप्रमुखमस्ति, तथैव श्लोकवार्त्तिकन्यायकणिकादिग्रन्थेषु जगत्कर्त्तुरीश्वरस्य विपुलतया खण्डनमुपलभ्यते, यत्र भवत्स्वयूथ्या एव जगत्कर्त्तारमीश्वरं परास्यन्ति तत्रास्माभिरेव किमपराद्धं तदनङ्गीकारविषय इति चेद् ? उच्यते—सर्वेषां वेदप्रामाण्याभ्युपगन्तॄणां वेदस्य तात्पर्यांशे मात्रयापि विरोधो न दृश्यते, यश्च विरोध इव प्रतीयते असावधिकारिभेदनिबन्धनतया प्रक्रियाभेदनिबन्धनः । वेदप्रामाण्यञ्च सर्वेषामास्तिकानां रिरक्षयिषितम्, तत्क्वचित् स्वतःप्रामाण्याङ्गीकारेण, क्वचित्परतःप्रामाण्याङ्गीकारेण । आद्यपक्षस्थापना ईश्वरानङ्गीकारेऽपि भवितुमर्हतीति प्रौढिवादमुद्रया पूर्वस्यां मीमांसायामीश्वरानङ्गीकारोऽवतारितो नत्वसौ विवक्षितोस्ति । कथमन्यथा "**ब्राह्मेण जैमिनिरुपन्यासादिभ्यः**" ( ब्र० सू० ४ । ४ । ५ ) इत्यत्र सर्वज्ञत्वसर्वेश्वरत्वरूपेण **मुक्तस्य**

स्वरूपाभिव्यक्तिं महर्षिर्व्यासो जैमिनिपक्षत्वेनोपान्यास्थात् अत्यन्तासतोऽभिव्यक्तेरनुपपत्तेः। कुतश्च विविधमीमांसाग्रन्थकाराः स्वस्वग्रन्थादौ ईश्वराङ्गीकर्तृवत् मङ्गलमातेनिरे यदि तेषामीश्वरोनभिमतः स्यात्। तद्यथा—विशुद्धज्ञानदेहाय त्रिवेदीदिव्यचक्षुषे। श्रेयः प्राप्तिनिमित्ताय नमः सोमार्धधारिणे'' इति श्लोकवार्त्तिकादौ भट्टकुमारिलः। ''आनन्दमभृतं ज्ञानमजं साक्षिणमीश्वरम्। ब्रह्म सर्वमसर्वञ्च वन्दे देवं हरिं प्रभुम्'' इति न्यायरत्नामालादौ पार्थसारथिमिश्रः। ''नत्वा गणेशवाग्रामगुर्वङ्घ्रीन् भट्टशङ्करः'' इति मीमांसासारसङ्ग्रहे भट्टशङ्करः। ''परामृष्टः क्लेशैः कथमपि न यो जातु भगवान्'' इत्यादिना न्यायकणिकादौ श्रीवाचस्पतिमिश्रः। ''वासुदेवं रमाकान्तं नत्वा लौगाक्षिभास्करः'' इत्यर्थसङ्ग्रहे लौगाक्षिभास्करः। ''सूर्यनारायणं वन्दे देवीं त्रिपुरसुन्दरीम्'' इति मीमांसापरिभाषायां श्रीकृष्णयज्वा। ''यत्कृपालेशमात्रेण पुरुषार्थचतुष्टयम्। प्राप्यते तमहं वन्दे गोविन्दं भक्तवत्सलम्'' इति मीमांसान्यायप्रकाशे आपदेव इति कति ब्रूमः। तस्मात् पूर्वमीमांसकानामीश्वरनिराकरणविषये विवक्षितार्थतेति रिक्तं वचः।

इतीश्वरवादः।

तदिदं न्यायशास्त्रं द्विविधम्। प्राक्तनमर्वाक्तनञ्च। प्राक्तनमपि द्विविधम्। मूलभूतं सूत्ररूपम्, तद्व्याख्यात्मकञ्च। आदिन्यायशास्त्रप्रणेता महर्षिर्गोतमः त्रेताकालीनः प्रजापतेरङ्गिरसः प्रपौत्रः, दीर्घतमसः पुत्रो महातपस्वी च जन्मस्थानञ्चास्य हिमालयभूमिः। अस्य पाणिगृहीती अहल्येति सुप्रसिद्धमेव। इयमेव स्वपत्युर्महर्षेः शापेन शिला सती भगवदवतारभूतमर्यादापुरुषोत्तमश्रीरामचन्द्रचरणरजःस्पर्शेन विध्वस्तसकलकिल्विषा मुक्तशापा दिव्यं वपुरापेदे स्वपत्युर्हृदये तथैव (ततोप्यधिकं) मानञ्च लेभे इत्यैतिहासिकाः। तदेतत्पुराणादिग्रन्थपरिशीलनतो ज्ञातुं सुशकमिति नाधिकं प्रपञ्चितम्।

न्यायसूत्ररचयिता गोतममुनिर्व्याससमकालीन इति गुरुशिष्यप्रणालीत्यपि केचित्। एवं किल किंवदन्ती—यद्वेदव्यासो गोतमस्य शिष्यः। तेन हि ''एतेन शिष्टापरिग्रहा व्याख्याता'' (ब्र० सू० २।१।१२) इतिसूत्रेण न्यायसूत्रकारमते परासिते गोतम उवाच—नामुं शिष्यापसदं चक्षुषा पश्यामीति, तदेतदाकर्ण्य व्यासो भगवान् गुरुतोषकरणाय तच्चरणोपरि पपात, तुष्टाव च तेन पुनः शिष्यवत्सलो महर्षिर्योगसामर्थ्यात् स्वपादे चक्षुरुत्पादयामास येन स्वशिष्यं व्यासमालोकितवान्, तत एव च 'अक्षपाद' इति नाम्नापि ख्यातिङ्गतः। केचित्तु विहारप्रदेशे गोतमाश्रनाम्ना प्रसिद्धं स्थानमस्ति तेनायं मुनिः तद्देशवास्तव्य आसीत्। श्रीभगवता रामचन्द्रेण विश्वामित्राश्रमात् मिथिलां गच्छता गोतममाश्रमः प्राप्तः। गोतमस्य पुत्रः शतानन्दः मिथिलेश्वरस्य जनकस्य पुरोहित इति सुप्रसिद्धम्, तदत्र युक्तायुक्तं विशेषगवेषणासापेक्षम्।

न्यायसूत्रभाष्यप्रणेता पक्षिलस्वामी (चाणक्यः) चन्द्रगुप्तसमकालीनः। ततः विक्रमादित्यसमयात् किञ्चित् परतः वार्त्तिककार उद्योतकराचार्यो बभूव। असौ बौद्धाचार्यदिङ्नागखण्डितं भाष्यं स्वग्रन्थेन उद्दधार। तत उत्तरं श्रीशङ्करभगवत्पादानामाविर्भावः,

ततो नृगस्य राज्ञः शासनकाले **वाचस्पतिमिश्रः**, तत **उदयनाचार्य**, इत्याद्यधिकं एशियाटिकसोसायटीमुद्रितात् कुसुमाञ्जलिभूमिकाग्रन्थादवगन्तव्यम् ।

यत्तु—पञ्चनदीयः पण्डितसुदर्शनाचार्यः निजनिर्मित**प्रसन्नपदाख्यायां** न्यायभाष्यव्याख्याभूमिकायां न्यायसूत्रभाष्यकारयोरत्यन्तं प्रद्विषन् "एतानि सूत्राणि नैव गोतमर्षिप्रणीतानि, किन्तु केनापि न्यायाचार्येण तन्नाम्ना रचितानि प्रायःप्रसादरहितान्येव, अस्य गोतमस्य न प्रकृष्टं सूत्रप्रणयनपाण्डित्यमस्तीत्यग्रे स्पष्टमेव प्रतीयते, तथाहि–द्वितीयाध्यायद्वितीयाह्निके "**सहचरण०**" इत्यादिसूत्रे "**ब्राह्मणमञ्च**" इत्यादिवाक्यं नापि लक्ष्यार्थसङ्ग्रहपरं सम्भवति तत्र मञ्चस्य लक्ष्यत्वाभावात्, नापि लक्षकशब्दसङ्ग्रहपरं सम्भवति ब्राह्मणशब्दस्य लक्षकत्वाभावात्, एवं कटादिष्वपि तत्र विज्ञेयमित्याद्यनल्पं दुरुक्तवान् तत्तस्य सम्प्रदायानभिज्ञताम् * अतिप्रसादगुणोपेतनव्यन्यायशास्त्राध्ययनसंस्कारबहुलबलात्कारसूत्रभाष्यविमर्शनसाहसकारिताञ्चाभिव्यनक्तीति ब्रूमहे ।

एषु प्रसादराहित्यं वदन् पण्डितवर्योऽसौ प्रष्टव्यः प्रसादपदेन किं "शुष्केन्धनाग्निवदि" त्याकारकलक्षणलक्षितः काव्यगुणस्तेऽभिप्रेतः ? सरलपदयोजनामात्रं वा ? आद्ये नेदं काव्यमास्ते येन तथा रचनामकुर्वाणः कविरुपालम्भनीयवचनः स्यात् । द्वितीये हेतुर्नोपन्यस्तो येन भवद्वचसि प्रत्ययमादधीमहि । अन्यथा सप्रसादान्येवामूनि सूत्राणीति वदतामस्माकमेव जयः । वस्तुतस्तु—श्रुतिकटुवच्छेदकतावच्छिन्नादिविविधदुरूहार्थकपदप्रयोगबाहुल्योपेताभिनवन्यायशास्त्रसंस्कारातिरेकसमुत्था भ्रान्तिरेवेयं भवतां यदमूनि प्रसादरहितानि सन्तीति ।

अपिच—"तथाचाचार्यप्रणीतं न्यायोपबृंहितं सूत्रं "**दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः**" इति साक्षान्महादेवावतारभूतशङ्करभगवत्पादवचसि, तत्राक्षपादगोतममुनिसम्मतिमाह तथाचेति" इत्यादि, "**न केवलमस्मिन्नर्थे** श्रुत्यादयः अपित्वक्षपादाचार्यसूत्रमपि न्यायमूलमस्तीत्याह–तथाचाचार्यप्रणीतमिति" इत्यादि चाप्ततरानेकटीकाकारवाक्येष्वपि विश्वासमनासादयतस्तवास्मिन्नर्थे को नाम प्रेक्षावान् विश्वासमाधास्यति यदमूनि गोतममुनिप्रणीतानि न सन्तीति । किं शङ्करोपि भगवान् भ्रान्त इति मन्यसे येनैवमनर्गलवागसि पण्डितवर्य ! शान्तं पापम् ।

यत्तु–"सहचरणे त्यादिसूत्रे रचनाशुद्धिरुक्ता सापि सूत्रकारकृतानुग्रहानभिसन्धानादेव, सूत्रे कानिचित् पदानि लक्षकशब्दसङ्ग्रहाभिप्रायेण कानिचिच्च लक्ष्यार्थसङ्ग्रहपरत्वेनोक्तानि उभयविधार्थबोधनाय व्युत्पित्सूनाम्, तत्र षष्ठीसप्तमीविभक्त्यन्वयो योग्यतया व्याख्यानादेव भविष्यति व्याख्यानतो विशेषप्रतिपत्तेः, अन्यथा अध्यासार्थकसूत्रमप्रणयन् वेदविदग्रेसरो व्यासोपि महर्षिरनवधेयवचनः स्याद् यद्येवंविधावसरे व्याख्यानं शरणं न स्यात् । भवति

---

* इयं सोपहासोक्तिः।

च * ऋषिवाक्येषु यथेष्टं विभक्तिविपरिणामेनान्वयो यथा—"अग्निहोत्रञ्जुहोती" त्यादिषु मीमांसकानां प्रसिद्धम् । अपिच सूत्रं नाम सूत्रितार्थं भवति सूत्रितार्थावबोधश्च व्याख्यानहेतुक इत्येकेनैव प्रयत्नेन लक्ष्यलक्षकपदार्थाववुबोधयिषया महर्षिस्तथा प्रणयन् मात्रयापि न दूष्यतां यातीति विपश्चिद्वर्या एवेह साक्षिण इति दिक् । अधिकं न्यायभाष्यविवरणकरणकाले समाधास्यामः ।

प्रकृतमनुसरामः—एवमेव महर्षिः कणादोऽपि वैशेषिकसूत्राणि रचयाञ्चकार, तदुपर्यपि किरणावलीकन्दलीप्रभृतयोऽनेके ग्रन्था उत्तरोत्तरं रचिताः यत्र षण्णां पदार्थानां साधर्म्यवैधर्म्यादिनिरूपणपूर्वकं पदार्थविज्ञानमाविष्कारितम्, तदेतदुभयदर्शनमूलमाश्रित्यैव सप्तपदार्थवादिभिर्नव्यन्यायशास्त्रमवतारितम्, मया व्याख्यायां तत्र तत्रार्षमूलकता नव्यन्यायशास्त्रस्य मुक्तावलीग्रन्थस्य तत्तत्प्रकरणविशेषे दर्शितैवेतिटीकाग्रन्थावलोकनेन ज्ञातं भविष्यति ।

किञ्च षोडशादिपदार्थानां सप्तस्वेव पदार्थेष्वन्तर्भावप्रकारः दिनकर्यां स्पष्टोस्तीतिमत्वाऽत्र ग्रन्थगौरवं नाहृतमिति शम् ।

अभावत्वं सखण्डोपाधिरितिवदतां केषाञ्चित् युक्तिबलं कीदृशमिति प्रेक्षावतां पुरतः काञ्चन कल्पनां प्रदर्शयामः—

प्राभाकराः "अभावोऽधिकरणात्मक" एवेत्याहुः । नन्वाधाराधेयभावानुपपत्तिरिति चेन्न, त्वन्मते यथाऽभावाधिकरणकेऽभावे आधाराधेयभावस्तथा मन्मतेपि भावाधिकरणकाभावस्याधिकरणात्मकत्वे आधाराधेयभावस्वीकारे न किमपि बाधकं पश्यामः । ननु—"भूतले घटाभावः" "भूतलं घटाभाववत्" इति भूतलादिविशेषणतया तद्विशेष्यतया च प्रतीयमानोऽभावपदार्थः कथं भूतलादिस्वरूपतया शक्यनिर्वचन इति चेद् ? उच्यते:—यथा "अभावविशिष्टबुद्धिर्विशेषणविशेष्यसम्बन्धविषया विशिष्टबुद्धित्वात् दण्डी पुरुष इति विशिष्टबुद्धिवत्" इत्यनुमानेन सिद्ध्यदपि वैशिष्ट्यं तस्य नित्यत्वे भूतले घटानयनान्तरमपि घटाभावबुद्धिप्रसङ्गं तस्याऽनित्यत्वे चानन्तवैशिष्ट्यकल्पनाप्रसङ्गं प्रदर्श्य नाङ्गीक्रियते किन्तु "घटाभाववद् भूतलम्" इत्यादिप्रमितिकालिकं भूतलादिकमेव तत्तदभावानां सम्बन्ध इति वदद्भिरभाववादिभिर्भूतलादिस्वरूपतयाऽभ्युपेयते तथा घटाद्यनुपलब्धिकालिकं तत्तद्भूतलादिकमेव तत्तदभावत्वेन कल्प्यतामिति किमतिरिक्तकल्पनया, वैशिष्ट्यस्य नित्यत्वाऽनित्यत्वपक्षयोरुक्तदोषाणामभावनित्यत्वाऽनित्यत्वपक्षयोरपि परिहारस्य तुल्यत्वात् । यथाचाभावनित्यत्वे घटाभाववत्ताबुद्धिं प्रति घटवत्ताबुद्धेः प्रतिबन्धकतया न घटकाले घटाभावबुद्धिः तथा वैशिष्ट्यस्य नित्यत्वेऽपि तदभाववत्ताबुद्धिं प्रति तद्वत्ताबुद्धेः प्रतिबन्धकत्वेन घटानयनेन घटवति भूतले न घटाभावबुद्धिरिति समानः परिहारः । ततश्च वैशिष्ट्यस्याऽप्यतिरिक्तपदार्थत्वापत्तिः, अतो वैशिष्ट्यवदेवाभावोऽपि भूतलाद्यधिकरणस्वरूप एवेति भावः ।

किञ्च—प्रतियोगिभेदादेवाभावभेदो न त्वधिकरणभेदात् तथाचात्यन्ताभावस्य तन्नित्यत्वे

* ऋषिर्वेदो मन्त्रार्थद्रष्टा च ।

घटानयनेन तन्नाशे घटशून्यदेशेऽभावप्रतीत्यनुपपत्तेः तन्नित्यत्वं प्रकल्प्य घटानयनेन घटवति भूतले तदत्यन्ताभावबुद्धिप्रसक्तिस्तद्वैशिष्ट्यनाशादेव वारयितव्या, तथाचाधिकरणस्वरूपवैशिष्ट्यस्वीकारे ह्यावश्यके किमतिरिक्तकएठगड्डुभूताभावकल्पनेन तदपेक्षयाऽभावस्यैवाधिकरणस्वरूपत्वस्वीकारे महल्लाघवमिति ध्येयम् ।

किञ्च-किमिदमभावत्वं नाम, न तावद् द्रव्यादिषट्कान्योन्याभाववत्त्वं, द्रव्यत्वादेः प्रतियोगितावच्छेदकत्वे गुणत्वद्रव्यत्वादिकमादाय द्रव्यादिष्वतिप्रसङ्गात्, षट्त्वावच्छिन्नभेदस्य प्रत्येकं घटपटयेरिव तस्य प्रत्येकं द्रव्यादावपि सत्त्वात्, पर्याप्तिसम्बन्धेन षट्त्वावच्छिन्नभेदस्य प्रत्येकं द्रव्यादिषु सत्त्वस्य वारयितुमशक्यत्वात् । नचापेक्षाबुद्धिरूपं द्रव्यादिगतषट्त्वमेव प्रतियोगितावच्छेदकं द्विप्रतियोगिकभेदस्य द्वित्वमिवेति वाच्यम्, व्यासज्यवृत्तिधर्माणां पर्याप्तिसम्बन्धेनैव प्रकारत्वनियमात्, अन्यथा द्वित्वस्य समवायेन प्रत्येकमपि सत्त्वेन "एको द्वौ" इत्येकविशेष्यकद्वित्वप्रकारकप्रमितिप्रसङ्गात् । एवञ्च षड्भिन्नमितिप्रतीतौ पर्याप्तिसम्बन्धेनैव षट्त्वस्य प्रकारत्वमनुभूयत इति षट्त्वावच्छिन्नभेदोऽसङ्गतः ।

नच-द्रव्यादिभेदषट्कत्वमभावत्वमिति वाच्यम् गौरवात् । लोके सर्वेषां समवायान्तपदार्थषट्कनिश्चयानियमेन तदनिश्चयवतामभावाप्रतीतेश्च । नच तर्हि—"भावभिन्नत्वं तत्त्व" मिति शङ्क्यम् भावत्वेन भावमजानतस्तदप्रत्ययापातात् । वस्तुतश्च—भाव वावच्छिन्नप्रतियोगिताकभेदस्यैवाप्रसिद्धतायाः परैरङ्गीकारात्, अभावधर्मिसिद्धौ तद्वृत्तिभेदसिद्धिः तत्सिद्धौ चाभावसिद्धिरित्यन्योन्याश्रयप्रसङ्गश्च दुरुद्धरः ।

किञ्च—त्वन्मते भेदस्त्वन्योन्याभाव एव, अन्योन्याभावत्वञ्च अभावत्वगर्भो धर्मः । तथाच भावान्योन्याभावत्वमभावत्वमित्युररीकारेऽभावत्वज्ञानमन्योन्याभावज्ञानाधीनम्, अन्योन्याभावत्वज्ञानञ्चाभावत्वज्ञानाधीनमिति कथं नान्योन्याश्रयः । अन्योन्याभावेऽभावलक्षणसमन्वये आत्माश्रयश्च । अपिचैवं सति "अभावो न भाव" इति वाक्याच्छाब्दबोधो न स्यात्, उद्देश्यतावच्छेदकविधेययोरैक्ये तदभावात् ।

यत्तु नव्याः—"समवायसामानाधिकरण्यान्यतरसम्बन्धावच्छिन्नप्रतियोगिताकसत्ताभावत्वमभावत्वम्" सामान्यादित्रिके द्रव्यादित्रिके चाव्याप्तिवारणार्थं सम्बन्धद्वयनिवेश इत्याहुः तन्न, सत्ताभावरूपोक्तावप्यात्माश्रयानपायात् सत्तानुपस्थितिदशायामभावप्रत्ययानापत्तेश्च । सत्ताभावनिष्ठमभावत्वमपि सत्ताभावरूपं पुनस्तन्निष्ठमभावत्वमपि सत्ताभावरूपं पुनस्तन्निष्ठमभावत्वमपि तद्रूपमित्यनवस्थापत्तेः । नच सत्तात्यन्ताभावव्यक्तेः स्वरूपत एव भानं स्वीक्रियते, अतएव सत्तारूपप्रतियोगिज्ञानं विनापि "घटो नास्ति" इतिबुद्धौ सोऽत्यन्ताभावः प्रकारः अभावत्वप्रत्यक्ष एव प्रतियोगिधियो हेतुत्वात्, अन्यथा "इदं तम" इति प्रतीत्यनापत्तिरिति वाच्यम् कल्पने मानाभावात्, प्रतियोगिज्ञानमन्तरेणाभावज्ञानस्यानिष्पत्तिनियमेन सत्तोपस्थितिमन्तराऽभावज्ञानासम्भवात् । 'इदं तम" इति ज्ञानन्तु न तेजोऽभावविषयकम्, मीमांसकैस्तमसः स्वतन्त्रद्रव्यत्वस्वीकारात् । प्रगाढयुक्तिभिः प्रतिपादितोऽयमर्थः श्रीचित्सुखाचार्यैः तत्त्वप्रदीपिकायामिति स ततो द्रष्टव्यः ।

किञ्च—यथा वेदान्तिमते अविद्याध्वंसस्य ब्रह्मणि ब्रह्मरूपत्वं तथाऽस्मन्मतेऽपि भूतलादौ घटाभावस्य भूतलादिस्वरूपत्वम्, कल्पिताधाराधेयाभावश्च स्वीकृतः। त्वयापि च घटाभावे वन्ध्यभावोऽनवस्थाभिया घटाभाव एवेति घटाभावस्य बहिरपि प्रतियोगीतिवदता आधाराधेयभावः स्वीकृत एव। नन्वाधाराधेयभावापत्तिपरिहारेऽपि येनेन्द्रियेण यद्गृह्यते तेनेन्द्रियेण तन्निष्ठा जातिस्तदभावश्चेति नियमाज्जलादिगतगन्धाभावस्य जलादिरूपतया जलादेरपि घ्राणग्राह्यत्वं स्यादितिचेद् ? अत्र ब्रूमः—यथा जलमभास्वरशुक्लरूपवत्त्वेन चक्षुषा गृह्यते शीतस्पर्शवत्त्वेन तु त्वचा गृह्यते एवं गन्धाभावत्वेन जलादेर्घ्राणग्राह्यत्वेऽपि न किञ्चिद्बाधकमिति युक्ततरमाभाति। अत एव गन्धाभावस्य जलादिरूपत्वे जलत्वादिनैव तेषां न घ्राणग्राह्यता गन्धाभावत्वेन तु तेषामपि घ्राणग्राह्यतेतीष्टमेवेति प्राभाकराणामाशयः। येनेन्द्रियेण यद्गृह्यत इति नियमोऽनैकान्तिकः। किञ्च—अभावानां प्रत्यक्षविषयत्वाभ्युपगमे तार्किकनियमव्यभिचारशङ्कावकाशः मीमांसकनये त्वधिकरणानामभावत्वेन रूपेणानुपलब्धिरूपषष्ठप्रमाणगम्यत्वस्य स्वीकारात्।

नच प्रमाणान्तराभ्युपगमे गौरवं शङ्क्यम्, प्रत्यक्षवादिभिरपि अभावप्रत्यक्षकारणीभूतविशेषणविशेष्यभावाख्यषष्ठसन्निकर्षस्य कल्पनेन तौल्यात्। नच वैशिष्ट्यं स्वरूपसम्बन्धरूपत्वादधिकरणात्मकमिति नातिरिक्तं कल्प्यत इति वाच्यम्, अभावानामधिकरणात्मकत्वेन प्रकृतेऽपि गौरवाभावात्। अपिच "येनेन्द्रियेणेत्यादि नियमस्यैकान्तिकत्वाभ्युपगमे रूपादिप्रतियोगिकाभावानामपि चक्षुर्ग्राह्यत्वापत्या वायौ रूपाभावबुद्धिश्चक्षुर्व्यापारमन्तरेणैव जायमानोपपद्येत। एवं परमाण्वादौ महत्त्वाभावबुद्धिरपि, वाय्वादेश्चाक्षुषविषयत्वञ्चापद्येत। तस्मादनुपलब्धिप्रमाणेनैवाधिकरणमभावत्वेन गृह्यते।

"घटाभाववद्भूतलम्" इतिज्ञानस्यापि भूतलांशे प्रत्यक्षत्वमभावांशे परोक्षत्वम्, "पर्वतो वह्निमान्" इत्यादेः पर्वतांशे प्रत्यक्षत्वं वह्निमत्वांशे परोक्षत्वमिति ध्येयम्। तस्मात्पदार्थान्तरतया अभावस्याङ्गीकारोऽभिमानमात्रं तस्यालीकत्वात्। अत एव लोके वेदे च "घटो नास्ति" "यस्मात्परं नापरमस्ति किञ्चित्" इत्यादिर्नञ्घटितवाक्यव्यवहार एव प्रायो दृश्यते नतु "घटाभाववद्भूतल" मिति लौकिकः कोऽपि प्रयुङ्क्ते। किं बहुना अभावपदमपि न भावोऽभाव इति नञ्समास एव, नञर्थस्य पृथक्पदार्थताभिमाने तु अब्राह्मणोऽधर्म इत्यादौ अन्यत्वसादृश्यविरोधादिनञर्थानामपि पदार्थान्तरतास्वीकारस्तव मते आपद्येत, तेन बहुपदार्थप्रसिद्ध्या सप्तपदार्थवादो दत्तजलाञ्जलिः स्यात्। वस्तुतस्तु नञः समभिव्याहृतपदार्थद्योतकत्वादेव न पृथक्पदार्थवाचकता, किन्तु पदार्थ एव आविर्भूतत्वतिरोभूतत्वाभ्यां द्विविधः, तत्र पदार्थस्यानाविर्भूतस्वरूपद्योतको नञ्। अत एव ब्रह्मसूत्रभाष्ये तर्कपादे "एकस्यैव स्वस्थानादिभेदादनेकशब्दप्रत्ययभाग्भवति तद्वत्" इतिभगवच्छ्रीशङ्कराचार्यैरुक्तम्।

किञ्च—"धर्मविशेषप्रसूताद् द्रव्यगुणकर्मसामान्यविशेषसमवायानां पदार्थानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानान्निःश्रेयसम्" ( वै० १।१।४ ) इत्यत्र पदार्थोद्देशे महर्षिणा कणादेनाभावो नोद्दिष्टः। ननु वृत्तिकारः "अत्र षट्पदार्थकीर्तनं भावाभिप्रायेण वस्तु-

तोऽभावोऽपि पदार्थान्तरतया मुनेरभिमत" इत्युक्तम् । "अभावश्च वक्तव्यो निःश्रेयसोपयोगित्वाद्भावप्रपञ्चवत्" इति लीलावतीकारोक्तञ्च, द्रव्यकिरणावल्याम्, "अभावस्तु स्वरूपवानपि नोद्दिष्टः प्रतियोगिनिरूपणाधीननिरूपणत्वान्नतु तुच्छत्वा" दित्युदयनोक्तञ्च तत्सर्वं सूत्रविरोदुपेक्ष्यम्, अधर्माधिकारिबुद्ध्यनुरोधाद्वा कथञ्चिद् गमयितव्यम् । वैशेषिकसूत्रोपन्यासकारशङ्करमिश्रास्तु—"अत्र द्रव्यादिपदार्थानामुद्देश एव विभागः पर्यवसन्नः सच न्यूनाधिकसङ्ख्याव्यवच्छेदफलकस्तेन षडेव पदार्था इति नियमः पर्यवस्यती"ति षडेव पदार्थान्मन्यन्ते । नच प्रथमाध्याये द्वितीयाह्निके "कारणाभावात्कार्याभाव इत्यादीनां सूत्राणां का गतिरिति वाच्यम्, पूर्वोत्तरमीमांसकानामभावघटितप्रयोगवन्निषेधमात्रपरतयापि तदुपपत्तेः । अन्तर्भावस्तु गुणादौ यत्र विधेः कल्प्येत तत्र" निषेधस्यापि स्यात् तस्मादभावत्वं सखण्डोपाधिरिति वदन्तो दूरं परास्ता वेदितव्याः ।

आस्तां तावदियं विचारणा सर्वथापि तु इदं न्यायशास्त्रं सकलशास्त्रमर्मविज्ञानाय बुद्धिचातुर्यवर्धनाय च महदुपकरोति, यदि शुष्कतागाडम्बरविडम्बनैव निनाटयिषिता न भवेत्। अस्य मुक्तावलीग्रन्थस्य समालोचनादृष्ट्या गुणदोषविवेचनात्मको भूमिकांशो बहुकार्यव्यग्रतया सम्प्रति न प्रयोजितः, यदि जीविष्यामि समयान्तरे पुनःसंस्करणे नियोजयिष्यामि, यथाचैतत् तथैव च न्यायसाहित्यैतिह्यमपि ।

अपिच अस्याः प्रभाख्यायाः टीकाया रचने मम मुख्यं प्रयोजनमेतदेवास्तीति यदत्र देशे साम्प्रतिकानां विरलप्रचारमपि न्यायशास्त्रमनायासेनैव प्रक्रियाधिगमपूर्वकं भूयोपि बहुप्रचारं भवेत्, परीक्षादित्सूनां छात्राणामपि सुगमता तदध्यापकानाञ्च पाठे मूलार्थज्ञापनेऽनायासता च सिद्ध्येत् । यथामति यथावसरञ्च मया प्रूफादिसंशोधनकार्यं सम्पादितं तथापि मनुष्यस्वभावसुलभतया क्वचित् क्वचिदशुद्धिरपि सञ्जाता चेत् ? सापुनः सहजकृपापरवशैर्विद्वद्भिर्गुणग्रहिलैः स्वयं वारणीया, तेन तेषामहं महान्तं धन्यवादं गास्यामि ।

सकलशास्त्रपारङ्गतैर्नव्यन्यायमूर्त्तिभिरखाखण्डाध्यापकैर्वीतरागैः श्रीलश्री १०८ विश्वेश्वराश्रमस्वामिभिर्भूमिकादिविषये मम लेखसन्मतिसाहाय्यमाचरितमिति ते कोटिशो धन्यवादैर्भूष्यन्ते । विदुषामनुचरः—

ता० २२-२-२४ ई० } नृसिंहदेवः ।

किञ्च—यथा वेदान्तिमते अविद्याध्वंसस्य ब्रह्माणि ब्रह्मरूपत्वं तथाऽस्मन्मतेऽपि भूतलादौ घटाभावस्य भूतलादिस्वरूपत्वम्, कल्पिताधाराधेयाभावश्च स्वीकृतः। त्वयापि च घटाभावे वन्ह्यभावोऽनवस्थाभिया घटाभाव एवेति घटाभावस्य वह्निरपि प्रतियोगीतिवदता आधाराधेयभावः स्वीकृत एव। नन्वाधाराधेयभावापत्तिपरिहारेपि येनेन्द्रियेण यद्गृह्यते तेनेन्द्रियेण तन्निष्ठा जातिस्तदभावश्चेति नियमाज्जलादिगतगन्धाभावस्य जलादिरूपतया जलादेरपि घ्राणग्राह्यत्वं स्यादितिचेद् ? अत्र ब्रूमः—यथा जलमभास्वरशुक्लरूपवत्त्वेन चक्षुषा गृह्यते शीतस्पर्शवत्त्वेन तु त्वचा गृह्यते एवं गन्धाभावत्वेन जलादेर्घ्राणग्राह्यत्वेऽपि न किञ्चिद्बाधकमिति युक्ततरमाभाति। अत एव गन्धाभावस्य जलादिरूपत्वे जलत्वादिनैव तेषां न घ्राणग्राह्यता गन्धाभावत्वेन तु तेषामपि घ्राणग्राह्यतेतीष्टमेवेति प्राभाकराणामाशयः। येनेन्द्रियेण यद्गृह्यत इति नियमोऽनैकान्तिकः। किञ्च—अभावानां प्रत्यक्षविषयत्वाभ्युपगमे तार्किकनियमव्यभिचारशङ्कावकाशः मीमांसकनये त्वधिकरणानामभावत्वेन रूपेणानुपलब्धिरूपषष्ठप्रमाणगम्यत्वस्य स्वीकारात्।

नच प्रमाणान्तराभ्युपगमे गौरवं शङ्क्यम्, प्रत्यक्षवादिभिरपि अभावप्रत्यक्षकारणीभूतविशेषणविशेष्यभावाख्यषष्ठसन्निकर्षस्य कल्पनेन तौल्यात्। नच वैशिष्ट्यं स्वरूपसम्बन्धरूपत्वादधिकरणात्मकमिति नातिरिक्तं कल्प्यत इति वाच्यम्, अभावानामधिकरणात्मकत्वेन प्रकृतेऽपि गौरवाभावात्। अपिच "येनेन्द्रियेणेत्यादि नियमस्यैकान्तिकत्वाभ्युपगमे रूपादिप्रतियोगिकाभावानामपि चक्षुर्ग्राह्यत्वापत्त्या वायौ रूपाभावबुद्धिश्चक्षुर्व्यापारमन्तरेणैव जायमानोपपद्येत। एवं परमाण्वादौ महत्त्वाभावबुद्धिरपि, वाय्वादेश्चाक्षुषविषयत्वञ्चापद्येत। तस्मादनुपलब्धिप्रमाणेनैवाधिकरणमभावत्वेन गृह्यते।

"घटाभाववद्भूतलम्" इतिज्ञानस्यापि भूतलांशे प्रत्यक्षत्वमभावांशे परोक्षत्वम्, "पर्वतो वह्निमान्" इत्यादेः पर्वतांशे प्रत्यक्षत्वं वह्निमत्वांशे परोक्षत्वमिति ध्येयम्। तस्मात्पदार्थान्तरतया अभावस्याङ्गीकारोऽभिमानमात्रं तस्यालीकत्वात्। अत एव लोके वेदे च "घटो नास्ति" "यस्मात्परं नापरमस्ति किञ्चित्" इत्यादिर्नञ्घटितवाक्यव्यवहार एव प्रायो दृश्यते नतु "घटाभाववद्भूतल" मिति लौकिकः कोऽपि प्रयुङ्क्ते। किं बहुना अभावपदमपि न भावोऽभाव इति नञ्समास एव, नञर्थस्य पृथक्पदार्थताभिमाने तु अब्राह्मणोऽधर्म इत्यादौ प्रतीयमानसादृश्यविरोधादिनञर्थानामपि पदार्थान्तरतास्वीकारस्तव मते आपद्येत, तेन बहुपदार्थप्रसिद्ध्या सप्तपदार्थवादो दत्तजलाञ्जलिः स्यात्। वस्तुतस्तु नञः समभिव्याहृतपदार्थद्योतकत्वादेव न पृथक्पदार्थवाचकता, किन्तु पदार्थ एव आविर्भूतत्वतिरोभूतत्वाभ्यां द्विविधः, तत्र पदार्थस्यानाविर्भूतस्वरूपद्योतको नञ्। अत एव ब्रह्मसूत्रभाष्ये तर्कपादे "द्रव्यमेव संस्थानादिभेदादनेकशब्दप्रत्ययभाग्भवति तद्वत्" इतिभगवच्छ्रीशङ्कराचार्यैरुक्तम्।

किञ्च—"धर्मविशेषप्रसूताद् द्रव्यगुणकर्मसामान्यविशेषसमवायानां पदार्थानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानान्निःश्रेयसम्" (वै० १।१।४) इत्यत्र पदार्थोद्देशे महर्षिणा कणादेनाभावो नोद्दिष्टः। यत्तु—वृत्तिकारः "अत्र षट्पदार्थकीर्तनं भावाभिप्रायेण वस्तु-

तोऽभावोऽपि पदार्थान्तरतया मुनेरभिमत" इत्युक्तम् । "अभावश्च वक्तव्यो निःश्रेयसोपयोगित्वाद्भावप्रपञ्चवत्" इति लीलावतीकारोक्तञ्च, द्रव्यकिरणावल्याम्, "अभावस्तु स्वरूपवानपि नोद्दिष्टः प्रतियोगिनिरूपणाधीननिरूपणत्वान्नतु तुच्छत्वा" दित्युदयनोक्तञ्च तत्सर्वं सूत्रविरोदुपेक्ष्यम्, अधर्माधिकारिबुद्ध्यनुरोधाद्वा कथञ्चिद् गमयितव्यम् । वैशेषिकसूत्रोपन्यासकारशङ्करमिश्रास्तु—"अत्र द्रव्यादिपदार्थानामुद्देश एव विभागः पर्यवसन्नः सच न्यूनाधिकसङ्ख्याव्यवच्छेदफलकत्वेन षडेव पदार्था इति नियमः पर्यवस्यती"ति षडेव पदार्थान्मन्यन्ते । नच प्रथमाध्याये द्वितीयाह्निके "कारणाभावात्कार्याभाव इत्यादीनां सूत्राणां का गतिरिति वाच्यम्, पूर्वोत्तरमीमांसकानामभावघटितप्रयोगवन्निषेधमात्रपरतयापि तदुपपत्तेः । अन्तर्भावस्तु गुणादौ यत्र विधेः कल्प्येत तत्र" निषेधस्यापि स्यात् तस्मादभावत्वं सखण्डोपाधिरिति वदन्तो दूरं परास्ता वेदितव्याः ।

आस्तां तावदियं विचारणा सर्वथापि तु इदं न्यायशास्त्रं सकलशास्त्रमर्मविज्ञानाय बुद्धिचातुर्यवर्धनाय च महदुपकरोति, यदि शुष्कवागाडम्बरविडम्बनैव निनाटयिषिता न भवेत् । अस्य मुक्तावलीग्रन्थस्य समालोचनादृष्टया गुणदोषविवेचनात्मको भूमिकांशो बहुकार्यव्यग्रतया सम्प्रति न प्रयोजितः, यदि जीविष्यामि समयान्तरे पुनःसंस्करणे नियोजयिष्यामि, यथाचैतत् तथैव च न्यायसाहित्यैतिह्यमपि ।

अपिच अस्याः प्रभाख्यायाः टीकाया रचने मम मुख्यं प्रयोजनमेतदेवास्तीति यदत्र देशे साम्प्रतिकानां विरलप्रचारमपि न्यायशास्त्रमनायासेनैव प्रक्रियाधिगमपूर्वकं भूयोपि बहुप्रचारं भवेत्, परीक्षादित्सूनां छात्राणामपि सुगमता तदध्यापकानाञ्च पाठे मूलार्थज्ञापनेऽनायासता च सिद्ध्येत् । यथामति यथावसरञ्च मया प्रूफादिसंशोधनकार्यं सम्पादितं तथापि मनुष्यस्वभावसुलभतया क्वचित् क्वचिदशुद्धिरपि सञ्जाता चेत्? सापुनः सहजकृपापरवशैर्विद्वद्भिर्गुणग्रहिलैः स्वयं वारणीया, तेन तेषामहं महान्तं धन्यवादं गास्यामि ।

सकलशास्त्रपारङ्गतैर्नव्यन्यायमूर्त्तिभिरखाखण्डाध्यापकैर्वीतरागैः श्रीलश्री १०८ विश्वेश्वराश्रमस्वामिभिर्भूमिकादिविषये मम लेखसन्मतिसाहाय्यमाचरितमिति ते कोटिशो धन्यवादैर्भूष्यन्ते ।

विदुषामनुचरः—

ता० २२-२-२४ ई० } नृसिंहदेवः ।

* ॐ *

## द्वितीयसंस्करणविषये द्वित्राः शब्दाः ।

श्रीमाननीयाः ! प्रियपाठकमहाभागाः !

मुक्तावलीप्रभाया द्वितीयसंस्करणमिदं प्रथमसंस्करणापेक्षया बहु सुन्दरं परिष्कृतम्, क्वचित् क्वचित् टीकाटिप्पणादिस्थले परिवर्धितञ्च। यत्र पूर्वसंस्करणरचितपाठस्यातो भेदः क्वचिदुपलभ्येत तावता विरोधसम्भावना न कर्त्तव्या, विवक्षितार्थे वैषम्याभावाद् बुद्धिपूर्वं परिवर्त्तितत्वाच्च। यदि क्वचिदेकरूपः पाठः स्थलान्तरेऽपि धृतः स्यात्तत्र तदध्येतृजनसौकर्यहेतुकोऽनुवाद एव न पुनरुक्तिरपीति। किञ्च—३५३ पुटादारभ्य ३७६ पुटपर्यन्तं फर्मात्रये प्रकाशकमहोदयानामनवधानाद् यदज्ञातन्यायमर्मकेण केनचित्संशोधनाय साहसिक्यमाचरितं, तत्र जातानां वर्णमात्राद्यशुद्धीनां कृते मम मनसि महान् खेदो वर्त्तते। तदर्थं मया विद्वांसः सानुरोधं प्रार्थ्यन्ते यत्ते कृपया तत्र तत्र तच्छोधनं कृत्वा पठन्तः पाठयन्तश्च मयि महान्तमनुग्रहं विधास्यन्तीति। तत्रत्यतत्तत्पत्रीयशीर्षकवैकृत्यन्तु संयुक्तिचिटिकेन दूरीकृतम्। एतस्मिन् संस्करणे मुक्तावल्यास्तुलनात्मकसमालोचनां लिलेखिषामिस्म, परन्तु तन्मुद्रणे प्रकाशकानामिच्छा नाऽभूदिति कृत्वा तामहं कालान्तरे यथायोगं प्रकाशयिष्यामि।

एवं कृतेऽपि प्रयत्ने मनुष्यजनसुलभप्रमादहेतोर्यत्र कुत्रचित् काचित्त्रुटिरुपलभ्येत चेत्? तन्मांप्रति लेखद्वारा तस्याः सूचनां कुर्वन्तु येनाग्रिमे संस्करणे तत्समीचीनं क्रियेत। किंवा—स्वयं तत्र तत्र तत्पूर्त्तिकरणेन मत्साहाय्यमाचरन्तोपि विद्वांसो मया शतशोधन्यवादैर्भूष्येरन्निति बद्धाञ्जलिः प्रार्थयते—

विदुषामनुचरः
नृसिंहदेवः

ता० ई० २८-१०-२६

* ॐ *

# विवृतिसहिताया: सप्रभाया मुक्तावल्या विषयसूची ।

## ( प्रत्यक्षखण्डम् )

---

## अथानुमानादिखण्डत्रयम् ।

इति

---





# सविवृतिप्रभोपेता न्यायसिद्धान्तमुक्तावली।

( न्यायसिद्धान्तमुक्तावली )

चूडामणीकृतविधुर्वलयीकृतवासुकिः ।
भवो भवतु भव्याय लीलाताण्डवपण्डितः ॥ १ ॥

( प्रभा टीका )

स्वाङ्के षडाननगजाननसूनुयुग्मं
धृत्वा स्तनामृतपयः परिपाययन्ती ।
सा नीलकण्ठसुकृतौघफलं भवानी
वाचां निरोधमपहन्तु ममाद्य माता ॥ १ ॥

तैस्तैर्भूरिपरिश्रमैः सनियमं श्रीमद्गुरोः पादयोः
शुश्रूषां विदधन्मुदैकमनसा यत्त्वां समाराधयम् ।
मातर्भारति ! तेन चेदधिगतः स्वल्पोऽपि तोपस्त्वया
तत्साहाय्यमलं स्थिरं करुणया कुर्या ममास्यां कृतौ ॥ २ ॥

श्रीभगवद्दत्ताभिधमहाकविं गीतगरिमाणम् ।
न्यायाम्भोधिज्योत्स्नाकरायमेषोऽस्मि तौ गुरू प्रणतः ॥ ३ ॥

आद्यं गुरुन्तथाऽहं वन्दे श्रीबदरिकानाथम् ।
चान्द्रव्याकरणज्ञं गुरुमिव नित्यं प्रगल्भतालोकम् ॥ ४ ॥

देवीदासाभिधं तातं विष्णुदेवीञ्च मातरम् ।
प्रणम्य मान्यं मान्याञ्च तयोरर्थं समर्थयन् ॥ ५ ॥

विश्वनाथस्य सूक्तीनां गूढतत्त्वप्रकाशिकाम् ।
शुभां कुर्वे "प्रभां" टीकां छात्राणां हितकाम्यया ॥ ६ ॥

तत्र तावत् कारिकावलीग्रन्थस्य राजीवशिष्यहिताय स्वयम्प्रणीतस्य व्याख्यानं चिकीर्षुः विश्वनाथपञ्चाननभट्टाचार्यो निर्विघ्नपरिसमाप्तये कृतस्येश्वरनिर्देशरूपमङ्गलस्य "शिष्या अप्येवं कुर्यु"–रिति शिष्यशिक्षायै ( सदाचारसरणिरक्षायै ) *निबन्धनं कुर्वन्

---

( सौभाग्यवती विवृतिः )

स्वयं निर्मितटीकायाः प्रभाया विषमस्थले ।
" सौभाग्यवती " नाम्नेयं विवृती रच्यते मया ॥ १ ॥

* ग्रन्थघटनं कुर्वन् ।

ईश्वरं प्रार्थयते—चूडामणीकृतेति । अचूडामणिः चूडामणिः सम्पद्यमानः कृत इति चूडामणीकृतः,*चूडामणीकृतो विधुः चन्द्रो येन स तथोक्तः। अवलयः वलयः सम्पद्यमानः कृत इति वलयीकृतः, वलयीकृतो वासुकिः तदाख्यो नागो येन स तथोक्तः। भवः=भवति अस्मात्प्रपञ्च इति †भवो महादेवः भव्याय=कल्याणाय भवतु ।

पुनः कीदृशो भव इत्याह—लीलेति । लीलया ताण्डवं लीलाताण्डवं तत्र ‡पण्डितः=कविः कुशल इत्यर्थः ।

केचित्तु—अस्मिञ्श्लोके §समाप्तपुनरात्ताख्यं वाक्यदोषमाचक्षते । तथाहि—यत्र विशेष्यवाचकं पदं पूर्वं क्रियया अन्वितं सत् निराकाङ्क्षं भवति; पुनस्तस्यैव अन्यविशेषणेन सहान्वयलाभाय उपादानं समाप्तपुनरात्तत्वं दोषः । यथा चात्रैव "भव" इति विशेष्यपदस्य "भवतु" इति क्रियापदेन प्रथममन्वयो जातः, तदुत्तरं तस्यैव लीलेत्यादिविशेषणपदेन सह सम्बन्धकरणाय "कीदृशो भव" इत्यनुसन्धानमेवोक्तदोषः ।

एतस्य समाधानन्तु—लीलेत्यादिपदं न विशेषणं किन्तु विशेष्यपदमेतत्,भवान्तानि प्रथमान्तानि पदान्येव विशेषणानि, तेन नैवायं दोषः । अथवा–विधोः किमर्थं चूडामणीकरणं किमर्थं वा वासुकेर्वलयीकरणमिति भवत्येवाकाङ्क्षा। तदुपशमार्थैव लीलेत्यादिविशेषणपदस्योपादानं कृतम् । यदीदं विशेषणपदं नोपादीयेत तदेष्टान्वयस्य लाभ एव न स्यात । "निराकाङ्क्षा काचित् प्रतिपत्तिः ( वाक्यार्थबोधः ) न सम्भवति" इति न्यायात् । तस्मादत्रोक्तदोषसम्भावनैव नेति बोध्यम् ।

**अयं भावः**—क्रियाकारकपदानां परस्पराकाङ्क्षा नियता, पुत्रादिपदानामपि स्वसम्बन्धिपित्रादिपदाकाङ्क्षा नियता। प्रयोजनाकाङ्क्षापि नियतैव, तेन विना वाक्यार्थ-

---

(सी०वि०) *'कृभ्वस्तियोगे सम्पद्यकर्त्तरि च्विः' (५।४।५०) इति सूत्रेण विहितः 'च्वि' प्रत्ययः "अभूततद्भाव इति" वार्त्तिकेन अभूततद्भावेऽर्थे भवति । अस्य (चूडामणिशब्दस्य) 'च्वौ च' (७।४।२६) इत्यनेन इवर्णस्य पूर्ववर्तिनो दीर्घः । वेर्लोपे च्व्यन्तत्वादव्ययत्वम् ।

† 'भू' धातो र्बाहुलकाद् "कृत्यल्युटो बहुलम्" ( ३ । ३ । ११३ ) इत्यप् ।

‡ पण्डा सञ्जाता अस्येति पण्डितः। "तदस्य सञ्जातं तारकादिभ्य इतच्" (५।२।३६) इतीतच् प्रत्ययः । "संख्यावान् पण्डितः कविः" इत्यमरः ।

§वाक्ये समाप्ते पुनस्तदन्वयीयशब्दोपादानं समाप्तं सत्पुनरुपात्तमिति व्युत्पत्तेरिति **प्रदीपः**। यथा उदाहृतं "चन्द्रालोके" द्वितीयमयूखे—"एष पीयूषभाजनम् । नेत्रानन्दी तुषारांशुरुदेत्यम्बुधिबान्धवः" । अत्र "उदेति" इत्यन्तेन वाक्यार्थे समाप्ते "अम्बुधिबान्धव" इत्यस्य विशेषानाधायकस्य पुनरुपादानम् । एवमेव काव्यप्रकाशे—सप्तमोल्लासे "क्रेङ्कार"—इत्युदाहरणे "एतादृशः कामः प्रेम तनोतु वः" इति समाप्तेऽपि वाक्ये पुनः तत्कामस्य कर्तुः "नववय"—इति विशेषणाभिधानेन पुनरुपात्तता । "क्रियाकारकान्वयेन समाप्तेऽपि वाक्ये विशेषाभिधित्सां विना पुनस्तद्वाक्यान्वयि पदाभिधानं यत्र, तत्रायं दोष इति तु सारः ।

बोधानुपपत्तेः। एवमनियताकाङ्क्षास्थल एव समाप्तपुनरात्ताख्यो दोषो ज्ञातव्यः। नियताकाङ्क्षास्थले तु नासौ दोषः। यथाऽत्रैव विधुप्रभृतीनां चूडामण्यादिकरणे कैमर्थ्याकाङ्क्षायां जायमानायां लीलेत्यादिविशेषणोपादानं सप्रयोजनम्। तेन च भवतिक्रियान्वितस्यापि भवपदस्य पुनरन्वयो न दोषावहः।

अनेन भवस्य नृत्यवर्णनेन प्रमुदितात् तस्मात् प्रार्थिता अर्था अवश्यं लभ्यन्त इति सूचितम्। नह्यप्रमुदितः कश्चिदपि कस्यचिन्मनोरथं पूरयतीति लोकप्रसिद्धमेव ध्वनितम्। अधिकन्तु दिनकरीरामरुद्रयादिग्रन्थे द्रष्टव्यम्। गौरवभयात् छात्राणां सुकुमारमतीनां बुद्धिव्याकुलताभयाच्च न बहु प्रपञ्चितम्॥ १॥

(मुक्ता०) निजनिर्मितकारिकावलीमतिसंक्षिप्तचिरन्तनोक्तिभिः।
विशदीकरवाणि कौतुकान्ननु राजीवदयावशंवदः॥ २॥

(प्रभा०) शिष्याणामवधानाय *प्रतिजानीते—निजनिर्मितेति–निजेन स्वेन निर्मिता रचिता या कारिकावली तां निजनिर्मितकारिकावलीम्। अतिसंक्षिप्त०=अत्यन्तं संक्षिप्ताः शब्दसंक्षेपं प्राप्ता याः चिरन्तनानां कणादप्रभृतीनां मुनीनाम् उक्तयो वचांसि वचःप्रतिपाद्या युक्तयः ताभिः। कौतुकात्=कुतूहलात्। ननु=एव अनायासादेवेत्यर्थः, विशदीकरवाणि=स्फुटीकरोमि। कीदृशोऽहमित्याह–राजीवेति। †राजीवे तदाख्ये शिष्ये या दया कृपा तस्या वशंवदः तदधीन इत्यर्थः।

अयं भावः—यद्यपि लीलावत्यादयः प्राचीना निबन्धाः सन्ति येषां पठनेनैव कारिकावलीबोध्योऽर्थो ज्ञातुं शक्यतेऽतो मुक्तावलीग्रन्थनिर्माणं निष्फलमेवाभाति, तथापि तेषु भूयान् पाठः, सुकुमारमतीनां बालानां यस्याध्ययने बहुक्लेशो भवतीत्यालोच्य अल्पग्रन्थेनैव यथा बहुन्यायसिद्धान्तो ज्ञातः स्यात् तथा मुक्तावलीग्रन्थो रचनीय एवेति कृत्वा नास्य निर्माणं निष्फलम्।

अत्र चिरन्तनोक्तिकथनेन स्वस्य ग्रन्थस्य सन्मूलत्वं सूचितम्, कपोलकल्पितत्वञ्च वारितम्। एतेन ये केचिदाधुनिकाः गुरुसम्प्रदायशून्या दर्शनमर्मबोधग्रस्तमतयो मुक्तावलीं जालग्रन्थं वदन्ति ते परास्ता वेदितव्याः। एतच्चाग्रे ऽ‡स्मद्व्याख्याने तत्र तत्र स्फुटीभविष्यति§। राजीवेतिपदेन स्वस्य ग्रन्थकरणे प्रयोजनं प्रदर्शितम्।

---

(सौ० वि०)—*प्रतिज्ञां करोति। प्रतिज्ञा च—स्वकर्त्तव्यत्वेन निर्देशः। द्रव्यादिनिरूपणस्यैव स्वकर्त्तव्यत्वेन प्रतिज्ञानात्।

† "राजीवनामके शिष्ये शुश्रूषादिना जाता या दया, तया वशंवदस्तदधीनः सन्नित्यर्थ" इति प्राचीना प्रभा। एतेन—"सेवया वशीभूतो गुरु र्यथा द्रागेव शास्त्ररहस्यं शिष्यहृदयेऽङ्कयति न तथा प्रकारान्तरेणेति" स्पष्टः स्वाऽनुभवः प्रकाशितः।

‡ आर्षवचनोपन्यासेन सन्मूलत्वज्ञापनरूपे।

§ सत्सम्प्रदायमूलताप्रदर्शनेनेति शेषः।

ननु—सिद्धार्थं सिद्धसम्बन्धं श्रोतुं श्रोता प्रवर्त्तते ।
शास्त्रादौ तेन वक्तव्यः सम्बन्धः सप्रयोजनः ॥

इति नियमाद् अत्र च विषयादीनामनुक्तेः कथमस्मिन् ग्रन्थे ❀प्रेक्षावतां प्रवृत्तिः स्यादिति शङ्कामपनिनीषुः विषयादिकं सूचयति—सद्द्रव्येति ।

(मुक्ता०)—**सद्द्रव्या गुणगुम्फिता सुकृतिनां सत्कर्मणां ज्ञापिका**
**सत्सामान्यविशेषनित्यमिलिताभावप्रकर्षोज्ज्वला ।**
**विष्णोर्वक्षसि विश्वनाथकृतिना सिद्धान्तमुक्तावली**
**विन्यस्ता मनसो मुदं वितनुतां सद्युक्तिरेषा चिरम् ॥ ३ ॥**

(प्रभा०)—**सद्द्रव्या**=पृथिव्यादिनवद्रव्यैः सहिता युक्ता तेषां †प्रतिपादनकरीत्यर्थः । **गुणगुम्फिता**=गुणैः रूपरसादिभिश्चतुर्विंशतिसङ्ख्याकैर्गुम्फिता युक्ता । **सत्कर्मणाम्**=उत्क्षेपणादिपञ्चविधकर्मणां **ज्ञापिका**=बोधिका । **सत्सामान्येति**—सत् ‡जातिरूपं सामान्यम्, विशेषाः नित्यद्रव्यवृत्तयोऽनन्ताः स्वतोव्यावृत्ताश्च, नित्यः=समवायाख्यो नित्यसम्बन्धः तैः मिलिता । अथवा—नित्यमिलितं समवायसम्बन्धः । सन्ति सामान्यविशेषनित्यमिलितानि यस्यां सा । **अभावप्रकर्षोज्ज्वला**=अभावस्य भावभिन्नस्य सप्तमपदार्थस्य यः प्रकर्षः प्रागभावादिभेदरूपं वैलक्षण्यं तस्योज्ज्वला प्रकाशयित्री । §**एषा**=बुद्धिस्था **सिद्धान्तमुक्तावली**=सिद्धान्ता एव मुक्ता माणिक्यानि तासामावली पङ्क्तिः । **विष्णोः**=कमलापतेर्नारायणस्य सविशेषब्रह्मणः **वक्षसि**=वक्षःस्थले, **विन्यस्ता**=विशेषेण न्यस्ता सम्यगर्पिता, **सकृतिनाम्**=मेधाविनां पण्डितानामित्यर्थः । **मनसः**=हृदयस्य, **मुदम्**=सन्तोषं ¶प्रसन्नतामित्यर्थः । **चिरं**=बहुकालम्, **वितनुताम्**=विस्तारयतु

---

(सौ०वि०) ❀ हेयोपादेयविवेकनिपुणधिषणातिशयवतामित्यर्थः ।

† ननु—यथा अधिकरणे उपपदे "चरेष्टः" (३ । २ १६) इति कर्त्तरि टे कृते उपपदसमासे टित्त्वात् ङीपि "कुरुचरी"ति स्यात्, नतु तद्वत् "प्रतिपादनकरी"ति ङीबन्तः प्रयोगः साधुरिति चेद् ? भ्रान्तोऽसि—"कृञो हेतुताच्छील्यानुलोम्येषु" ( ३ । २ । २० ) इति सूत्रेण हेत्वादिषु द्योत्येषु करोतेष्टविधानात्, टित्त्वात् ङीपो निराबाधाच्च "यशस्करी विद्या" इतिवत् प्रयोगसाधुतापत्तेः । अतएव—"नित्यानन्दकरी"—इत्याद्याः प्रयोगा अन्नपूर्णादिष्वाचार्याणां सङ्गच्छन्त इति दिक् ।

‡ "यद्वा—सामान्यं द्विविधं जातिः अखण्डोपाधिश्चेति तर्कालङ्कारादिभिः सामान्यपदार्थो द्वेधा विभक्तः । विश्वनाथपञ्चाननस्तु—जातिमेव निरूपयिष्यति नतु अखण्डोपाधिम्, अतः सदिति प्रशस्तमित्यर्थः । प्राशस्त्यञ्च सकलतार्किकसम्मतत्वम् । जातिर्हि सकलतार्किकैः सम्मन्यते नतु अखण्डोपाधिः । एतेन स्वयमखण्डोपाध्यनिरूपणे बीजमपि दर्शितम्" इति मञ्जूषा ।

§ रचयिष्यमाणामपि मुक्तावलीं बुद्धौ सन्निहितां मत्वा "एषा" इति निर्दिशति ।

¶ रुचियं प्रसन्नता सकलशास्त्रेषूहापोहकुशलतापूर्वक आनन्दविशेषः । अस्या न्यायविद्यायाः-

कथम्भूता सिद्धान्तमुक्तावली, सद्युक्तिः=सत्यो वादिभिरखण्डनीया युक्तयः तर्का यस्यां सा तादृशी वाद्यखण्ड्यतर्केत्यर्थः।

अनेन द्रव्यादिपदार्थवत्त्वनिरूपणेन ग्रन्थे (श्लेषेण) मुक्तावल्या उपमा सूचिता। ततश्च मुक्तावलीपक्षे एवं योजयितव्यम्—मुक्तामाला हि द्रव्येण साध्या क्रेतव्या निर्मातव्या वा भवतीति "सद्रव्या"। गुणगुम्फिता=गुणेन सूत्रेण गुम्फिता प्रोता। सुकृतिनां पुण्यवतां यानि सन्ति शुभानि परमेश्वरनामस्मरणादीनि कर्माणि तेषां ज्ञापिका=बोधिका। पुण्यवन्त एव मुक्तामालाद्युत्तमभोग्यपदार्थान् लभन्ते नतु पापात्मान इति भावः। सत्सामान्यम्=उत्तमा जातिः, विशेषो=मुक्तानां महत्त्वं निर्मलत्ववर्त्तुलत्वादिकञ्च ताभ्यां नित्यं सदैव मिलिता=सम्बद्धा। अभावे तेजोऽभावरूपेऽन्धकारे सति प्रकर्षेण उज्ज्वला वसनादिपदार्थप्रकाशिकेति यावत्। सती समीचीना युक्तिर्ग्रथनविशेषो यस्याः सा सद्युक्तिः। एवं यथा मुक्तावली=मुक्तामाला द्रव्यादिसकलपदार्थवती तथा सिद्धान्तमुक्तावलीनामको ग्रन्थोपीत्याशयः। अत्र मुक्तावल्या उपमाप्रकटनेन ग्रन्थस्य सर्वथा दोषराहित्यं स्फुटीकृतम्।

एवञ्चास्य ग्रन्थस्य द्रव्यादयः पदार्था विषयः। पदार्थतत्त्वावधारणं *प्रयोजनम्। ग्रन्थविषययोः प्रतिपाद्यप्रतिपादकभावः, अधिकारिग्रन्थयोश्च बोध्यबोधकभावः, अधिकारिविषययोश्च ज्ञातृज्ञातव्यभाव इत्यनेकविधः सम्बन्धः। पदार्थज्ञानकामोऽधिकारीति †अनुबन्धचतुष्टयं प्रदर्शितम्। तथाच—विषयसम्बन्धादिप्रदर्शनेनास्मिन् ग्रन्थे प्रेक्षावतां प्रवृत्तिर्युक्तैवेत्युक्तम्भवति।

---

सकलविद्योपकारित्वात्। एतच्चाह न्यायभाष्यकारः—अभिधेयप्रयोजनसम्बन्धप्रकरणे उद्देशसूत्रभाष्ये—

प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम्।
आश्रयः सर्वधर्माणां विद्योद्देशे प्रकीर्त्तिता॥ इति॥

मनुरपि चान्वीक्षिकीं विद्यां प्रशशंस। तथाहि—

त्रैविद्येभ्यस्त्रयीं विद्यां दण्डनीतिं च शाश्वतीम्।
आन्वीक्षिकीं चात्मविद्यां वार्त्तारम्भांश्च लोकतः॥ इति॥

* परमस्य शास्त्रस्य मोक्ष एव परमं प्रयोजनम्। मोक्षश्च न्यायमते आत्यन्तिकी दुःखनिवृत्तिः। दुःखानि तु एकविंशतिसङ्ख्याकानि। तथाहि—षड् इन्द्रियाणि, षड् विषयाः, षड् बुद्धयः, शरीरम्, सुखम्, दुःखञ्चेति। एतेषां निवृत्तिक्रमस्तु—"शास्त्रेण तत्त्वज्ञानं भवति, तेन मिथ्याज्ञानस्य नाशः, ततो रागादिदोषाणां नाशः, ततः प्रवृत्तेरनुत्पादः, ततो जन्मानुत्पत्तिः, ततो दुःखानुत्पाद" इति ज्ञेयः। एतदभिप्रायेणाऽऽह पदार्थतत्त्वावधारणं प्रयोजनमिति। सर्वञ्चैतत्—"दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः (न्या० १।१।२) तदत्यन्तविमोक्षोऽपवर्गः (न्या० १।१।२२) इतिमहर्षिगोतमकृतन्यायसूत्रमूलकमेव।

† अनुबन्धत्वञ्च—ग्रन्थप्रवृत्तिप्रयोजकज्ञानविषयत्वम्।

किञ्च सिद्धान्तमुक्तावल्या विष्णोर्वक्षसि विन्यस्तत्वकथनेन स्वकृतेर्भगवति ॐसमर्पणं तेन च स्वकीर्त्तिलाभोऽपि सूचित इति शम् ॥ ३ ॥

(मुक्ता०)—विघ्नविघाताय कृतं मङ्गलं शिष्यशिक्षायै निबध्नाति—

नूतनेत्यादि ।

(प्रभा० )—† ग्रन्थारम्भे कृतस्य मङ्गलस्य साफल्यं साधयितुमाह ‡विघ्नविघातायेति—

---

(सौ० वि० ) ॐ भगवति समर्पणमिति—

यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत्तपस्यसि कौन्तेय! तत्कुरुष्व मदर्पणम् ॥ ( गी० ९।२७ )

इति भगवद्गीतायामशनादिसर्वकर्मणां भगवति समर्पणस्य महाफलप्रदत्वं (अन्तःकरण-शुद्धिहेतुकत्वं ) समभिहितम् ।

† अलौकिकैकप्रयोजनोद्देशेन प्रवृत्तवाक्यसमुदायो ग्रन्थः । आद्या च प्रवृत्तिरारम्भः । अलौकिकत्वञ्चास्य "तत्त्वज्ञानान्निःश्रेयसाधिगमः" ( न्या० १।१।१ ) इति परमर्षिगोतमोक्तरीत्या परम्परया मोक्षरूपालौकिकफलसाधनत्वेन ग्रन्थत्वे घटत एव । परे तु—

विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरम् ।
निर्णयश्चेति पञ्चाङ्गं शास्त्रेऽधिकरणं मतम् ॥

इति पञ्चाङ्गकं वाक्यं ग्रन्थ इत्याहुः । यत्र तु कानिचिदेवाङ्गानि उपलभ्येरन् तत्रेतराणि कल्पनीयानि । अत्र तु प्रायः सुघटैवेयं रीतिः । अथवा—"सम्बन्धप्रयोजनज्ञानाहितशुश्रूषाजन्यश्रुति-विषयशब्दसन्दर्भो ग्रन्थः" इत्याद्यन्यत्र विस्तरः ।

‡ अत्र यद्यपि घातपदस्यैव ध्वंसरूपः (उत्पत्तिमदभावरूपः) अर्थः, तेन तावदर्थबोधाय निवेशितं 'वि' पदं निरर्थकमेव, तथापि विशिष्टवाचकानां पदानां सति पृथग् विशेषणवाचकपद-समवधाने विशेष्यमात्रपरत्वान्नैष दोषः । अस्यायमाशयः—'विघात' इत्यत्र द्वे पदे स्तः । एकं 'वि' पदम्, द्वितीयं 'घात' पदम । आद्यमुपसर्गो द्वितीयं प्रातिपदिकम् । तत्र प्रातिपादिकं स्वार्थ-वाचकम् इति सर्वेषामैकमत्यम् । उपसर्गस्तु केषाञ्चिन्मते वाचकः, केषाञ्चिन्मते पदान्तरयोगेन तस्यैव अर्थविशेषस्य द्योतकः । तत्रार्थविशेषस्य द्योतकत्वपक्षे विपदस्य घातपदयोगे सति न नैरर्थक्यम् । वाचकत्वपक्षे तु 'घात' पदेनैव उत्पत्तिमदभावरूपस्य (ध्वंसस्य) अर्थस्योपस्थितौ 'वि'पदमनर्थकमेवा-भाति । एतादृशानर्थक्यस्थले आचार्या इत्थं समादधते—यत् विशिष्टवाचकपदस्य सन्निधौ यदि पृथगपि विशेषणवाचकं पदान्तरं स्यात्, तदेदृशस्थले विशिष्टवाचकपदस्य विशेष्यमात्रमेवार्थः नतु विशिष्टरूपोऽर्थः । एवञ्च प्रकृते 'घात' पदस्य ध्वंसरूपः (उत्पत्तिमदभावरूपः) नार्थः किन्तु अभाव-मात्रमर्थः । 'वि'पदात्मकविशेषणयोगे तु सकलस्य 'विघात' पदस्य उत्पत्तिमदभावरूपोऽर्थो भवति । यथा—रघुवंशकाव्ये "स कीचकैर्मारुतपूर्णरन्ध्रै"रित्यत्र "कीचका वेणवस्ते स्युर्ये स्वनन्त्यनिलोद्धताः"

प्रारब्धुमिष्टस्य ग्रन्थस्य ॐविघ्नविघाताय=विघ्नानां प्रत्यूहानां विघाताय ध्वंसाय कृतं मङ्गलं शिष्यशिक्षायै=स्वकर्त्तव्यत्वेन ज्ञानं शिक्षा,शिष्याणां शिक्षा शिष्यशिक्षेति षष्ठीतत्पुरुषः । निबध्नाति=ग्रन्थघटकीकरोति—नूतनेत्यादिना । यथाहं ग्रन्थारम्भेऽन्तरायप्रशमनाय मङ्गलं करोमि, तथैव मच्छिष्या अपि शिष्टाचारं पालयेयुरित्यास्तिकसम्प्रदायरक्षणाय मङ्गलं करोतीत्यर्थः ।

(कारिकावली)

**नूतनजलधररुचये गोपवधूटीदुकूलचौराय ।**
**तस्मै कृष्णाय नमः संसारमहीरुहस्य बीजाय ॥१॥**

(प्रभा०)—**नूतनो** नवीनो वर्षणाभिमुखजलभरितो यो जलदो मेघः तस्य रुचिरिव रुचिर्यस्य स तस्मै । यदातु—"इवार्थगर्भबहुव्रीहौ पूर्वपदं स्वसम्बन्ध्युत्तरपदार्थसदृशे लाक्षणिकम्" इति नियमः तदाऽत्र नूतनजलधरो रुचिर्यस्येति विग्रहः । नूतनजलधरपदं नूतनजलधरसम्बन्धिरुचिसदृशमिति लक्षणया सामानाधिकरण्यस्य नानुपपत्तिरित्याद्यन्यतोऽपि ज्ञेयम् । **गोपानाम्**=वल्लवानां या वधूट्यो युवत्यः तासां यानि **दुकूलानि**=क्षौमवसनानि तेषां चौराय अपहारिणे । **संसारेति**—संसारः प्रपञ्च एव महीरुहो वृक्षः तस्य **बीजाय**=निमित्तकारणाय, **तस्मै**=शास्त्रप्रसिद्धाय कृष्णाय वासुदेवाय (देवकीनन्दनाय) धर्मरक्षायै कृतावताराय भगवते **नमः**=नमस्कारो भवत्विति मूलकारिकाया ऋजुरर्थः । किञ्च—गां वाणीं पिबन्ति सेवन्त इति गोपा यतयः तेषां वधूटीव वधूटी बुद्धिः तस्या यद् दुकूलम्=आवरणं तस्य चौराय अपहर्त्रे इत्यर्थः । नव्यत्वेन मुग्धत्वेन चाज्ञानशालित्वसाम्यारोपितं बुद्धौ वधूटीत्वं ज्ञेयम् । दाधिमथास्तु—गां पृथ्वीं पान्ति रक्षन्तीति गोपाः पाण्डवाः तेषां वधूटी द्रौपदी तस्या दुकूलस्य वसनस्य चौराय चौलाय वर्धयित्रे इत्यर्थः । "चुलू" समुच्छ्रायते इति धातुः । एतेन—"अज्ञानतः कृतं पापं प्रायश्चित्तेन नश्यति" इति बाल्यावस्थायां (अज्ञजनदृष्ट्या) कृतेन बालिकावस्त्रहरणेन जन्यं यत्पापं तस्य प्रायश्चित्ताय अनाथायै द्रौपद्यै वस्त्रं दत्तवान् भगवदवतारः श्रीकृष्णः । अन्योऽप्येवं

---

इत्यमरकोषप्रामाण्यात् कीचकपदस्य मारुतपूर्णरन्ध्रत्वविशिष्टवेणुरूपेऽर्थे शक्तिः, पुनः पृथग् मारुतेतितृतीयान्तविशेषणपददानं कैवर्दोषमावहेत् यदि उक्तो नियमो न स्यात् । उक्तनियमेन तु अत्र कीचकपदस्य केवले वेणुरूपेऽर्थे शक्तिः, तेन विशेषणदानं न निरर्थकं तद्वदत्रापि बोध्यमिति भावः ।

ॐ इयं तादर्थ्ये चतुर्थी "मुक्तये हरिं भजति" इतिवत् । कार्यसमाप्तिप्रतिबन्धकमदृष्टं विघ्नः, तस्य विघातो विशिष्टो ध्वंसः प्रकृतसमाप्तिप्रतिबन्धकयावद्विघ्नविनाश इति फलितोऽर्थ इत्येके । तस्मै इत्यर्थः । "विघ्नोऽन्तरायः प्रत्यूहः" इत्यमरः ।

प्रायश्चित्तं कुर्यादिति केवलं मर्यादारक्षार्थं इत्याहुः। ❀अवतारत्वन्तु—सर्वथाऽविलुप्तज्ञान-क्रियाशक्तित्वे सति साक्षान्मायिकविलासवत्त्वम्" इत्यन्यत्र विस्तरः।

अत्रेदमवधेयम्—त्रिविधं †मङ्गलम्—आशीर्वादो नमस्क्रिया वस्तुनिर्देशश्च। परमेश्वरात्स्वस्य स्वशिष्यादेश्च वाञ्छितार्थप्रार्थनमाशीर्वादः। स्वापकर्षबोधानुकूलः स्वीयव्यापारविशेषो (नमःपदार्थः) नमस्कारः। नमस्कारादिकमन्तरा स्वेष्टदेवतादि-कीर्तनं वस्तुनिर्देशः। परमूले नमस्कारात्मकं मङ्गलं, मूले तु आशीरर्थे लोड्विधानादा-शीर्वादात्मकं ज्ञेयम्।

मङ्गलस्य लक्षणन्तु-"विघ्नभिन्नत्वे सति विघ्नध्वंसप्रतिबन्धकाभावभिन्नत्वे सति च प्रारिप्सित (ग्रन्थ) विघ्नध्वंसाऽसाधारणं कारणम्"इति ज्ञेयम्। विघ्नेऽतिव्याप्तिवारणाय विघ्नभिन्नत्वे सतीति विशेषणम्। विघ्नध्वंसप्रतिबन्धकाभावेऽतिव्याप्तिवारणाय विघ्न-ध्वंसेत्याद्यपरं विशेषणम्। कारीरीयागेऽतिव्याप्तिवारणाय प्रारिप्सितेति। ईश्वरादि-नवविध ‡साधारणकारणे अतिव्याप्तिवारणाय असाधारणपदनिवेशः§॥ आशीर्वा-दाद्यन्यतमत्वं, समाप्तिप्रतिबन्धकीभूतदुरितविशेषध्वंसहेतुत्वं वा मङ्गलत्वमिति संक्षिप्तं (सरलं) मङ्गललक्षणम्।

---

❀ विशेषणमात्रोक्तौ प्रकृत्यापूरपूरसमर्थेषु अगस्त्यादियोगिवर्येष्वतिव्याप्तिः अतो विशेष्य-दलम्। विशेष्यमात्रोक्तौ साक्षान्मायाकार्यभूताकाशादिभूतसर्गनियन्तरि ईश्वरे=कारणब्रह्मणि अति-व्याप्तिरत उभयमुपात्तम्। अविलुप्तज्ञानक्रियाशक्तिमत्त्वञ्च शास्त्रैकवेद्यम्, अचिन्त्यपदार्थानां केवलतर्कागम्यत्वात्। उक्तञ्च परमर्षिणा—"तर्काप्रतिष्ठानादप्यन्यथानुमेयमिति चेदेवमप्य-विमोक्षप्रसङ्ग" (ब्र० सू० २। १। ११) इति। तदेतदवतारत्वं रामकृष्णादिषु मुख्यं, कुत्रचिद्गौणमप्याश्रितमिति पुराणेतिहासादिग्रन्थानां बहुपरिशीलनेन विशिष्टगुरुसम्प्रदायसमधि-गम्यमित्यपि न विस्मरणीयम्।

† "मङ्गेरलच्" (उ० ५। ७५६) इत्यौणादिकेन सूत्रेण गत्यर्थकात् 'मगि' धातोः अलचि प्रत्यये रूपम्।

‡ ईश्वरः, तस्य ज्ञानेच्छाकृतयः, दिक्कालौ, अदृष्टम् (धर्माधर्मौ) प्रागभावश्चेत्यष्टौ साधा-रणकारणानि। केचित्तु प्रागभावस्थले प्रतिबन्धकसंसर्गाभावं निवेश्य आकाशञ्चाधिकं दत्त्वा नवेति वदन्ति। एतच्च न्यायकोशादिषु सुस्पष्टम्।

§ अत्रेदं स्पष्टीकरणं बोध्यम्—विघ्नभिन्नत्वे सति विघ्नध्वंसप्रतिबन्धकाऽभावभिन्नत्वे च सति प्रारिप्सितविघ्नध्वंसाऽसाधारणकारणं मङ्गलम्।

उक्तलक्षणलक्ष्यभूतं मङ्गलं विघ्नभिन्नमपि, तथा च—विघ्नध्वंसरूपं यत्कार्यम्, तज्जनको यः प्रतिबन्धकाभावः तद्भिन्नत्वमपि मङ्गलनिष्ठम्। अथ च—प्रारम्भेच्छाविषयीभूतो यो ग्रन्थः तत्प्रतिं-बन्धकीभूतो यो विघ्नः, तत्प्रतियोगिनो ध्वंसस्याऽसाधारणकारणभूतमपीति मङ्गले लक्षणं घटितमेव। अथाऽस्य पदकृत्यप्रकारः—

(मुक्ता०)—ननु—मङ्गलं न विघ्नध्वंसं प्रति न वा समाप्तिं प्रति कारणं विनापि मङ्गलं नास्तिकादीनां ग्रन्थे निर्विघ्नपरिसमाप्तिदर्शनादिति चेन्न । अविगीतशिष्टाचारविषयत्वेन मङ्गलस्य सफलत्वे सिद्धे, तत्र च फलजिज्ञासायां, सम्भवति दृष्टफलकत्वे अदृष्टफलकल्पनाया अन्याय्यत्वात्, उपस्थितत्वाच्च समाप्तिरेव फलं कल्प्यते ।

( प्रभा० ) श्रुतिं ये न प्रमाणयन्ति चार्वाकाद्या नास्तिकाः, तेषां पूर्वपक्षमादाय शङ्कते—नन्विति । मङ्गलस्य कारणत्वाभावे व्यतिरेकव्यभिचारं हेतुमाह—"विनापि" इति । "निर्विघ्ने"ति । विघ्नध्वंसपूर्वकसमाप्तिदर्शनादित्यर्थः । कारणाभावेऽपि कार्यस्य सत्त्वं व्यतिरेकव्यभिचारः । अयमाशयः—नास्तिका हि ईश्वरमन्यां वेष्टदेवतामनङ्गीकुर्वन्तो ग्रन्थारम्भे किमपि मङ्गलं न तन्वते अथ च तेषां निर्विघ्ना ग्रन्थसमाप्तिर्दृश्यते, तस्मान्मङ्गलस्य विघ्नध्वंसादि फलं न नियतमतो न कर्त्तव्यमिति शङ्काग्रन्थार्थः । अयमत्र मङ्गलाचरणखण्डनेऽनुमानप्रकारः—"मङ्गलाचरणं न युक्तं निष्फलत्वात् जलताडनवत्" इति । अथ निष्फलत्वं हेतुः *स्वरूपासिद्ध इति कथं मङ्गलाचरणस्य युक्तत्वाभावं साधयेदित्युच्येत, तदा †तत्परिहारो-

---

यदि "विघ्नभिन्नत्वे सति" इति न निवेश्येत तदा विघ्न एवोक्तलक्षणस्यातिव्याप्तिः स्यात्तस्यापि विघ्नध्वंसजनकप्रतिबन्धकाभावभिन्नत्वात् प्रारिप्सितविघ्नध्वंसाऽसाधारणकारणत्वाच्च । भवति हि घटध्वंसं प्रति मुद्गरप्रहारादिकमसाधारणकारणं, तद्वत् घटात्मकः प्रतियोग्यपि घटध्वंसं प्रत्यसाधारणकारणम् । एवं विघ्नध्वंसम्प्रति विघ्नस्याप्यसाधारणकारणता वेदितव्या । ततश्च विघ्नेऽप्यतिव्याप्तिवारणाय "विघ्नभिन्नत्वे सति" इति पदनिवेशः । नहि स्वस्मिन् स्वभेदस्तिष्ठतीति भावः ।

अथ—कारीरीयागेऽतिव्याप्तिवारणाय "प्रारिप्सित"पदं ज्ञेयम्, तस्यापि विघ्नभिन्नत्वात् । विघ्नध्वंसप्रतिबन्धकाऽभावभिन्नत्वात्, वृष्टिप्रतिबन्धकानां विघ्नानां यो ध्वंसः तदसाधारणकारणत्वाच्च । प्रकृते—प्रारिप्सितपदेन ग्रन्थात्मकमेव कार्यं विवक्षितम्, तत्प्रतिबन्धकविघ्नध्वंसाऽसाधारणकारणत्वं तत्राक्षतमेवेतिप्रारिप्सितपदोपादानेन नैव कारीरीयागेऽतिव्याप्तिसम्भावनापि । एव कालादृष्टादि-साधारणकारणेष्यातिप्रसक्तिफलकं लक्षणेऽसाधारणपदं बोध्यम् । कार्यमात्रम्प्रति साधारणकारणानि तु—१ईश्वरः, ३ तज्ज्ञानेच्छाकृतयः, देशः, कालः, अदृष्टम्, प्रागभावः, प्रतिबन्धकाभावश्चेति नव ज्ञेयानि । तदित्थमुक्ताकारमङ्गललक्षणपदकृत्यप्रकारमजानन् उक्तलक्षणस्य प्रतिबन्धकाभावेऽतिव्याप्तिमाचक्षाणः कश्चिदत्यन्तार्वाचीनो नवतरुणो न्यायनयाऽनभिज्ञो मुधा पाण्डित्यमानमत्ततया सतामुपेक्षणीय एव ।

* हेतौ हेतुतावच्छेदकाभावः स्वरूपासिद्धिर्दोषः तद्वान् हेतुः स्वरूपासिद्धः ।

† यद्यपि चार्वाकः प्रत्यक्षातिरिक्तं नानुमानादिप्रमाणमितिमन्वानः कथमनुमानेन निष्फलत्वहेतुसाधने प्रवर्त्ततेति जायते शङ्का, तथाप्यनुमानरसिकेन नैयायिकेन सह शास्त्रार्थे तस्यैवानुमानकौशलेन तत्पक्षपरासनेऽभ्युपगमवादेन प्रवृत्तः स्वप्रौढिं ख्यापयतीति सर्वत्र नास्तिक-

ऽनुमानान्तरेण कर्त्तव्यः। तथाहि—"मङ्गलं निष्फलं फलविशेषशून्यत्वात् यन्नैवं तन्नैवम्" इति। ❀ अत्र फलविशेषशून्यत्वेन हेतुना पूर्वानुमाने हेतुभूतस्य निष्फलत्वस्य सिद्धिर्निष्प्रत्यूहा। तस्मान्न "निष्फलत्वं" हेतुः स्वरूपासिद्धः। एवञ्चानेन पूर्वपक्षग्रन्थेन मङ्गलस्य व्यतिरेकव्यभिचारो दर्शितः। † व्यतिरेकव्यभिचारस्य लक्षणन्तु—कार्य्याव्यवहितप्राक्क्षणावच्छेदेन कार्य्याधिकरणवृत्त्यत्यन्ताभावप्रतियोगितावच्छेदकवत्त्वम्। यथा—कार्यं ग्रन्थसमाप्तिः, तस्या अव्यवहिते पूर्वस्मिन् क्षणे, तस्या एव अधिकरणभूते च नास्तिकग्रन्थे विद्यमानो योऽभावः मङ्गलात्यन्ताभावः, तस्य प्रतियोगि मङ्गलम्, तन्निष्ठा प्रतियोगिता, तस्या अवच्छेदकं मङ्गलत्वम्, तद्वत्ता मङ्गले, एतदेव तत्र व्यतिरेकव्यभिचारता ज्ञेया।

एवञ्च पूर्वपक्षीयानुमानमित्थं भवति—"मङ्गलं विघ्नध्वंसं प्रति समाप्तिं प्रति वा कारणत्वाभाववत् ‡कार्य्याधिकरणवृत्त्यत्यन्ताभावप्रतियोगित्वात् घटम्प्रति वेमवत्"। यथा घटरूपस्य कार्य्यस्याधिकरणे चक्रादौ वर्त्तमानो यो वेमात्यन्ताभावः, तस्य प्रतियोगित्वं वेमनि, तस्य घटोत्पत्तिं प्रति न कारणत्वम्, तथैव समाप्तिरूपफलस्याधिकरणभूतेषु नास्तिकादिग्रन्थेषु विद्यमानो यो मङ्गलाभावः तस्य प्रतियोगि मङ्गलं नैव ग्रन्थसमाप्तिकारणम्, न वा विघ्नध्वंसकारणम् [ यस्याभावः स तस्य प्रतियोगीति शास्त्रसङ्केतः ] ततश्च विनापि मङ्गलं नास्तिकादिग्रन्थे समाप्तिरूपफलसत्त्वे कथं तस्य कारणतेति पूर्वपक्षयितुराशयः।

**निर्विघ्नपरिसमाप्तिदर्शनात्**=विघ्नध्वंसपूर्वकसमाप्तिदर्शनादित्यर्थः। तदेतत् सिद्धान्ती खण्डयति "चेन्न" इत्यादिग्रन्थेन।

---

पूर्वपक्षोत्थापनमनुमानेन कृतम्। अथवा—प्रमाणद्वयवादिनां बौद्धादीनां वा मङ्गलीयपूर्वपक्षसाम्यप्रदर्शनमिति ध्येयम्। परमिदमयुक्तम्—अनेकेषु बौद्धग्रन्थेष्वपि तदाचार्यैर्मङ्गलस्य कृतत्वात्। तथाहि—बौद्धदर्शने शान्तिरक्षितविरचिते "तत्त्वसङ्ग्रह"नामनि ग्रन्थे—

यः प्रतीत्य समुत्पादं जगाद गदतां वरः।
तं सर्वज्ञं प्रणम्यायं क्रियते तत्त्वसङ्ग्रहः॥ इति॥

❀ इदञ्च समान्येन, विशेषेण यथा—मङ्गलं निर्विघ्नपरिसमाप्त्यफलकं विनापि मङ्गलं निर्विघ्नपरिसमाप्तिदर्शनात् यथा नास्तिकग्रन्थे। मङ्गलं निर्विघ्नपरिसमाप्त्यफकलं सत्यपि मङ्गले निर्विघ्नपरिसमाप्त्यदर्शनात् यथा कादम्बर्यादौ॥

† "कारणभावे कार्याभावो व्यतिरेकव्यभिचार" इति सरलं लक्षणम्। परं कठिनलक्षणस्यापि सरलार्थबोधनप्रकारमनुसरन् शिष्यबुद्धिञ्चोद्योतयन्नेवमटीकयम्। लक्षणमिदं तर्कप्रकाश-सर्वतन्त्रसिद्धान्तपदार्थलक्षणसङ्ग्रहादिदिशा ज्ञातव्यम्।

‡ "कार्याधिकरणवृत्त्यत्यन्ताभावप्रतियोगितावच्छेदकधर्मवत्त्वात्" इत्यर्थः।

अविगीतेति—विरुद्धो गीतो विगीतः। अथवा शास्त्रात् विरुद्धं गीतं कथनं यस्य स विगीतो निन्दितः। न विगीतोऽविगीतः। *शिष्टानाम्=फलसाधने भ्रान्तिरहितानाम् [ महापुरुषाणाम् ] आचारः कृतिरिति शिष्टाचारः। अविगीतश्चासौ शिष्टाचार इति अविगीताशिष्टाचार इति कर्मधारयः, तस्य विषयो निरूप्योऽनुष्ठेय इति यावत्, तस्य भावस्तत्त्वं तेन हेतुनेत्यर्थः। सफलत्वे=सामान्यतः फलवत्त्वे। सिद्धे=अनुमिते। तत्र=तस्मिन्मङ्गले। केषुचिद् "च" पाठः। वयन्तु चस्य फल न विद्मः। फलजिज्ञासायाम्=विशेषतः फलस्य ज्ञातुमिच्छायाम्। दृष्टफलकत्वे=दृष्टमेव विघ्नध्वंसः विघ्नध्वंसपूर्विका समाप्तिर्वा फल यस्य तत् दृष्टफलकं तस्य भावस्तत्त्वं तस्मिन् सम्भवति=सति। अदृष्टेति—अदृष्टस्वर्गादिफलकल्पना न युक्तेति भावः। उपस्थितत्वादिति—"आरब्धं मे कर्म निर्विघ्नं समाप्यताम्" इति या ग्रन्थादौ प्रवृत्तस्य पुरुषस्य कामना, तद्विषयत्वेन यदनुमानं तस्मिन् प्रवर्त्तमानस्य [प्रतिपत्तुः प्रमातुः] समाप्तिरेव फलमुपस्थितं [अनुमितं] भवति तस्मादित्यर्थः। कल्प्यते=अनुमीयते।

† अयमस्य सिद्धान्तिग्रन्थस्याशयः—वेदविधिमाश्रित्य सदाचारपरिपालकानां तस्य तस्य साध्यस्य साधनस्वरूपे भ्रान्तिरहितानां पुरुषाणां काचिदपि प्रवृत्तिर्न निष्फला भवति। ते हि यथा अन्येषां कर्मणामादौ भगवन्नामस्मरणं गणपत्यादिपूजन वा कुर्वते तथैव ग्रन्थादौ मङ्गलमप्यातन्वते। तेषां तथाविधमङ्गलाचरणप्रवृत्तितो वयं प्रथमं मङ्गलस्य साफल्यमनुमास्यामहे, ततः फलविशेषविचारवेलायां ‡ समाप्तिं ग्रन्थसमाप्तिप्रतिबन्धकानां विघ्नानां § ध्वंसं वा फलं साधयिष्यामो येन मङ्गलाचरणस्य नैष्फल्यं नैव सेत्स्यति। तेनाऽस्तिकयुक्तीनामग्रे नास्तिकः किं करिष्यति। अत्र नास्तिकतर्कनिरसनप्रकारश्चायम्—"मङ्गलं सफलम् अविगीतशिष्टाचारविषयत्वात् दर्शादिश्राद्धवत् यथा दर्शादिश्राद्धकर्म अविगीतशिष्टाचारविषयत्वेन सफलं तथा मङ्गलाख्यमपि कर्म सफलम्। "यत्र यत्र अविगीतशिष्टारविषयत्वं तत्र तत्र सफलत्वम्" इति व्याप्तिः। अनेनानुमानेन मङ्गलस्य सफलता सिद्धा भवति। एवं पूर्वपक्षीयनिष्फलतासाधकमनुमानं स्वविरोध्यनुमाने सति नैवोत्थातुमर्हति। यच्च पूर्वपक्षीयानुमानेन समाप्त्यादिफलविशेषाभावः साधितः तस्येदमुत्तरम्—"मङ्गलं समाप्तिफलकं समाप्त्यन्याफलकत्वे सति सफलत्वात्" यन्न समाप्तिफलवत्तत्समाप्तिभिन्नफलवच्च तत्सफलं दृष्टम्। यथा दर्शादि कर्म समाप्ति-

---

* शिष्टत्वञ्च भक्तिश्रद्धादिभिर्वेदानुमतकर्मकर्तृत्वम्। आस्तिकाभासे व्यभिचारवारणाय भक्तीत्यादि। चैत्यवन्दनप्रवृत्तबौद्धे व्यभिचारवारणाय वेदानुमतेति। भक्तिश्च आराध्यत्वेन ज्ञानम्। श्रद्धा च फलावश्यम्भावनिश्चयः। शिष्टस्वरूपप्रपञ्चस्तु व्याकरणमहाभाष्यादौ द्रष्टव्यः।

† सिद्धान्तपक्षे अनुमानप्रकारमेव विशदयितुमुत्तरग्रन्थमारभते "अयमस्य"—इत्यादि।

‡ समाप्तिरूपम्।

§ ध्वंसरूपम्।

भिन्नस्वर्गादिफलवत् सफलञ्च, न तत् समाप्तिरूपफलवत्। मङ्गलन्तु न तथा। इदन्तु समाप्तिभिन्नफलवत् सत् न सफलम्। अपितु समाप्तिभिन्नाफलकत्वे सति सफलम्, अतः समाप्तिफलकमेवेति निर्गलितोऽर्थः।

अपि च नैव मङ्गलस्य स्वर्गादि अदृष्टं फलं मन्तव्यम्। तत्रैव अदृष्टं फलं कल्प्यते, यत्र दृष्टं फलं नोपस्थितं भवति। अत्र तु मङ्गलस्य दृष्टमेव फलं, ग्रन्थसमाप्तिरूपं ग्रन्थसमाप्तिप्रतिबन्धकानां विघ्नानां ध्वंसरूपं वेति निष्कल्मषः पन्थाः।

**(मुक्ता०) इत्थं च यत्र मङ्गलं न दृश्यते तत्रापि जन्मान्तरीयं तत्कल्प्यते, यत्र च सत्यपि मङ्गले समाप्तिर्न दृश्यते तत्र बलवत्तरो विघ्नो विघ्नप्राचुर्यं वा बोध्यम्, प्रचुरस्यास्यैव बलवत्तरविघ्ननिराकरणकारणत्वम्।**

(प्रभा०) सम्प्रति पूर्वप्रदर्शितव्यतिरेकव्यभिचारस्योद्धरणप्रकारमाह—"इत्थञ्च" इति। मङ्गलस्य समाप्तिफलकत्वे सिद्धे चेत्यर्थः। यत्र=नास्तिकग्रन्थादौ। **जन्मान्तरीयं**=पूर्वजन्मभवम्। **तत्**=मङ्गलम्। **कल्प्यते**=अनुमीयते, समाप्तिरूपेण * कार्येणेति शेषः। † अनुमानप्रकारश्चायम्—"अयं नास्तिकः [पूर्वजन्मनि] कृतमङ्गलकः ग्रन्थस्य निर्विघ्नपरिसमाप्तिदर्शनात् आस्तिकवत्"। यत्र २ निर्विघ्ना समाप्तिः तत्र २ मङ्गलस्य सत्त्वमिति व्याप्तिः। यथा आस्तिकग्रन्थे। नहि कारणेन विना कार्यं भवतीति भावः। एवञ्च नैव व्यतिरेकव्यभिचारः। (कारणाभावेपि कार्यसत्त्वरूपः)।

स्यादेतत्, मा भूद् व्यतिरेकव्यभिचारः। कारणसत्वेऽपि कार्यस्याभावरूपोऽन्वयव्यभिचारस्तु भविष्यति इत्याशङ्क्य अन्वयव्यभिचारं निराकरोति—"यत्र च" इति। **यत्र**=कादम्बर्यादिग्रन्थेषु। **सत्यपि**=कृतेऽपि समाप्तिर्न दृश्यते तत्र **बलत्तरः**=अतिशयेन बलवानिति बलवत्तरः बलीयान् यो **विघ्नः**=अन्तरायः, **विघ्नप्राचुर्यम्**=विघ्नानां बाहुल्यं वा बोध्यम्। वाशब्दः पक्षान्तरद्योतकः।

**प्रचुरस्येति**—प्रचुरस्य=प्रभूतस्य अस्यैव=मङ्गलस्यैव। **बलवत्तरेति**-बलवरविघ्नस्य **निराकरणे**=दूरीकरणे, **कारणत्वं**=हेतुभावः। बलवत्तरविघ्नध्वंसनिष्ठा या कार्यता तादृशकार्यतानिरूपिता कारणता बलवत्तरमङ्गलनिष्ठेत्येवंरूपेण मङ्गलविघ्नध्वंसयोः कार्यकारणभावो ज्ञेयः।

---

* कार्येण कारणानुमानं न्यायभाष्यकारोऽप्याह—"पूर्वोदकविपरीतमुदकं नद्याः पूर्णत्वं शीघ्रत्वञ्च दृष्ट्वा स्रोतसोऽनुमीयते भूता वृष्टिरिति" इति। (न्या० भा० १।१।५)

† वक्रन्यायनयप्रकारस्तु—अयं नास्तिकः आश्रयतासम्बन्धेन मङ्गलवान् स्वप्रतियोगिचरमवर्णानुकूलकृतिमत्त्वसम्बन्धेन समाप्तिमत्त्वात् आस्तिकवत्=भारतादिकर्तृवत्। अत्र प्रथम "स्व"पदेन मङ्गलस्य द्वितीय"स्व"पदेन समाप्तेश्च ग्रहणम्।

अयं नास्तिकग्रन्थः स्वाश्रयपुरुषप्रयत्नप्रारिप्सितत्वसम्बन्धेन मङ्गलवान् स्वप्रतियोगिचरमवर्णघटितत्वसम्बन्धेन समाप्तिमत्त्वात् आस्तिकग्रन्थवत्।

अयं भावः—यत्र आस्तिकग्रन्थादौ मङ्गले कृतेऽपि समाप्तिर्न जाता तत्र मङ्गल-करणापेक्षया बलीयान् विघ्नोऽनुमातव्यः । यद्वा यावत्सङ्ख्यं मङ्गलं कृतं ततः प्रचुराः=अधिकसङ्ख्यावन्तो विघ्नाः सन्ति तेन न समाप्तिरिति कल्पनीयम् । एवञ्च विघ्नसम-सङ्ख्याकं ततोऽधिकं वा मङ्गलं विघ्नविनाशकं न न्यूनमिति सिद्धं भवति ।

(मुक्ता०) विघ्नध्वंसस्तु मङ्गलस्य द्वारमित्याहुः प्राञ्चः ॥ *

(प्रभा०) ननु—"कारणसत्त्वे कार्यस्यावश्यम्भाव" इति नियमः । कादम्बर्यादि-ग्रन्थे विघ्नध्वंसो न स्यात्, परं मङ्गलरूपकारणदर्शनात् समाप्तिरवश्यं भवेदितीमां शङ्कां परिहरन्नाह—"विघ्नध्वंसस्तु" इति । द्वारं=व्यापारः । "द्वारं प्रधानफलम्" इति किंव्याख्यानमिति सन्तो जानन्तु । कारणसत्त्वेऽपि यदि तस्य व्यापारो न स्यात्, नैव कार्यं जायते, नहि कुठारस्य सत्तामात्रेण छिदारूपं फलं दृष्टचरम् । अपि तु कुठारस्य काष्ठेन सह संयोगविशेषरूपे व्यापारे सत्येव छिदा भवति । एवमेव कादम्बर्यादौ विघ्नानां बाहुल्येन मङ्गले कृतेऽपि नैव विघ्नध्वंसो जातः, तत्कथं विद्यमानमपि मङ्गलं विघ्नध्वंसा-त्मकव्यापाराभाववत् सत्समाप्तिरूपं फलं जनयेत् । यदा मङ्गलेन विघ्नध्वंसः क्रियते तदैव समाप्तिफलं जनयति नान्यदेति भावः । इदञ्च प्राचीनानां नैयायिकानां मतमित्याह—"इत्याहुः" इति ।

(मुक्ता०) नव्यास्तु—मङ्गलस्य विघ्नध्वंस एव फलं समाप्तिस्तु बुद्धि-प्रतिभादिकारणकलापात् ।

(प्रभा०) सम्प्रति न्यायचिन्तामणिकृतां गङ्गेशोपाध्यायानां मतमाह—"नव्यास्तु"—इति । अस्य "इत्याहु" रित्यग्रिमेणाभिसम्बन्धः । "विघ्नध्वंस एव फलम्" इति । एवकारेण समाप्तेर्मङ्गलफलत्वव्यवच्छेदः । फलम्=प्रवृत्त्युद्देश्यम् । विघ्न-ध्वंसादन्यन्नास्त्येव मङ्गलफलमिति भावः ।

ननु—समाप्तिस्तर्हि केन हेतुना जायेत इत्याह-"समाप्तिस्तु" इति । बुद्धि-प्रतिभादिकारणकलापात्=तत्र बुद्धिः=ज्ञानम् । प्रतिभा=प्राक्तनसंस्कारविशेषः स्फूर्त्या-ख्यः । आदिपदेन विघ्नसंसर्गाभावग्रहः । बुद्धिप्रतिभाविघ्नसंसर्गाभावरूपकारणसमुदाय एव समाप्तिहेतुर्न मङ्गलमित्यर्थः । एवञ्च—समाप्तिनिष्ठा या कार्यता, तादृशकार्यता निरूपिता या कारणता सा बुद्धिप्रतिभादिकलापनिष्ठैव नतु मङ्गलनिष्ठेत्याशयः ।

---

* "एवं रीत्या मङ्गलस्य समाप्तिसाधनत्वे अनुमिते श्रुतिरप्यनुमातुं शक्या—तथाहि मङ्गलं स्वनिष्ठसमाप्तिसाधनत्वबोधकश्रुतिगम्यम् समाप्तिकामनया शिष्टैरनुष्ठीयमानत्वात् । यत् यत्कामनया शिष्टैरनुमीयते तत्स्वनिष्ठतत्कारणत्वबोधकश्रुतिगम्यं भवति, यथा दर्शादिरित्यनुमानं तत्र प्रमाणम् । इयांस्तु विशेषः—प्रत्यक्षश्रुतिरपूर्वार्थे, अनुमानिकी तु निर्णीतार्थे प्रमाणम्" इति प्राचीनो नृसिंहः ।

❀ बुद्धिस्तात्कालिकी ज्ञेया मतिरागामिगोचरा ।
प्रज्ञां नवनवोन्मेषशालिनीं प्रतिभां विदुः ॥ इति ॥

(मुक्ता०) नचैवं स्वतःसिद्धविघ्नविरहवता कृतस्य मङ्गलस्य निष्फलत्वापत्तिरिति वाच्यम् । इष्टापत्तेः विघ्नशङ्कया तदाचरणात् । तथैव शिष्टाचारात् । नच तस्य निष्फलत्वे तद्बोधकवेदाप्रामाण्यापत्तिरिति वाच्यम् । सति विघ्ने तन्नाशस्यैव वेदबोधितत्वात् । अत एव पापभ्रमेण कृतस्य प्रायश्चित्तस्य निष्फलत्वेऽपि न तद्बोधकवेदाऽप्रामाण्यम् ।

(प्रभा०) प्रकारान्तरेण मङ्गलस्य नैष्फल्यं शङ्कते—"नचैवम्" इति । एवं=मङ्गलस्य विघ्नध्वंसप्रति जनकत्वे सत्यपीत्यर्थः । स्वतःसिद्धविघ्नविरहवता=स्वाभाविकविघ्नात्यन्ताभाववता । समाधत्ते—इष्टापत्तेरिति । भवतु विघ्नात्यन्ताभाववता पुरुषेण कृतस्य मङ्गलस्य नैष्फल्यं, नैवं दोषं पश्याम इति भावः ।

ननु—कथं निष्फले कर्मणि विघ्नात्यन्ताभाववतः शिष्टस्य प्रवृत्तिः स्याद् ? अत आह—"विघ्नशङ्कया" इति । तदाचरणात्=मङ्गलाचरणात् । संशयनिश्चयसाधारणविघ्नज्ञानमेव प्रवर्त्तकमिति भावः । विघ्नशङ्कया मङ्गलाचरणमेवासिद्धम् इत्यत्राह—"तथैव शिष्टाचारात्" इति । विघ्नप्रकारकज्ञानमात्रेणैवेत्यर्थः । विषयतासम्बन्धेन मङ्गले शिष्टानां प्रवृत्तिर्विघ्नशङ्कयैवेत्यर्थः । शिष्टाचारादित्यस्यायमाशयः—शिष्टानामास्तिकानाम्, आचारात्=प्रवृत्तेः । तथा च—"कूष्माण्डैर्जुहुयात् योऽपूत इव मन्येत" इति श्रुत्या अपूतत्वशङ्कायाः कूष्माण्डहोमरूपप्रायश्चित्तकारणप्रयोजकत्वप्रतिपादनेन पापशङ्कया तन्निवर्त्तककूष्माण्डहोमादौ यथा आस्तिकानां प्रवृत्तिः तथैव विघ्नशङ्कया तन्निवर्त्तके मङ्गलेऽपि शिष्टानां प्रवृत्तिरावश्यकीति भावः ।

स्वतो विघ्नाभावस्थले कृतस्य मङ्गलस्य निष्फलत्वपक्षे वेदस्याप्रामाण्यमित्याक्षिपति—"नच" इति । तस्य=निर्विघ्नपुरुषाऽनुष्ठितमङ्गलस्य । तद्बोधकेति । तस्य मङ्गलविघ्नध्वंसयोः कार्यकारणभावस्य बोधको यो वेदः="समाप्तिकामो विघ्नध्वंसकामो वा मङ्गलमाचरेत्" इत्याकारा (कल्प्यमाना) † श्रुतिः, तस्य यद् अप्रामाण्यं बाधितार्थ-

---

❀ बुद्धिप्रतिभादीनां कोषादितः प्रायः पर्यायवाचित्वे पुनरुक्तिः प्रादुःष्यादिति शङ्कां भरतवाक्येनापनयति—"बुद्धि"रिति ।

† केचित्तु—"स्वस्ति नः इन्द्रो वृद्धश्रवाः, शन्नो मित्रावरुणा" इत्याद्या मन्त्राः प्रत्यक्षभूताः सकलकर्मादावुच्चारणेन विघ्नध्वंसफलाः कर्मसमाप्तिफलाः वा सन्तीति पुनस्तथाविधश्रुत्यनुमानेन प्राचामर्वाचां वा किम्फलमिति विवेकिनः सन्तु साक्षिणः इत्याहुः । वयन्तु—आशीर्वादाद्यन्यतमत्वात्मकस्य मङ्गलस्याचरणविधानदक्षा श्रुतिः प्रत्यक्षमनुपलम्भात्कल्प्यैव मन्त्राणां प्रयोगसमवेतार्थाभिधायकत्वेऽपि विधायकत्वाभावात् । इदञ्च मङ्गलं कर्मविशेष इति सम्प्रदायविदां सरणिराभाति इति साधु पश्यामः ।

बोधकत्वेन प्रमाण्याभावः तस्यापत्तिः=प्राप्तिः स्यात् । एतन्निरस्यति—"सति विघ्ने" इति । विघ्ने सत्येव वेदेन विघ्ननाशो बोध्यते नत्वसतीत्यर्थः ।

अयं भावः—स्वतःसिद्धविघ्नविरहस्थले विघ्नात्मकप्रतियोगिरूपकारणाभावेन विघ्नध्वंसरूपकार्यस्यानुत्पत्तावपि नैव मङ्गलविघ्नध्वंसयोः कार्यकारणभावबाधः, नापि च कारणताबोधकश्रुतिवाक्यस्याप्रामाण्यापत्तिः । नहि बाध्याभावस्थले बाधकस्य बाधकत्वाभावः प्रमाणसम्प्रतिपन्नः ।

यथा—केवलाद् दण्डाद् घटानुत्पत्तावपि "दण्डो घटकारणम्" इति वाक्यस्य नाप्रामाण्यम्, घटाव्यवहितपूर्वस्मिन् क्षणे विद्यमानेऽपि दण्डे इतरकारणाभावे घटानुत्पत्तिदर्शनात् । किन्तु दण्डभिन्नसकलमृत्तिकादिघटकारणसत्त्व एव दण्डो घटस्य कारणमिति तस्य वाक्यस्य तात्पर्यम् । एवमेव विघ्ने सत्येव मङ्गलस्य विघ्नध्वंसम्प्रति कारणत्वम् । विघ्नाभावस्थले तु सदपि मङ्गलं नाऽकारणभावं भजते किन्तु तत् कारणमेवेति प्रघट्टकस्याशयो बोध्यः ।

मङ्गलविधायकश्रुतिवाक्यानुमानप्रकारश्चेत्थम्—"मङ्गलं वेदबोधितकर्त्तव्यताकम् अलौकिकाविगीतशिष्टाचारविषयत्वात्, दर्शादिश्राद्धवत् । अत एव=नाशम्प्रति प्रतियोगिनः कारणत्वादेव । पापभ्रमेण=पापाभावेऽपि "अहं पापी अस्मि" इत्याकारया बुद्ध्या कृतस्य * प्रायश्चित्तस्य=मन्वादिधर्मशास्त्रप्रतिपादितकर्मविशेषस्य । निष्फलत्वेऽपि= पापनाशकत्वाभावेऽपि । न तद्बोधकवेदाप्रामाण्यापत्तेः=प्रायश्चित्तस्य पापनाशकत्वबोधको यो वेदः तस्याप्रमाण्यापत्तिर्नेत्यर्थः । यथा संशयनिश्चयसाधारणं पापज्ञानं प्रायश्चित्तप्रयोजकं तथैव विघ्नज्ञानमपि मङ्गलानुष्ठानप्रयोजकमिति गूढोऽभिप्रायः ।

**(मुक्ता०) मङ्गलं तु विघ्नध्वंसविशेषे कारणं विघ्नध्वंसविशेषे च विनायकस्तवपाठादिः ।**

(प्रभा०) ननु—यदि मङ्गलं विघ्नध्वंसम्प्रति कारणं स्यात् अर्थात् विघ्नध्वंसो मङ्गलैकसाध्यः स्यात्, तदा विनायकस्तवपाठेन विघ्ना न नश्येयुः नहि विनायकस्तवपाठो मङ्गलं, ततश्च पुनरपि व्यभिचार एवेत्यस्याः शङ्कायाः परिहारं मन्वान आह—"मङ्गलं तु" इति । विघ्नध्वंसविशेषे=विजातीयविघ्नध्वंसे । कारणं=हेतुः । विघ्नध्वंसविशेषे च विनायकस्तवपाठादिः । अत्र कारणमित्यनुषज्यते । विनायकस्तवपाठेन अन्यो

---

*प्रायो नाम तपः प्रोक्तं चित्तं निश्चय उच्यते ।
तपोनिश्चयसंयोगात् प्रायश्चित्तं तदुच्यते ॥
प्रायशश्च समं चित्तं चारयित्वा प्रदीयते ।
पर्षदा कार्यते यत्तु प्रायश्चित्तमिति स्मृतम् ॥

इति पराशरमाधवधृतमङ्गिरोवचनम् । तच्च यथापातकं नानाप्रकारं मानवादिधर्मग्रन्थेषु बहु निरूपितम् ।

विघ्नध्वंसः, मङ्गलेन चान्यो विघ्नध्वंस इति नैव व्यभिचार इत्यर्थः । * कण्ठताल्वाद्यभिघातरूपस्य पाठस्य ज्ञानविशेषरूपान्मङ्गलाद् भेदः । एवमुभयोः कार्यभूतयोः विघ्नध्वंसयोरपि परस्परं विशेष एवेत्यभिप्रायः । "सर्वे विघ्नाः शमं यान्ति गणेशस्तवपाठत" इति वाक्यन्तु गणपतिमाहात्म्यपरमित्यपि केचित् । अधिकमन्यतो ज्ञेयम् । **विनायकस्तवपाठादि**रित्यत्र आदिना प्रायश्चित्तस्यापि संग्रहः । ततश्च—कश्चिद्विघ्नध्वंसो मङ्गलजन्यः, कश्चित् विनायकस्तवपाठजन्यः, कश्चित् प्रायश्चित्तानुष्ठानजन्य इति निष्कर्षः ।

**(मुक्ता०) क्वचिच्च विघ्नात्यन्ताभाव एव समाप्तिसाधनं प्रतिबन्धकसंसर्गाभावस्यैव † कार्यजनकत्वात् । इत्थञ्च नास्तिकादीनां ग्रन्थेषु जन्मान्तरीयमङ्गलजन्यदुरितध्वंसः, स्वतःसिद्धविघ्नात्यन्ताभावो वास्तीति न व्यभिचार इत्याहुः ।**

(प्रभा०) ननु—यदि विघ्नध्वंस एव मङ्गलफलं तदा समाप्तिकामो मङ्गलं नाचरेत्, यस्य यत्फलं स्यात् तत्कामस्यैव तत्र प्रवृत्तेः इतीमां शङ्कां खण्डयति—**क्वचिदि**ति । **विघ्नात्यन्ताभावः**=विघ्नानां स्वतसिद्ध एवात्यन्ताभावः=त्रैकालिकसंसर्गावच्छिन्नप्रतियोगिताकः । समाप्तिसाधनम्=समाप्तिकारणम् । ‡ **प्रतिबन्धके**ति—कार्यमात्रम्प्रतिप्रतिबन्धकसंसर्गाभावस्य कारणत्वमित्यर्थः । तथाच विघ्नध्वंसः विघ्नात्यन्ताभावश्चोभावपि संसर्गाभावौ । संसर्गाभावत्वेन च कार्यम्प्रत्यनयोरनुगमः । एवञ्च स्वतःसिद्धविघ्नात्यन्ताभावस्थलेऽपि नैव व्यभिचारः । तत्र तादृशसंसर्गाभावस्यैव कारणभूतस्य समाप्तिरूपकार्यजनकत्वात् ।

§ व्यतिरेकव्यभिचारमुद्धर्त्तुमाह—"**इत्थञ्च**"—इति । नास्तिकादिग्रन्थेषु पूर्वजन्मनि कृतेन मंगलेन पापनाशः तेन समाप्तिः, अथवा स्वतःसिद्ध एव विघ्नानामत्यन्ताभावः तेन समाप्तिर्द्रष्टव्येति नैव व्यतिरेकव्यभिचारः । "**आहु**"रिति क्रियापदस्य "**नव्या**" इति कर्तृपदेनान्वयः ।

अत्रेत्थमाशङ्कन्ते—जन्मान्तरीयं मङ्गलमैहिकं वा मङ्गलं विघ्नध्वंसद्वारा समाप्तिम्प्रति तदा कारणं स्यात् यदा मंगलसमाप्त्योः सामानाधिकरण्यं भवेत्, समानाधिकरणवृत्तिपदार्थानामेव कार्यकारणभावनियमात् । यदि व्यधिकरणवृत्तिपदार्थानामपि

---

* विजातीयविघ्नध्वंसनिष्ठा या कार्यता, तादृशकार्यतानिरूपिता कारणता भिन्ना, तथैव विजातीयविघ्नध्वंसनिष्ठकार्यतानिरूपितकारणता विनायकस्तवपाठादिनिष्ठाप्यन्यैव वर्त्तते । इत्याशयपुष्टिकर एवाग्रिमोऽपि ग्रन्थः "कण्ठताल्वादि"तिविज्ञेयः ।

† "कार्यमात्रजनकत्वात्" इति प्राचीनप्रभासम्मतः पाठः ।

‡ संसर्गाभावस्य लक्षणमग्रे मूले तद्व्याख्याने च द्रष्टव्यम् ।

§ कारणाभावे कार्याभावरूपो यो व्यतिरेकः तस्य व्यभिचारमित्यर्थः ।

कार्यकारणभावः तदा देशान्तरस्थकुलालादेरपि एतद्देशे घटोत्पत्तिः स्यात्, तस्मात्समानाधिकरणवृत्तिपदार्थानामेव कार्यकारणभाव इत्यकामेनाप्यभ्युपेयम् । अयमभिसन्धिः—चरमवर्णरूपा समाप्तिः ककारादिशब्दस्वरूपत्वात् स्वसमवायिकारणाकाशनिष्ठा, अथ च चरमवर्णध्वंसरूपा वा समाप्तिः स्वप्रतियोगिसमवायिकारणाकाशनिष्ठैव । गुर्वीश्वरादिस्मरणरूपं मङ्गलन्तु ज्ञानात्मकत्वाद् ग्रन्थकर्तृपुरुषात्मनिष्ठञ्चेति कथं मङ्गलसमाप्त्योर्व्यधिकरणत्वे कार्यकारणभावः, समानाधिकरणयोरेव * कार्यकारणभावदर्शनात् । कार्यकारणभावाभावाच्च समाप्तिम्प्रति मङ्गलस्य नैव कारणत्वमिति बोध्यम् ।

अत्रेदं परिहारमाचक्षते—स्वजनकविघ्नध्वंसोत्पत्त्यवच्छेदकतासम्बन्धेन समाप्तेर्ग्रन्थकर्तृपुरुषशरीरनिष्ठत्वात् अवच्छेदकतासंम्बन्धेन च ज्ञानरूपमङ्गलस्यापि तत्रैव सत्त्वात् मङ्गलसमाप्त्योः कार्यकारणभावे बाधकाभाव इति । †

उक्तसम्बन्धे "स्व"शब्दग्राह्या समाप्तिः, तज्जनको विघ्नध्वंसो हि शरीरावच्छिन्नात्मन्येव वर्त्तते, तेन शरीरस्य समाप्तिजनकविघ्नध्वंसोत्पत्तेरवच्छेदकत्वम् (नियामकत्वम्) । अनया रीत्या "स्वजनकविघ्नध्वंसोत्पत्त्यवच्छेदकतासम्बन्धेन" ग्रन्थकर्तृपुरुषशरीरनिष्ठत्वम् ज्ञानात्मकमङ्गलस्यापि शरीरावच्छिन्नात्मनि सत्त्वादवच्छेदकतासम्बन्धेन शरीरनिष्ठत्वम् । शरीरस्य ज्ञानावच्छेदकत्वात्, ज्ञानस्य च तदवच्छेद्यत्वम् । वक्ष्यति च—"ज्ञानादिकं यदात्मनि विभौ शरीराद्यवच्छेदेनोत्पद्यते" इत्यग्रे साधर्म्यवैधर्म्यप्रकरणे ।

तथा च—स्वजनकविघ्नध्वंसोत्पत्त्यवच्छेदकतासम्बन्धेन तच्छरीरनिष्ठसमाप्तिम्प्रति अवच्छेदकतासम्बधेन तच्छरीरनिष्ठमङ्गलस्यापि सामानाधिकरण्ये कार्यकारणभावः सर्वथा निर्दुष्टः ।

स्वजनकविघ्नध्वंसोत्पत्त्यवच्छेदकतासम्बन्धस्तु—समाप्तिनिष्ठकार्यताया अवच्छेदकसम्बन्धः । अवच्छेदकतासम्बन्धस्तु कारणताया अवच्छेदकसम्बन्धः ।

अयं भावः—कारणाधिकरणे यत्सम्बन्धेन कार्यं भवति स सम्बन्धः "कार्यतावच्छेदकसम्बन्ध" इत्युच्यते । कार्याधिकरणे यत्सम्बन्धेन कारणं भवति स सम्बन्धः "कारणतावच्छेदकसम्बन्धः" । यथा द्रव्यीयचाक्षुषप्रत्यक्षे उद्भूतरूपं कारणम्, तत्र विषयतासम्बन्धेन चाक्षुषप्रत्यक्षं घटादिनिष्ठम्, उद्भूतरूपमपि समवायसम्बन्धेन घटादिनिष्ठमेव, तस्माद्विषयतासम्बन्धः कार्यता-(चाक्षुषप्रत्यक्षता)—याः अवच्छेदकसम्बन्धः । समवायसम्बन्धश्च कारणता-(उद्भूतरूपता)—याः अवच्छेदकसम्बन्धः । एषैव दिक्प्रायः सर्वत्र सम्बन्धेष्वनुसरणीया ।

अथवा—अवच्छेदकतासम्बन्धेन समाप्तिर्ग्रन्थकर्तृपुरुषशरीरनिष्ठा । चरमवर्णरूपायाः चरमवर्णध्वंसरूपायाः वा समाप्तेः शरीरावच्छिन्नाकाशे सत्त्वात् मङ्गलस्यापि

---

* अन्यथा व्यधिकरणमृत्पिण्डादेरपि घटादेरुत्पत्तिः स्यात् ।

† तथा चास्यैव विघ्नध्वंससमाप्त्योः सामानाधिकरण्यमिति भावः ।

स्वजन्यविघ्नध्वंसावच्छेदकतासम्बन्धेन तच्छरीरनिष्ठत्वमेव । अत्रापि "स्व"शब्दग्राह्यं मङ्गलं, तज्जन्यो विघ्नध्वंसः, तदवच्छेदकं शरीरम्, अवच्छेदकता च तच्छरीरे वर्त्तते, स्वशब्दग्राह्यमङ्गलजन्यविघ्नध्वंसस्य शरीरावच्छिन्नात्मनि सत्त्वात् । अस्मिन्पक्षे अवच्छेदकतासम्बन्धेन शरीरनिष्ठसमाप्तिम्प्रति स्व(मङ्गल)जन्यविघ्नध्वंसावच्छेदकतासम्बन्धेन शरीरे विद्यमानस्य मङ्गलस्य कारणत्वम् । अत्र अवच्छेदकतासम्बन्धः कार्यतावच्छेदकसम्बन्धः । स्व*जन्यविघ्नध्वंसोत्पत्त्यवच्छेदकतारूपसम्बन्धस्तु कारणतावच्छेदकसम्बन्धः ।

किंवा—स्वप्रतियोगिचरमवर्णानुकूलकृतिमत्त्वसम्बन्धेन समाप्तेर्ग्रन्थकर्त्तृपुरुषात्मनिष्ठत्वम् । तत्रैव मङ्गलस्यापि आश्रयतासम्बन्धेन सत्त्वम् । अत्र "स्व"शब्दग्राह्या चरमवर्णध्वंसरूपा समाप्तिः, तस्याः प्रतियोगिभूतश्चरमवर्णः, तस्य निमित्तकारणं कृतिः, सा च तस्मिन्नात्मनि समवायसम्बन्धेन वर्त्तत एव, तस्मात् स्वप्रतियोगिचरमवर्णानुकूलकृतिमत्त्वसम्बन्धेन आत्मनि वर्त्तमानां समाप्तिम्प्रति आश्रयतासम्बन्धेन वर्त्तमानस्यमङ्गलस्य हेतुत्वम् ।

अत्र स्वप्रतियोगिचरमवर्णानुकूलकृतिमत्त्वसम्बन्धः कार्यतावच्छेदकसम्बन्धः, आश्रयतासम्बन्धः कारणतावच्छेदकसम्बन्धोऽवगतव्यः । इत्थं प्रदर्शितसम्बन्धप्रकारेण जन्मान्तरीयमङ्गलस्य ऐहिकमङ्गलस्य वा सामानाधिकरण्ये सिद्धे विघ्नध्वंसद्वारा समाप्तिम्प्रति कारणत्वं निर्दुष्टमेव ।

ये तु नव्याः—"समाप्तिम्प्रति मङ्गलं न कारणम्" इति मन्यन्ते किन्तु विघ्नध्वंस एव समाप्तिहेतुरिति तन्मतम्, तन्मते स्वप्रतियोगिचरमवर्णानुकूलकृतिमत्त्वसम्बन्धेन आत्मनि वर्त्तमानां समाप्तिम्प्रति तत्रैवात्मनि विशेषणतासम्बन्धेन विद्यमानस्य विघ्नध्वंसस्य कारणत्वं ज्ञेयम् । अत्र स्वप्रतियोगीत्यादि कार्यतावच्छेदकसम्बन्धः, विशेषणतासम्बन्धश्च कारणतावच्छेदकसम्बन्धो बोध्य इत्यलम् ।

**(मुक्ता०) संसारमहीरुहस्य बीजायेति । संसार एव महीरूहो वृक्षस्तस्य बीजाय निमित्तकारणायेत्यर्थः । एतेन ईश्वरे प्रमाणमपि दर्शितं भवति । तथाहि—यथा घटादिकार्यं कर्तृजन्यं तथा क्षित्यङ्कुरादिकमपि । नच तत्कर्तृत्वमस्मदादीनां सम्भवतीत्यतस्तत्कर्तृत्वेनेश्वरसिद्धिः ।**

(प्रभा०) बीजत्वं समवायिकारणत्वं तच्चेश्वरे नैव सम्भवति इत्यतो व्याख्याति †बीजाय=निमित्तकारणायेत्यर्थ इति । "हेतुर्नाकारणं बीज"मिति कोशात् बीजशब्दस्य

* अत्र "उत्पत्तिपदरहितः पाठः साधु"रिति विश्वेश्वराश्रमदण्डिनः ।

† विशेषेण जायतेऽनेन अस्माद् वेति बीजम् । "उपसर्गे च सञ्ज्ञायाम्"—(३ । २ । ९९) इति सूत्रेण "जनी"धातोर्डः । "अन्येषामपि"—(६ । ३ । १३७) इति सूत्रेण दीर्घः । "बीजन्तु रेतसि । स्यादाधाने च तत्त्वे च हेतावङ्कुरकारणे" इति हैमः । औपनिषदसिद्धान्ते तु बीजाय=अभिन्ननिमित्तोपादानकारणाय इत्यर्थेऽपि नासङ्गतिः ।

कारणसामान्येऽपि शक्तिः तेन निमित्तकारणरूपोऽर्थो न * विरुद्ध इति भावः ।

नन्वीश्वरे नमस्काररूपं मङ्गलमयुक्तं तत्र (ईश्वरे) प्रमाणाभावाद् इत्यत आह—एतेनेति। प्रमाणम्=अनुमानाख्य प्रमाणम् । तथाहीत्यादिना कार्यकारणयोर्व्याप्ति दृष्टान्तद्वारा अभिलापयति । "यत्कार्यं तत्कर्तृजन्यम्" इति व्याप्तेः सामान्याकारः । सामान्यव्याप्तिरित्यर्थः । ईश्वरसाधकमनुमानन्तु—† "क्षित्यङ्कुरादिकं कर्तृजन्य कार्यत्वात् घटवत्" इति । अत्र ‡ क्षित्यादि पक्षः । कर्तृजन्यं साध्यम् । कार्यत्वं हेतुः । घटो दृष्टान्तः । नहि किमपि जडं चेतनाधिष्ठानमन्तरा कार्यं कर्तुं समर्थं दृष्टचरम्, नहि मृत्पिण्डः कुलालाधिष्ठानं विना स्वयं घटं घटयितुमीष्टे । तथा च परमाण्वाद्युपादानं जडं येनाधिष्ठितं जगद्रूपं जायते स एवाधिष्ठाता क्षित्यादिकर्त्ता जगन्नियन्ता परमेश्वर इत्यनुमानं प्रमाणं जगत्कर्तुः परमेश्वरस्य साधकमिति परमार्थः ।

ननु—अस्मदाद्या जीवा एव सम्भूय क्षित्यादिकर्त्तारो भविष्यन्ति किमीश्वराङ्गीकारेणेति शङ्कां निरस्यति । "नच" इति । अस्मदादिजीवानामल्पज्ञत्वात् अल्पशक्तित्वाच्च नैव क्षित्यादिजनने सामर्थ्यम्, अस्ति च क्षित्यादिकार्यं, तच्च घटवत् निमित्तकारणं विना नोत्पत्तुमर्हति, यश्च तदुत्पादकः स एवेश्वर इति भावः ।

(मुक्ता०) नच शरीराजन्यत्वेन कर्त्रजन्यत्वसाधकेन सत्प्रतिपक्ष इति वाच्यम्, अप्रयोजकत्वात् । मम तु कर्तृत्वेन कार्यत्वेन कार्यकारणभाव एव अनुकूलस्तर्कः । "द्यावाभूमी जनयन्देव एकः" "विश्वस्य कर्त्ता भुवनस्य गोप्ता" इत्यादय आगमा अप्यनुसन्धेयाः ॥१॥

(प्रभा०) कार्यत्वहेतोः सत्प्रतिपक्षत्वमाशङ्कते—"नच" इति । क्षित्यङ्कुरादिकं कर्तृजन्यमित्यनुमानं न युक्तं, यतोऽस्य हेतोः साध्याभावसाधकमनुमानान्तरं वर्त्तते, तस्मादयं सत्प्रतिपक्षो हेत्वाभासः । "क्षित्यादिकं कर्त्रजन्यं शरीराजन्यत्वात् आकाशवत्" इति पूर्वपक्षयितुराशयः ।

तदेतत् सिद्धान्ती खण्डयति—अप्रयोजकत्वात्=व्यभिचारशङ्कोत्थानेऽनुकूलतर्काभावादित्यर्थः । "क्षित्यङ्कुरादिकं कर्तृजन्यं कार्यत्वात् घटवत्" इतीश्वरवादिनोऽनुमाने यत् "कर्तृजन्यत्वम्" साध्यं, तत्साधनाय "कार्यत्वाद्" इति हेतुरुपात्तः ।

---

* ईश्वरमुपादानकारणमनङ्गीकुर्वतां न सिद्धान्तविरोध इत्यर्थः ।

† अत्र स्वरूपसम्बन्धरूपकार्यत्वं पक्षतावच्छेदकम्, प्रागभावप्रतियोगित्वरूपं कार्यत्वं हेतुतावच्छेदकमिति नास्ति पक्षतावच्छेदकहेतुतावच्छेदकयोरैक्यम् । अधिकं रामरुद्रादावालोक्यम् ।

‡ यस्मिन् साध्यस्य संशयः असौ पक्षः । यत्तत्र सन्दिग्धं तदेव साध्यम् । साध्यसाधनाय दीयमानोपपत्तिरेव हेतुः । यत्र साध्यस्य निश्चयः असौ दृष्टान्तः । सर्वमिदमनुमानखण्डे लक्षणादिद्वारा स्फुटीभविष्यति । विस्तरेण ईश्वरसिद्धिस्तु "न्यायतत्त्वसमीक्षायां" सूपपादितेति विशेषस्तत एव कर्णेहत्य निरीक्षणीयः ।

परमयमस्त्येको नियमः यदि कस्यचिद्धेतोः साध्याभावसाधनाय अपरो हेतुः प्रवृत्तः स्यात्, तदा पूर्वानुमाने दत्तो हेतुः "सत्प्रतिपक्षितो" भवन् स्वसाध्यसमर्थनाय नालम्भवति, तेनासौ सत्प्रतिपक्षो नाम हेत्वाभास इत्युच्यते । प्रकृते च "कार्यत्वात्" इत्यस्य हेतोः साध्यं यत् "कर्तृजन्यत्वं" तस्याभावः 'कर्त्रजन्यत्वम्" तस्य साधकः "शरीराजन्यत्वात्" इत्यन्यो हेतुर्वर्त्तते, तस्मात् कथं कार्यत्वहेतुना कर्तृजन्यरूपस्य साध्यस्य सिद्धिः स्यात् ।

अत्र सिद्धान्ती इत्थमुत्तरयति—भो ! अनीश्वरवादिन् ! तवानुमाने व्यभिचारशङ्कायां क्रियमाणायां तस्या निवारकः कश्चनानुकूलस्तर्को न दृश्यते । तथाहि—"यदि शरीराजन्यत्वं हेतुरस्तु क्षित्यङ्कुरादिषु कर्त्रजन्यत्वं साध्यं मा भवेत् को दोषः" इत्याकारिका व्यभिचारशङ्का उत्थाप्येत, तदा न चास्या उद्धाराय तवान्तिके कश्चित्तर्को येन तत्परिहारो भवेत् । एवञ्चानुकूलतर्काभावादेव तवानुमानं दुष्टम्, तस्य दुष्टतायां ममानुमाने उक्तः "कार्यत्वात्" इति हेतुः साध्यसाधनाय समर्थ एव नासमर्थः ।

अवधेहि तावत्—कार्यकारणभावभङ्गप्रसङ्गः प्रायस्तर्कस्य स्वरूपम् । तत्र "यदि कर्त्रजन्यत्वं न स्यात् तदा शरीराजन्यत्वमपि न स्याद्" इत्येव भवान् (नास्तिकः) वदिष्यति । परं नैतावता वाद्यनुमाने व्यभिचारशङ्का निवर्त्स्यति । नहि पूर्वं क्वचित् कर्त्रजन्यत्वशरीराजन्यत्वयोः कार्यकारणभावः प्रसिद्धः येन "न स्याद् न स्याद्" इत्यभिधाय कार्यकारणयोर्भङ्गप्रसङ्ग आपाद्येत; तस्मात् "शरीराजन्यत्वाद्" इत्यप्रयोजको हेतुर्नास्तिकस्य ।

अपि च कर्त्रजन्यत्वाजन्यत्वयोरेव आकाशादिषु व्याप्तिर्दृष्टा तेन अजन्यत्वस्य पुरोभागे "शरीर"रूपविशेषणदानमपि व्यर्थं सन् हेतोर्व्यर्थविशेषणतां स्पष्टयतीति सर्वथा शङ्कितुरनुमानमसदेव बोध्यम् । अस्मिन्ननुमाने उपाधिलापनप्रकारः तदुद्धारप्रकारश्चात्र प्रदर्श्यमानो बालानामादौ महत्काठिन्यमावहेदिति कृत्वा तदुपाधिप्रसङ्गे प्रदर्शयिष्यते ।

ननु—तवापि मते कथमनुकूलस्तर्क इत्याशङ्कापरिहाराय आह—**"मम तु"** इति । अर्थात् सिद्धान्तिनो मते "यदि कर्तृजन्यत्वं न स्यात् तर्हि कार्यत्वमेव न स्यात्" इत्याकारकः कार्यकारणभावस्य भङ्गप्रसङ्गरूपोऽनुकूलस्तर्कोऽस्त्येव । यतः घटपटादिषु कर्तृजन्यत्वकार्यत्वयोः परस्परं कार्यकारणभावो लोके प्रसिद्धः । घटः कुलालकर्तृजन्यः पटश्च कुविन्दकर्तृजन्य इति, तस्मान्नेश्वरसाधकमनुमानं सत्प्रतिपक्ष इति प्रघट्टस्याशयः । तदुक्तमभियुक्तैः—

अनुकूलेन तर्केण सनाथे सति साधने ।
साध्यव्यापकताभङ्गात् पक्षे नोपाधिसम्भवः ॥ इति ॥

मयापि च पठ्यते :---

अनुकूलतर्काभावे नास्ति नास्तिक ! ते मते ।
क्षमताऽऽस्तिकहेतूनां भङ्गरङ्गतरङ्गिणी ॥१॥
कार्यकारणभावोऽपि स्वेष्टतर्कानलेक्षणम् ।
कृत्वैव विश्रमं धत्ते वादिपक्षे न चान्यथा ॥२॥ इति ॥

एवमनुमानेनेश्वरसिद्धौ तदुचरितत्वेन वेदस्यापि प्रामाण्यं निश्चितमिति वेद-प्रामाण्यसत्त्वे ईश्वरसिद्धिः, तत्सिद्धौ वेदप्रामाण्यसिद्धिरिति नान्योन्याश्रयोऽपि । तस्माद्वेदोऽपीश्वरे प्रमाणमित्याह—* द्यावाभूमी जनयन्निति । "इत्यादय" इति—आदिना "यः सर्वज्ञः सर्वविद् यस्य ज्ञानमयं तपः" (मुं० १।१।९) "तदैक्षत बहु स्यां प्रजायेय" (छान्दोग्य० ६।२।३) इत्यादीनां परिग्रहः । †

त्रिविधा चास्य शास्त्रस्य प्रवृत्तिः उद्देशो लक्षणं परीक्षा चेति भाष्यकारः । तत्र नाममात्रेण वस्तुसङ्कीर्त्तनमुद्देशः । यथा "द्रव्यं गुण" इति । असाधारणधर्मो लक्षणम् । यथा "गन्धवत्त्वं पृथिव्याः" इति । लक्षितस्य लक्षणं सम्भवति न चेति विचारः परीक्षा । यथा च तस्य तस्य लक्षणस्यावसरेऽतिव्याप्त्यादिदोषाः परिहृताः । ततश्च भाष्यादि-निर्दिष्टरीत्या पदार्थविचारः कृतोऽस्मिन्ग्रन्थे, एतस्य सन्मूलतया प्रामाण्यं (आदरार्हतां) स्पष्टयति इत्यधिकमन्यत्र बोधनीयम् ॥१॥

इति मङ्गलवादः ।

---

* विश्वतश्चक्षुरुत विश्वतो मुखो विश्वतो बाहुरुत विश्वतस्पात् ।
सम्बाहुभ्यां धमति सम्पतत्रैर्द्यावाभूमी जनयन्देव एकः ॥
यजु० अ० १७ । कं० १९ ॥

अत्र प्रथमेन सर्वज्ञत्वं चक्षुषा दृष्टेरुपलक्षणात्, द्वितीयेन सर्ववक्तृत्वं मुखेन वागुप-लक्षणात्, तृतीयेन सर्वसहकारित्वं बाहुना सहकारित्वोपलक्षणात्, चतुर्थेन व्यापकत्वं पदा व्याप्ते-रुपलक्षणात्, पञ्चमेन धर्माधर्मलक्षणप्रधानकारणत्वं तौ हि लोकयात्रावहनाद्बाहू, षष्ठेन परमाणु-प्रधानाधिष्ठेयत्वम्, ते हि गतिशीलत्वात् पतत्रव्यपदेशाः पतन्तीति, सन्धमति सञ्जनयन् इति च व्यवहितोपसर्गसम्बन्धः तेन संयोजयति समुत्पादयन्नित्यर्थः । द्यावा इत्यूर्ध्वसप्तलोकोपलक्षणम् भूमीत्यधस्तात्, एक इत्यनादितेति न्यायाचार्याः । वेदाचार्या अपि परमेश्वरस्य सर्वप्राण्या-त्मकत्वाद् यस्य यस्य प्राणिनो ये चक्षुरादयः ते तदुपाधिकस्य परमेश्वरस्यैवेति सर्वत्र चक्षुरादयः सम्पद्यन्त इति फलतोऽविरुद्धमेव व्याख्यान्ति । ईश्वरस्य निरवधिकव्याप्तौ द्वयोरप्याचार्ययोरभिप्राय-पर्यवसानमित्याशयः ।

† यत्तु—कर्तृत्वात्साकारसिद्धिः स्वत एव जाता । घटस्य कर्ता खलु कुम्भकारः शरीरी । नच नाशरीरीत्यादिकमपि द्रष्टव्यम् इत्याह कश्चित् तन्न्यायाचार्यादनेकवैदिकपुरुषोक्ति-

(मुक्ता०) पदार्थान्विभजते—

(कारि०) **द्रव्यं गुणस्तथा कर्म सामान्यं सविशेषकम् ।**
**समवायस्तथाऽभावः पदार्थाः सप्त कीर्तिताः ॥२॥**

(प्रभा०) द्रव्यमिति । शिष्यावधानाय प्रतिजानीते "द्रव्यं गुण" इति । प्रतिज्ञा च स्वकर्त्तव्यत्वेन निर्देशः । द्रव्यादिनिरूपणस्यैव स्वकर्त्तव्यत्वेन प्रतिज्ञानात् । "पदस्यार्थः पदार्थ" इति व्युत्पत्त्या अभिधेयत्वं=पदशक्त्या प्रतिपाद्यत्वं पदार्थसामान्य-लक्षणम् । "विभजत" इति । तद्धर्मावान्तरधर्मपुरस्कारेण धर्मिबोधानुकूलो व्यापारो 'वि'पूर्वकभजधातोरर्थः । अर्थात् सामान्यधर्मापेक्षया न्यूनवृत्तयो ये धर्माः, परस्परं व्यधिकरणाश्च यावन्तो धर्मा विद्यन्ते तावतां सर्वेषामेव बोधाय प्रयुज्यमानं वाक्यमेव विभजनपदस्यार्थः । यथा पदार्थानां विभागे पदार्थत्वं सामान्यधर्मः, द्रव्यत्वगुणत्वादयश्च तद्विशेषधर्माः ते च परस्परं भिन्नभिन्नाधिकरणाः सप्तैव च भवन्ति । तद्बोधकं यद् "द्रव्यं गुण" इति वाक्यं तदेव विभजनं ज्ञेयम् । द्रव्यं गुण इति जातावेकवचनम् । संयोगापेक्षया कर्म नातिरिक्तमिति भूषणमतं दूषयितुमाह—तथा कर्मेति । यथा गुणः पृथक् पदार्थः तथा कर्मापीत्यर्थः । यद्वा "कर्म" इत्यत्रैकवचनेन "एकमेव चलनात्मकं कर्म उत्क्षेपणादिभेदस्तु शिष्यबुद्धिवैशद्याय" इति सूचितम् । सामान्यं वक्ष्यमाण-लक्षणं "सत्ता" इत्याख्यः पदार्थः । अभावोऽधिकरणस्वरूप इति प्रभाकरमतं दूषयितुं पुनः "तथा" इति पदमुपात्तम् । पदार्था "निरूप्यन्त" इति शेषः । "सप्त" इति पदं सप्तैव * पदार्था नाधिका न न्यूना वेति बोधनाय । "कीर्त्तिता" इति कणादप्रभृतिभि-र्मुनिभिरिति शेषः । ततश्चातो नाधिकाः पदार्थाः यद्यभविष्यन् तर्हि कणादाद्यैर्मुनिभिः कुतो नाकीर्त्तयिष्यन्त इति भावः ।

(मुक्ता०) **अत्र सप्तमस्याऽभावत्वकथनादेव पण्णां भावत्वं प्राप्तं तेन भावत्वेन पृथगुपन्यासो न कृतः । एते च पदार्था वैशेषिके प्रसिद्धा नैयायिकानामप्यविरुद्धाः । प्रतिपादितं चैवमेव भाष्ये । अत एवोपमान-**

---

विरोधात् सर्वथोपेक्षणीयम् । "कर्त्तजन्यत्वशरीराजन्यत्वयोः कार्यकारणभावस्य अदृष्टपूर्वत्वादिति" स्वग्रन्थविरोधाच्चेति दिक् ।

* अयमभिसन्धिः—यथा "ब्राह्मणमानय" इत्यादिवाक्यघटकैकवचनान्तब्राह्मणपदेन एकत्वविशिष्टब्राह्मणस्य आनयननिरूपितकर्मत्वेन उपस्थितावपि "द्वितीयं नानय" इत्यर्थाऽलाभः । "एकं ब्राह्मणमानय" इत्यादौ (तु) सङ्ख्यावाचकैकादिपदानामितरनिषेधार्थकत्वात् 'द्वितीयं नानय' इत्यर्थलाभः (स्फुटीभवति), तथा द्रव्येत्यादिद्वन्द्वसमभिव्याहृतबहुवचनेन सप्तत्वरूपबहुत्वसङ्ख्ये पस्थितावपि अष्टत्वसङ्ख्यापर्याप्त्यधिकरणसमुदायस्य निषेधाऽलाभात् तदर्थं सप्तपदमप्यावश्यकमि भाव इति नृसिंहप्रकाशिकादिषु द्रष्टव्यम् ।

**चिन्तामणौ सप्तपदार्थभिन्नतया शक्तिसादृश्यादीनामतिरिक्तपदार्थत्वमाशङ्कितम्।**

(प्रभा०) ननु–अन्यत्र न्यायग्रन्थेषु षड् भावपदार्थाः सप्तमस्तु अभाव इत्युक्तम्। अत्र अभावस्य सप्तम इति विशेषणं कुतो नोक्तम्। अर्थात् पदार्थो द्विविधः भावोऽभावश्च। द्रव्यादयः षड् भावाः सप्तमस्तु अभाव इति रीत्या कुतो न निरूपितमित्याशङ्क्याह—**"सप्तमस्य"** इति। समवायैकार्थसमवायान्यतरसम्बन्धेन सत्तावत्त्वं भावत्वम्, भावत्वाभावोऽभावत्वमिति भावाभावयोर्विवेकः। **प्राप्तम्**=अर्थात प्राप्तमित्यर्थः। **तेन**=प्राप्तत्वेन। **"पृथगुन्यास"** इति। भावत्वेनोपन्यासो न कृत इत्यर्थः। अयमाशयः। "द्रव्यादयः षट् भावाः=भावपदार्थाः अभावत्वभिन्नधर्मविशिष्टत्वात् यन्नैवं तन्नैवम्" इत्यनुमानेन तेषां भावत्वं लब्धम्। ननु—गोतमतन्त्रे प्रमाणाद्याः षोडश पदार्था निरूपिताः तेऽप्यत्र निरूपणीयाः, तथा च न सप्तैव पदार्थाः किन्त्वधिका अपीत्याशङ्कामपाकुर्वन्नेवाह—**"एते पदार्थाः"** इति। द्रव्यादय इत्यर्थः। तथा च षोडशपदार्थानां * सप्तपदार्थेष्वेवान्तर्भाव इति भावः।

उक्तार्थे भाष्यसम्मतिमाह--**प्रतिपादितश्चेति**। **एवमेवेति**—द्रव्यगुणकर्मसामान्यविशेषसमवायाभावाः सप्तैव पदार्थाः षोडशानामत्रैवान्तर्भावादिति प्रतिपादितमित्यर्थः। ( इदञ्च गड्डरिकाप्रवाहेणैव सर्वैर्लिख्यते इत्याभाति )।

† भाष्यस्यार्षत्वमामन्त्र्य स्वोक्तार्थे न्यायचिन्तामणिकृतां सम्मतिमाह—**"अत एव"** इति। **"शक्तिसादृश्यादीनाम्"** इति। यद्यधिकाः पदार्थाः कणादमुनेरभीष्टा अभविष्यन् तदा सप्तपदार्थभिन्नयोः शक्तिसादृश्ययोरतिरिक्तपदार्थशङ्कैव कृता नाभविष्यत्। यतः सप्तपदार्थभिन्नत्वेन तयोः शङ्कोत्थापिता तेन मन्यामहे मुनेर्भाष्यकारस्य च सप्तैव पदार्था इष्टा इति भावः।

**(मुक्ता०) ननु कथमेत एव पदार्थाः शक्तिसादृश्यादीनामप्यतिरिक्तपदार्थत्वात्। तथाहि—मण्यादिसमवहितेन वह्निना दाहो न जन्यते। तत्र मण्यादिना वह्नौ दाहानुकूला शक्तिर्नाश्यते, उत्तेजकेन मण्याद्यपसारणेन च जन्यते इति कल्प्यते।**

(प्रभा०) यथा चोपमानचिन्तामणावतिरिक्तपदार्थत्वाशङ्का कृता, यथा वा तयोः

---

* षोडशपदार्थानां सप्तपदार्थेष्वेवान्तर्भावो दिनकर्यां निरूपितः। तत्तत्रैव कर्णेहत्य निरीक्षणीयं, ग्रन्थगौरवभयान्नेह प्रपञ्चितम्।

† "भाष्यस्यार्षत्वमाशङ्क्य" इति पाठे तु—विषयसाधनस्य निर्युक्तिकत्वेऽपि ऋषेर्नियोगपर्यनुयोगानर्हत्वेन श्रद्धामात्रेण स्वीकर्त्तव्यमिति न्यूनत्वमाशङ्क्य तर्ककुशलानां नव्यनैयायिकानां चिन्तामणिकृतां सम्मतिमाह—"अत एवे"ति योजना ज्ञेया।

पृथक्पदार्थभावखण्डनं कृतं तत्सर्वं बोधयितुं * "ननु" इत्यादि "चन्द्रसादृश्यम्" इत्यन्तं ग्रथ्नाति ।

प्राभाकरः (शक्तिसादृश्ययोरतिरिक्तपदार्थत्ववादी) शङ्कते—"ननु" इति । एते एव=द्रव्यादयः सप्तैव । "अतिरिक्त" इति—सप्तपदार्थातिरिक्तेत्यर्थः । शक्तेः सादृश्यस्य च अतिरिक्तपदार्थभावं व्यवस्थापयति—"तथाहि" इत्यादिना । मण्यादि-समवहितेन=चन्द्रकान्तमण्यादिसमीपवर्त्तिना । आदिपदेन मन्त्रौषधितपःसमाधीनां परिग्रहः । तथा च योगसूत्रम्—"जन्मौषधितपःसमाधिजाः सिद्धयः" (यो० कै० पा० १) इति । अत्र मण्यादीनामोषधिपदोपलक्षितत्वं ज्ञेयम् ।

ननु—"यत्र वह्निरूपकारणाभावः तत्र दाहाभाव" इति नैव मण्यादीनां दाह-प्रतिबन्धकत्वम् ? अत आह—"मण्यादिसमवहितेन वह्निना" इति । मण्यादि-समवहितेन=मण्यादिसन्निधिमता । दाहो रूपान्तरोत्पत्तिः पूर्वरूपपरावृत्तिर्वा । "दाहः= दाहानुकूला शक्ति"रिति व्याख्यानन्तु न युक्तमित्यन्तर्मुखमालोक्यताम् । मण्याद्यति-रिक्तस्य न प्रतिबन्धकत्वमित्याह—"तच्छून्येन" इति । मणिसन्निधिशून्येनेत्यर्थः । तत्र=पूर्वोक्तयुक्त्या सिद्धौ ।

तथा च वह्निनिष्ठशक्तित्वावच्छिन्नम्प्रति मणित्वेन नाशकत्वस्वीकारेण मण्यादि-सत्त्वदशायां शक्तेरभावादेव न दाह इति भावः ।

ननु—यदि मण्यादिना वह्निशक्तिर्नश्यति तदा उत्तेजकनामकमणिसत्त्वदशायां शक्तिनाशकमण्यादेर्वाऽपसारणकाले पुनर्वह्निना दाहो न स्यात्, अत आह—उत्तेजकेन इति । † "मण्याद्यपसारणेन च" इत्यत्र चकारो विकल्पार्थे । "नाश्यते" इति पदस्य "कल्प्यते" इत्यनेनान्वयः । कल्प्यते=अनुमीयते । अनुमानप्रकारश्चेत्थम्—"वह्नि-र्मणिनाश्यदाहानुकूलशक्तिमान् मणिसमवधाने दाहाजनकत्वात् यन्नैवं तन्नैवं व्यतिरेके घटः" इति । किञ्च—"शक्तिर्न द्रव्यात्मिका गुणादिवृत्तित्वात् । अतएव—न गुणात्मिका कर्मात्मिका वा, नवा सामान्याद्यन्यतमरूपा, उत्पत्तिमत्त्वे सति विनाशित्वात्पटवत्" इति । इत्थञ्च शक्तेरतिरिक्तपदार्थत्वसिद्धिः ।

**(मुक्ता०) एवं सादृश्यमप्यतिरिक्तः पदार्थः । तद्धि न षट्सु भावे-ष्वन्तर्भवति सामान्येऽपि सत्त्वात् । यथा गोत्वं नित्यं तथाश्वत्वमपीति सादृश्यप्रतीतेः नाप्यभावे सत्त्वेन प्रतीयमानत्वादिति चेन्न, मण्याद्य-भावविशिष्टवह्न्यादेर्दाहादिकं प्रति स्वातन्त्र्येण मण्यभावादेरेव वा हेतुत्वं कल्प्यते ।**

---

* अथवा—"ननु प्राभाकरमते शक्तेरतिरिक्तपदार्थत्वात् आलङ्कारिकमते सादृश्यस्यातिरिक्त-पदार्थत्वाच्च पदार्थानां सप्तत्वकथनमसङ्गतमिति तटस्थः शङ्कते" इत्यवतार्यम् ।

† मण्याद्यभावेनेत्यर्थः ।

(प्रभा०) एवमतिरिक्तां शक्तिं साधयित्वा सादृश्यस्याप्यतिरिक्तपदार्थतां साधयति—एवमित्यादिना । "अतिरिक्तः पदार्थः" इत्यस्यार्थः सप्तपदार्थभिन्नः स्वतन्त्रः पदार्थः । इयं प्रतिज्ञा । तथा च प्रयोगः कर्तव्यः—"सादृश्यमतिरिक्तः पदार्थः षट्सङ्ख्याकभावपदार्थानन्तर्भूतत्वे सति अभावानन्तर्भावाद्" इति ।

"भावानन्तर्भूतत्वे सति" इत्यस्य विशेषणस्य असिद्धिं वारयति—"तद्धि" इति । हि=यतः तत्=सादृश्यम् । न षट्सु भावेषु=द्रव्यादिसमवायान्तेषु अन्तर्भवति । अत्र हेतुमाह—"सामान्येऽपि"=सामान्यात्मके धर्मिणि धर्मरूपेण सत्त्वात्=प्रतीयमानत्वादित्यर्थः । "सादृश्यं न षट् पदार्थेष्वन्तर्भवति सामान्येतरवृत्तित्वे सति सामान्यवृत्तित्वात्" इत्यनुमानेन सादृश्यस्य भिन्नपदार्थत्वसिद्धिः ।

सादृश्यसाधिकां स्वतन्त्रप्रतीतिमभिलापयति—"यथा" इति । नन्वस्तु सादृश्यमभावविशेष इत्याशङ्कायामाह—"नापि" इति । सत्त्वेन=भावत्वेन । प्रतीयमानत्वात्=प्रमीयमाणत्वात् । नह्यभावपदार्थे भावोऽन्तर्भवितुमर्हतीति भावः ।

एवं प्राभाकरेण साधितां शक्तिं तावत् दूषयितुमाह—"इति चेन्न" इति । दूषयति—"मण्याद्यभाव" इति । उत्तेजकाभावविशिष्टो यः प्रतिबन्धकश्चन्द्रकान्तमणिस्तदभावविशिष्टस्य*वह्न्यादेरित्यर्थः । अस्यायमभिप्रायः—न वयं दाहम्प्रति वह्निमेव कारणं ब्रूमः किन्तु मण्याद्यभावविशिष्टो वह्निर्दाहस्य कारणं न वह्निमात्रम् । किंवा—मणिसामान्याभाव एव दाहस्य हेतुः । तथा चातिरिक्तशक्तिकल्पनमनुचितम् । एवञ्च यत्र वह्निरस्ति, मणिरूपं प्रतिबन्धकञ्चास्ति तत्र नैव दाहः । क्वचित्तु प्रतिबन्धकमणिसद्भावाद्वह्निरेव न भवतीति नैव दाहः । तथा चातिरिक्तशक्तिपदार्थस्वीकारस्य नावश्यकता । प्रतिबन्धकत्वन्तु—कार्यानुकूलधर्मविघटकत्वम् । उत्तेजकत्वञ्च प्रतिबन्धकसत्त्वेपि कार्यजनकत्वम् इत्याद्यन्यत्र विस्तरः ।

(मुक्ता०) अनेनैव सामञ्जस्ये अनन्तशक्तितत्प्रागभावध्वंसकल्पनानौचित्यात् । न चोत्तेजके सति प्रतिबन्धकसद्भावेऽपि कथं दाह इति वाच्यम् । उत्तेजकाभावविशिष्टमण्यभावस्य हेतुत्वात् । सादृश्यमपि न पदार्थान्तरम्, किन्तु तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वम् । यथा चन्द्रभिन्नत्वे सति चन्द्रगताह्लादकत्वादिमत्त्वं मुखे चन्द्रसादृश्यमिति ॥२॥

(प्रभा) ननु—दाहम्प्रति वह्निः कारणं मण्यभावो वा कारणमिति कारणद्वयकल्पने†

---

* अत्र "समवायसम्बन्धावच्छिन्नदाहत्वावच्छिन्नदाहनिष्ठकार्यतानिरूपिता तादात्म्यसम्बन्धावच्छिन्नोत्तेजकाभावविशिष्टमण्याद्यभावविशिष्टवह्नित्वावच्छिन्ना वह्निनिष्ठा कारणता" इति कार्यकारणभावो बोध्यः ।

† विनिगमनाविरहात् मण्यभावविशिष्टवह्नित्वेन वह्निविशिष्टमण्यभावत्वेन वा गुरुधर्मावच्छिन्नकारणताद्वयापत्तिरिति तु हृदयम् ।

गौरवम्, तदपेक्षया एकैव शक्तिर्दाहकारणं युक्तमिति लाघवमित्यत आह—"**अनेनैव**" इति । दाहादिकम्प्रति मण्यभावकारणत्वेन **सामञ्जस्ये**=सम्यङ् निर्वाहे सति । "**अनन्तशक्ति**"— इति । मणिसत्त्वाऽसत्त्वाभ्यां शक्तेरसकृदुत्पादः तस्याः प्रागभाव-ध्वंसौ चेत्येवं गुरुभूता कल्पनेत्यर्थः । तथा चातिरिक्तशक्तिवादिनः प्राभाकरमते एव गौरवमिति भावः ।

ननु—यदि शक्तिर्नातिरिक्तः पदार्थः, तर्हि प्रतिबन्धकमणिसत्त्वेपि उत्तेजक-मणिसन्निधिकाले कुतो दाह इत्याशङ्क्य खण्डयति—"**नच**" इत्यादिग्रन्थेन । तथा च न केवलं मणिः=चन्द्रकान्तमणिः प्रतिबन्धकः किन्तु उत्तेजकाभावविशिष्टः सः, तदभावश्च उत्तेजकसमवधानकालेऽपि तिष्ठतीति नैव दोष इति भावः ।

**इदन्तु** बोध्यम्—विशिष्टाभावस्त्रिधा भवति, विशेषणाभावप्रयुक्तो विशेष्या-भावप्रयुक्तः विशेष्यविशेषणोभयाभावप्रयुक्तश्चेति । यथा—यत्र केवलं पुरुषः, तत्रापि भवति प्रत्ययो "दण्डी पुरुषो नास्ति" इति । सोऽयं दण्डविशिष्टपुरुषाभावः विशेषणा-भावप्रयुक्तः । यत्र तु दण्डो वर्त्तते न पुरुषः तत्रापि "दण्डी पुरुषो नास्ति" इति प्रत्ययः, स च विशेष्याभावप्रयुक्तः । यत्र च न पुरुषो नापि दण्डः, तत्रोक्ताभावप्रत्यय उभयाभावप्रयुक्तः । प्रकृते तु उत्तेजकसत्त्वेन उत्तेजकाभावरूपविशेषणस्य असत्त्वात्= उत्तेजकाभावाभावादित्यर्थः । अयं विशिष्टाभावो विशेषणाभावप्रयुक्तः । विशेषणम् उत्तेजकाभावः, तदभावः उत्तेजकाभावाभावः, तत्प्रयुक्तोऽत्र विशिष्टाभावः, तमादाय दाहकारणतानिर्वाह इति निगूढाभिसन्धिः ।

सादृश्यस्यातिरिक्तपदार्थतां निराकरोति—"**सादृश्यमपि**" इति । **नेति**—पृथक्पदार्थान्तरम्=स्वतन्त्रः पदार्थो नास्तीत्यर्थः । **किन्तु**—तद्गतभूयोधर्म-वत्त्वमिति—तत्र=उपमानभूते चन्द्रादौ साधारण्येन विद्यमाना ये भूयांसो धर्माः आह्लादकत्वाद्याः तद्वत्त्वमित्यर्थः । उक्तं सादृश्यलक्षणं घटयति—"**यथा**" इत्यादिना । "**तद्भिन्नत्व**" इति । तद्भिन्नत्वं नाम तत्प्रतियोगिकभेदवत्त्वम् । भेदवत्त्वञ्च भेदः स च अन्योन्याभाव एव । एवं धर्मवत्त्वं=धर्मः सोऽपि विशेषणीभूतगुणक्रियादि-रूप एवेत्यर्थः ।

अयं भावः—सादृश्यघटकधर्मः क्वचिज्जातिरूपः । यथा घटसदृशः पटः । क्वचिदु-पाधिरूपः । यथा गोत्वं नित्यं तथाश्वत्वमपीति । यथा वा "चन्द्रसदृशं मुखम्" इत्यादौ आह्लादकत्वादिधर्मः सादृश्यमिति तदतिरिक्तकल्पनायां गौरवमेव । आह्लादः सुखविशेषः, आदिना वर्त्तुलत्वतेजस्वित्वादिपरिग्रहः । "**चन्द्रभिन्नत्वे सति**" इति । अस्याय-माशयः—"चन्द्रसदृशं मुखम्" इत्यादौ वाक्ये चन्द्रगताह्लादकजातीयाह्लादकत्वमेव मुखेऽनुयोगिनि चन्द्रप्रतियोगिकं **सादृश्यम्** । सादृश्यस्याप्यनुयोगिप्रतियोगिभ्यां निरूप्यमाणत्वात् । आह्लादश्च सुखविशेषः—यद्यपि चन्द्रमुखदर्शनजन्ययोः सुखयो-

भिन्नत्वेन चन्द्रमुखयोर्नैकमाह्लादकत्वं कारणतावच्छेदकभेदेन कारणताभेदस्यावश्यकत्वात् तथापि स्वोपधायकत्वसम्बन्धेन एकवैजात्यविशिष्टत्वमेव प्रकृते साधारणो धर्मः। मुखचन्द्रदर्शनजन्यञ्च एकजातीयमेव सुखमिति परः सारः। इदं प्राचां मतम्।

नव्यास्तु—सादृश्यमतिरिक्तं मन्यन्ते। नच तदतिरिक्तपक्षे पदार्थविभागव्याघातः। साक्षात् परम्परया वा येषां पदार्थानां तत्त्वज्ञाने उपयोगस्ते सप्तैवेत्यभिप्रायो यतः। एवञ्चैतस्मिन्मते अधिकरणत्वाधेयत्वादिकमपि पदार्थान्तरम्। अन्यथा संयोगादिरूपस्य तस्य "कुण्डे बदर"मितिवद् "बदरे कुण्ड"मित्यपि व्यवहारः स्यात्। कुण्डबदरसंयोगस्य द्विष्ठत्वात्। एवं प्रतियोगित्वमाकाशत्वादिकमप्यतिरिक्तमेवेत्यन्यत्र विस्तरः।

(कारि०) क्षित्यप्तेजोमरुद्व्योमकालदिग्देहिनो मनः।
द्रव्याणि—

(मुक्ता०) द्रव्याणि विभजते—क्षित्यबिति—क्षितिः=पृथिवी, आपो=जलानि, तेजो=वह्निः, मरुद्=वायुः, व्योम=आकाशः, कालः=समयः, दिग्=आशा, देही=आत्मा, मनः, एतानि नव द्रव्याणीत्यर्थः। ननु—द्रव्यत्वजातौ किं मानम्। नहि तत्र प्रत्यक्षं प्रमाणं घृतजतुप्रभृतिषु द्रव्यत्वाग्रहादिति चेन्न कार्यसमवायिकारणतावच्छेदकतया, संयोगस्य, विभागस्य वा समवायिकारणतावच्छेदकतया तत्सिद्धेरिति।

(प्रभा०) परममूले "द्रव्याणि" इति पदं द्रव्यस्वरूपविशिष्टार्थकम्। * गुणक्रियावत्त्वं समवायिकारणत्वं वा द्रव्यसामान्यलक्षणम्। अर्थात्—यत् समवायसम्बन्धेन गुणस्य कर्मणो वाऽऽश्रयः, यच्च कस्यापि समवायिकारणं भवेदेव, तदेव "द्रव्यं" नाम।

"विभजते" इति। स्वमभिव्याहृतपदार्थतावच्छेदकधर्मव्याप्यमिथोविरुद्धयावद्धर्मप्रकारकज्ञानानुकूलो व्यापारो विपूर्वकभजधातोरर्थः। अत्र "स्वं" विपूर्वको

---

* ननु—गुणवत्त्वादेः स्वरूपलक्षणं न युज्यते लक्ष्यतावच्छेदकव्यापकं हि लक्षणं स्वरूपलक्षणम्। तटस्थलक्षणन्तु—लक्ष्यतावच्छेदकसमानाधिकरणम्। तस्यात्र नातीवोपयोगः। तथा च आद्यक्षणे (उत्पत्तिद्वितीयक्षणे) "उत्पन्नं द्रव्यं क्षणमगुणं तिष्ठति" इति नियमात् गुणवत्त्वाभावात्, उत्पन्नविनष्टे (यादृशद्रव्यारम्भकसंयोगजनकक्रियोत्पत्तेः तृतीयक्षणे अवयवान्तरे तादृशसंयोगनाशिका क्रिया जाता तादृशे) च द्रव्ये क्रियावत्त्वाभावात् अव्याप्तिर्लक्षणदोष इति चेन्न गुणसमानाधिकरण(समवायसम्बन्धेन गुणवद्वृत्ति)सत्ताभिन्नजातिमत्त्वस्य विवक्षायां दोषाभावात्।

गुणादावतिव्याप्तिवारणाय गुणसमानाधिकरणेति जातिविशेषणम्। सत्तामादायातिव्याप्तिवारणाय सत्ताभिन्नेति। द्रव्यगुणान्यतरत्वमादाय अतिव्याप्तिवारणाय जातीति। अयमेव प्रकारोऽन्यत्रापि लक्षणेषु दोषवारणायानुसन्धेयः। प्रदर्शयिष्यते चापि तत्र तत्र।

भजधातुः, तत्समभिव्याहृतं यत्पदं प्रकृते द्रव्यपदमेव, तदर्थतावच्छेदकः=तदर्थे विशेषणीभूतः यो धर्मः द्रव्यत्वरूपः, तद्व्याप्याः=तन्निष्ठव्यापकतानिरूपितव्याप्यताश्रयाः मिथः=परस्परं विरुद्धाः=असमानाधिकरणाः ये=यावन्तः अनेके धर्माः पृथिवीत्वादयः, तत्प्रकारकं यज्ज्ञानं=पृथिवी आप इत्यादि, तदनुकूलः=तज्जनकः व्यापारः=पद्यात्मकवाक्यप्रयोगरूपः स एव विभाग इत्यनया दिशा अन्यत्रापि घटनीयम् ।

* द्रव्यत्वजातिं साधयितुं प्रथमं शङ्कते—"ननु" इति । "किं मानम्" इति । अत्र "किं" शब्दः प्रश्ने । नत्वाक्षेप इति भावः ।

ननु—द्रव्यं द्रव्यमित्यनुगतप्रतीतिरेव द्रव्यत्वजातौ प्रमाणं स्यात् ? अत आह—"नहि" इति । तत्र=द्रव्यत्वे । प्राकृतानां=हालिकादीनां घृतादिषु द्रव्यत्वजातेरग्रहात् न सकलद्रव्यसाधारणतया द्रव्यत्वजातिसिद्धिरिति भावः । इतीति—चेत्=यदि इत्येवमाशङ्क्येत न=तन्न इत्युत्तरमाह—"कार्य"—इति । कार्यत्वञ्च—सत्त्वे सति प्रागभावप्रतियोगित्वरूपम्प्रकृते बोध्यम् । अस्याः पङ्क्तेरयं भावः—

† "यत्र समवायेन कार्यं तत्र तादात्म्येन द्रव्यम्" इत्यस्ति नियमः । तेन—समवायसम्बन्धावच्छिन्नकार्यत्वावच्छिन्नम्प्रति तादात्म्यसम्बन्धावच्छिन्ना या द्रव्यनिष्ठा समवायिकारणता सा किञ्चिद्धर्मावच्छिन्ना कारणतात्वात् घटगतकार्यतानिरूपितदण्डवृत्तिकारणत्ववत् । यथा—दण्डवृत्तिकारणता दण्डत्वधर्मावच्छिन्ना तथा द्रव्यवृत्तिकारणता अपि द्रव्यत्वधर्मावच्छिन्ना, निरवच्छिन्नायाः कारणताया असम्भवात् । "या या कारणता सा सा किञ्चिद्धर्मावच्छिन्ना" इति सामान्यव्याप्तिः ।

यद्वा—समवायसम्बन्धावच्छिन्नसंयोगत्वावच्छिन्नसंयोगनिष्ठकार्यतानिरूपिता तादात्म्यसम्बन्धावच्छिन्ना द्रव्यनिष्ठा या समवायिकारणता, सा किञ्चिद्धर्मावच्छिन्ना इति पक्षं साध्यञ्चोक्त्वा हेत्वादिनिवेशः पूर्ववत् ।

किंवा—समवायसम्बन्धावच्छिन्नविभागत्वावच्छिन्नविभागनिष्ठकार्यतानिरूपिता या तादात्म्यसम्बन्धावच्छिन्ना द्रव्यनिष्ठा कारणता सा किञ्चिद्धर्मावच्छिन्ना ‡ । हेतूदाहरणे पूर्ववत् ।

---

* "द्रव्यं गुणस्तथा कर्म" इति पदार्थोद्देशे द्रव्यमित्येकवचनेन द्रव्योद्देशात् जातावेकवचनमाभाति द्रव्यस्य नवविधत्वात् इत्यतो द्रव्यत्वजातौ जिज्ञासोत्पन्नेति विभावनीयम् ।

† तथा च—"समवायसम्बन्धावच्छिन्नकार्यत्वावच्छिन्नकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नकारणत्वम्" इति कार्यकारणभावो बोध्यः ।

‡ मुक्तावल्यादिनव्यन्यायग्रन्थेषु प्रायोवच्छेदकावच्छिन्नादिशब्दानां प्रयोगो यद्यपि वस्तुतत्त्वविवेचनाय नवीनैर्विशेषपरीत्या आश्रितः तथाप्याधुनिकानां बालानां बहु भीतिञ्जनयतीति कृत्वा किञ्चिदेतस्य स्वरूपमत्रैव निरूप्यते—

अवच्छिद्यते=व्यावर्त्यते निरूप्यते नियम्यतेऽनेन धर्मेण धर्मी—इति—अवच्छेदः । स एवा-

अत्र प्रागभावप्रतियोगित्वरूपस्य कार्यत्वस्य कार्यताऽवच्छेदकत्वे उपस्थितिकृतं गौरवम् । नित्यसंयोगवादिनये संयोगत्वावच्छिन्नकार्यताया अप्रसिद्धिः इत्यतो विभाग-पर्यन्ताऽनुधावनम् । नित्यविभागस्याश्रयताया असम्भवात् विभागत्वावच्छिन्नकार्यता सार्वजनीना=सर्वमतसिद्धा । एतदभिप्रायेणैव नित्यसंयोगाङ्गीकर्तृमतसाधारण्येनाह—"विभागस्य" इति । नित्यसंयोगो विभुद्वयसंयोगः यथाऽऽत्माकाशयोः । द्रव्यत्व-सिद्धेः=द्रव्यत्वरूपजातिसिद्धेरित्यर्थः । एवञ्चोपरिदर्शितानुमानेन द्रव्यीयकारणतायाः किञ्चिद्धर्मसिद्धिः, यश्चासौ धर्मः स एव द्रव्यत्वम्, तस्य च वक्ष्यमाणव्यक्त्यभेदादि-बाधकाभावाज्जातित्वमिति भावः ।

**(मुक्ता०) ननु—दशमं द्रव्यं तमः कुतो नोक्तं तद्धि प्रत्यक्षेण गृह्यते तस्य च रूपवत्त्वात् कर्मवत्त्वाच्च द्रव्यत्वम् । तद्धि—गन्धशून्यत्वान्न पृथिवी नीलरूपवत्त्वाच्च न जलादिकं, तत्प्रत्यक्षे चालोकनिरपेक्षं चक्षुः कारणमिति चेन्न, आवश्यकतेजोऽभावेनोपपत्तौ द्रव्यान्तरकल्पनाया अन्याय्यत्वात् । रूपवत्ताप्रतीतिस्तु भ्रमरूपा । कर्मवत्ताप्रतीतिरप्यालोका-पसारणौपाधिकी भ्रान्तिरेव । तमसोऽतिरिक्तत्वेऽनन्तावयवादिकल्पना-गौरवं च स्यात् । स्वर्णस्य यथा तेजस्यन्तर्भावस्तथा वक्ष्यते ॥**

(प्रभा०) तमोरूपदशमद्रव्यवादी मीमांसकः शङ्कते--"ननु" इति । तत्र प्रत्यक्षं प्रमाणयति--"तद्धि" इति तमोहीत्यर्थः । प्रत्यक्षेण=चक्षुरिन्द्रियेण । गृह्यते= ज्ञायते । अस्तु तमसः प्रत्यक्षं परमिदं द्रव्यमेवेत्यत्र किं मानमित्याकाङ्क्षायामनुमानं

---

वच्छेदकः । स्वार्थे कः प्रत्ययः । एवञ्च "नियामको धर्मोऽवच्छेदक" इति सिद्धं भवति । परन्त्वस्य निर्वचनप्रकारोऽनेकविधः । तत्रायं प्रायिकः--"अन्यूनानतिरिक्तवृत्तित्वमवच्छेदकत्वम्" इति । अर्थात् यो धर्मो न न्यूनवृत्तिः धर्मिणः=अवच्छेद्यस्य एकदेशवृत्तिर्न भवति, नापि च ततोऽधिक-देशवृत्तिः=अवच्छेद्यातिरिक्तपदार्थनिष्ठः स्यात्, तदिदमेकविधमवच्छेदकत्वं ज्ञेयम् । यथा—गन्धवत्त्वं पृथिवीत्वमिति पृथिवीलक्षणे गन्धवत्त्वं=गन्धो धर्मः न पृथिव्या एकदेशे, नापि च पृथिव्यतिरिक्त-जलादिषु वर्त्तते, किन्तु पृथिवीत्वसमानाधिकरणवृत्तिः अर्थात् पृथिवीमात्रवृत्तिरिति । एवम्—गन्ध-वत्त्वस्य पृथिव्याः अवच्छेदकत्वम् । एवम्—अवच्छेदकेन योऽवच्छिद्यते व्यावर्त्यते धर्मी स तदवच्छिन्नोऽभिधीयते । यथा च गन्धवत्त्वेन पृथिवी इतरेभ्यो व्यावर्त्यते इति पृथिवी गन्धवत्त्वा-वच्छिन्ना इति वक्तुं पार्यते । अधिकमनुमानखण्डीयविवृतावग्रे द्रष्टव्यम् ।

⊛ अयं भावः—कार्यत्वकार्यतयोरभेदात् अवच्छेद्यावच्छेदकभावस्य च भेदनियतत्वेन कार्यत्वावच्छिन्नकार्यतानिरूपितेति पदघटकत्वेऽसम्बद्धप्रलाप एवेत्यत आह—संयोगस्य विभागस्य वेति । तथा च—संयोगत्वकार्यत्वयोर्भिन्नयोरवच्छेद्यावच्छेदकभावस्य सुसम्पन्नत्वमिति द्वितीया-नुमानोत्थानबीजम् । नह्ययं तर्कप्रधानतन्त्रे नियमो यट्टीकाकृद्भिः कैश्चिदुक्तं तदेवोपादेयं यथा मानवं वचः, अतो दिनकराद्यनुक्तमप्युपादेयमिति दण्डिविश्वेश्वराश्रमस्वामिनः ।

प्रमाणयति—"तस्य च" इति आदिना । तथा च—"तमो द्रव्यं रूपवत्त्वात् कर्मवत्त्वात्=क्रियावत्त्वात् घटादिवत्" इत्यनुमानं तमसो द्रव्यत्वे प्रमाणमिति फलितम् । एवम्—"तमो द्रव्यं परत्वाद्याश्रयत्वात् घटवत्" इत्यनुमानमपि ज्ञेयम् । भवति च प्रतीतिः—"इदं तमः परम्, इदं तमोऽपरमिति ।

ननु—तमसो रूपवत्त्वे मानाभावः, "नीलं तम" इति प्रतीतिस्तु भ्रमरूपैव इत्याक्षेपे हेत्वन्तरमाह—"कर्मवत्त्वात्" इति । नीलं तमश्चलतीति आबालप्रसिद्धा प्रतीतिरबाधितेति नैव उक्तप्रतीतेर्भ्रमत्वमिति भावः ।

नन्वस्तु तमसः पृथिव्यादिद्रव्येष्वेवान्तर्भावः किमधिककल्पनया इति शङ्कां निराकुरुते—"तद्धि" इत्यादिना । "जलादिकम्" इति । आदिना तेजःप्रभृतिद्रव्यसङ्ग्रहः । तथा च नवसु द्रव्येष्वन्तर्भावाभावेन * परिशेषतयाऽधिकमेव द्रव्यं तमः ।

ननु—तमो यदि रूपादिमद् द्रव्यं तथा घटादिवत् आलोकसहकृतेन चक्षुषा कुतो न गृह्यते द्रव्यप्रत्यक्षे आलोकसापेक्षमेव चक्षुरिन्द्रियं कारणं यतः, इत्याशङ्कावारणाय आह—"तत्प्रत्यक्षे च" इति । तमःप्रत्यक्षे चेत्यर्थः । तथा च—तमोभिन्नद्रव्यचाक्षुषप्रत्यक्ष एव आलोकसहकृतं चक्षुरिन्द्रियं कारणमिति भावः । इति मीमांसकपूर्वपक्षः ।

अथ सिद्धान्ती "चेन्न" इत्यादिग्रन्थेन तमसोऽभावेऽन्तर्भावं कुर्वन् मीमांसकमतं खण्डयति—"आवश्यकतेजोभावेन" इति । प्रौढप्रकाशकतेजःसामान्याभावेनेत्यर्थः । प्रौढप्रकाशकत्वञ्च उष्णस्पर्शभास्वरस्वरूपवत्त्वं तद्धर्मवद्यत्तेजः तस्य सामान्याभाव एव तमो न भावान्तरमिति भावः । उपपत्तौ=तमोव्यवहारोपपत्तौ ।

ननु—तेजोऽभावश्चेत् तमः कथं तर्हि तत्र रूपप्रतीतिः अभावस्य नीरूपत्वात् इत्याशङ्कायामाह—"रूपवत्ता" इति । स्पष्टमन्यत् । भवतु रूपवत्ताप्रतीतेस्तत्र भ्रान्तिरूपता परन्तु—"चलति" इति कर्मप्रतीत्या तमो द्रव्यं भविष्यति ? अत आह—कर्मवत्ताप्रतीतिरपि" इति । चलनात्मकक्रियाप्रतीतिरपि आलोकस्य प्रकाशस्य यदपसारणं तदेव उपाधिः तत † आगता, प्रकाशापसरणनिमित्ता तमसि चलनक्रियाप्रतीतिर्भ्रान्तिरेवेत्यर्थः । दूषणान्तरमाह—"तमस" इति । "अवयवादि" इति—आदिना उत्पत्तिध्वंसपरिग्रहः ।

कन्दलीकारस्तु—आरोपितं नीलरूपं तम इत्याह—तदपि न विचारचारु, तथासति "इहान्धकार" इति प्रतीतिरपि भ्रमः स्यादित्यधिकमन्यत्र ।

---

* परिशेषाऽनुमानेत्यर्थः । एतस्य प्रपञ्चोऽग्रे द्रष्टव्यः ।

† "चरति" (४ । ४ । ८) इति सूत्रेण तृतीयासमर्थादुपाधिशब्दात् ठक् प्रत्ययः । उपाधिना चरति प्राप्नोति इति "औपाधिकः" । स्त्रियां "टिड्ढाणञ्"—(४।१।१५) इति सूत्रेण ङीपि कृते । "औपाधिकी" इति रूपम् ।

स्यादेतत्--माभूत् तमो द्रव्यं सुवर्णन्तु भविष्यति, तथा च नवत्वव्याघात-स्तदवस्थ एवेत्यत आह--"सुवर्णस्य" इति । "वक्ष्यते" इति । अग्रे तेजोग्रन्थे निरूपयिष्यत इत्यर्थः * ।

सर्वस्यास्य ग्रन्थस्यायं सारः—"तमः खलु चलं नीलं परापरविभागवत् प्रसिद्धद्रव्यवैधर्म्यान्नवभ्यो भेत्तुमर्हति" इति मीमांसकानां प्रवादो न युक्तः, यतः—"तमो द्रव्यं न भवति आलोकनिरपेक्षचक्षुर्ग्राह्यत्वाद् आलोकाभाववत्" । किन्तु प्रौढ-प्रकाशकतेजःसामान्याभाव एव तमः । तत्र नीलं तमश्चलतीतिप्रतीतिर्भ्रमः । नीलत्वं हि खनीलिमवद् दृष्टिदोषजनितम् । चलत्वञ्चालोकापसारणौपाधिकं भ्रमः । तस्मात्तेजो-भावस्तमो नाधिकं द्रव्यम् । नच तमोऽभाव एव तेजः--किं न स्यादिति वाच्यम्, उष्णस्पर्शस्यापलपितुमशक्यत्वादित्याद्यधिकमन्यत्रानुसन्धेयम् ।

इदञ्च पदार्थानां सङ्ख्यानं द्रव्याणां विभजनञ्च महर्षि"कणाद"प्रणीतसूत्र-मूलकम् । तथा च--

† धर्मविशेषप्रसूताद् द्रव्यगुणकर्मसामान्यविशेषसमवायानां पदार्थानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानान्निःश्रेयसम् ।

(वै० १ । १ । ४)

पृथिव्यापस्तेजोवायुराकाशं कालो दिगात्मा मन इति द्रव्याणि ।

(वै० १ । १ । ५) इति सूत्रे स्तः ।

नचर्षिसूत्रे षडेव पदार्थाः सङ्ख्याता अत्र तु सप्तमोऽप्यभाव इति महर्षि-विरुद्धा विश्वनाथकल्पनेति वाच्यम्, सूत्रे तु अभावस्य भावतन्त्रत्वात्पृथगुपदेशो न कृतः । अत्र तु बालबुद्धिवैशद्यार्थं सप्तमोऽभावः पृथगुपदिष्टः । अन्यथर्षिः नवमाध्यायस्य प्रथमाह्निके ‡ "क्रियागुणव्यपदेशाभावात्प्रागसत्" ( ९ । १ । १ ) इत्यादिसूत्रैः कथमभावमवर्णयिष्यदिति दिक् ।

ननु तमसोऽधिकद्रव्यत्वादिकल्पना तत्खण्डनप्रकारश्च विश्वनाथस्याऽनार्ष एव इति चेन्न--

---

* "सुवर्णं तैजसम्" इत्यादिना अनुमानेन ।

† "धर्मविशेषप्रसूतात्"—धर्मविशेषः=ऐहिको जन्मान्तरीणो वा सुकृतिविशेषः तत् प्रसूतात्=तज्जन्यात् तत्त्वज्ञानादित्यर्थः । सुकृतविशेषेण पदार्थानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानं ततः आत्ममननोत्तरं निदिध्यासनेनात्मसाक्षात्कारो भवति, ततो मिथ्याज्ञानादिनाशक्रमेण मोक्षो भवतीति सारार्थः ।

‡ क्रियाया गुणस्य च व्यपदेशस्य व्यवहारस्याभावात् प्राक्=उत्पत्तेः प्राक् कार्यमस-दित्यर्थः । घटोत्पत्तेः पूर्वं घटप्रागभावस्तिष्ठति—"इहेदानीं घटो भविष्यति" इति प्रत्यक्षमपि प्रागभावे प्रमाणमित्याशयः ।

द्रव्यगुणकर्मनिष्पत्तिवैधर्म्यादभावस्तमः ॥१९॥
तेजसोद्रव्यान्तरेणावरणाच्च ॥२०॥

इति पञ्चमाध्यायस्य द्वितीयाह्निके सूत्राभ्यां तमोविषयेऽपि महर्षिविचारणायाः कृतत्वात्। तस्मान्मुक्तावल्यादिग्रन्था ऋषिविरुद्धत्वाद्धेया एवेति भणन्तो विकृतबुद्धय आधुनिका एव हेया मन्तव्याः।

इति तमोवादः।

---

(का०)—अथ गुणाः रूपं रसो गन्धस्ततः परम् ॥३॥
स्पर्शः सङ्ख्या परिमितिः पृथक्त्वञ्च ततः परम्।
संयोगश्च विभागश्च परत्वञ्चापरत्वकम् ॥४॥
बुद्धिः सुखं दुःखमिच्छा द्वेषो यत्नो गुरुत्वकम्।
द्रवत्वं स्नेहसंस्कारावदृष्टं शब्द एव च ॥५॥

(मुक्ता०) गुणान्विभजते—"अथ गुणा" इति। एते गुणाश्चतुर्विंशतिसङ्ख्याकाः कणादेन कण्ठतः चशब्देन च दर्शिताः। तत्र गुणत्वादिकजातिसिद्धिरग्रे वक्ष्यते ॥३—५॥

(प्रभा०) "गुणान्विभजत" इति। "स्वसमभिव्याहृतपदार्थतावच्छेदके"-त्यादिविभजतेरर्थः पूर्ववद् घटनीयः। तथाहि—"स्वं" विपूर्वको भजधातुः, तत्समभिव्याहृतं यत्पदम्, प्रकृते च गुणपदमेव तदर्थतावच्छेदकः=तदर्थे विशेषणीभूतः यो धर्मो गुणत्वरूपः, तद्व्याप्या मिथः=परस्परं विरुद्धाः=असमानाधिकरणाः ये यावन्तोऽनेके धर्माः रूपत्वादयः, तत्प्रकारकं यज्ज्ञानं रूपं, रसः, गन्ध इत्याद्याकारकम्, तदनुकूलः=तज्जनकः व्यापारः पद्यात्मकवाक्यप्रयोगरूपः स एव विभाग इति बोध्यम्। द्रव्यकर्मभिन्नत्वे सति सामान्यवत्त्वं गुणसामान्यलक्षणम्।

"कण्ठत" इति—"रूपरसगन्धस्पर्शाः सङ्ख्याः परिमाणानि पृथक्त्वं संयोगविभागौ परत्वापरत्वे बुद्धयः सुखदुःखे इच्छाद्वेषौ प्रयत्नाश्च गुणाः" (वै० १।१।६) इति विभागसूत्रे सप्तदश कण्ठेनोक्ताः। "च शब्देन" इति—सूत्रस्थचशब्देन गुरुत्वद्रवत्वस्नेहसंस्कारधर्माधर्मशब्दाः समुच्चिताः। ते च सर्वे सङ्कलनया चतुर्विंशतिसङ्ख्या भवन्ति। तथा च—प्रशस्तपादभाष्यम्—"चशब्दसमुच्चिताश्च गुरुत्वद्रवत्वस्नेहसंस्कारादृष्टशब्दाः सप्तैवेत्येवं चतुर्विंशतिगुणाः" इति। अदृष्टशब्देन धर्माधर्मयोरुपसङ्ग्रह इति तद्व्याख्यातारः। तत्र=गुणेष्वित्यर्थः। गुणत्वजातिसिद्धिरिति—द्रव्यकर्मभिन्नसामान्यवति या कारणता सा किञ्चिद्धर्मावच्छेद्या कारण-

त्वाद्" इत्यनुमानं गुणत्वजातिसाधकमित्यादि–गुणत्वजातिसिद्धिप्रकारो * गुणनिरूपणावसरे दर्शयिष्यत इत्यर्थः ॥३, ४, ५॥

(का०) उत्क्षेपणं ततोऽपक्षेपणमाकुञ्चनं तथा ।
प्रसारणं च गमनं कर्माण्येतानि पञ्च च ।६।

(मुक्ता०) कर्माणि विभजते--उत्क्षेपणमिति--कर्मत्वजातिस्तु प्रत्यक्षसिद्धा । एवमुत्क्षेपणत्वादिकमपि ॥६॥

(प्रभा०) "कर्माणि विभजत" इति । अत्रापि विभागार्थलापनं पूर्वनिर्दिष्टदिशा ज्ञेयम् । "संयोगभिन्नत्वे सति संयोगासमवायिकारणं कर्म" इति कर्मसामान्यलक्षणम् । संयोगेऽतिव्याप्तिवारणाय भिन्नत्वान्तम् । घटादावतिव्याप्तिवारणाय कारणत्वान्तम् । "कर्मत्वजातिमद्वा" इति लघुलक्षणम् । "प्रत्यक्षसिद्धा" इति—"अयं चलति अयं चलति" इत्याकारकचलनानुगतप्रतीतिवेद्यैव कर्मत्वजातिरिति नास्ति तत्सिद्धावनुमानादिप्रमाणाद्यपेक्षेति भावः ।

ऊर्ध्वदेशसंयोगानुकूलो व्यापार उत्क्षेपणम् । अधोदेशसंयोगानुकूलो व्यापारोऽवक्षेपणम् । शरीरसन्निकृष्टदेशसंयोगानुकूलो व्यापारः प्रसारणम् । उत्तरदेशसंयोगानुकूलो व्यापारो गमनम् । तथा च कणादसूत्रम्—

उत्क्षेपणमवक्षेपणमाकुञ्चनं प्रसारणं गमनमिति कर्माणि ।

( वै० १ । १ । ७ ) इति ॥६॥

(मुक्ता०) नन्वत्र भ्रमणादिकमपि पञ्चकर्माधिकतया कुतो नोक्तमत आह—

(का०) भ्रमणं रेचनं स्यन्दनोर्ध्वज्वलनमेव च ।
तिर्यग्गमनमप्यत्र गमनादेव लभ्यते ।।७।।

(प्रभा०) "अधिकतया" इति । कर्मविभाजकोपाधिभिर्भ्रमणत्वादिभिः । मूले (कारिकायां) गमनादेवेति । तथा च प्रशस्तपादभाष्यम्—"गमनग्रहणाद् भ्रमणरेचनस्यन्दनोर्ध्वज्वलनतिर्यक्पतनोन्नमनादयो गमनविशेषा न जात्यन्तराणि" इति ।

ननु—उत्क्षेपणादीनामपि गमनेऽन्तर्भावात् गमनमेवैकं कर्म कथनीयं स्यात् उत्क्षेपणत्वादिर्विभागो न कर्त्तव्य इति चेद् न ? स्वतन्त्रेच्छस्य मुनेर्नियोगपर्यनुयोगानर्हत्वात् । अतिगम्भीरार्थस्याऽस्य शास्त्रस्य बोधे यथासम्भवं सरलेनोपायेन मुनिप्रवृत्तिरिति भावः ॥७॥

(का०) सामान्यं द्विविधं प्रोक्तं परं चापरमेव च ।
द्रव्यादित्रिकवृत्तिस्तु सत्ता परतयोच्यते ।।८।।

---

* ८६ षडशीतितमायाः कारिकाया व्याख्यान इत्यर्थः ।

(प्रभा०) उद्देशक्रमप्राप्तं सामान्यं निरूपयितुमाह—सामान्यमिति ।

(मुक्ता०) सामान्यं निरूपयति—सामान्यमिति । तल्लक्षणं तु नित्यत्वे सति अनेकसमवेतत्वम् । अनेकसमवेतत्वं संयोगादीनामप्यस्त्यत उक्तं नित्यत्वे सतीति । नित्यत्वे सति समवेतत्वं गगनपरिमाणादीनामप्यस्त्यत उक्तमनेकेति । नित्यत्वे सति अनेकवृत्तित्वमत्यन्ताभावेऽप्यस्त्यतो वृत्तित्वसामान्यं विहाय समवेतत्वमित्युक्तम् । एकमात्रव्यक्तिवृत्तिस्तु न जातिः । तथाचोक्तम्—

व्यक्तेरभेदस्तुल्यत्वं सङ्करोऽथानवस्थितिः ।
रूपहानिरसम्बन्धो जातिबाधकसङ्ग्रहः ॥१॥

द्रव्यादीति । * परत्वमधिकदेशवृत्तित्वम् । अपरत्वमल्पदेशवृत्तित्वम् । सकलजात्यपेक्षयाऽधिकदेशवृत्तित्वात् सत्तायाः परत्वम् । तदपेक्षया चान्यासां जातीनामपरत्वम् ॥८॥

(प्रभा०) "तल्लक्षणन्तु" इति । तदेव (हि) लक्षणं भवति, यदव्याप्त्यतिव्याप्त्यसम्भवरूपदोषत्रयशून्यम् । यथा—गोः सास्नादिमत्त्वम् । अव्याप्तिश्च लक्ष्यैकदेशाऽवृत्तित्वम् । एवञ्च—"गोः किं लक्षणम्" इत्युक्ते यदि कश्चिद् ब्रूयात् "कपिलत्वं गोत्वम्" इति तन्न लक्षणम् । कपिलत्वस्य लक्ष्यभूताया गोरेकदेशवृत्तित्वेनाव्याप्तिग्रस्तत्वात् । अतिव्याप्तिश्च लक्ष्यवृत्तित्वे सत्यलक्ष्यवृत्तित्वम् । अत एव—गोर्न शृङ्गित्वं लक्षणम् । शृङ्गित्वस्य हि लक्ष्यभूतायां गवि वृत्तिरस्ति, अथ च अलक्ष्यभूतासु महिष्यादिव्यक्तिष्वपि वृत्तित्वं तेनातिव्याप्तिर्लक्षणदोषः । असम्भवश्च लक्ष्यमात्राऽवृत्तित्वम् । अत एव—गोरेकशफत्वं न लक्षणम् । एकशफत्वस्य कुत्रापि गव्यसम्भवात् । एतद्दोषत्रयरहितं सामान्यलक्षणं दर्शयितुमाह—"तल्लक्षणन्तु" इति । लक्षणस्य प्रयोजनन्तु इतरभेदज्ञानं व्यवहारो वा । "व्यावृत्तिर्व्यवहारो वा लक्षणस्य प्रयोजनम्" इत्युक्तेः । तथा च—"सामान्यमितरेभ्यो द्रव्यादिभ्यो भिद्यते, सामान्यमित्याकारकव्यवहारविषयो वा भवति, नित्यत्वे सति अनेकसमवेतत्वात् यन्नैवं तन्नैवं यथा द्रव्यम्" इति । एवमेव सर्वत्र लक्षणेपूहनीयम् ।

सामान्यलक्षणस्य पदकृत्यं दर्शयति—"अनेकसमवेतत्वम्" इत्यादिना । समवेतत्वं समवायसम्बन्धेन वृत्तिमत्त्वम् । वृत्तिश्चाधेयता । अनेकत्वञ्च एकभिन्नत्वम् । "संयोगादीनाम्" इति । तथा च—यदि नित्यत्वपदं विहाय अनेकसमवेतत्वमात्र लक्षणं क्रियेत, तदा संयोगादिष्वतिव्याप्तिर्लक्षणदोषः स्याद् अतस्तद्वारणाय "नित्यत्वे

---

* ननु—सामान्यस्य अद्रव्यतया दैशिककालिकपरत्वाऽपरत्वानाश्रयत्वात् परमपरञ्चेति सामान्यस्य विभागकरणमयुक्तमिति शङ्कां परिहर्तुमिव पारिभाषिकपरत्वादिनिर्वचनं दर्शयति—"परत्वम्—"इति ।

सति" इत्युपात्तम् । एवञ्च गगनपरिमाणादिषु अतिव्याप्तिवारणाय "अनेक" इति पदं "समवेत"पदात्पूर्वं धृतम् । गगनस्य महत्परिमाणमस्ति च तत् नित्यम् अथच समवेतम् । परन्तु तत्समवायाख्यसम्बन्धेन गगनवृत्त्येव नत्वनेकवृत्ति ( नत्वनेकासु व्यक्तिषु वर्त्तते ) । "आदिना" परमाणुपरिमाणादिसङ्ग्रहः । नित्यत्वे सति अनेकेषु वृत्तिरत्यन्ताभावस्याप्यस्ति--अर्थात् अत्यन्ताभावो नित्योऽथ चानेकाधिकरणवृत्तिश्च यथा—रूपात्यन्ताभावो वायौ, आत्मनि, आकाशे, काले च इत्याद्यनेकाधिकरणेषु वर्त्तते । तथासति यदि "समवेत"पदं विहाय "नित्यत्वे सत्यनेकवृत्तित्वम्" इति लक्षणं क्रियेत तदा अत्यन्ताभावेऽपि लक्षणस्यातिव्याप्तिः स्यात्, तद्वारणाय साधारणवृत्तित्वं विहाय समवायसम्बन्धेन वृत्तित्वं गृहीतम् । नित्योऽपि सन्नत्यन्ताभावः स्वाधिकरणेषु स्वरूपसम्बन्धेन वर्त्तते, नतु समवायसम्बन्धेनेति सर्वथा निर्दुष्टं निर्दिष्टं सामान्यलक्षणम् । यत्तु—नित्यमेकमनेकानुगतं सामान्यमित्युक्तं तत्रैकपदं स्वरूपकथनमात्रपरम् । "अनेकसमवेतत्वम्" इति विशेष्यदलं जलपरमाण्वादिनिष्ठे रूपेऽतिव्याप्तिवारणार्थकं वा बोध्यम् ।

अथ शिष्यो जातिस्वरूपं सम्यक् जानीयात् इति जातिबाधकान् सङ्गृहीतुमाह—"एकव्यक्तिवृत्तिस्तु" इति । अथवा--एकैकव्यक्तिवृत्तिष्वाकाशत्वादिषु जातिव्यवहारो माभूदित्याह—"एक"-इति । अत्र प्राचां सम्मतिमाह--"**तथा चोक्तम्**" इति । किरणावलीग्रन्थे उदयनाचार्यैरिति शेषः । व्यक्तेरभेद इत्याद्याः षट् जातिबाधकाः । तथा हि--

* व्यक्तेरभेदः=स्वाश्रयव्यक्तेरैक्यम्=अर्थात् यो धर्म एकस्यामेव व्यक्तौ वर्त्तते स न जातिः । यथा आकाशत्वं, कालत्वं, दिक्त्वञ्चैकैकव्यक्तिवृत्तित्वान्न जातिः । किन्तु आकाशत्वादिकमुपाधिः । जातिभिन्नो धर्म † उपाधिः । स द्विविधः सखण्डोपाधिः अखण्डोपाधिश्च । यस्तावन्निर्वक्तुं शक्यते स "सखण्डोपाधिः" । यथा—"नित्यत्वे सत्यनेकसमवेतत्वं सामान्यत्वम्, स्वपरव्यावर्त्तकस्वभावत्वं विशेषत्वम्, नित्यसम्बन्धत्वं समवायत्वम्, शब्दसमवायिकारणत्वमाकाशत्वम्, अतीतादिव्यवहारहेतुत्वं कालत्वम्, प्राच्यादिव्यवहारहेतुत्वं दिक्त्वम्" इति सामान्यत्वविशेषत्वसमवायत्वाकाशत्वकालत्वदिक्त्वानि धर्माः सखण्डोपाधयः । यश्च धर्मो निर्वक्तुं न शक्यते, असौ ‡ "अखण्डो-

---

* अनेकासु घटपटादिव्यक्तिषु समान(एक)धर्मप्रकारकबुद्ध्युपपत्तये घटत्वपटत्वादिजातिकल्पना भवति । एकस्यां व्यक्तौ तु न तादृशी=अनुगतप्रतीतिर्जायते, एकव्यक्तौ तु तद्व्यक्तित्वमादायापि तद्धर्मप्रकारकप्रत्ययः सम्पादयितुं शक्यते इति तदतिरिक्तजातिकल्पने मानाभावः ।

† यद्यपि धर्ममात्रमुपाधिस्तथापि जात्यतिरिक्तधर्मे उपाधिव्यवहारः प्रायिको नैयायिकानाम् ।

‡ अखण्डोपाध्यतिरिक्तानामेव धर्माणां निर्वचनार्हत्वमित्ययं नियमो बोध्यः ।

पाधिः" । उक्तञ्च "सिद्धान्त-चन्द्रोदये" यथा—अनुयोगितात्वप्रतियोगितात्व-विषयतात्वादिः ।

तुल्यव्यक्तिवृत्तित्वम्=( तुल्यत्वम् )—अन्यूनानतिरिक्तव्यक्तिकत्वम् । तच्च घटत्वकलशत्वयोर्जातिद्वयस्वरूपत्वे बाधकम् । अर्थात् घटकलशशब्दौ पर्यायौ तयो-र्वाच्यभूतो घटपदार्थ एक एव—स एव घटत्वकलशत्वयोः समानमधिकरणमित्येकमेव घटत्वं जातिर्नतु द्वे घटत्वकलशत्वे पृथक् जाती स्तः । "स्वभिन्नजातिसमनियतत्वं तुल्यत्वमि"ति फलितम् ।

सङ्करः=परस्परात्यन्ताभावसमानाधिकरणयोर्धर्मयोरेकत्र समावेशरूपः । स च भूतत्वमूर्त्तत्वयोर्जातित्वे बाधकः । अर्थात् पृथिवी, जलम्, तेजः, वायुः, आकाशमिति पञ्च भूतानि, तद्वृत्तिधर्मो भूतत्वम् । आकाशं विहाय तत्स्थाने पञ्चमं मनो मेलयित्वा पञ्च मूर्त्तानि उच्यन्ते इति वैशेषिकाणां परिभाषा । भूतत्वं विहाय मूर्त्तत्वं मनसि, मूर्त्तत्वं विहाय भूतत्वमाकाशे वर्त्तते, पृथिव्यादिचतुष्टये च उभयोरेव धर्मयोः समावेशः ।

अत्रेदं तत्त्वम्—परस्परात्यन्ताभावसमानाधिकरणयोर्धर्मयोरेकत्र समावेश-रूपः सङ्करो भूतत्वादेर्जातित्वे बाधक इत्युक्तम् । भवति हि भूतत्वं विहाय मनसि वर्त्तमानस्य मूर्त्तत्वस्य, मूर्त्तत्वं विहाय आकाशे वर्त्तमानस्य भूतत्वस्य च पृथिव्यादि-चतुष्टये समावेशः, तस्माद् भूतत्वं मूर्त्तत्वञ्चेति द्वयमपि न जातिः । एवम्भूतस्य सङ्करस्य जातिबाधकत्वे किं प्रमाणमिति चेत् ? अत्र ब्रूमः—

"स्वसामानाधिकरण्य-स्वाभावसामानाधिकरण्योभयसम्बन्धेन जातिविशिष्ट-जातित्वावच्छेदेन स्वसमानाधिकरणाभावप्रतियोगित्वाभाव एव" इति । अत्रायं पद-कृत्यप्रकारः—सामानाधिकरण्यसम्बन्धेन द्रव्यत्वविशिष्टे पृथिवीत्वादौ द्रव्यत्वसमाना-धिकरणाभावप्रतियोगित्वस्यैव सत्त्वाद्व्यभिचारवारणाय स्वाभावसानाधिकरण्यपदप्रवेशः । अर्थात्—"स्वसामानाधिकरण्यसम्बन्धेन" इत्येतावन्मात्रोक्तौ निरुक्तसम्बन्धे "स्व"-पदेन द्रव्यत्वस्यापि ग्रहणं शक्यते कर्त्तुम्, तत्सामानाधिकरण्यसम्बन्धेन स्वसमाना-धिकरणे जले वर्त्तमानो यः पृथिवीत्वाभावः तत्प्रतियोग्येव पृथिवीत्वं नाप्रतियोगीत्यतो द्वितीयसम्बन्धनिवेशः स्वाभावसामानाधिकरण्येनेति । अत्र—"स्व"पदेन द्रव्यत्वग्रहे सुशके तदभावसमानाधिकरणस्य पृथिवीत्वस्याऽभावात् पृथिवीत्वं ग्राह्यम् । पृथिवीत्वा-भावेन जलादौ द्रव्यत्वस्य सामानाधिकरण्यमस्त्येवेति तेन सम्बन्धेन द्रव्यत्वविशिष्टे पृथिवीत्वादौ स्वसामानाधिकरण्याभावः पृथिवीत्वस्य वक्तुमशक्यः किन्तु जलत्वाभावो ग्रहीतुं सुशकः, तत्प्रतियोगि जलत्वं न पृथिवीत्वम् । एवं स्वसमानाधिकरणाभाव-प्रतियोगित्वाभाव एव पृथिव्यामिति नोक्तनियमभङ्गप्रसङ्गः । जलत्वाद्यभावसमाना-धिकरणे तत्रैव=द्रव्यत्वविशिष्टे पृथिवीत्वादावेव जलत्वसमानाधिकरणाभावप्रतियोगि-त्वस्यैव सत्त्वात्तद्दोषतादवस्थ्यम्, अतः स्वसामानाधिकरण्यप्रवेशः । अर्थात् उक्तेन

सम्बन्धेन जलत्वाद्यभावसामानाधिकरण्यमुपादाय द्रव्यत्वविशिष्टे पृथिवीत्वादौ स्वसमानाधिकरणो योऽभावो नाम जलत्वसमानाधिकरणोऽभावः पृथिवीत्वाभावः तत्प्रतियोग्येव पृथिवीत्वं नाऽप्रतियोगीति ( तस्य जातित्वं न स्यात् ) तस्मात् प्रथमः सम्बन्ध उपात्तः । तेन सम्बन्धेन व्यधिकरणतया ( वर्त्तमानस्य ) जलत्वस्य द्रव्यत्वविशिष्टे पृथिवीत्वादौ ग्रहणं कर्त्तुं न शक्यते, अतः पृथिवीत्वग्रहे दोषाभावः ।

परन्तु—दर्शितनियमस्य साङ्कर्यस्थले भङ्गप्रसङ्ग एव । तथाहि—मूर्त्तत्वस्य भूतत्वस्य च जातित्वं मूर्त्तत्वविशिष्टे भूतत्वे स्वसामानाधिकरण्यसम्बन्धेन मूर्त्तत्वसमानाधिकरणो मनसि वर्त्तमानो योऽभावः, असौ भूतत्वस्यापि धर्त्तुं शक्यते, भूतत्वाभावस्य च प्रतियोग्येव भूतत्वं नाप्रतियोगीति ।

द्वितीयसम्बन्धेनापि च निरुक्ताभावप्रतियोगितैवायाता भवति । तथाहि—"स्व"पदेन मूर्त्तत्वग्रहः तदभावो गगने, तेन=गगनाधिकरणकमूर्त्तत्वाभावेन सह भूतत्वस्याऽस्ति सामानाधिकरण्यम् । अत उक्तेन सम्बन्धेन मूर्त्तत्वसमानाधिकरणोऽभावो भूतत्वस्य, तत्प्रतियोग्येव च भवति भूतत्वमिति केवलेन स्वसामानाधिकरण्यसम्बन्धेनं नाऽस्य वारणं शक्यते कर्त्तुम् । मूर्त्तत्वसमानाधिकरणस्यैव भूतत्वस्य मूर्त्तत्वसमानाधिकरणे मनसि भूतत्वाभावस्य च सत्त्वादिति द्वितीयसम्बन्धविनिवेशोऽप्यावश्यक इति सारः । सोऽयम्—

"उक्तोभयसम्बन्धेन यज्जातिविशिष्टजातित्वं यत्र, तत्र तज्जातिव्यापकत्वमिति नियमः, दृष्टश्चासौ पृथिवीत्वव्यापके द्रव्यत्वादौ, एतादृशनियमभङ्गापत्तिरेव साङ्कर्यस्य जातित्वबाधकत्वे मानम्, साङ्कर्यस्थले जातित्वस्वीकार एतादृशनियमभङ्गापत्तेरिति भाव" इत्यादिरामरुद्रीयादिलेखमूलको बोध्यः ।

किञ्च—यथा भूतत्वमूर्त्तयोः सङ्करो जातिबाधकः एवं शरीरत्वेन्द्रियत्वयोरपि । तथाहि—शरीरत्वात्यन्ताभाववति घटादौ पृथिवीत्वं वर्त्तते, तथा पृथिवीत्वात्यन्ताभाववति जलीयशरीरादौ शरीरत्वं धर्मोऽप्यस्ति । एवं परस्परात्यन्ताभावसमानाधिकरणयोर्धर्मयोर्मनुष्यादिशरीरेषु समावेशरूपः सङ्करस्तयोर्जातित्वे बाधक इत्याद्यग्रे मूलेऽपि स्फुटीभविष्यति । नच वाच्यं शरीरत्वेन्द्रियत्वधर्मयोर्जातित्वे यथा सङ्करस्य बाधकता, तथा पृथिवीत्वजलत्वादीनामपि कुतो नास्य बाधकत्वमिति, ययोः साङ्कर्यं तयोरेव तस्य बाधकत्वाऽभ्युपगमात् । केचित्तु—एकस्यैव धर्मस्य सङ्करप्रयुक्तजातिबाधकत्वमाचक्षते । तेषां मते भूतत्वमूर्त्तत्वयोः सङ्करस्थलेऽपि भूतत्वमेव न जातिः, मूर्त्तत्वन्तु मूर्त्तद्रव्यवृत्तिक्रियासमवायिकारणतावच्छेदकतया जातिः सिद्ध्यतीत्याहुः । नवीनानां मते सङ्करस्य कुत्रापि जातिबाधकत्वं नास्तीत्यपि न विस्मरणीयम् ।

**अयम्भावः**—"यत्र मनसि मूर्त्तत्वं तत्रैव भूतत्वात्यन्ताभावः, यत्र आकाशे भूतत्वं तत्रैव मूर्त्तत्वात्यन्ताभावः" इत्यनया रीत्या परस्परात्यन्ताभावेन सामाना-

धिकरण्यम्=एकाधिकरणवृत्तित्वमस्त्युभयोर्धर्मयोः । अथ च पृथिव्यादिषु तयोः समावेशः=सम्भूयवृत्तित्वम् । अत एव भूतत्वं मूर्त्तत्वञ्चेत्युभयं न जातिः किन्तूपाधिः । साङ्कर्यस्थले एकमात्रधर्मस्य जातित्वं स्वीकुर्वन्तः "मूर्त्तत्वं क्रियासमवायिकारणताऽवच्छेदकतया सिद्धा जाति"रिति वदन्ति ।

**अनवस्थितिः**—अनवस्था अर्थात् क्वचिदपि विश्रामाभावः सामान्यस्य जातित्वे बाधिका । **अर्थात्** यदि सामान्ये सामान्यान्तरमङ्गीक्रियेत तत्रापि सामान्यान्तरम्, तत्रापि सामान्यान्तरमित्युत्तरोत्तरमनास्थायिनी धारा आपतेत्, तस्मात् सामान्यत्वं न जातिः । सामान्ये न सामान्यान्तरमित्यर्थः ।

**इदमत्राकूतकम्**—यथा "गौर्गौ"रित्यनुगतव्यवहारस्य अनुगतधर्मं विनाऽनुपपत्तिः, अतो गोत्वजातिरूपो धर्मः स्वीकृतः तथा गोत्वपुरुषत्वपशुत्वादिजातिषु "जातिर्जाति"रिति अनुगतव्यवहाराय सर्वासु जातिषु एको जातिरूपोऽनुगतधर्मः स्वीकर्त्तव्यः तस्यापि जातित्वात् पुनस्तमादाय जातिर्जातिरिति व्यवहारः प्रवृत्तः, तदर्थमन्यो जातिरूपो धर्मः स्वीकर्त्तव्यः, तमादाय पुनर्जातिर्जातिरिति व्यवहारप्रवृत्तौ इयमनवस्था ज्ञेया । **तथा च**—अनुगतप्रतीतिमात्रं नानुगतधर्मसाधकम्, किन्त्वसति बाधके इति । बाधकाभावविशिष्टानुगतप्रतीतिविशेष्यत्वस्यैव जातिसाधकत्वमिति परः सारः ।

**रूपहानिः**=स्वतो व्यावर्त्तकत्वात्मकरूपस्य=लक्षणस्य हानिः रूपहानिः, सा च विशेषत्वस्य जातित्वे बाधिका ।

**अयमर्थः**—यदि विशेषपदार्थे विशेषत्वं जातिः स्यात्, तदा तेनैव तस्य व्यावर्त्तकत्वं भविष्यति, यतः सामान्याश्रयस्य सामान्यमुखेनैव व्यावर्त्तकत्वनियमः । विशेषपदार्थस्य तु न सामान्यद्वारा भेदसाधकत्वम् तस्य स्वरूपेणैव भेदसाधकत्वात् ततश्च विशेषपदार्थलक्षणहानिभयात् विशेषत्वं नैव जातिः किन्तूपाधिरेव ।

**असम्बन्धः**=समवायाऽभावोऽसम्बन्धः । स च समवायत्वस्य जातित्वे बाधकः । **अर्थात्** यदि समवाये समवायत्वं जातिः स्यात् तर्हि समवायत्वस्य समवाये वृत्त्यर्थं समवायान्तरकल्पनाऽऽपद्येत सा च न युक्ता ।

**अयम्भावः**—रूपादिधर्मा हि रूपादिमत्सु द्रव्येषु समवायसम्बन्धेन वर्त्तन्ते. समवाये यदि समवायत्वं जातिः, सापि द्रव्यत्वादिवत् वृत्तित्वलाभाय समवायान्तरमपेक्षिष्यते, समवाये च समवायान्तरस्यासम्भव इति न समवायत्वं ॐ जातिः ।

---

ॐ **अत्रायमाशयः**—यस्य सम्बन्धः स सम्बन्धस्य प्रतियोगी । यस्मिन्सम्बन्ध स सम्बन्धस्य अनुयोगी । **अनेन** नियमेन समवायः क्वचित्प्रतियोगितासम्बन्धेन वर्त्तते, क्वचिच्चानुयोगितासम्बन्धेन । समवाये यदि समवायत्वं जातिः स्यात्, तस्या अपि समवाये समवायसम्बन्धेनैव वृत्तिता भवेत् । तथासति—समवायत्वसमवाय उक्तान्यतरसम्बन्धेन कल्प्यमानः स्यात्, सच नार्हत्येव भवितुमिति

तदपेक्षया चेति—सत्तापेक्षया चेत्यर्थः । द्रव्यं सत्, गुणः सन्, कर्म सत् इत्यनुगतप्रतीतिरेव सत्तायाः साधिकेति भावः । तथाच—पारमर्षं सूत्रम्—"सदिति यतो द्रव्यगुणकर्मसु सा सत्ता" (वै० १।२।७) । इतिकारेण प्रत्यय-व्यवहारयोः प्रकारमुपदिशति । तथाच—"द्रव्यादिषु त्रिषु सत्सदितिप्रकारको यतः प्रत्ययः, सदिदं सदिदमित्याकारकः शब्दप्रयोगो वा यदधीनः सा सत्ता" इति तद् व्याख्यातारः । भाष्यमपि—"परं सत्ता महाविषयत्वात् सा चानुवृत्तेरेव हेतुत्वात् सामान्यमेव" इति ॥८॥

(का०) परभिन्ना च या जातिः सैवाऽपरतयोच्यते ।
द्रव्यत्वादिकजातिस्तु परापरतयोच्यते ॥९॥

(प्रभा०) "परभिन्ना" इति । सत्ताभिन्ना सर्वापि जातिः । "परापरतया" इति । परतया अपरतया चेत्यर्थः ।

(का०) व्यापकत्वात्परापि स्याद्व्याप्यत्वादपरापि च ।

(मुक्ता०) पृथिवीत्वाद्यपेक्षया व्यापकत्वादधिकदेशवृत्तित्वात् द्रव्य-त्वादेः परत्वम्, सत्तापेक्षया व्याप्यत्वाद् अल्पदेशवृत्तित्वाच्च द्रव्यत्वस्या-परत्वम् । तथा च—धर्मद्वयसमावेशादुभयमविरुद्धम् ।

(प्रभा०) ननु—विरुद्धयोः परत्वापरत्वयोः कथमेकत्र स्थितिस्तत्राह—"व्याप-कत्वात्" इति । "पृथिवीत्वाद्यपेक्षया" इति । द्रव्यत्वादेः पृथिवीत्वाद्यपेक्षया इत्यन्वयः । "धर्मद्वय" इति । * आपेक्षिकधर्मद्वयस्यैकत्र समावेशान्नोभयोः परत्वा-परत्वयोर्विरोध इति भावः ।

"द्रव्यत्वं गुणत्वं कर्मत्वं सामान्यानि विशेषाश्च" (वै० १।२।५) इत्यार्षसूत्रमूलकमेवेदं परापरविभागकरणम् ।

(का०) अन्त्यो नित्यद्रव्यवृत्तिर्विशेषः परिकीर्तितः ।

(मुक्ता०) अन्ते अवसाने वर्त्तत इत्यन्त्यः, यदपेक्षया विशेषो नास्तीत्यर्थः । घटादीनां द्व्यणुकपर्यन्तानां तत्तदवयवभेदात्परस्परं भेदः परमाणूनां † परस्परभेदको विशेष एव । स तु स्वत एव व्यावृत्तः तेन तत्र विशेषान्तरापेक्षा नास्तीति भावः ॥९—१०॥

---

प्रतियोगितानुयोगितान्यतरसम्बन्धेन समवायाभाव एवासम्बन्धः, तेन समवायत्वमभावत्वञ्च न जातिः अपितूपाधिरेवेति ज्ञेयः ।

* यथा—एकस्यामेव पद्मावत्यां परिणेतृपुरुषापेक्षया कान्तात्वम्, स्वपुत्रापेक्षया मातृत्वम्, स्वपित्रपेक्षया पुत्रीत्वञ्चेत्येवमापेक्षिकधर्माणामविरोधः, एवं प्रकृतेऽपि विज्ञेयम् ।

† इदमुपलक्षणम्—आकाशादिनित्यपदार्थानामपीति ज्ञेयम् । अत एव—"तथाऽसे-

(प्रभा०) "अन्त्य" इति । * अन्ते अवसाने अर्थात् कल्पनायाः वर्त्तत इति अन्त्यः । "दिगादिभ्यो यत्" ( ४ । ३ । ५४ ) इति भवार्थे यत् प्रत्ययः । अर्थात् यः पदार्थश्चरमव्यावर्त्तकरूपेण स्वीकृतोऽथ च परमाण्वाकाशादिषु नित्यद्रव्येषु वृत्तिर्वर्त्तनं स्थितिर्यस्य स विशेषः=विशेषनामकः परिकीर्त्तित उक्तः कणादमुनिनेति शेषः । तथाच सूत्रम्—"अन्यत्रान्त्येभ्यो विशेषेभ्यः" (वै० १।२।६) इति । "नित्यद्रव्यवृत्तयोऽन्त्या विशेषाः ते खल्वत्यन्तव्यावृत्तिहेतुत्वाद्विशेषा एवे"ति प्रशस्तोक्तञ्च । अयमभिसन्धिः—सावयवपदार्थानामवयवभेदाद्भेदः कल्पयितुं शक्यते, परमाण्वादिनिरवयवानान्तु को भेदकः स्यात् ? यदि विशेषो न स्याद्, अतस्तेषु यो व्यावृत्तबुद्धिजननहेतुः स एव विशेषः । सतु स्वतोव्यावृत्तो न तत्र विशेषान्तरापेक्षा वर्त्तत इति । विशेषे भेदानुमिति-प्रकारश्चायम्—"पृथिवीपरमाणुगतो विशेषः जलादिपरमाणुगताद्विशेषात् भिद्यते विशेषात्" इति । अत्र—यथा "घटः पटाद्भिन्नो घटत्वाद्" इति घटाद्भिन्नो घटत्वधर्मः पटप्रतियोगिकभेदसाधको न तथा विशेषेऽन्यो धर्मो भेदसाधक इत्येव तस्य स्वतोव्यावृत्तत्वम् । अत्र नित्यद्रव्यवृत्तित्वमिति स्वरूपकथनं नतु लक्षणं समवायस्यापि नित्यद्रव्यवृत्तित्वात् । "परमाणुभेदः किञ्चिल्लिङ्गज्ञाप्यो भेदत्वात् कपालभेदवत्" इति विशेषसाधकमनुमानान्तरमपि बोध्यम् । यदपेक्षयेति—विशेषापेक्षयेत्यर्थः । विशेषनिष्ठविशेषान्तरप्रतियोगिकभेदाऽनुमापकविशेषातिरिक्तधर्मो नास्तीत्यर्थः ॥९, १०॥

(का०) घटादीनां कपालादौ द्रव्येषु गुणकर्मणोः ।
तेषु जातेश्च सम्बन्धः समवायः प्रकीर्तितः ॥११॥

(प्रभा०) समवायं दर्शयति—"घटादीनाम्" इति । यस्य सम्बन्धः स तस्य=सम्बन्धस्य प्रतियोगी । यस्मिन्सम्बन्धः स तस्यानुयोगीति नियमात् घटादीनामित्यत्र षष्ठ्याः प्रतियोगित्वमर्थः । कपालादाविति सप्तम्या अनुयोगित्वमर्थः । घटपदमवयविनं कपालपदञ्चावयवमुपलक्षयति । तथाच—कारिकायाः अयमर्थः सम्पद्यते—अवयवयिप्रतियोगिकोऽवयवयानुयोगिकः, गुणकर्मप्रतियोगिको द्रव्यानुयोगिकः, जातिप्रतियोगिको द्रव्यगुणकर्मानुयोगिकः, चकाराद्विशेषप्रतियोगिको नित्यद्रव्यानुयोगिकश्च यः सम्बन्धः स समवायः इत्यर्थं हृदि कृत्वैवाह मुक्तावलीकारः—अवयवावयविनोरित्यादि—

द्विशिष्टानां योगिनां तुल्याकृतिगुणक्रियेषु तुल्याकृतिषु, तुल्यगुणेषु, तुल्यक्रियेषु परमाणुषु मुक्तात्ममनःसु च अन्यनिमित्ताऽसम्भवात् येभ्यो निमित्तेभ्यः प्रत्याधारम्—अयमस्माद्विलक्षणः—इति प्रत्ययव्यावृत्तिर्भवति तेऽन्त्या विशेषाः" इति कन्दलीग्रन्थोऽपि सङ्गत एव मन्तव्यः ।

* "उत्पादविनाशयोरन्तेऽवस्थितत्वात् अन्तशब्दवाच्यानि नित्यद्रव्याणि तेषु भवाः स्थिता इत्यर्थः" इति कन्दलीकारोक्तं साधुराभाति । "अ[illegible] विशेष इति कथ्यते' इति तार्किकरक्षा ।

(मुक्ता०) अवयवावयविनोर्जातिव्यक्त्योर्गुणगुणिनोः क्रियाक्रियावतोर्नित्यद्रव्यविशेषयोश्च यः सम्बन्धः स समवायः । समवायत्वं नित्यसम्बन्धत्वम् ।

(प्रभा०) समवायस्य लक्षणमाह—"नित्यसम्बन्धत्वम्" इति । सम्बन्धिभिन्नत्वे सति सम्बद्धप्रतीतिनियामकत्वं सम्बन्धसामान्यलक्षणम् । तथाच—अयुतसिद्धानां समवाय इति फलितं भवति । उक्तञ्च भाष्ये—"अयुतसिद्धानामाधार्याधारभूतानां यः सम्बन्ध इह प्रत्ययहेतुः स समवाय" इति । अयुतसिद्धत्वञ्च पृथगसिद्धत्वम् । युतं पृथग्भूतं सत् सिद्धं न भवति यत् तदयुतसिद्धमित्यर्थः ।

अयम्भावः—पृथग्भूतत्वे सति ययोरुत्पत्तिरुपलब्धिर्वा न भवति, तयोर्यः सम्बन्धः स समवायः । यथा—मूल एव निर्दिष्टमवयवावयविनोरित्यादिना । नह्यवयवं विनाऽवयविनः स्थितिरुपलब्धिर्वा भवितुमर्हति, नापि गुणिनं विना गुणानामित्यादि बोध्यम् ।

(मुक्ता०) तत्र प्रमाणन्तु—गुणक्रियादिविशिष्टबुद्धिर्विशेषणविशेष्यसम्बन्धविषया विशिष्टबुद्धित्वात् "दण्डी पुरुष" इति विशिष्टबुद्धिवत् इत्यनुमानम् । एतेन संयोगादिबाधात्समवायसिद्धिः । नच स्वरूपसम्बन्धेन सिद्धसाधनम्, अर्थान्तरं वा, अनन्तस्वरूपाणां सम्बन्धत्वकल्पने गौरवाल्लाघवादेकसमवायसिद्धिः । नच समवायस्यैकत्वे वायौ रूपवत्ताबुद्धिप्रसङ्गः, तत्र रूपसमवायसत्त्वेऽपि रूपाभावात् ।

(प्रभा०) समवायस्य सम्बन्धरूपतायामनुमानं प्रमाणमाह—"तत्र" इति । "गुणक्रियादिविशिष्टबुद्धिः" इति । "नीलो घटः पीतो घटः" इत्यादि गुणविशिष्टबुद्धिः । तत्र नीलं विशेषणं घटो विशेष्यः । "गतिमान्देवदत्तः" इति क्रियाविशिष्टबुद्धिः । "घटत्ववान्" इति जातिविशिष्टबुद्धिरित्यादि स्वयमूह्यम् । "गुणक्रियादिविशिष्टबुद्धि"रिति पक्षः । "विशेषणविशेष्यसम्बन्धविषया" इति साध्यम् । "विशिष्टबुद्धित्वात्" इति हेतुः । "दण्डी पुरुषः" इति दृष्टान्तः । "या या विशिष्टबुद्धिः सा सा विशेषणविशेष्यसम्बन्धविषयिका" इतिव्याप्तेराकारः । "संयोगादिबाधात्" इति । "द्रव्ययोरेव संयोग" इतिनियमसत्त्वात् गुणगुण्यादीनां समवाय एव सम्बन्धो विशिष्टप्रत्ययहेतुरिति भावः ।

सम्प्रति अयुतसिद्धपदार्थानां स्वरूपसम्बन्ध इति वदतां मीमांसकानां शङ्कामुत्थाप्य निरस्यति—"नच" इत्यादिना । सिद्धस्यैव साधनमिति सिद्धसाधनम् । गुणक्रियादिविशिष्टबुद्धिरित्यनुमानेन समवायसम्बन्धसाधने प्रवृत्तो नैयायिकः अस्मन्मतं (मीमांसकमतं) स्वरूपसम्बन्धमेव साधयति न किञ्चिन्नवीनं करोतीति पिष्टपिष्टिरेवेत्याशयः ।

अर्थान्तरं वेति —* "प्रकृतादर्थादप्रतिसम्बद्धार्थमर्थान्तरम्" ( न्याय० ५। २। ७ ) † इत्यर्थान्तराख्यं निग्रहस्थानम्। समवायसाधनाय प्रवृत्तानां नैयायिकानां प्रकृतमुपेक्ष्य स्वरूपसम्बन्धसिद्ध्या उक्तं निग्रहस्थानमेव भवतीति पूर्वपक्षयितुर्मीमांसकस्याऽभिप्रायः। तदेतत्खण्डयति नैयायिकः—"अनन्तस्वरूपाणाम्" इत्यादिना। प्रत्येकं गुणादीनां द्रव्यादिभिः सहैकेनैव समवायाख्येन सम्बन्धेन निर्वाहे सति स्वरूपसम्बन्धकल्पने गौरवमेव मीमांसकस्येत्यर्थः। तथा च—यथा पृथिव्यादिजनकतया लाघवादेक एवेश्वरः कर्त्ता सिद्ध्यति तथा समवायोऽपीति सिद्धान्तिनोऽभिप्रायः।

इदन्तु बोध्यम्—यद्यपि लाघवादेकसमवायवादिनः प्राचीनस्य मते नैव दोषः तथापि "पृथिव्यां गन्धस्य समवायो न जले" इत्यादिप्रतीतेर्नानासमवायवादिनो नव्यस्य मते नोक्तानुमानेन समवायसिद्धिः। किन्तु नानासमवायकल्पनापेक्षया उपस्थितानां नानास्वरूपाणामेव स्वीकारो वरः उपस्थितम्परित्यज्यानुपस्थितकल्पनायां मानाभावात्।

अत्रोत्तरम्—नव्यनयेऽपि समवायेन कार्यम्प्रति तादात्म्येन हेतुता। यथा—"समवायेन पटाख्यं कार्यम्प्रति तादात्म्यसम्बन्धेन तन्तूनां कारणता" इति। इत्थञ्च—पटनिष्ठकार्यताया अवच्छेदकः सम्बन्धः समवायः, तत्कथं स्वरूपं सम्बन्धः स्यात्। नच पटनिष्ठकार्यताया अवच्छेदकः सम्बन्धोऽपि स्वरूपसम्बन्ध एव भविष्यतीति मुधा समवायकल्पनेति वाच्यम्, यतस्तथा कल्पनायां यत्समवेतं कार्यमुत्पद्यते तत्समवायिकारणमिति समवायिकारणलक्षणव्यवस्था अनास्थां भजिष्यते।

यदि तु यत्सम्बद्धं कार्यमुत्पद्यते तत्समवायिकारणमिति लक्षणं करिष्याम इत्युच्येत ? तथा कपालसम्बद्धो यो घटध्वंसः तम्प्रत्यपि कपालस्य समवायिकारणतापत्तिः स्यात्, इष्टापत्तौ च ध्वंसस्यापि घटकार्यवद् भावकार्यतापत्तिः। तस्माद्भावकार्यवृत्तिर्यः कार्यताधर्मः तस्यावच्छेदकसम्बन्धविधयाऽपि नव्यमते समवायसिद्धौ न किमपि दोषं पश्याम इति शम्।

समवायस्यैकत्वे वायौ रूपप्रतीतिमाशङ्क्य खण्डयितुमाह—"नच" इति। "रूपवत्ताबुद्धेः" इति। रूपवत्ताप्रतीतेः प्रमात्वप्रसङ्ग इत्यर्थः। स्पर्शसमवायो योऽस्ति वायौ, यश्च रूपसमवायोऽस्ति पृथिव्यादिषु, सचैक एव यत इत्याक्षेप्तुराकूतकम्। तत्र=वायौ। "रूपाभावात्" इति। प्रतियोगिकत्वसम्बन्धेन रूपाभावादित्यर्थः। नहि समवायसत्तामात्रेण रूपवत्ताप्रतीतिः। किन्तु रूपप्रतियोगिकसमवाय एव

---

* प्रकृतात्=प्रस्तुतात्, अत्र ल्यब्लोपे पञ्चमी। प्रकृतोपयुक्तमर्थमुपेक्ष्य असम्बद्धार्थाभिधानमर्थान्तरं नाम निग्रहस्थानमिति सूत्रार्थः।

† एतन्मूलक एवायं न्यायः—"विनायकं प्रकुर्वाणो रचयामास वानरम्" इति।

रूपवत्ताप्रतीतिहेतुः, वायौ च रूपात्यन्ताभावान्न रूपप्रतियोगिकः समवाय इति समाधातुराकूतकम्।

(मुक्ता०) न चैवमभावस्य वैशिष्ट्यं सम्बन्धान्तरं सिध्येदिति वाच्यम्, तस्य नित्यत्वे भूतले घटानयनानन्तरमपि घटाभाववुद्धिप्रसङ्गात्। घटाभावस्य तत्र सत्त्वात्। तस्य नित्यत्वात्, अन्यथा देशान्तरेऽपि तत् प्रतीतिर्न स्यात्। वैशिष्ट्यस्य च तत्र सत्त्वात्। मम तु घटे पाकरक्तता-दशायां श्यामरूपस्य नष्टत्वान्न तद्वत्ताबुद्धिः। वैशिष्ट्यस्याऽनित्यत्वे त्वनन्तवैशिष्ट्यकल्पने तवैव गौरवम्। इत्थञ्च—तत्तत्कालीनतत्तद्-भूतलादिकं तत्तदभावानां सम्बन्धः ॥१२॥

(प्रभा०) एवमतिरिक्तसमवायसिद्धौ तद्वत् भूतलादिषु वैशिष्ट्याख्यसम्बन्धान्तरसिद्धिप्रसङ्गमाशङ्क्य विकल्पद्वयं कृत्वा परिहरति—"नच" इत्यादिग्रन्थेन। "अभावस्य वैशिष्ट्यं सम्बन्धान्तरं सिद्धयेद्" इति पूर्वपक्षिणो ग्रन्थः। "घटाऽभाववद्-भूतलम्" इत्याकारिकाबुद्धिः संसर्गतानिरूपिका विशिष्टबुद्धित्वात् दण्डी पुरुष इति-बुद्धिवत्" इत्यनुमानात् वैशिष्ट्यसिद्धिरित्याशयः।

सिद्धान्ती आह—"घटाभाववद्भूतलम्" इत्यत्र * वैशिष्ट्यं यदि सम्बन्धान्तरं तत् किं नित्यमनित्यं वा?। नाद्यः। तस्य वैशिष्ट्यस्य नित्यत्वे घटानयनान्तरमपि=घटानयनदशायामपि घटसत्त्वदशायामपीत्यर्थः। घटाभावबुद्धिप्रसङ्गात्=घटाभाव-वद्भूतलम् इत्याकारकप्रतीतिप्रसङ्गात्।

नच—वैशिष्ट्यस्य सत्त्वेऽपि घटानयनकाले भूतले घटाभावाभावादेव न घटा-भावविषयिणी बुद्धिरिति वाच्यम्, तस्य घटाभावस्य नित्यत्वात्। अत एव तत्र= भूतले। घटाभावस्य=घटप्रतियोगिकाभावस्य सत्त्वात्। विपक्षे दण्डमाह— "अन्यथा" इति। यदि घटाभावो नित्यो न स्यात् तदा देशान्तरेऽपि=घटशून्य-देशेऽपि। तत्प्रतीतिः=घटाभावबुद्धिः न स्यात्। घटत्वावच्छिन्नाभावस्यैकत्वादेव अनित्यघटाभावपक्षे घटशून्यदेशेऽपि नैव घटाभावप्रतीतिः स्यादिति भावः। एवञ्च— वैशिष्ट्यस्य=घटाभावभूतलयोरतिरिक्तस्य वैशिष्ट्याख्यस्य सम्बन्धस्य, नित्यतया घटानयनदशायामपि सत्त्वात्=विद्यमानत्वात् स्यादेव घटाभावबुद्धिरिति शेषः।

ननु—तवापि सिद्धान्तिनो मते यत्र पाकेन=विलक्षणतेजःसंयोगेन घटो रक्तो जातः तत्र श्यामरूपस्यापि समवायः=नित्यसम्बन्धो वर्त्तते, परं श्यामरूपवत्ताबुद्धिर्न जायते यथा, तथा ममापि वैशिष्ट्यस्य नित्यत्वे घटसत्तादशायां न घटाभावबुद्धि-र्भवतीति समानौ चोद्यपरिहारौ किमित्यहमेवोपालभ्य इत्यत आह—ममत्विति।

---

* यस्य यत्र यः सम्बन्धः स एव तत्र तस्य वैशिष्ट्यम्। यथा—"दण्डी पुरुषः" इति ज्ञाने दण्डसम्बन्धः पुरुषे अवगम्यते। (न्या० को०)

अयमाशयः—नहि रक्तरूपोत्पत्तिकाले श्यामरूपं विद्यते, येन श्यामरूपवत्ताप्रतीतिः स्यात्, समवायस्यैक्येऽपि तत्तद्रूपनिरूपितस्यैव तस्य तथाविधधीजनकत्वादिति समाधानमवोचामैव । तव तु अभावस्य वैशिष्ट्यं नित्यं तेन स्यादेव घटवत्ताकालेऽपि घटाभावप्रतीतिरिति महद्वैषम्यम् ।

द्वितीयकल्पे दोषमाह—"वैशिष्ट्यस्यानित्यत्वे" इति । तथा चोत्पत्तिविनाशकल्पनया अनन्तवैशिष्ट्यकल्पने तवैव गौरवमिति भावः * ।

ननु—यदि घटाभावभूतलयोर्न वैशिष्ट्यं सम्बन्धस्तर्हि कथं "घटाभाववद्भूतलम्" इति भूतले घटाभाववत्ताप्रत्ययः ? । स्वरूपसम्बन्धस्वीकारे तु घटाभावकाल इव घटवत्ताकालेऽपि भूतले घटाभावप्रतीतिस्तवापि मते प्रसज्येत द्वयोः स्वरूपसम्बन्धस्य सत्त्वादित्याशङ्कायां सम्भाव्यमानायां समाधानमाह—"एवञ्च" इति । अयमत्र सिद्धान्तिग्रन्थस्याऽभिप्रायः—

यत्र घटात्यन्ताभावबुद्धिर्जायते तत्र तत्क्षणविशिष्ट एवाभावो भासते नतु केवलः । अर्थात् अभावप्रत्ययकाले अभावप्रत्ययान्तःपाती तत्तत्क्षणात्मकः कालोऽप्यस्माकमभिमतः । यद्यपि घटात्यन्ताभावः स्वरूपेण भूतलादौ नित्यः तेन घटसत्ताकालेऽपि "घटाभाववद्भूतलम्" इत्याकारेण प्रत्ययेन भाव्यम्, तथापि प्रदर्शितज्ञानकालिकक्षणात्मकविशेषणाभावान्न घटसत्ताकाले घटाभावधीः समुन्मिषति । तादृशक्षणात्मकविशेषणाभावादेव विशेषणाभावप्रयुक्तविशिष्टाभावः=घटात्यन्ताभावो नापन्होतुं शक्यते, तेन तस्य नित्यत्वेऽपि न घटकाले घटाभावधीरिति नैव मम मते दोषलेशोऽपि । एवञ्च—दर्शितयुक्त्या घटाभावभूतलयोर्न स्वरूपमात्रं सम्बन्धः नापि वैशिष्ट्यं, किन्तु "क्षणात्मकविशेषणविशिष्टस्वरूपविशेष एव" इति भावः ।

इत्थञ्चेत्यादिफक्किकोत्तरार्थस्तु—तत्तत्कालीनतत्तद्भूतलादिकम्=घटाभाववद्भूतलमिति ज्ञानकालीनभूतलादिकम् । तत्तदभावानाम्=यस्य यस्याभावस्य बुद्धिः तस्य तस्याभावस्य सम्बन्धः । अर्थात् भूतलेन सहाभावीयविशेषणताख्यः सम्बन्धः ज्ञेय इति शेषः ।

केचित्तु—भूतलं घटविशिष्टं, घटाभावविशिष्टं वेति प्रत्ययबलाद् यत्र यस्य यः सम्बन्धः स एव तत्र तस्य वैशिष्ट्यम् । यथाचोक्तज्ञाने घटसम्बन्धः घटाभावसम्बन्धो वा भूतलेऽवगम्यते, स एव तयोर्वैशिष्ट्यम् । यथा वा "दण्डी पुरुष" इति ज्ञाने "दण्डसम्बन्धः पुरुष" इत्याहुः । अधिकं रामरुद्रादिषु द्रष्टव्यम् ॥११॥

---

* अर्थात् वैशिष्ट्यस्यानित्यत्वपक्षे क्लृप्तस्वरूपसम्बन्धं परित्यज्य अनन्तसम्बन्धान्तरकल्पने महद् गौरवम्, स्वरूपविशेषसम्बन्धाङ्गीकारे तु घटानयनदशायां तस्याभावान्न घटकाले घटाभाववत्ताप्रत्ययप्रसङ्गः ।

(का०) अभावस्तु द्विधा संसर्गान्योन्याभावभेदतः।
प्रागभावस्तथा ध्वंसोऽप्यत्यन्ताभाव एव च ॥१२॥
एवं त्रैविध्यमापन्नः संसर्गाभाव इष्यते।

(मुक्ता०) अभावं विभजते—अभावत्वं द्रव्यादिषट्कान्योऽन्याभाववत्त्वम्। संसर्गाभावान्योन्याभावभेदादित्यर्थः। अन्योन्याभावस्यैकविधत्वात्तद्विभागाभावात्संसर्गाभावं विभजते—प्रागभाव इति। संसर्गाभावत्वम्=अन्योन्याभावभिन्नाभावत्वम्। अन्योन्याभावत्वं तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वम्। विनाश्यभावत्वं प्रागभावत्वम्। जन्याभावत्वं ध्वंसत्वम्। नित्यसंसर्गाभावत्वमत्यन्ताभावत्वम्।

(प्रभा०) "अभावस्तु" इति। अभावं लक्षयति—"अभावत्वम्" इति। द्रव्यादिषड्भावपदार्थप्रतियोगिकभेदवत्त्वमित्यर्थः। नञानुल्लिखितधीविषयको भावः तद्भिन्नोऽभावः नञुल्लिखितप्रतीतिविषयक इत्यर्थः। किं वा * प्रतियोगिज्ञानाधीनज्ञानविषयत्वमभावत्वम्. तद्भिन्नं भावत्वम्। अभावो द्विधा। द्विप्रकारमभिनीय दर्शयति—"संसर्ग-"इत्यादिना। कारिकायां "संसर्ग-"इति—संसर्गश्च अन्योन्यश्च † तयोरभावः स चासौ भेदः, तस्मात् संसर्गान्योन्याभावभेदतः पञ्चम्यास्तसिल्। एतदभिप्रायेण मुक्तावल्यां व्याख्यातं "संसर्गाभावान्योन्याभावभेदादित्यर्थः" इति। क्रमेण द्वयोरभावयोर्मध्ये प्रथमं संसर्गाभावं लक्षयति—"संसर्गाभावत्वम्" इति। अन्योन्याभावेतिव्याप्तिवारणाय अन्योन्याभावभिन्नेति। घटपटादिभावपदार्थेष्वतिव्याप्तिवारणाय अभावपदमुपात्तम्।

---

* "इह कपाले घटो भविष्यति, इह तन्तुषु पटो भविष्यति" इति प्रत्ययगोचरः प्रागभावः। "घटो ध्वस्तः पटो ध्वस्तः" इत्याकारकप्रतीतिविषयो ध्वंसाभावः। एतौ च नैव नञुल्लिखितप्रतीतिगोचरौ इत्यतः सिद्धान्तलक्षणमाह—प्रतियोगिज्ञानेति।

अयमाशयः—"कपाले घटो नास्ति" इत्याकारकप्रतीतिविषयः घटप्रागभावः। नहि प्रतियोग्युपादानकारणे सामयिकाभावात्यन्ताभावौ कदापि भवतः तस्माद् घटोत्पत्तेः प्राग् उक्ताकारा प्रतीतिः घटप्रागभावं विषयीकरोति। मुद्गरपातोत्तरं सैव प्रतीतिश्च घटध्वंसं विषयीकरोति, एवं प्रतियोग्युपादानकारणं विहायान्यत्र स्थले यथासम्भवं "घटो नास्ति" इत्याकारा प्रतीतिरत्यन्ताभावं सामयिकाभावञ्चावगाहत इति प्राचां मते सर्वेऽभावाः नञुल्लिखितप्रतीतिगोचराः।

† "द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते" इति नियमाद् अभावपदस्योभयत्राऽन्वयार्थं द्वन्द्वं विगृह्य दर्शयति—"संसर्गश्च अन्योन्यश्चे"ति। प्राचीनप्रभामञ्जूषादिषु बहूपयुक्तोऽपि कृतो विचारोऽस्माभिर्बालानुपयोगीति मत्वा न सारल्यकटाक्षतां नीत इति सन्तोऽवधारयन्तु।

अयम्भावः—यद्यपि संसर्गो नाम सम्बन्धमात्रम्, तथापि प्रकृते वृत्तिनियामकसम्बन्ध एव संसर्गपदेन गृह्यते । वृत्तिश्चाधेयता । येन सम्बन्धेन आधेयपदार्थः स्वाधारे वर्त्तते सः सम्बन्धो वृत्तिनियामक इत्युच्यते । सच संयोग–समवाय–स्वरूप–कालिक–दैशिकविशेषणतादिरूपोऽनेकविधः । एतद्भिन्ना वृत्त्यनियामकाः । ते च गगनादिसंयोगाङ्गुलिद्वयसंयोगविषयत्व––विषयित्वा –नुयोगित्व––प्रतियोगित्व––निरूपकत्व–निरूप्यत्व–तादा*त्म्यादयोऽनन्ता एव ।

एवञ्च—संसर्गावच्छिन्न–(वृत्तिनियामकसम्बन्धावच्छिन्न)–प्रतियोगिकोऽभावः संसर्गाभावः । यस्याभावः स तस्य प्रतियोगी, प्रतियोगिनो भावः † प्रतियोगिता । प्रतियोगितायाश्चावच्छेदको धर्मः सम्बन्धश्चैतद्द्वयं भवति । धर्मसम्बन्धाभ्यां हि प्रतियोगिताऽवच्छिद्यते अर्थात् विशिष्यते, अत एव सा तदवच्छिन्नेत्यभिधीयते । तत्र यः प्रतियोगितायाः समनियतो धर्मः स प्रतियोगितावच्छेदकः । प्रतियोगी स्वाधिकरणे येन सम्बन्धेन वर्त्तते स सम्बन्धः प्रतियोगितावच्छेदकसम्बन्धः । प्रतियोगी येन धर्मेण अवच्छिद्यते विशिष्यते ( इतरेभ्यो व्यावर्त्त्यते ) स धर्मः प्रतियोगितावच्छेदकधर्मः । घटभूतलयोर्यः संयोगसम्बन्धः स प्रतियोगितावच्छेदकसम्बन्धः । एवञ्चैतद्द्वयमेव घटनिष्ठप्रतियोगितावच्छेदकमिति सरलमार्गः ।

इदञ्च––"नास्ति घटो गेह इति सतो घटस्य गेहसंसर्गप्रतिषेधः" ( वै० ६ । १ । १० ) इति कणादसूत्रमूलकमेव । सूत्राशयस्तु––गेहे=गृहे घटस्य यः संसर्गः संयोगस्तस्य प्रतिषेधोऽभावः, स च यदि कदाचिदपि गेहे घटो न स्यात् तदा तदत्यन्ताभाव एव । भविष्यतो घटस्य स्वाधिकरणे कपालादौ योऽभावः स प्रागभावः । भूतस्य तस्यैव तत्र योऽभावः स प्रध्वंसाभावः इति । इत्थञ्च—"तादात्म्यातिरिक्तसम्बन्धावच्छिन्नप्रतियोगिताकाभावः ‡ संसर्गाभावः" इति लक्षणं फलति ।

---

* कार्यकारणयोस्तादात्म्यवादिनो मते तादात्म्यं वृत्तिनियामकमेव ।

† "तस्य भावस्त्वतलौ" ( ५ । १ । ११९ ) इति सूत्रेण प्रतियोगिशब्दात् भावे तल् । तलन्तं स्त्रियाम् ।

‡ संसर्गेण=सम्बन्धेन (तादात्म्यातिरिक्तेन) अवच्छिन्नप्रतियोगिताकोऽभावः संसर्गाभाव इति मध्यमपदलोपी समासः शाकपार्थिवादिवत् ज्ञातव्य इति न्यायकोषः ।

इदमपरमावश्यकम्बोध्यम्—संसर्गाभावो नञादिनिपातेन धातुना च बोध्यते । तत्र निपातेन प्रातिपदिकार्थाभावस्य बोधने अनुयोगिनि=अनुयोगिवाचकपदे सप्तम्यपेक्षा । यथा—"गेहे घटो नास्ति" इत्यादौ । अत्र घटाभावस्य अनुयोगि गेहम्, तद्वाचकपदं गेहपदम्, तच्च सप्तम्यन्तम् । विभक्त्यर्थसंसर्गाभावस्य धात्वर्थादौ बोधने तु नायं नियमः । यथा—"गगनं न पश्यति, न कलञ्जं भक्षयेत्' इत्यादौ दर्शने गगनकर्मत्वस्य, कलञ्जभक्षणे च बलवदनिष्टसाधनत्वस्य नञा संसर्गाभावबोधनात् न तत्र सप्तम्यपेक्षा ।

अन्योन्याभावं लक्षयति--"अन्योन्याभावत्वम्" इति। अन्योन्यस्मिन् तादात्म्येनाऽभवनमित्यन्योन्याभाव इत्यर्थः। "तादात्म्यम्" इति—तस्यात्मा स्वरूपं तदात्मा तदात्मनो भावः तादात्म्यम्=अभेद इत्यर्थः। तादात्म्यञ्च प्रतियोगिताया अवच्छेदको धर्मः। स च "घटो न पटः" इत्यादौ पटत्वादिरेव। "घटः पटो न भवति" इत्यादौ "घटः पटात्मा न भवति" इत्यर्थो लभ्यते। एवञ्च—पटतादात्म्यस्याभावः अर्थात् पटतादात्म्येनावच्छिन्ना या पटनिष्ठा प्रतियोगिता तन्निरूपको भेदः घटे वर्त्तत इति * सिद्धं भवति।

इदन्तु बोध्यम्—नञ्शब्देन विना यत्र यस्य प्रतीतिः, तत्रैव नञ्शब्दसमभिव्याहारे तस्य निषेधप्रतीतिर्भवतीति नियमः। यथा—"घटः पटः" इत्यत्र "नीलो घट" इतिवत् समानविभक्तित्वादभेदसंसर्गप्रतीतिः। तस्या एवोभयोः पदयोर्मध्ये "घटो न घटः" इति नञा निवेशेन निषेधः क्रियते, सोऽयमभेदसंसर्गनिषेधकोऽभावोऽन्योन्याभाव इत्यर्थो निर्गच्छति।

अत्रेदमाभाति--नहि यं कञ्चिदभावं प्रति येन केनापि सम्बन्धेन प्रतियोगिनो विरोधः, किन्तु प्रतियोगितावच्छेदकसम्बन्धेनैव प्रतियोगी अभावस्य विरोधी भवति। तथाच—अन्योन्याभावस्य प्रतियोगितावच्छेदकसम्बन्धः तादात्म्यमेव। अत एव—"तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकोऽभावोऽन्योन्याभाव" इति लक्षणं निष्कृष्यते--

यस्यायमर्थः--आत्मनः=स्वरूपस्य यः सम्बन्धः स तादात्म्यसम्बन्धः प्रतियोगिनो भावः प्रतियोगिता। तादात्म्यसम्बन्धेनावच्छिन्ना विशिष्टा इति तादात्म्यसम्बन्धावच्छिन्ना, तादृशी चासौ प्रतियोगिता यस्य स तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकः। तादात्म्यसम्बन्धेन च पटः स्वस्मिन्नेव वर्त्तते, घटादौ च न वर्त्तत इति तत्र=घटादौ पटान्योन्याभावो बोध्यः। तदा च "घटो न पट" इत्यभिलापप्रकारो भवति।

तादात्म्यत्वेन=तद्व्यक्तिताऽसाधारणधर्मेण तादात्म्यसम्बन्धो विवक्षणीयः। तेन संयोगावच्छिन्नप्रतियोगिताके संयोग्यत्यन्ताभावे नातिव्याप्तिः।

अयम्भावः—"मूले वृक्षे न कपिसंयोगः शाखायाम्" इत्याकारकप्रतीतौ संयोगी कपिः, तस्य मूलावच्छेदेन वृक्षे अत्यन्ताभावः, तदीया प्रतियोगिता कपिनिष्ठा, सा च संयोगसम्बन्धेन अवच्छिद्यते=विशिष्यते। एवञ्च—तादात्म्यसम्बन्धः प्रकृते संयोगसम्बन्धोऽपि तदवच्छिन्नप्रतियोगिताकाभावः संयोगिनः कपेरत्यन्ताभावोऽपि ग्रहीतुं शक्यते। तेनाऽन्योभावस्य लक्षणमत्यन्ताभावे=संयोग्यत्यन्ताभावे अतिप्रसक्तम्, तामप्रसक्तिं वारयितुम् अन्योन्याभावलक्षणान्तर्गतस्य "तादात्म्यसम्बन्धे"तिपदस्य

* अन्योन्याभावलक्षणं समन्वितं भवतीत्यर्थः।

"तादात्म्यत्वेन तादात्म्यसम्बन्धावच्छिन्न" इत्यर्थो ग्राह्यः । तादात्म्यत्वञ्च तद्वृत्तिरसाधारणो धर्मः । यथा—"घटवृत्तिरसाधारणो धर्मो घटत्वम्, पटवृत्तिरसाधारणो धर्मः पटत्वम्, कपिवृत्तिश्च कपित्वम्" इत्यादि । नहि मूलवृक्षवृत्तिः कपिसंयोगः कपेरसाधारणो धर्मः, किन्त्वासावागन्तुकः । तथाच--प्रदर्शितरीत्या विवक्षायां सत्यां नैव कपिसंयोग्यत्यन्ताभावेऽन्योन्याभावलक्षणस्यातिव्याप्तिः ।

* संसर्गाभावं विभजते—"प्रागभाव" इति । मुक्तावल्यां प्रागभावं लक्षयति—"विनाश्यभावत्वम्" इति । ध्वंसेऽतिव्याप्तिवारणाय विनाशीति । "इह कपाले घटो भविष्यति, इह तन्तुषु पटो भविष्यति" इति प्रत्ययसाक्षिकः उत्पत्तेः पूर्वं कार्यस्याभावो यः स प्रागभावः । कार्यस्योत्पत्तेः प्राक् स्वप्रतियोगिसमवायिकारणवृत्तिः, अनादिः सान्त इत्युच्यते ।

ध्वंसाभावं लक्षयति—"जन्याभावम्" इति । प्रागभावेऽतिव्याप्तिवारणाय जन्येति । स च "घटो ध्वस्तः, पटो ध्वस्तः" इति प्रत्ययविषयः कार्यस्योत्पत्त्यनन्तरं स्वप्रतियोगिसमवायिकारणे वर्त्तते । सोऽयं सादिरनन्तो भवति । यदि ध्वंसस्याप्यन्तः स्यात् तर्हि विनष्टस्य घटादेः पुनरप्युन्मज्जनं भवेत्, अतोऽनन्त एव सः ।

अत्यन्ताभावं लक्षयति--"नित्य" इति । ध्वंसादिवारणाय नित्यपदम् ।

अत्यन्तमभावः अर्थात् त्रैकालिको यो नित्योऽभावः । किमुक्तम् ? योऽभावः वस्तुसत्तायाः पूर्वमप्यासीत्, पश्चादपि भविष्यति, वस्तुसत्ताकालेऽपि वर्त्तते, परन्तु प्रत्यायकसम्बन्धाभावान्नास्तीव भाति, सोऽभावोऽत्यन्ताभावः । "त्रैकालिकत्वे सति संसर्गावच्छिन्नप्रतियोगिताक" इत्यर्थः । यथा—"भूतले घटो नास्ति" इति । एवं निकृष्टे लक्षणे ध्वंसप्रागभावयोरतिव्याप्तिवारणाय "त्रैकालिक" विशेषणनिवेशः । भेदे=अन्योन्याभावे अतिव्याप्तिवारणाय "संसर्गपदोपादानम्" इति बोध्यम् ।

**(मुक्ता०) यत्र तु भूतलादौ घटादिकमपसारितं पुनरानीतञ्च तत्र घटकालस्य सम्बन्धाघटकतया अत्यन्ताभावस्य नित्यत्वेऽपि घटकाले न घटात्यन्ताभावबुद्धिः । तत्र उत्पादविनाशशाली चतुर्थोऽयमभाव इति केचित् । अत्र ध्वंसप्रागभावयोरधिकरणे नात्यन्ताभाव इति प्राचीनमतम् । श्यामघटे रक्तो नास्ति, रक्तघटे श्यामो नास्तीति धीश्च प्रागभावं ध्वंसं चावगाहते नतु तदत्यन्ताभावम् । नव्यास्तु—तत्र विरोधे मानाभावात् ध्वंसादिकालावच्छेदेनाप्यत्यन्ताभावो वर्तत इति प्राहुः ।**

---

* इदमवश्यं ध्यातव्यं यद्—भिन्नविभक्त्यन्तपदघटितनञुल्लिखितवाक्यजन्यप्रतीतिः अत्यन्ताभावं विषयीकरोति । समानविभक्त्यन्तपदघटितनञुल्लिखितवाक्यजन्यप्रतीतिस्तु अन्योन्याभावविषयणीति । संसर्गाभावत्वञ्च—तादात्म्येतरसंसर्गावच्छिन्नप्रतियोगिताकाभावत्वमिति सम्प्रदायः । भेदेतराभावत्वमिति तु नव्याः । अधिकमग्रे वक्ष्यामः ।

(प्रभा०) यत्र कालत्रयेऽपि प्रतियोगी न स्यात् तत्रैव अत्यन्ताभावव्यवहारः, अतो नवीनमते घटवद्देशेऽत्यन्ताभावव्यवहारवैयर्थ्यं स्पष्टमेवेति शङ्कोद्धरणकामोऽत्यन्ताभावस्य केवलान्वयितां व्यवस्थापयन्नाह—"यत्र तु"—इति । तथाच—तद्भूतलविशिष्टघटकालसंयोग एव विद्यमानस्याप्यत्यन्ताभावस्य प्रतीतेः प्रतिबन्धकः । तेन घटानयनानन्तरं न घटात्यन्ताभावबुद्धिः, अर्थात् घटात्यन्ताभाववति देशे घटानयनानन्तरं घटकालो भूतलघटात्यन्ताभावयोः संसर्गप्रतीतिं विघटयति । अत एव "इह भूतले घटो नास्ति" इति प्रतीतिर्न जायते, नतु तत्र अत्यन्ताभाव एव नास्तीति मन्तव्यम् । तस्य नित्यत्वात् केवलान्वयित्वाच्चेति भावः । मतान्तरमाह—"तत्र" इति । चतुर्थोऽयमभाव इति=सामयिकाभाव इत्यर्थः । कालविशेषविशिष्टस्वरूपस्य संसर्गोपगमत्वात् घटवति "घटो नास्ति" इति प्रतीत्यभावोपपत्तौ चतुर्थसंसर्गाभावे=सामयिकाभावनामनि अभावे मानाभाव इत्यस्वरसः "केचित्" इत्यनेन सूचितः ।

ध्वंसप्रागभावयोरत्यन्ताभावस्य च भिन्नाधिकरणतेति प्राचां मतमाह—"अत्र" इति । "श्यामे घटे रक्तो नास्ति", "रक्ते घटे श्यामो नास्ति" इति प्रतीतिद्वयं नात्यन्ताभावं विषयीकरोतीत्याह—"श्यामघट" इति ।

अत्रायमाशयः—नहि "नास्ति" इत्याकारा प्रतीतिः अत्यन्ताभावमेव विषयीकरोतीति नियमः । किन्तु प्रागभावध्वंसाभावाधिकरणादन्यत्र उक्ताकारा प्रतीतिः अत्यन्ताभावविषयिणी, प्रागभावध्वंसाभावाधिकरणे तु सा प्रागभावं ध्वंसं वा यथायोगं विषयीकरोति नात्यन्ताभावम्, प्रागभावध्वंसाभावाभ्यां सहात्यन्ताभावस्य विरोधात् । अन्यथा वायौ रूपमिव प्रागभावध्वंसाभावाधिकरणे कालत्रयेऽपि प्रतियोगिप्रत्ययो न स्याद् इति प्राचां नैयायिकानां मतम् ।

एतद्विषये नव्यमतमाह—"नव्यास्तु" इति । अस्य—"आहु"रित्यनेनाग्रेऽभिसम्बन्धः । तत्र=ध्वंसप्रागभावयोः । अत्यन्ताभावेन सहेति शेषः । ध्वंसादिकालावच्छेदेन=ध्वंसादिसमानकालिकसम्बन्धेनापि । यस्मिन्काले ध्वंसः प्रागभावो वा तस्मिन् कालेऽपीत्यर्थः । तथाच—ध्वंसप्रागभावाभ्यां सह नात्यन्ताभावविरोध इति ※ नव्यमतसारः ।

(मुक्ता०) नन्वस्तु अभावानामधिकरणात्मकत्वं लाघवादिति चेन्न, अनन्ताधिकरणात्मकत्वकल्पनापेक्षयाऽतिरिक्तकल्पनाया एव लघीयस्त्वात् । एवञ्च—आधाराधेयभावोऽप्युपपद्यते । एवञ्च—तत्तच्छब्दगन्धरसाद्यभावानां प्रत्यक्षत्वमुपपद्यते । अन्यथा तत्तदधिकरणानां तत्तदिन्द्रियाणामग्राह्यत्वादप्रत्यक्षत्वं स्यात् । एतेन ज्ञानविशेषकालविशेषाद्यात्मकत्वमत्यन्ताभावस्येति प्रत्युक्तमप्रत्यक्षत्वापत्तेः ।

※ अयं विषयो विस्तरेण मत्प्रणीतायाम् "अभावदीपिकायां" द्रष्टव्यः ।

(प्रभा०) "अभावोऽधिकरणस्वरूप" इति मन्वानः प्राभाकरः शङ्कते—"ननु" इति। तथाच—कयाचिद्व्यपेक्षया भावस्वरूपात् नाभावः पृथक् पदार्थ इति मीमांसकाभिप्रायः। यदाहुः—"भावात्मकमभावो हि कयाचित्तु व्यपेक्षया" इति।

सिद्धान्ती निषेधयति—"इतिचेन्न" इति। अनन्तेति—अनन्तान्यधिकरणानि सन्ति, तथाचैकैकस्य रूपाद्यभावस्यानन्ततेति महद्गौरवं मीमांसकमते। "अधिकरणातिरिक्तस्वरूपोऽभाव" इतिकल्पनायान्तु लाघवमेव शरणम्। "अतिरिक्त"—इति। भावातिरिक्तेत्यर्थः। अधिकरणातिरिक्ताभावस्वरूपपक्षे दोषान्तराभावोऽपीत्याह—"एवञ्च" इति। अस्यायमर्थः—अधिकरणापेक्षयाऽभावस्य अतिरिक्तत्वे च आधाराधेयभावः अर्थात् भूतलमाधारः घटाभाव आधेयः, तौ चेत् स्वतन्त्रौ स्यातां तदैव तयोः उक्तः सम्बन्धोऽपि सम्पत्तुमर्हति। यदि भूतलमेव घटाभावस्वरूपं तर्हि कथमुक्तः सम्बन्धः स्यात्। नह्यभेदे आधाराधेयभावसम्बन्ध इति भावः। अत एवोक्तं न्यायमञ्जूषायाम्—"प्रायशो लोके भिन्नयोरेवाधाराधेयभावः प्रसिद्धः, न त्वभिन्नयोः। स चाऽस्माकं सूपपादः। भवतान्तु—"घटाभावे न घटः, घटभेदो न घटः" इत्यादिप्रतीतिसिद्धाधाराधेयभाववत् अत्रापि गौणतया कल्पने प्रयासगौरवमित्यर्थः ❀।

अधिकरणातिरिक्तस्वरूपपक्षे एवाभावस्य प्रत्यक्षं व्यवस्थापयन् मीमांसकमते तु तस्यासम्भवमेवेति सूचयन्नाह—"एवञ्च" इति।

तत्तच्छब्देति—तस्य तस्य शब्दस्य, गन्धस्य, रसादेश्च अभावानाम्। अर्थात्—शब्दगन्धरसादिप्रतियोगिकाभावानां प्रत्यक्षत्वमप्युपपद्यते। अन्यथा=अभावस्याधिकरणस्वरूपत्वे तत्तदधिकरणानाम्=शब्दगन्धाद्यधिकरणानाम्। तत्तदिन्द्रियाद्यग्राह्यत्वात्=श्रोत्रघ्राणादीन्द्रियागोचरत्वात् प्रत्यक्षत्वं न स्यादित्यर्थः।

अथवा यथा न्यायमते "घटाभावो गन्धाभाववान्" इतिप्रतीतौ घटाभावो गन्धाभावाधिकरणतया प्रत्यक्षं भासते, अर्थात् घटाभावस्वरूपमेव गन्धाभावः, अथच—तयोरस्त्याधाराधेयभावकल्पना तथाऽस्मन्मतेऽधिकरणस्वरूपस्याप्यभावस्य आधाराधेयभावे न बाधकं पश्याम इति मीमांसकेन स्वसिद्धान्ते स्थापिते दूषणान्तरमाह—"एवञ्च" इति। "येनेन्द्रियेण यद्=या व्यक्तिः गृह्यते तेनेन्द्रियेण तन्निष्ठा जातिः, तद्गुणः, तदभावश्च गृह्यत" इत्यस्ति नियमः। तेन श्रोत्रग्राह्यस्य शब्दस्य तदभावस्य च श्रोत्रेणैव ग्रहः। घ्राणग्राह्यस्य गन्धस्य तदभावस्य च घ्राणेन ग्रहः, रसनाग्राह्यस्य रसस्य तदभावस्य च रसनयैव ग्रह इत्यादि सर्वत्र बोध्यम्।

यदि त्वभावोऽधिकरणस्वरूप एव स्यात्तर्हि भूतलस्वरूपस्य शब्दाभावस्य श्रोत्रेन्द्रियेण प्रत्यक्षं स्यात्, नच तथा दृश्यते। सोऽयं दोषोऽधिकरणातिरिक्ताभाववादिनो

❀ एनमर्थं हृदि कृत्वैवाह—"उपपद्यत" इति भावः।

मम मते नास्ति, परं मीमांसकमत एव वज्रलेपायत इति नाऽधिकरणस्वरूपोऽभाव इति सर्वमभिप्रेत्य "तत्तच्छब्दे"त्यारभ्य "स्याद्" इत्यन्तो ग्रन्थो लिखितः * ।

केचित्तु—"ज्ञानविशेषस्वरूपोऽभावः, कालविशेषस्वरूपो वाऽभाव" इति मन्यन्ते, तन्मतं दूषयितुमाह—"एतेन" इति । वक्ष्यमाणदूषणेनेत्यर्थः । प्रत्युक्तम्=निरस्तम् । "अप्रत्यक्षत्वापत्तेः"--इति ।

अयमाशयः—ज्ञानं न बाह्येन्द्रियेण प्रत्यक्षं कर्तुं शक्यते यतस्तदात्मधर्मः इच्छादिवत्, इच्छाद्यात्मविशेषगुणानान्तु मनसा प्रत्यक्षं "सुखदुःखाद्युपलब्धिसाधनमिन्द्रियं मन" इति तल्लक्षणात् । यदि गन्धाभावो ज्ञानस्वरूपं तर्हि आत्मधर्मत्वात् मनसैव वेद्यः स्यात् । नचैवं दृश्यते, घ्राणग्राह्यस्य गन्धस्य योऽभावः तस्यापि घ्राणेनैव प्रत्यक्षनियमात् । तस्मात् "ज्ञानविशेषस्वरूपोऽभाव" इत्येवंवाद्यपि व्युदस्तः ।

कालो हि न कस्यचिदिन्द्रियस्य विषयः । एतत्तु अग्रे कालग्रन्थे स्फुटीभविष्यति । एवमभावस्य कालविशेषस्वरूपत्वेऽपि पूर्ववदेव गन्धाद्यभावानामप्रत्यक्षत्वापत्तिर्दोषो बोध्यः । भवन्ति चात्र (अभावपदार्थे) पारमर्षाणि सूत्राणि—

"क्रियागुणव्यपदेशाभावात् प्रागसत्" (वै० ६ । १ । १)

उत्पत्त्यनन्तरं घटादिकार्यजातस्य "भवति, गच्छति, तिष्ठति" इति क्रियया, "नीलो, रक्तः, पीत" इति गुणेन च व्यपदेशो व्यवहारः, स च प्राग् उत्पत्तेः पूर्वमसदिति प्रागभावः ।

"सदसत्" ॥२॥ सद्=विद्यमानमेव च मुद्गरादिप्रहारेण असत्=ध्वस्त इतिप्रत्ययवेद्यो ध्वंसाभावः ।

"सच्चासत्" ॥४॥ "घटः पटो न" इतिप्रतीतिवेद्यः योऽसद्=अन्योन्याभावः अर्थात् सदेव घटादिपदार्थः असदिति व्यवह्रियते पटादिरूपेण । तत्र घटादौ पटादेः तादात्म्याभावो यः स एवान्योन्याभाव इत्यर्थः ।

"यच्चान्यदसदतस्तदसत्" ॥५॥ यच्चोक्ताभावत्रितयादन्यः असत्="वायौ रूपं नास्ति" इति यथा कालत्रयेऽपि वायुरूपेऽधिकरणे रूपसंसर्गं निषेधयति तदसत्=सोऽत्यन्ताभाव इत्यर्थः ।

एवञ्च—प्रागभावस्योत्तरोऽवधिः प्रध्वंसाभावस्य पूर्वोऽवधिः । अन्योन्याभावः प्रतियोगिसमानाधिकरणः । अत्यन्ताभावस्तु उक्तत्रितयविधर्मा । नास्य पूर्वोत्तरावधी अनाद्यनन्तत्वात्, नापि चायं प्रतियोगिसमानाधिकरण इति निर्गलितोऽर्थः ।

इहादन्यपि किञ्चिदधिकं विज्ञेयम् । तथाहि—अत्यन्ताभावोऽन्योन्याभावश्च प्रत्येकं द्विविधः । एकमात्रपर्याप्तवृत्तिकधर्मावच्छिन्नप्रतियोगिताकः । व्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकश्च । तत्र—आद्यो यथा—घटत्वावच्छिन्नाभावः । घटत्वादेः

* तथाच—अधस्ताद्व्याख्यातोऽस्माभिः ।

प्रत्येकमपि पर्याप्तत्वात् । एकत्रापि "अयं घटः" इति घटत्वप्रतीतेः । द्वितीयो यथा— एकघटवति देशे "घटपटौ न स्तः" इति द्वित्वावच्छिन्नाभावः । एवमेव एकघटवति "इह न घटौ" "घटो न घटपटौ" "एको न द्वौ" इत्याकाराभ्यः प्रतीतिभ्यः एकघटवति द्वित्वावच्छिन्नोभयात्यन्ताभावस्य, एकस्मिन्नुभयाऽन्योऽन्याभावस्य च सत्वादिति न्यायमञ्जर्यादिषु सुस्पष्टम् ।

इति प्रभासहितायां मुक्तावल्यां
पदार्थसामान्यनिरूपणा नाम
प्रथमा मुक्ता ।

---

(का०) सप्तानामपि साधर्म्यं ज्ञेयत्वादिकमुच्यते ॥१३॥

(मुक्ता०) इदानीं पदार्थानां साधर्म्यं वैधर्म्यञ्च वक्तुं प्रक्रमते— समानो धर्मो येषां ते सधर्माणः, तेषां भावः साधर्म्यम्, समानो धर्म इति फलितार्थः । एवम्—विरुद्धो धर्मो येषां ते विधर्माणः, तेषां भावो वैधर्म्यम्, विरुद्धो धर्म इति फलितार्थः । ज्ञेयत्वं ज्ञानविषयता साच सर्वत्रैवास्ति । ईश्वरादिज्ञानविषयतायाः केवलान्वयित्वात् । एवमभि-धेयत्वप्रमेयत्वादिकं बोध्यम् ॥१२, १३॥

(प्रभा०) सामान्यतः पदार्थो निरूपितः । अथ तेषामेव परस्परभेदकत्वं ज्ञाप-यितुं साधर्म्यं वैधर्म्यञ्च विवेचयितुमाह—"इदानीम्" इति । पदार्थनिरूपणानन्तर-मित्यर्थः । "समानो धर्म इति" इति—भावप्रत्ययेन स्वप्रकृत्यर्थविशेषणीभूतो जात्यादिरूपोऽर्थ उच्यते, प्रकृतिजन्यबोधे प्रकारो भावः । समानधर्मवति च समान-धर्म एव प्रकारः । ज्ञेयत्वस्यार्थमाह—"ज्ञानविषयता" इति । "ज्ञानेन विषयता निरूपिता भवति । "विषयो निरूप्यः ज्ञानं निरूपकम्" इति नियमात् । अयमेव ज्ञानविषययोर्निरूप्यनिरूपकभावसम्बन्धः प्रकाश्यप्रकाशकभावसम्बन्ध इति चोच्यते । "केवलान्वयित्वात्" इति । यद्यपि सन्ति घटपटादिभेदेन नानाविषयाः, तन्निष्ठा विषयता अपि नाना सन्ति । अन्या हि घटज्ञानीयविषयता, अन्या च पटज्ञानीय-विषयता । आद्या घटनिष्ठा, परा पटनिष्ठा एवमन्यत्राप्यूह्यम् । तथापि विषयतात्वेन रूपेण सा एकैव, विषयतात्वस्य सर्वविषयतासु अनुगतत्वात् । एवमीश्वरज्ञानीयविषयता केवलान्वयिनी । नह्येकोऽपि पदार्थ एवंविधो वर्त्तते यं पदार्थमीश्वरज्ञानं न विषयीकरोति, किन्तु सर्वे पदार्थाः सर्वज्ञस्य तस्य भगवतो नित्यज्ञानगोचराः, एतदेव केवलान्वयित्वं तस्या यदत्यन्ताभावाप्रतियोगित्वं नाम । अर्थात् ईश्वरीयज्ञानविषयताया न क्वचिद्-

प्यत्यन्ताभावः इत्यभिप्रायेणाह—"केवलान्वयित्वात्" इति। परममूले—आदिना * अभिधेयत्वं प्रमेयत्वम्, अस्तित्वञ्च सङ्गृह्णाति।

ज्ञानविषयत्वं ज्ञेयत्वम्, अभिधाविषयत्वमभिधेयत्वम्, प्रमाविषयत्वं प्रमेयत्वम्, कालसम्बन्धित्वमस्तित्वमिति सप्तानां पदार्थानां समानो धर्म इत्यर्थः।

तथाच—"षण्णामपि पदार्थानामस्तित्वाभिधेयत्वज्ञेयत्वानि" इति † प्रशस्ता वाक्।

अत्रास्तित्वमिति स्वरूपवत्त्वमुक्तम्। यस्य वस्तुनो यत्स्वरूपं तदेव तस्यास्तित्वम् इति प्राचां व्याख्यानं हृदि कृत्वा विश्वनाथेन सप्तानामेव साधर्म्यं सङ्गृहीतम्। ‡ कालसम्बन्धित्वमस्तित्वमिति तु नव्यानां कुसृष्टिरेवेति सूक्ष्मं निरीक्ष्यम्॥१३॥

(का०) **द्रव्यादयः पञ्च भावा अनेके समवायिनः।**

(मुक्ता०) **द्रव्यगुणकर्मसामान्यविशेषाणां साधर्म्यमनेकत्वं समवायित्वञ्च। यद्यप्यनेकत्वमभावेऽप्यस्ति तथाप्यनेकत्वे सति भावत्वं पञ्चानां साधर्म्यम्। तथाच—अनेकभाववृत्तिपदार्थविभाजकोपाधिमत्त्वं फलितोऽर्थः। तेन प्रत्येकं घटादावाकाशादौ च नाव्याप्तिः। समवायित्वञ्च समवायसम्बन्धेन सम्बन्धित्वं नतु समवायवत्त्वं सामान्यादावभावात्। तथाच—समवेतवृत्तिपदार्थविभाजकोपाधिमत्त्वमिति फलितोऽर्थः। तेन नित्यद्रव्येषु नाव्याप्तिः।**

(प्रभा०) सप्तमस्याभावपदार्थस्य कथनेनैव द्रव्यादीनां षण्णां भावत्वं साधर्म्यं सुस्पष्टमिति पुनरुक्तिभयेन तदुपेक्ष्य पञ्चानां साधर्म्यं वक्ति—"द्रव्यगुण"—इत्यादि। परममूले "द्रव्यादयः पञ्चे"ति उद्देश्यपदम्। "भावा अनेक" इति विधेयपदम्। यमुद्दिश्य=लक्ष्यीकृत्य विधेयस्य प्रवृत्तिर्भवति तदुद्देश्यमनुवाद्यमिति यावत्। उद्देश्ये प्रकारतया=विशेषणतया ज्ञायमानो विलक्षणविषयतावान् पदार्थो विधेय इत्यन्यदेतत्। "अनेकत्वे" इति। समवायेऽतिव्याप्तिवारणाय सत्यन्तम्। अभावेऽतिव्याप्तिवारणाय भावत्वमिति।

ननु—प्रत्येकमनेकेषु घटेषु एकैकत्वं नत्वनेकत्वम्, आकाशे च अनेकत्वं नास्ति तस्यैकव्यक्तिरूपत्वात्, भावत्वञ्चोभयत्र। तेन "अनेकत्वे सति भावत्वम्" इति साधर्म्यस्य आकाशे, एकैकस्मिन् घटादिपदार्थे च अव्याप्तिरेवेति तत्परिहाराय परिष्कृतं साधर्म्यमाह—"अनेकभाववृत्ति"—इत्यादि। अस्यायमर्थः-—अनेके ये भावाः=घटपटादि-

---

* अभिधेयत्वमभिधाविषयत्वम्, अभिधा च सङ्केतग्राह्योऽधिकपदार्थ इति मीमांसकाः। सङ्केतभिन्नायामभिधायां मानाभावात् सङ्केत एवाभिधेति नैयायिकाः।

† प्रशस्तपादाचार्यकृतपदार्थधर्मसङ्ग्रहोक्तं वाक्यमित्यर्थः।

‡ काले कालसम्बन्धित्वाभावादिति तु निगूढं हृदयम्।

व्यक्तय: तद्वृत्तिः=तेषु वर्त्तमानो यः पदार्थविभाजकोपाधिः=पदार्थत्वस्य साक्षाद् व्याप्यो धर्मः द्रव्यत्वं, तद्वत्त्वविवक्षायां न दोषः। अर्थात् पदार्थत्वस्य साक्षाद्व्याप्यं द्रव्यत्वं प्रत्येकं घटादिषु आकाशे च वर्त्तेत एवेति नैवाव्याप्तिः । अनेकभाववृत्तित्वं स्वप्रतियोगिवृत्तित्वस्वसामानाधिकरण्योभयसम्बन्धेन भेदविशिष्टत्वे सति भाववृत्तित्वम्। तेन गुणादौ सङ्ख्यारूपस्यानेकत्वस्याभावेऽपि नाव्याप्तिरिति दिनकरभट्टः।

नन्वनेकेभाववृत्तीति— अत्र अनेकत्व यदि बहुत्वसङ्ख्या तदा गुणादौ सङ्ख्याविरहात्तेष्वव्याप्तिः, यदि च यत्किञ्चिदेकभिन्नत्वं तदा समवायेऽतिव्याप्तिः, यदि तु एकत्वावच्छिन्नसामान्यभेदः, तत्र चैकत्वं यदि सङ्ख्यारूपं तदोक्तातिव्याप्तितादवस्थ्यम्, यदि च तन्मात्रविषयकबुद्धिविषयत्वं तदाऽप्रसिद्धिः, स्वमात्रविषयकबुद्धिविषयत्वरूपैकत्वस्य केवलान्वयितया तदवच्छिन्नसामान्यभेदाऽप्रसिद्धेरित्याशङ्कानिरासाय अनेकभाववृत्तित्वं निर्वक्ति अत्रचेति रामरुद्रः।

"समवायिन" इति—समवाय एषामस्तीति सववायिनः। मत्वर्थीय इन् प्रत्ययः। सामान्ये विशेषे च किमपि धर्मान्तरं समवायसम्बन्धेन न वर्त्तते, तेन अस्याप्यव्याप्तिरेवेति शङ्कामपाकुर्वन्नेव समवायित्वस्य विवक्षितमर्थमाह—"समवायित्वञ्च" इति। समवायप्रतियोगित्वमेव समवायिपदेन विवक्षितं, सामान्यं विशेषाश्च समवायसम्बन्धेन सम्बन्धिनः=वृत्तिमन्तः तेन नोक्तो दोष इति भावः । एवञ्च समवायित्वस्य द्वावर्थौ भवतः। समवायानुयोगित्वं समवायप्रतियोगित्वञ्च। तत्राद्यार्थविवक्षायामव्याप्तिदोंषः, द्वितीयार्थविवक्षायान्नास्तीति ग्रन्थकर्त्तुराशयः।

एवं कृतेऽपि नित्याः परमाण्वादयो न कस्मिंश्चिदपि पदार्थे समवायेन सम्बन्धिनः (वृत्तिमन्तः) तेष्वव्याप्तिस्तदवस्थेति मत्वा परिष्कृतं साधर्म्यस्य (समवायित्वस्य) स्वरूपमाह—'समवेतवृत्ति'—इति। अयमर्थः—समवेतेषु घटादिषु रूपादिषु च वृत्तिर्वर्त्तनं यस्य, एवम्भूतो यः पदार्थस्य विभाजकोपाधिः पदार्थत्वसाक्षाद्व्याप्यो धर्मः द्रव्यत्वगुणत्वादिरूपः, तादृशोपाधिमत्त्वं विवक्षितम्।

एवञ्जातिघटितविवरणेन भूतलादिचतुष्टयपरमाणुषु आकाशादिपञ्चसु च नाव्याप्तिः। तत्र विवक्षितद्रव्यत्वादिधर्मस्य यथायोगं वर्त्तमानत्वात्।

अपिच—"*समवेतसमवेतत्वं" द्रव्यादिचतुर्णां साधर्म्यं बोध्यम्। "द्रव्यादीनां पञ्चानां समवायित्वमेनेकत्वञ्च" इत्यार्षम्।

(का०) सत्तावन्तस्त्रयस्त्वाद्या गुणादिर्निर्गुणक्रियः ॥१४॥

(मुक्ता०) सत्तावन्त इति। द्रव्यगुणकर्मणां सत्तावत्त्वमित्यर्थः।

---

* समवेतवृत्तिपदार्थविभाजकोपाधिमत्त्वं तदर्थः। समवेतेषु स्वकारणे कपालादौ समवायसम्बन्धेन वर्त्तमानेषु घटपटादिषु समवेतो यः पदार्थविभाजकोपाधिः पदार्थत्वस्य साक्षाद्व्याप्यो धर्मः द्रव्यत्वगुणत्वादिः, तद्वत्त्वमित्यर्थः।

गुणादिरिति । यद्यपि गुणक्रियाशून्यत्वमाद्यक्षणे घटादावतिव्याप्तं क्रियाशून्यत्वञ्च गगनादावतिव्याप्तम् । तथापि--गुणवदवृत्तिधर्मवत्त्वं कर्मवदवृत्तिपदार्थविभाजकोपाधिमत्त्वं तदर्थः । नहि घटत्वादिकं द्रव्यत्वं वा गुणवदवृत्ति कर्मवदवृत्ति वा किन्तु गुणत्वादिकम् । तथा--आकाशत्वादिकं तु न पदार्थविभाजकोपाधिः ॥१४॥

(प्रभा०) "आद्यास्त्रय" इति । आदौ भवाः आद्याः । * भवार्थे यत् । द्रव्यगुणकर्माणि सत्तावन्ति इत्यर्थः । सत्तावत्त्वञ्च समवायसम्बन्धेन बोध्यम् । तथाच "द्रव्यादीनां त्रयाणामपि सन्तासम्बन्ध" इति प्रशस्तम् ।

"गुणादिरिती"ति । गुण आदिर्यस्येति तद्गुणसंविज्ञानो बहुव्रीहिः तेन गुणस्यापि सङ्ग्रहः । तथाच—गुणकर्मसामान्यविशेषसमवायाभावाः निर्गुणा निष्क्रियाश्चेत्येषां गुणशून्यत्वं=गुणात्यन्ताभाववत्त्वं क्रियाशून्यत्वञ्च=क्रियात्यन्ताभाववत्त्वञ्च साधर्म्यमित्यर्थः । एवमपि घटादौ आकाशादौ च अतिव्याप्तिरायाति ।

तथाहि—"उत्पन्नं द्रव्यं क्षणमगुणं तिष्ठति" इत्यस्यैको नियमो नैयायिकानाम् । तेन आद्यक्षणे द्रव्यमपि निर्गुणं=गुणशून्यम् । आकाशे कालादौ च विभुपदार्थे क्रियैव न जायते, तेन आकाशादिः पदार्थोऽपि निष्क्रियः=क्रियाशून्यः । इत्थं गुणादीनामुच्यमानं साधर्म्यं द्रव्येऽप्यतिप्रसक्तमिति भवति शङ्का, तामिमां शङ्कां परिहर्त्तुं जातिघटितवाक्यं विवक्षया दर्शयति—"गुणवृदवृत्ति"—इति ।

अयमर्थः—गुणोऽस्यास्तीति गुणवत्=द्रव्यं, तत्र अवृत्तिः=न वृत्तिर्यस्य सः एवम्भूतोयो धर्मो गुणत्वादिरूपः, तद्धर्मवन्तो ये गुणाद्याः तद्वत्त्वं विवक्षितमिति न दोषः । अर्थात् गुणत्वधर्मवान् गुण एव कर्मत्वधर्मवन्ति कर्माण्येवेति विवक्षया फलितेऽर्थे घटपटादिद्रव्येऽतिव्याप्तिर्व्युदस्ता ।

एवमेव—"कर्मवदवृत्ति" इति । कर्म=चलनात्मकं कर्मेति तल्लक्षणात् कर्मवत् द्रव्यमेव, तत्र न वृत्तिर्वर्त्तनं यस्य एवम्भूतो यः पदार्थस्य विभाजकः=पदार्थत्वस्य साक्षाद्व्याप्यः उपाधिर्गुणत्वादिरेव धर्मः । द्रव्यत्वन्तु पदार्थस्य विभाजक उपाधिः सन्नपि न कर्मवदवृत्ति किन्तु कर्मवद्वृत्ति=द्रव्यवृत्ति एवेत्यर्थः । आकाशत्वादिधर्मस्तु द्रव्यत्वस्य साक्षाद्व्याप्यः, नतु पदार्थत्वस्य साक्षाद्व्याप्यः । अपितु पदार्थत्वव्याप्यं द्रव्यत्वम्, तेन व्याप्यमाकाशत्वादिकमिति परम्परया पदार्थत्वव्याप्यता । आकाशत्वादिकन्तु न पदार्थविभाजकोपाधिः किन्तु द्रव्यविभाजकोपाधिरिति भावः । इत्थमुपरिदर्शितरीत्या विवक्षाकरणेन आकाशादिष्वपि अतिव्याप्तिर्वार्यते । उक्तञ्च प्रशस्तपादे—"गुणादीनां पञ्चानामपि निर्गुणत्वनिष्क्रियत्वे" इति ॥१४॥

---

* "दिगादिभ्यो यत्" (४ । ३ । ५५) इति सूत्रेणयदर्थः । आदिशब्दस्य दिगाद्यन्तर्गतत्वात् ।

(का०) सामान्यपरिहीनास्तु सर्वे जात्यादयो मताः ।

(मुक्ता०) सामान्यानधिकरणत्वं सामान्यादीनामित्यर्थः ।

(प्रभा०) "सामान्यपरिहीनास्तु" इति । सामान्यविशेषसमवायाभावाः सर्वेऽपि सामान्येन जात्या हीनाः, अर्थात् एषु सामान्यं न विद्यत इत्यर्थः । यद्यप्येकार्थसमवायसम्बन्धेन जात्यादयोऽपि सामान्यवन्त एव, तथापि तेषु न सामान्यनिरूपिता अधिकरणता * । एकार्थसमवायस्तु नाधिकरणताया नियामकः सम्बन्ध इत्यभिप्रायेण सामान्यपरिहीनत्वस्य परिष्कृतं स्वरूपमाह—"सामान्यानधिकरणत्वम्" इति । एतच्च "सामान्यादीनां त्रयाणाम्...असामान्यविशेषवत्त्व'मिति प्रशस्तमूलकमेव ।

(का०) पारिमाण्डल्यभिन्नानां कारणत्वमुदाहृतम् ॥१५॥

(मुक्ता०) पारिमाण्डल्येति । पारिमाण्डल्यमणुपरिमाणं कारणत्वं तद्भिन्नानामित्यर्थः । अणुपरिमाणन्तु न कस्यापि कारणम् । तद्धि स्वाश्रयारब्धद्रव्यपरिमाणारम्भकं भवेत् तच्च न सम्भवति, परिमाणस्य स्वसमानजातीयोत्कृष्टपरिमाणजनकत्वनियमान्महदारब्धस्य महत्तरत्ववदणुजन्यस्याणुतरत्वप्रसङ्गात् । एवं परममहत्परिमाणमतीन्द्रियसामान्यं विशेषाश्च बोध्याः ।

(प्रभा०) पारिमाण्डल्यपदार्थोऽप्रसिद्ध इति कृत्वा निर्वचनेन दर्शयति—पारिमाण्डल्यम्=अणुपरिमाणमिति । अणोः परिमाणं पारिमाण्डल्यमिति पृषोदरादित्वात्साधुः । पारिमाण्डल्यपदं द्व्यणुकपरिमाणस्याप्युपलक्षणम् । यथा परमाणुपरिमाणं न कारणं तथा द्व्यणुकपरिमाणमपि न कारणम् । "द्व्यणुकस्य परिमाणान्तरयोगात् अणुत्वह्रस्वत्वे हि द्व्यणुकवर्त्तिनी परिमाणे वर्णयन्ति" इति शाङ्करभाष्यानुरोधादपि द्व्यणुकपरिमाणन्तु पारिमाण्डल्यात्=परमाणुपरिमाणात् भिन्नमणुसंज्ञकं परिमाणम् । अत एव मूल उपलक्षणोक्तिरपि सङ्गता भवति अन्यथा तदसङ्गतिः स्पष्टैवेत्यपि बोध्यम् । एवञ्च—द्व्यणुकपरिमाणमपि न कारणम् । तथाच—"परमाणुपरिमाणद्व्यणुकपरिमाणभिन्नेषु कारणत्वं वर्त्तते, तद्भिन्नानां कारणत्वं साधर्म्यम्" यदि † अणुपरिमाणं कारणं स्यात् तदा द्व्यणुकमणुतरं भवेत्, द्व्यणुकपरिमाणं चेत्

* एकस्मिन्नर्थे समवायेन सत्त्वमेकार्थसमवायः । यथा—"एकं रूपम्" इति प्रतीतौ रूपे गुणे (वस्तुतो निर्गुणेऽपि) एकत्वसङ्ख्यायाः भानम्, तत्र न रूपे एकत्वं समवैति, किन्तु एकार्थसमवायसम्बन्धेन वर्त्तते । अर्थात् यस्मिन् घटादौ रूपं समवायेन तत्रैव एकत्वं समवायेनेति तयोरेकार्थसमवायः सम्बन्धः । परमयं नैव रूपे एकत्वाधिकरणतायाः नियामकः । अथवा—स्वसमवायसमवेतत्वं तत्त्वम् ।

† परमाणुपरिमाणमित्यर्थः ।

कारणं तदा त्र्यणुकस्य प्रत्यक्षमेव न स्यात्, परिमाणस्य स्वसमानजातीयोत्कृष्टपरिमाणजनकत्वनियमात्=स्वसमाजातीयं स्वतुल्यजातीयं यत् उत्कृष्टपरिमाणं स्वतोऽधिकं परिमाणं, तदेव जनयति परिमाणम् । अत एवाग्रे द्व्यणुकं त्र्यणुकञ्च सङ्ख्याजन्यमिति वक्ष्यति, तस्मादणुद्व्यणुकपरिमाणे नैव कस्यापि कारणे इत्यर्थः ।

* अयमभिसन्धिः—"परिमाणं स्वसमानजातीयोत्कृष्टपरिमाणं जनयति" इत्यस्ति नैयायिकसिद्धान्तः । तथासति यदि अणुपरिमाणं, द्व्यणुकपरिमाणं जनयिष्यति तदोत्कृष्टमेव जनयिष्यति । उत्कृष्टञ्च अणोरणुतरमेव, अणोरुत्कृष्टता तु अणुतरत्वे सत्येव भवति, यतो हि अणुशब्दाद् उत्कर्षवाची तरप्प्रत्ययो यद्यानीयेत तदाणुतरशब्दो व्याकरणरीत्या अण्वपेक्षया अपकृष्टार्थ एव फलिष्यति नोत्कृष्टार्थः, द्व्यणुकपरिमाणन्तु अणुपरिमाणापेक्षया उत्कृष्टभावम्, अत एव तस्य परमाणुपरिमाणं न कारणम् ।

एवमेव द्व्यणुकपरिमाणं त्र्यणुकपरिमाणम्प्रति कारणं तदा भवेत् यदि त्र्यणुकपरिमाणं द्व्यणुकपरिमाणादुत्कृष्टमपि भवेत्, तत्समानजातीयमपि च स्यात् । परन्तु त्र्यणुकपरिमाणं द्व्यणुकपरिमाणापेक्षयोत्कृष्टन्तु वर्त्तते, तत्समानजातीयमणु नास्ति । प्रत्युत तद्विजातीयं त्र्यणुकं महदस्ति । तत्र कारणन्तु—"त्रिभिर्द्व्यणुकैरेकं त्र्यणुकमारभ्यते" इत्यस्ति न्यायसिद्धान्तः । तस्मादनेकावयविजन्यं त्र्यणुकद्रव्यं, तत्र—द्व्यणुकापेक्षया अपकृष्टं महत्त्वमेवोत्पद्यते "अपकृष्टं यन्महत्त्वं तत्प्रति अनेकावयविजन्यं द्रव्यं कारणम्" इति नियमात् । द्व्यणुकं (के) तु—"द्वाभ्यामणुभ्यामेकं द्व्यणुकमारभ्यते"

* अयमभिसन्धिरिति—परमाणुपरिमाणापेक्षया द्व्यणुकपरिमाणं नोत्कृष्टं, परमाणुद्वयसंयोगस्य व्याप्यवृत्तित्वात् तज्जन्यस्य द्व्यणुकस्य परिमाणे नोत्कर्षः एकस्मिन्परमाणावपरस्य परमाणोर्लीनप्रायत्वात् । त्र्यणुकपरिमाणन्तु महत्परिमाणत्वाद्विजातीयम्, अर्थात् विरुद्धपरिमाणाऽऽक्रान्तत्वाद्विजातीयम् । एवं विरुद्धपरिमाणाक्रान्तत्वात् कार्यद्रव्यस्य द्व्यणुकपरिमाणस्य न तत्परिमाणजनकत्वम् । तस्मात् द्व्यणुकपरिमाणं यद्यपि परमाणुपरिमाणसजातीयमस्ति, तथापि तस्योत्कृष्टत्वाभावात् न तज्जनकत्वं परमाणुपरिमाणस्य । त्र्यणुकपरिमाणन्तु विजातीयं न तज्जनकत्वं द्व्यणुकपरिमाणस्य । परिमाणस्यायं स्वभावो यत्स्वसमानजातीयस्य स्वोत्कृष्टस्य च परिमाणस्य जनकत्वं नाम, यथा—ह्रस्वपरिमाणात् कपालात् ह्रस्वपरिमाणो घटः, एवं दीर्घपरिमाणात् कपालात् दीर्घपरिमाणो घटो जायते, तस्माद् द्व्यणुकपरिमाणं त्र्यणुकपरिमाणञ्च न परिमाणजं किन्तु सङ्ख्याजन्यमिति वैशेषिकसमयः । अत एव वक्ष्यति—

"सङ्ख्यातः परिमाणाच्च प्रचयादपि जायते" । इति ॥

ननु—द्रव्यस्य गुणम्प्रति कारणत्वात् कारणस्य च पूर्वक्षणवृत्तित्वनियमात् महत्परिमाणोत्पत्तेः प्राक् त्र्यणुकस्य विरुद्धपरिमाणाक्रान्तत्वाभावात् तदैव तत्र द्व्यणुकपरिमाणं स्वसमानजातीयपरिमाणारम्भकं स्यादिति चेन्न तस्य कार्यद्रव्यसाहित्येनैवोत्पत्तिस्वीकारादिति भावः ।

इति न्यायप्रक्रियया नह्यनेकावयविजन्यम् (त्वम्) । अत एव (अनेकावयविजन्यत्वाभावादेव) तत् (द्व्यणुकं) न अपकृष्टमहत्परिमाणवत् किन्त्वण्वेवेति । एवञ्च—परमाणुपरिमाणं द्व्यणुकपरिमाणञ्च द्वे अपि परिमाणे न कस्यापि कारणं, तद्भिन्नं सर्वं किञ्चित्प्रति किञ्चित्कारणमस्त्येवेति "पारिमाण्डल्यभिन्नानां कारणत्वं समानो धर्मः" इति युक्तमुक्तम् ।

"एवम्" इति । "बोध्या" इति । अलक्ष्यत्वेन न कारणानि बोध्या इत्यर्थः । यथा परमाणुपरिमाणं न कस्यापि कारणं, तथा आकाशकालादिनिष्ठं परममहत्परिमाणं तथा परमाण्वादिनिष्ठं परमाणुत्वादिकमतीन्द्रियं सामान्यं, स्वतोव्यावृत्ता विशेषपदार्थश्चैतेऽपि न कस्यचित्कारणानि । परमाणुपरिमाण-द्व्यणुकपरिमाणाकाशादिनिष्ठ-परममहत्परिमाणपरमाणुगतातीन्द्रियपरमाणुत्वरूपसामान्यभिन्नानां कारणत्वं साधर्म्यमिति समस्तप्रघट्टकार्थः । एतच्च "कारणत्वञ्चान्यत्र पारिमाण्डल्यादिभ्यः" इति प्रशस्तपादीयवाक्यगतादिपदमूलकम्बोध्यम् ।

**(मुक्ता०) इदमपि योगिप्रत्यक्षे विषयस्य न कारणत्वम् । ज्ञायमानसामान्यं न प्रत्यासत्तिः । ज्ञायमानं लिङ्गं नानुमितिकरणमित्यभिप्रायेणोक्तम् । आत्ममानसप्रत्यक्षे आत्ममहत्त्वस्य कारणत्वान्महत्परिमाणं कालादेर्बोध्यम् । तस्यापि न कारणत्वमित्याचार्याणामाशय इत्यन्ये, तन्न, ज्ञानातिरिक्तं प्रत्येवाकारणताया आचार्यैरुक्तत्वात् ॥१५॥**

(प्रभा०) ननु—योगिप्रत्यक्षे विषयरूपत्वेन परमाणुपरिमाणमपि कारणं भवति, नहि निर्विषयं किमपि ज्ञानम्, तत्कथं पारिमाण्डल्यभिन्नानां कारणत्वं साधर्म्यमुक्तम् इत्याशङ्कायामाह—"इदमपि" इति । पारिमाण्डल्यभिन्नानां कारणत्वस्य कथनमपीत्यर्थः । नवीनमताभिप्रायेणोक्तम् । अर्थात् ये योगिप्रत्यक्षे विषयस्य कारणभावं न ब्रुवते तेषां मतेनोक्तमिदम् ।

एतेषामयमाशयः—"*प्रातिभाद्वा सर्वम्" (यो० ३ । ३३) इति योगसूत्रोक्तदिशा योगिनः समाधिभावनाप्रकर्षेण अतीतानागतदूरविप्रकृष्टसकलवस्तूनां साक्षात्कारे प्रभवन्ति । सोऽयं तेषां साक्षात्कारो योगजधर्मप्रत्यासत्त्या जायमानोऽतीतादिपदार्थेषु यथा विषयसत्तां नापेक्षते, एवमेव वर्त्तमानविषयेष्वपि परमाणुपरिमाणादिषु विषयसत्तानिरपेक्ष एव जायते । तस्मात्तादृशे योगिसाक्षात्कारे परमाणुपरिमाणं न विषयविधया कारणम् ।

स्यादेतत्—माभूत् परमाणुपरिमाणस्य † योगिप्रत्यक्षे विषयविधया कारण-

* यथा सूर्योदयस्य पूर्वलिङ्गं प्रभा, तद्वत्प्रसङ्ख्यानस्य पूर्वलिङ्गं प्रातिभं ज्ञानमित्यर्थः । स्वप्रतिभोत्थमनौपदेशिकं ज्ञानं प्रातिभमित्युच्यते । अनेन ज्ञानेन करामलकवत्सर्वं जानाति योगी ।

† योगिनां प्रत्यक्षे पारिमाण्डल्यस्य कारणत्वादाह—योगिप्रत्यक्षे न विषयस्य

भावः सामान्यलक्षणाजन्यज्ञाने अनुमितौ च परमाणुपरिमाणस्यास्त्येव कारणाभाव इति पुनरपि "पारिमाण्डल्यभिन्नानामि"ति मूलसङ्गतमेवेत्यत आह—"**ज्ञायमानं सामान्यम्**" इत्यादि। वर्त्तमानकालिकं यज्ज्ञानं तादृशज्ञानविषयीभूतं सामान्यं "ज्ञायमानसामान्यम्" इत्युच्यते। एवमेव वर्त्तमानकालीनज्ञानविषयीभूतं लिङ्गम्=हेतुः "ज्ञायमानलिङ्गम्" भवति।

एषोऽत्र नव्यानां सिद्धान्तः—नहि पृथिव्यादिपरमाणूनां भेदको विशेषपदार्थः। अपितु—विशेषस्य ज्ञानं भेदकम्, एवमेव ज्ञायमानसामान्यं न प्रत्यासत्तिः=अलौकिकसन्निकर्षः, किन्तु सामान्यज्ञानमात्रं सामान्यलक्षणा प्रत्यासत्तिः। इत्थं ज्ञायमानं लिङ्गं नानुमितिकारणम्, प्रत्युत लिङ्गज्ञानमात्रमनुमितिहेतुः। एतच्च सर्वमग्रे मूल एव स्फुटीभविष्यति।

प्राचीनास्तु—परमाणुपरिमाणमपि विषयविधया योगिप्रत्यक्षे कारणमाचक्षते। तद्वदेव—"परमाणुः अणुपरिमाणवान्" इत्याकारकज्ञानोत्तरं "सर्वे परमाणवोऽणुपरिमाणवन्तः" इत्याकारकमलौकिकं परमाणुपरिमाणविषयकं प्रत्यक्षं सामान्यलक्षणाप्रत्यासत्त्या जायते, एतादृशालौकिकसम्बन्धरूपेण परमाणुपरिमाणमपि कारणम्।

किञ्च—"परमाणुर्द्रव्यमणुपरिमाणात्" इत्याकारानुमितौ अणुपरिमाणस्यापि हेतुभावः स्पष्ट एवेति स्वीकुर्वन्ति। एवमयं ग्रन्थो * नवीनसिद्धान्तमाश्रित्यैव विश्वनाथेन प्रपञ्चित इति ध्येयम्।

"आत्ममानस"—इति। "ज्ञानवानहम्, इच्छावानहम्, सुख्यहम्, दुःख्यहम्" इत्याकारके आत्मनो मानसप्रत्यक्षे आत्मनिष्ठपरममहत्परिमाणस्य कारणभावोऽस्ति, यतः—"द्रव्यीयलौकिकप्रत्यक्षम्प्रति समवायेन महत्त्वं कारणम्" इति नियमः। तस्मादात्मनिष्ठपरममहत्परिमाणं विहाय आकाशादिनिष्ठं परममहत्परिमाणं कारणताशून्यमिति विज्ञेयम्।

---

कारणत्वमिति मूले। ज्ञायमानसामान्यस्य प्रत्यासत्तित्वे=परमाणुत्वसामान्यलक्षणप्रत्यासत्त्या परमाणुत्वेन सकलपरमाणुगोचरमानसबोधोऽतीन्द्रियसामान्यस्य कारणत्वादाह—अतीन्द्रियसामान्यं न प्रत्यासत्तिरिति। ज्ञायमानलिङ्गस्याऽनुमितिकरणत्वे "गगनं विभु परममहत्परिमाणात्" इत्यनुमितौ परममहत्परिमाणस्य कारणत्वादाह—"ज्ञायमानं लिङ्गं नाऽनुमितिकरण"मिति। उदयनाचार्यमते तु—इदमपि योगिप्रत्यक्षे विषयस्य न कारणत्वमित्याद्यभिप्रायोपवर्णनमप्यनुपादेयम्। विषयादीनां योगिप्रत्यक्षादिषु कारणत्वस्वीकारेऽपि ज्ञानम्प्रत्येव तेषां कारणत्वात्। आचार्यैस्तु ज्ञानातिरिक्तं प्रत्येवाऽकारणत्वाभिधानात् तस्य च तेष्वपि सत्त्वादिति भाव इति दण्डिविश्वेश्वराश्रमिणः।

* इदं चिन्त्यम्—"कारणत्वञ्चान्यत्र परिमाण्डल्यादिभ्य" इति बहुप्राचीनेऽपि प्रशस्तपादरुङ्ग्रन्थे प्राचां सम्मत्युपलब्धेरित्येके।

"तस्यापि"—इति। आत्ममहत्परिमाणस्यापीत्यर्थः। "न कारणत्वम्"—इति। तदपि कारणताधर्मशून्यमिति आचार्याणाम्=प्रशस्तपादव्याख्यां कुर्वतामुदयनाचार्याणां किरणावलीग्रन्थ इति शेषः। आशयो मतमित्यन्ये ब्रुवते। अर्थात् "आदिग्रहणात्परममहत्त्वं गृह्यते" इति वदतामाचार्याणां मते आत्मनिष्ठपरममहत्परिमाणमपि कारणताधर्मशून्यमिति केचित्। तदेतत् खण्डयति—"तन्न"—इति। ज्ञानातिरिक्तमिति ज्ञानम्प्रति तु आत्मवृत्तिपरममहत्परिमाणं कारणं ज्ञानभिन्नम्प्रति न कारणमित्याचार्याणामाशय इति सिद्धान्तानुयायिन इत्यर्थः॥ १५॥

(का०) अन्यथासिद्धिशून्यस्य नियता पूर्ववर्तिता।
कारणत्वं भवेत्तस्य त्रैविध्यं परिकीर्तितम्॥१६॥
समवायिकारणत्वं ज्ञेयमथाप्यसमवायिहेतुत्वम्।
एवं न्यायनयज्ञैस्तृतीयमुक्तं निमित्तहेतुत्वम्॥१७॥

(मुक्ता०) ननु कारणत्वं किम्? अत आह—अन्यथासिद्धीति। तस्य कारणत्वस्य॥१६, १७॥

(प्रभा०) पञ्चदशश्यां कारिकायां कारणत्वमुदाहृतमित्युक्तम्। तत्र किं कारणत्वमित्यपेक्षायां कारणत्वं लक्षयति—(परममूले) "अन्यथासिद्धिशून्यस्य" इति। अत्र निष्ठत्वं षष्ठ्या अर्थः। तेनायमर्थो भवति—अन्यथासिद्धिशून्यनिष्ठा या नियता=अवश्यम्भाविनी पूर्ववर्त्तिता=कार्योत्पत्त्यव्यवहिते पूर्वस्मिन् क्षणे कार्याधिकरणवृत्तिता तदेव कारणत्वम्। पूर्ववर्त्तिनो भावः पूर्ववर्त्तिता। सा च कदाचिदागते रासभादावप्यस्ति इति तत्रातिव्याप्तिवारणाय "नियता" इति। नियतपूर्ववर्त्तिता दण्डत्वादावप्यस्ति, दण्डत्वादिरपि नियमेन घटादिकार्यपूर्ववर्त्तीति दण्डत्वे कारणलक्षणप्रसङ्गो माभूदत आह—"अन्यथासिद्धिशून्यस्य" इति। एवञ्च—अनन्यथासिद्धनियतपूर्ववृत्तित्वं कारणत्वम्—यथा घटम्प्रति दण्डः कारणमिति * निर्गलितोऽर्थः। तद्विभजते—"तस्य"—इति। तस्य=कारणत्वस्य। "त्रैविध्यम्"—इति। तिस्रो विधा अस्येति त्रिविधं तस्य भावः त्रैविध्यं त्रिविधत्वमित्यर्थः। ब्राह्मणादित्वात् ष्यञ्। स्पष्टमन्यत्॥ १६, १७॥

(का०) यत्समवेतं कार्यं भवति ज्ञेयन्तु समवायिजनकं तत्।
तत्रासन्नं जनकं द्वितीयमाभ्यां परं तृतीयं स्यात्॥१८॥

(मुक्ता०) तत्रेति। समवायिकारणं आसन्नं प्रत्यासन्नं कारणं द्वितीयसमवायिकारणमित्यर्थः।

* वक्रन्यायनयरसाभिनिविष्टचेतसस्तु—अनन्यथासिद्धकार्याव्यवहितप्राक्क्षणावच्छेदेन कार्याधिकरणवृत्त्यत्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्त्वं कारणत्वमिति निष्कर्षयन्ति।

(प्रभा०) "यत्समवेतम्"—इति : यस्मिन् समवेतम्=समवायसम्बन्धेन वर्त्तमानं सत् कार्यं * भवति=जायते तत्समवायिजनकम्=समवायिकारणं ज्ञेयम् । "समवायसम्बन्धेन कार्यवत्त्वं समवायिकारणत्वम्" इति फलितम् । यथा—तन्तवः पटस्य, तन्तुषु समवायेनैव पटस्योत्पत्तेः।

असमवायिकारणं लक्षयति परममूले— "तत्रासन्नम्"--इति । तत्र= समवायिकारणे आसन्नम्=सन्निहितं कारणमसमवायिकारणं द्वितीयं कारणमित्यर्थः। तृतीयं कारणं लक्षयति—"आभ्याम्"—इति ।

अयमर्थः—द्विविधमसमवायिकारणम् । कार्येण सहैकस्मिन्नर्थे समवेतं समवायसम्बन्धेन वर्त्तमानं सत् यत्कारणं तदेकमसमवायिकारणम् । यथा—तन्तुसंयोगः पटस्य । अत्र कार्यं पटः तेन सह एकस्मिन् तन्तौ समवेतं समवायसम्बन्धेन वर्त्तमानं सत् पटात्मककार्यम्प्रति तन्तुसंयोगात्मकं कारणमसमवायिकारणम् । "जन्यद्रव्यमात्रम्प्रति अवयवसंयोगोऽसमवायिकारणमिति नियम" इत्यर्थः । एवमेव कपालसंयोगो घटस्य ।

कारणेन सहैकस्मिन्नर्थे समवेतं सद् यत्कारणं तदपरमसमवायिकारणम् । यथा—तन्तुरूपं पटगतरूपस्य । अत्र पटगतरूपम्प्रति कारणम्=समवायिकारणं पटः, तेन सह एकस्मिन्नर्थे=तन्तुरूपेऽर्थे समवेतं समवायसम्बन्धेन वर्त्तमानं भवति तन्तुरूपम्, गुणगुणिनोः समवायात्, तादृशं यत् तन्तुरूपं तत् पटरूपम्प्रति † कारणं विद्यते तदप्यसमवायिकारणमेव । एवमेव कपालरूपं घटरूपस्य ।

एवञ्च "तत्रासन्नम्" इतिपदेन समवायिकारणादावतिव्याप्तिर्वारिता । पटसमवायिकारणे तन्तौ समवेतं यत्तन्तुत्वं तत्रातिव्याप्तिवारणाय जनकत्वमित्युक्तम्, तन्तुत्वं हि दण्डत्वादिवदन्यथासिद्धमिति न तत्कारणमिति भावः ।

(मुक्ता०) अत्र यद्यपि ‡ तुरीतन्तुसंयोगानां पटासमवायिकारणत्वं स्यात् । एवं वेगादीनामभिघाताद्यसमवायिकारणत्वं स्यात् । एवं ज्ञानादिकमपीच्छाद्यसमवायिकारणं स्यात्, तथापि पटासमवायिकारणलक्षणे तुरीतन्तुसंयोगभिन्नत्वं देयम् । तुरीतन्तुसंयोगस्तु तुरीपटसंयोगं प्रत्यसमवायिकारणं भवत्येव । एवं वेगादिकमपि वेगस्पन्दाद्यसमवायिकारणं भवत्येवेति तत्तत्कार्यासमवायिकारणलक्षणे तत्तद्भिन्नत्वं देयम् ।

* अनेकार्था धातव इति स्मर्त्तव्यम् ।

† पटोत्पत्तेः प्राक् तदधिकरणे तन्तौ रूपस्य विद्यमानत्वात्तस्य कारणत्वम् ।

‡ तुरीतन्तुसंयोगादीनामपि पटादिसमवायिकारणे तन्त्वादौ समवायसम्बन्धेन प्रत्यासन्नत्वादिति भावः ।

आत्मविशेषगुणानान्तु कुत्राप्यसमवायिकारणत्वं नास्ति, तेन तद्भिन्नत्वं सामान्यलक्षणे देयमेव।

(प्रभा०) मुक्तावल्याम् "अत्र यद्यपि" इत्यनेन असमवायिकारणलक्षणमाक्षिपति—"तुरीतन्तु"—इति।

अयमर्थः—"यस्य संयोगः स संयोगस्य प्रतियोगी, यस्मिन् संयोगः स संयोगस्यानुयोगी" इतिनियमः। अनेन तुरीतन्तुसंयोगोऽपि अनुयोगितासम्बन्धेन तन्तुसमवेतः पटरूपकार्यजनकश्चेतिकथितासमवायिकारणलक्षणलक्ष्य एव। तस्मादयम्= तुरीतन्तुसंयोगोऽपि तन्तुद्वयसंयोगवत्पटकार्यम्प्रत्यसमवायिकारणं मन्तव्यः।

"एवं वेगादीनाम्"—इति। वेगः संस्कारभेदः पृथिव्यादिचतुष्टयमनोवृत्तिः द्वितीयपतननाद्यसमवायिकारणम्। आदिना स्पर्शग्रहः। "अभिघातादि"—इति। "यः संयोगः शब्दस्य निमित्तकारणम्, यज्जनितं कर्म संयोगिनोः परस्परविभागहेतुश्च भवति स संयोगोऽभिघात" इत्युच्यते। आदिना नोदनपरिग्रहः। "येन संयोगेन जनितं कर्म संयोगिनोः परस्परं विभागहेतुर्न भवति, यश्च न शब्दस्य निमित्तकारणं स संयोगविशेषो नोदनम्" इति ख्यायते। एवं वेगोऽभिघाताख्यसंयोगस्यासमवायिकारणं स्यात्, स्पर्शश्च नोदनाख्यसंयोगस्यासमवायिकारणं स्यात्, द्वयोरपि स्वस्वसमवायिकारणप्रत्यासन्नत्वात्।

"एवं ज्ञानादिकमपि"—इति। ज्ञानमात्मगुणः आदिना इच्छापरिग्रहः। ततश्चायमर्थः सम्पद्यते—ज्ञानमिच्छायाः, इच्छा च प्रवृत्तेः असमवायिकारणं स्यात्। तल्लक्षणस्य तत्र तत्र घटितत्वात्।

समाधत्ते "तथापि"—इति। तन्तुसमवेतत्वे सति तुरीतन्तुसंयोगभिन्नत्वे सति पटकारणं पटासमवायिकारणम्। एवं कपालसमवेतत्वे सति चक्रकपालसंयोगभिन्नत्वे सति यद् घटकारणं तद् घटासमवायिकारणम्। एवं काष्ठखण्डसमवेत्वे सति यन्त्रकाष्ठखण्डसंयोगभिन्नत्वे सति यत्काष्ठपुत्तलिकाकारणं तत्काष्ठपुत्तलिकाया असमवायिकारणम् इति विशिष्यैवाऽसमवायिकारणलक्षणं वक्तव्यमिति सिद्धान्तिग्रन्थार्थः। "तत्तद्भिन्नत्वम्"—इति। निमित्तकारणसमवायिकारणसंयोगभिन्नत्वमित्यर्थः।

इदमुक्तम्भवति—प्रत्येककार्यस्यासमवायिकारणलक्षणे निमित्तकारणसमवायिकारणयोर्यः परस्परं संयोगः तद्भिन्नत्वनिवेशः कर्त्तव्यः।

अत्र केचिच्छङ्कन्ते—यदि तुरीतन्तुसंयोगः पटासमवायिकारणं स्यात् को दोष? इति। अपरे समादधते—"असमवायिकारणनाशे कार्यनाश" इति सिद्धान्तः। तद्यदि तुरीतन्तुसंयोगः पटस्य असमवायिकारणं स्वीक्रियेत तदा तुरीतन्तुसंयोगनाशे सति पटेन नष्टव्यम्, नत्वेवं दृश्यते। तस्मात्प्रदर्शितरीत्या पटासमवायिकारणलक्षणे "तद्भिन्नत्व"निवेशः कर्त्तव्य एव।

सम्प्रति तद्भिन्नत्वनिवेशमव्यर्थं मन्यमान आह—"तुरीतन्तुसंयोगस्तु"—इति । "वेगस्पन्दादि"—इति । वेगजन्यक्रियादीत्यर्थः । शिष्टं स्पष्टम् ।

"आत्मविशेषगुणानाम्"—इति । आत्मनो विशेषगुणाः ज्ञानेच्छाद्याः कुत्रापीति=कमपि जन्यं भावम्प्रतीत्यर्थः । सामान्यलक्षणे=असमवायिकारणसामान्यलक्षणे ।

इदमत्राकूतकम्—आत्मनो ज्ञानात्मकविशेषगुणम्प्रति आत्ममनःसंयोगस्य असमवायिकारणता अवश्यमेषितव्या । एवं ज्ञानम्प्रति क्लृप्तकारणभाव आत्ममनः-संयोग एवेच्छादिविशेषगुणान्प्रति असमवायिकारणमिति निर्वाहे सति ज्ञानेच्छाद्यात्मविशेषगुणानाम्परस्परमसमवायिकारणभावस्वीकारो निष्फलः । इत्थञ्च—"आत्मविशेषगुणभिन्नत्वे सति समवायिकारणप्रत्यासन्नं कारणमसमवायिकारणम्" इत्यसमवायिकारणस्य सामान्यलक्षणम्फलितम् । आत्मविशेषगुणभिन्नत्वनिवेशेन ज्ञानादीनामिच्छादीन् प्रति, परामर्शस्य चानुमितिम्प्रति नासमवायिकारणत्वमिति * बोध्यम् ।

**(मुक्ता०) अत्र समवायिकारणे प्रत्यासन्नं द्विविधं कार्यैकार्थप्रत्यासत्त्या कारणैकार्थप्रत्यासत्त्या च । आद्यं यथा—घटादिकम्प्रति कपालसंयोगादिकमसमवायिकारणम् । तत्र कार्येण घटेन सह कारणस्य कपालसंयोगस्यैकस्मिन्कपाले प्रत्यासत्तिरस्ति ।**

(प्रभा०) "अत्र"—इति । अस्मिन्प्रकरण इत्यर्थः । समवायिकारणे=समवायिकारणरूपे अधिकरणे । प्रत्यासन्नम्=प्रत्यासन्नत्वम् कार्येण सहासमवायिकारणस्य सामानाधिकरण्यमित्यर्थः । "द्विविधम्"—इति । द्वे विधे कार्यैकार्थकारणैकार्थरूपे यस्य तादृशम् । कार्यैकार्थप्रत्यासत्त्या=कार्येण सह एकाधिकरणसम्बन्धेन । कारणैकार्थप्रत्यासत्त्या=कारणेन सहैकाधिकरणसम्बन्धेन । क्रमश उदाहरति—"आद्यं यथा"—इति । "कपालसंयोगादिकम्"—इति । कपालद्वयसंयोगादिरित्यर्थः । "एकस्मिन् कपाल"—इति । कपालात्मके एकस्मिन्नधिकरणे एकार्थसमवेतत्वं सम्बन्धः कपालसंयोगस्येत्यतोऽसौ प्रथममसमवायिकारणस्योदाहरणम् । एवमेव तन्तुसंयोगादावपि योजनीयम् ।

**(मुक्ता०) द्वितीयं यथा—घटरूपम्प्रति कपालरूपमसमवायिकारणम् ।**

---

* "इति बोध्यमि"ति—असमवायिकारणनाशात् कार्यनाश इति वैशेषिकसमयात् परामर्शनाशेऽनुमितिनाशो न स्यादित्यसमवायिकारणत्वमनङ्गीकृतं तस्य प्रभाकृद्भिः । किन्तु—ज्ञानाद्यात्मविशेषगुणेषु निमित्तकारणत्वमेव सर्वत्रेति भावः । अन्यथा ज्ञाननाशे इच्छानाशः स्यात्, इच्छानाशे कृतिनाशः स्यात् । अनुमितिनाशस्तु स्वाऽव्यवहितोत्तरवर्त्तिज्ञानादेवेति, नहि परामर्शोऽनुमित्युत्तरवर्त्तिज्ञानमिति भाव इति दण्डिविश्वेश्वराश्रमस्वामिनः ।

तत्र स्वगतरूपादिकम्प्रति समवायिकारणं घटः तेन सह कपालरूपस्यैकस्मिन्कपाले प्रत्यासत्तिरस्ति ।

(प्रभा०) द्वितीयमुदाहरति—"द्वितीयं यथा"--इति । "तत्र"--इति । घटरूपम्प्रति कारणीभूतेन घटेन सह एकस्मिन् कपालात्मकेऽधिकरणे रूपस्य परम्परया "एकार्थसमवेतत्वं सम्बन्ध" इति द्वितीयासमवायिकारणस्योदाहरणम् । एवमेव पटरूपम्प्रति तन्तुरूपादावप्युदाहार्यम् ।

(मुक्ता०) तथाच—क्वचित्समवायसम्बन्धेन क्वचित्स्वसमवायिसमवायसम्बन्धेनेति फलितोऽर्थः । इत्थञ्च—कार्यैकार्थकारणैकार्थान्यतरप्रत्यासत्त्या समवायिकारणे प्रत्यासन्नं कारणं ज्ञानादिभिन्नमसमवायिकारणमिति सामान्यलक्षणम्पर्यवसन्नम् । आभ्यां समवायिकारणासमवायिकारणाभ्यां परं भिन्नं कारणं तृतीयं निमित्तकारणमित्यर्थः ॥१८॥

(प्रभा०) असमवायिकारणताया नियामकं सम्बन्धद्वयम्फलितरीत्या दर्शयति--"तथाच"—इति । अस्यायमर्थः—घटम्प्रति यः कपालसंयोगोऽसमवायिकारणं तन्निष्ठायाः कारणताया नियामकः सम्बन्धः "समवायः" संयोगस्य गुणत्वात्, कपालस्य च द्रव्यत्वात् गुणगुणिनोश्च समवायात् । घटरूपम्प्रति यत्कपालरूपमसमवायिकारणं तन्निष्ठायाः कारणताया नियामकः सम्बन्धः स्वसमवायिसमवायसम्बन्धः । अत्र "स्व"पदेन कपालरूपस्य ग्रहणम्, तस्य समवायि कपालम्, तस्मिन्कपाले समवायो घटस्याप्यस्ति । अर्थात् कपालात्मके समवायिकारणे घटः समवेतो वर्त्तते । एवं स्वसमवायिसमवेतत्वसम्बन्धेन कपालरूपं घटे नीत्वा घटरूपम्प्रति तद् असमवायिकारणम्भवत्येव ।

अयमाशयः—समानाधिकरणयोरेव कार्यकारणभावो न व्यधिकरणयोरित्यस्ति नियमः । यथा—घटकपालसंयोगयोः साक्षात्समवायसम्बन्धेन एकस्मिन् कपाले सामानाधिकरण्यम्, तथा--कपालरूपघटरूपयोरप्येकस्मिन् कपाले सामानाधिकरण्यं स्यात् । इयांस्तु विशेषः—यदेकः साक्षात्, अपरश्च परम्परया इत्येवमपि सामानाधिकरण्यम् । घटरूपं घटे साक्षात्समवायेन वर्त्तते, कपालरूपन्तु घटे स्वसमवायिसमवेतत्वसम्बन्धेन । अन्यथा कपालरूपं कपाले घटरूपञ्च घटे इति व्यधिकरणत्वात् कार्यकारणभावस्तयोर्न स्यादित्युक्तम् एवं स्वसमवायीति ।

असमवायिकारणस्य स्वयमेव निष्कृष्टं लक्षणं वक्तुमाह –"इत्थञ्च"--इति । कार्यैकार्थप्रत्यासत्तिः=समवायसम्बन्धः । कारणैकार्थप्रत्यासत्तिः स्वसमवायिसमवेतत्वसम्बन्धः । निमित्तकारणलक्षणं दर्शयति "आभ्यां परम्" इति । यथा—"घटम्प्रति दण्डादिकम्, पटम्प्रति तुरीवेमादिकम्" । सूत्रवेष्टिता नलिका तुरी । वायदण्डो वेमा । यत्र तुरीं निधाय उभयतः सूत्रसन्तानोपरि व्यापार्यते । स्पष्टमन्यत् ।

(का०) येन सह पूर्वभावः—

(मुक्ता०) इदानीमन्यथासिद्धत्वमेव कियतां पदार्थानामत आह—येनेति। यत्कार्यम्प्रति कारणस्य पूर्ववृत्तिता येन रूपेण गृह्यते तत्कार्यम्प्रति तद्रूपमन्यथासिद्धमित्यर्थः। यथा घटम्प्रति दण्डत्वमिति।

(प्रभा०) कारणलक्षणे अन्यथासिद्धिशून्यत्वमुक्तम्, तत्र भवति जिज्ञासा किमन्यथासिद्धत्वं नाम, कतिविधञ्च तदिति तच्छान्त्यै "इदानीम्"—इत्यादिग्रन्थमुपन्यस्यति। "यत्कार्यम्"—इति। * यद्धर्मावच्छिन्नं कार्यम्प्रति यस्य=कारणत्वेनाभिमतस्य दण्डत्वादेः पूर्ववृत्तिता=पूर्वभावः येन रूपेण दण्डत्वादिना सहैव गृह्यते=ज्ञायते तत्कार्यम्प्रति घटत्वादिधर्मावच्छिन्नघटादिकार्यम्प्रति तद्रूपम्=कारणतावच्छेदकं दण्डत्वादि अन्यथासिद्धमित्यर्थः। कारणतावच्छेदकधर्मत्वं प्रथममन्यथासिद्धमिति फलितम्। यथा—घटम्प्रति दण्डः कारणम्। कारणता दण्डनिष्ठा, तदवच्छेदको धर्मो दण्डत्वमिति तदन्यथासिद्धम्। घटम्प्रति दण्डस्य कारणता तु गृह्यते। अतो दण्डत्वमन्यथासिद्धमिति भावः।

(का०) कारणमादाय वा यस्य।

(मुक्ता०) द्वितीयमन्यथासिद्धमाह—कारणमिति। यस्य स्वातन्त्र्येणान्वयव्यतिरेकौ न स्तः किन्तु कारणमादायैवान्वयव्यतिरेकौ गृह्येते तदन्यथासिद्धम्। यथा दण्डरूपम्॥

---

* ननु—यत्कार्यं प्रतीति यथाश्रुतं परित्यज्य किमिति प्रभायां यद्धर्मावच्छिन्नकार्यम्प्रति यस्य येन रूपेणेति व्याख्यातं दर्शनाचार्यैरिति चेच्छृणु? यथा दण्डत्वेन दण्डो घटपूर्ववर्त्तीत्यत्र दण्डत्वं घटपूर्ववर्त्तित्वग्रहविशेष्यतावच्छेदकम्; तथा तद्व्यक्तिः तद्व्यक्तिविषयकप्रत्यक्षपूर्ववर्त्तिनीति तद्व्यक्तिविषयकप्रत्यक्षत्वावच्छिन्नकार्यतानिरूपितपूर्ववर्त्तित्वग्रहविशेष्यतावच्छेदकं तद्व्यक्तित्वमित्यन्यथासिद्धत्वेऽपि तद्व्यक्तित्वस्य, तद्वत् तद्व्यक्तित्वविषयकप्रत्यक्षत्वावच्छिन्नम्प्रत्यपि तद्व्यक्तित्वम्यान्यथासिद्धत्वं स्यादत आह—यद्धर्मावच्छिन्नं प्रतीति। तथाच—यद्धर्मावच्छिन्नकार्यतानिरूपितनियतपूर्ववर्त्तित्वग्रहविशेष्यतावच्छेदकत्वे सति "यद्धर्मावच्छिन्नकार्यम्प्रति स्वतन्त्रान्वयव्यतिरेकशून्यत्वं तद्धर्मावच्छिन्नम्प्रति तद्धर्मावच्छिन्नस्यान्यथासिद्धत्वं प्रथमम्। तद्व्यक्तित्वस्य तु तद्व्यक्तिविषयकप्रत्यक्षत्वावच्छिन्नकार्यतानिरूपितनियतपूर्ववर्त्तिग्रहविशेष्यतावच्छेदकमस्ति, तथापि—तद्व्यक्तित्वेन तद्व्यक्तित्वं तद्व्यक्तित्वप्रत्यक्षपूर्ववर्त्तीत्येवं तद्व्यक्तित्वत्वावच्छिन्नतद्व्यक्तित्वविषयकप्रत्यक्षत्वावच्छिन्नकार्यतानिरूपितनियतपूर्ववर्त्तित्वग्रहविशेष्यतावच्छेदकं तद्व्यक्तित्वत्वमेवान्यथासिद्धं नतु तद्व्यक्तित्वम् तस्य तु तद्व्यक्तित्वावच्छिन्नतद्व्यक्तिविषयकप्रत्यक्षत्वावच्छिन्नकार्यतानिरूपितनियतपूर्ववर्त्तित्वग्रहविशेष्यतावच्छेदकत्वात् इत्याशयेन दर्शनाचार्यैर्मुक्तावल्या यथाश्रुतं परित्यज्य यद्धर्मावच्छिन्नेत्युक्तमिति प्रतिभाति इति द्रविडविश्वेश्वराश्रमस्वामिनः।

(प्रभा०) "यस्य"—इति। यस्य स्वात्मना कार्यम्प्रति पूर्वभावो न भवेत् किन्तु स्वकारणं गृहीत्वैव पूर्वभावः स्यात् सोप्यन्यथासिद्धः। "कारणसमवेतविशेष-गुणत्वं" द्वितीयमन्यथासिद्धमित्यर्थः। अक्षरार्थस्तु—यस्य=स्वतन्त्रान्वयव्यतिरेकशून्यस्य स्वातन्त्र्येण=स्वकारणनिरपेक्षतया अन्वयव्यतिरेकौ=स्वाधिकरणे कार्यसत्त्वमन्वयः, स्वाभावाधिकरणे कार्यासत्त्वं व्यतिरेकः तौ न स्तः=न स्यातां किन्तु कारणं=स्वकारणम् आदाय=गृहीत्वैव तौ अन्वयव्यतिरेकौ गृह्येते=ज्ञायेते तद् द्वितीयमन्यथासिद्धम्। यथा दण्डरूपम्। दण्डरूपस्य घटं प्रति न स्वतन्त्रतया पूर्वभावः किन्तु स्वकारणस्य * दण्डस्य पूर्वभावं गृहीत्वैव दण्डरूपस्यापि घटम्प्रति पूर्वभावो गृह्यतेऽतो दण्डरूपं घटोत्पत्तेः पूर्वक्षणे सदपि अन्यथासिद्धमेव।

**(का०) अन्यम्प्रति पूर्वभावे ज्ञाते यत्पूर्वभावविज्ञानम् ॥१९॥**

(मुक्ता०) तृतीयमाह—अन्यम्प्रतीति। अन्यम्प्रति पूर्ववृत्तित्वं गृहीत्वैव यस्य यत्कार्यम्प्रति पूर्ववृत्तित्वं गृह्यते तस्य तत्कार्यम्प्रत्यन्यथा-सिद्धत्वम्। यथा घटादिकं प्रत्याकाशस्य। तस्य हि घटादिकं प्रति कारणत्वमाकाशत्वेनैव स्यात्। आकाशत्वं हि शब्दसमवायिकारणत्वम्। एवञ्च तस्य शब्दं प्रति जनकत्वं गृहीत्वैव घटादिकं प्रति जनकत्वं ग्राह्यमतस्तदन्यथासिद्धम्॥

ननु—शब्दाश्रयत्वेन तस्य कारणत्वे काऽन्यथासिद्धिरिति चेत्? पञ्चमीति गृहाण। नन्वाकाशस्य शब्दम्प्रति जनकत्वे किमवच्छेदकमिति चेत्कवत्वादिकं विशेषपदार्थो वेति॥ १९॥

(प्रभा०) तृतीयमन्यथासिद्धं दर्शयति—"तृतीयमाह"—इति। अन्यम्प्रति=प्रकृतघटादिकार्यभिन्नम्प्रति अर्थात् शब्दम्प्रति पूर्ववृत्तित्वं=पूर्वभावं गृहीत्वैव यस्य=आकाशस्य यत्कार्यम्प्रति=घटादिकार्यम्प्रति पूर्ववृत्तित्वं गृह्यते तस्य=आकाशस्य तत् कार्यम्प्रति=घटादिकार्यम्प्रति अन्यथासिद्धत्वम्।

अन्यकारणत्वेन गृहीतकारणताकं तृतीयमन्यथासिद्धमिति लघु फलितम्। एतदुदाहरणेन स्पष्टीकरोति—"यथा"—इति। स्पष्टमन्यत् व्याख्यातप्रायञ्च। शङ्कते—"ननु"—इति। माभूद् आकाशं शब्दस्य समवायिकारणं किन्तु शब्दाश्रय एव तदिति कुत आकाशस्यान्यथासिद्धतेति शङ्काकर्त्तुराशयः। समाधत्ते—"पञ्चमीति"—इति। अनुपदं वक्ष्यमाणं पञ्चममन्यथासिद्धमित्यर्थः। गृहाण=जानीहि। यदि आकाशं शब्दसमवायिकारणमिति लक्षणम्परित्यज्य शब्दाश्रय इत्येतत् स्वीक्रियते भवता तदापि तस्यान्यथासिद्धत्वमेव। अवश्यनियतपूर्वभाववतः कारणात् कार्यसम्भवे तद्भिन्नं सर्वमप्यन्यथासिद्धमेवेतिसमाधातुराशयः। कारणताप्रसङ्गेन

* दण्डरूपस्य समवायिकारणं दण्डः।

शब्दम्प्रति आकाशनिष्ठकारणताया अवच्छेदकनिर्णयाय शङ्कते—"ननु"—इति । जनकत्वे=कारणत्वे । किमवच्छेदकमिति—निरवच्छिन्नायाः कारणताया असम्भवादित्याशयः । उत्तरयति—"*कवत्त्वादिकम्"—इति । कः ककारो विद्यते समवायेन अस्मिन्निति "कवत्" तद्भावः कवत्त्वम् । आदिना गवत्त्वादिपरिग्रहः । "नहि निरवच्छिन्ना काचित्कारणता" इतिनियमेन आकाशीयसमवायिकारणताया "कवत्त्वम्" 'गवत्त्वम्" इत्याद्यवच्छेदकं जानीहि । कवत्त्वादीनामवच्छेदकत्वे गौरवम् । अर्थात् बहूनां वर्णानां कारणतावच्छेदकतायां शरीरकृतं गौरवम्भविष्यति विनिगमनाविरहश्चेत्यस्वरसादाह—"विशेषपदार्थो वा"—इति । विशेषाख्यः पदार्थ एव शब्दम्प्रति आकाशनिष्ठकारणताया अवच्छेदक इतरेभ्यो व्यावर्त्तक इति नोक्तदोषः ॥ १९ ॥

**(का०) जनकम्प्रति पूर्ववृत्तितामपरिज्ञाय न यस्य गृह्यते ।**

(मुक्ता०) चतुर्थमन्यथासिद्धमाह—जनकम्प्रतीति । यत्कार्यजनकम्प्रति पूर्ववृत्तित्वं गृहीत्वैव यस्य यत्कार्यम्प्रति पूर्ववृत्तित्वं गृह्यते तस्य तत्कार्यम्प्रत्यथासिद्धत्वम् । यथा कुलालपितुर्घटम्प्रति । तस्य हि कुलालपितृत्वेन घटम्प्रति जनकत्वे एवान्यथासिद्धिः । कुलालत्वेन जनकत्वे त्विष्टापत्तिः, कुलालमात्रस्य घटम्प्रति जनकत्वात् ।

(प्रभा०) चतुर्थमन्यथासिद्धं दर्शयति—"जनकम्प्रति"—इति । यस्य=कुलालपितुः यत्कार्यजनकम्प्रति पूर्ववृत्तिता=पूर्वभावम् अपरिज्ञाय=अगृहीत्वा पूर्वभावो न गृह्यते अपितु गृहीत्वैव=ज्ञात्वैव पूर्वभावो गृह्यते तस्य तत्कार्यम्प्रन्यथासिद्धत्वम् । एककार्यम्प्रति गृहीतपूर्ववृत्तिर्यः कार्यान्तरम्प्रत्यपि पूर्ववर्त्तितया गृह्यते, तच्चतुर्थमन्यथासिद्धमिति प्रघट्टकार्थः । कालिकसम्बन्धावच्छिन्नकारणत्वं चतुर्थं तदिति तु तात्पर्यमिति तु दुर्गादत्तशास्त्रिणः । वयन्तु—स्वजन्यतानिरूपितजनकतानिरूपितजनकतावत्त्वं तत् । यथा—कुलालपितुर्घटकार्यजनकं कुलालम्प्रति पूर्वभावमज्ञात्वा घटम्प्रति पूर्वभावो न गृह्यते । किन्तु—कुलालम्प्रति कारणभावं ज्ञात्वैव घटम्प्रति कारणभावो ज्ञायते, अतो घटम्प्रति कुलालपिता कुलालपितृत्वेन रूपेण अन्यथासिद्धश्चतुर्थः । "कुलालत्वेन" इत्यादिग्रन्थस्तु निगदेनैव † व्याख्यातः ।

---

* अत्रायमभिसन्धिः—शब्दस्य समवायिकारणमाकाशम्, कारणता आकाशनिष्ठा, कारणतावच्छेदकत्वमाकाशत्वम्, आकाशत्वञ्च सब्दसमवायिकारणतैव । तथाच—स्वावच्छेदकं स्वमेव प्राप्तम्, तच्चानुपपन्नम् । अवच्छेद्यावच्छेदकभावस्य भेदनियतत्वादित्याह—कवत्त्वादिकमिति । शब्दसमवायिकारणता कवति, शब्दसमवायिकारणतावच्छेदकत्वं कवत्त्वम्, नतु आकाशत्वं येन शब्दसमवायिकारणतैवावच्छेदिका स्यादिति भावः ।

† यदि घटत्वावच्छिन्नघटनिष्ठजन्यतानिरूपितजनकता कुलालत्वेन स्वीक्रियते तदा तु कुलालपितुरपि कुलालत्वेन जनकत्वात् कारणत्वं निरावाधमिति भावः ।

(का०) अतिरिक्तमथापि यद्भवेन्नियतावश्यकपूर्वभाविनः ॥२०॥

(मुक्ता०) पञ्चममन्यथासिद्धमाह--अतिरिक्तमिति । अवश्यक्लृप्तनियतपूर्ववर्तिन एव कार्यसम्भवे तद्भिन्नमन्यथासिद्धमित्यर्थः । अत एव प्रत्यक्षे महत्त्वं कारणम्, अनेकद्रव्यत्वमन्यथासिद्धम् । तत्र हि महत्त्वमवश्यं क्लृप्तं तेनाऽनेकद्रव्यवत्त्वमन्यथासिद्धम् । नच वैपरीत्ये किं विनिगमकमिति वाच्यम्, महत्त्वत्वजातेः कारणतावच्छेदकत्वे लाघवात् ॥ २० ॥

(प्रभा०) पञ्चममन्यथासिद्धं दर्शयति—"अतिरिक्तमिति"—इति । अस्यायमर्थः—नियतः=व्यापकः, आवश्यकः=यदन्तरेण कार्यसिद्धिर्नैव जायते । नियतश्चासावावश्यकः पूर्वभावी चेति कर्मधारयः, तस्य नियतावश्यकपूर्वभाविनः । कारिकास्थपदस्यार्थमाह—"अवश्यक्लृप्तनियतपूर्ववर्त्तिन"—इति । एतस्माद् अतिरिक्तं भिन्नं सर्वमपि अन्यथासिद्धमेव । नियतावश्यकपूर्वभाविभिन्नं यत्स पञ्चमोऽन्यथासिद्ध इत्यर्थः । इदमेवान्यथासिद्धस्य सामान्यं लक्षणम् । अनेनैव गतार्थत्वे इतरेषाम्प्रपञ्चः शिष्यबुद्धिवैशद्यार्थः । उदाहरणं यथा—रासभ इति । यद्व्यक्तिं (घटं) प्रति रासभस्य पूर्वभावोऽस्ति, तत्रापि सिद्धकारणभावैर्दण्डादिभिरेव तद्धटव्यक्तेरपि सम्भवोऽतो दैवादागतो रासभो घटोत्पत्तेः पूर्वक्षणे विद्यमानोऽपि अन्यथासिद्ध एव । यावद्धटव्यक्तिम्प्रतिदण्डादीनां कारणताया व्यापकत्वादिति भावः ।

अत्र अन्यथासिद्धसामान्यलक्षणे यदि नियतेति पदं न दीयेत तदा रासभे, आवश्यकेति नोच्येत तदा आकाशे, पूर्वभावीति न निवेश्येत तदा स्वस्मिन्=तद्धटादिव्यक्तौ अतिव्याप्तिः स्याद् अतस्तत्तद्वारणाय तत्तत्पदनिवेशो बोध्यः ।

एवञ्च—"अन्यथासिद्धिशून्यत्वे सति कार्यनियतपूर्ववृत्तित्वं कारणत्वम्" इति कारणसामान्यलक्षणम्फलितम् । अत्र कारणसामान्यलक्षणे अनियतरासभादिवारणाय "नियत"पदम् । कार्यवारणाय "पूर्व"—इतिपदम् ।

पञ्चमान्यथासिद्धेनैव सर्वेषां गतार्थतां स्पष्टयितुमाह—"अत एव"—इति । अनेकद्रव्यत्वम्=अनेकद्रव्यसमवेतत्वं अणुपरिमाणवद्द्रव्यभिन्नद्रव्यत्वमिति यावत् । प्रत्यक्षे महत्त्वमवश्यं क्लृप्तम्, तेन विना प्रत्यक्षानुपपत्तेः ।

शङ्कागर्भितं समाधानग्रन्थमाह—"नच"—इति । अत्र अनेकद्रव्यत्वमेव प्रत्यक्षे कारणमास्तां महत्त्वमन्यथासिद्धं स्यात् एकीयपक्षसाधिकायाः युक्तेरभावादिति पूर्वपक्षः । वस्तुतस्तु—अनेकद्रव्यत्वं प्रत्यक्षम्प्रति व्यभिचारि द्व्यणुके तस्य सत्त्वेऽपि प्रत्यक्षाभावात् । तेन वैपरीत्ये किं विनिगमकमित्यादिग्रन्थश्चिन्त्यः ।

❀ अनेकद्रव्यत्वञ्चेत् प्रत्यक्षे कारणं तर्ह्यनेकद्रव्यत्वत्वं कारणतावच्छेदकम्भविष्यति,

* अनेकानि द्रव्याणि कारणतया यस्य तदनेकद्रव्यम्, तस्य भावः अनेकद्रव्यत्वम् । "अनेकद्रव्यवत्त्व"मिति तु पाठान्तरम् ।

महत्त्वस्य कारणत्वे तु महत्त्वत्वं कारणतावच्छेदकं लघुधर्मः । तेन कारणतावच्छेदकस्य शरीरकृतं लाघवमेव महत्त्वस्य कारणत्वे अनेकद्रव्यत्वस्य चान्यथासिद्धत्वे गमकम् (विनिगमकम्, एकीयपक्षतासाधकम्) इतिसमस्तोत्तरग्रन्थार्थः ।

नव्यास्तु—"लघुनियतपूर्ववर्त्तिन एव कार्यसम्भवे तद्भिन्नमन्यथासिद्धमित्यनुगतैकलक्षणेन एकविधमेवान्यथासिद्धमाचक्षते । इतरे प्रकाराः शिष्यबुद्धिवैशद्यार्थाः सन्तीत्याहुः । तेन प्रकारभेदः प्राचामेवेष्ट इति सिद्धम् ।

इदन्तु बोध्यम्—त्रिविधं लाघवम्भवति शरीरकृतम्, उपस्थितिकृतम्, सम्बन्धकृतञ्चेति । तत्र प्रत्यक्षम्प्रत्यनेकद्रव्यत्वापेक्षया महत्त्वस्य कारणतायां शरीरकृतं लाघवम् । गन्धम्प्रति रूपप्रागभावापेक्षया गन्धप्रागभावस्य कारणत्वे उपस्थितिकृतं लाघवम् । गन्धस्य प्रतियोगिनः रूपापेक्षया शीघ्रमुपस्थितेः । घटम्प्रति दण्डत्वदण्डरूपाद्यपेक्षया दण्डादेः कारणत्वे सम्बन्धकृतं लाघवम् । दण्डस्य संयोगसम्बन्धः प्रथममुपस्थितः दण्डत्वादीनान्तु स्वसमवायिदण्डसंयोगपरम्परा गुरुभूतैव, विलम्बेनोपस्थितिमत्त्वादिति भावः ॥ २० ॥

(का०) एते पञ्चान्यथासिद्धा दण्डत्वादिकमादिमम् ।
घटादौ दण्डरूपादि द्वितीयमपि दर्शितम् ॥२१॥
तृतीयं तु भवेद्व्योम कुलालजनकोऽपरः ।
पञ्चमो रासभादिः स्यादेतेष्वावश्यकस्त्वसौ ॥२२॥

(मुक्ता०) रासभादिरिति । यद्यपि यत्किञ्चिद्घटव्यक्तिम्प्रति रासभस्य नियतपूर्ववर्तित्वमस्ति, तथापि घटजातीयं प्रति सिद्धकारणभावैर्दण्डादिभिरेव तद्व्यक्तेरपि सम्भवे रासभोऽन्यथासिद्ध इति भावः । एतेष्विति । एतेषु पञ्चस्वन्यथासिद्धेषु मध्ये पञ्चमोऽन्यथासिद्ध आवश्यकः, तेनैव परेषां चरितार्थत्वात् । तथाहि—दण्डादिभिरवश्यक्लृप्तनियतपूर्ववर्तिभिरेव कार्यसम्भवे दण्डत्वादिकमन्यथासिद्धम् । नच वैपरीत्ये किं विनिगमकमिति वाच्यम्, दण्डत्वस्य कारणत्वे दण्डघटितपरम्परायाः सम्बन्धकल्पने गौरवात् । एवमन्येषामप्यनेनैव चरितार्थत्वं सम्भवतीति ॥ २१, २२ ॥

(प्रभा०) अन्यथासिद्धानां क्रमेण उदाहरणानि परममूले—"एते"—इति । "रासभादिः"—इति । रासभो गर्दभः । आदिना शकटादिपरिग्रहः । यद्यपीत्यादिः सर्वो ग्रन्थः विंशतिकारिकाया मुक्तावलीप्रभयैव प्रकाशितार्थो वेदितव्य इति कृतं पिष्टपिष्ट्या । तेन=पञ्चमेनान्यथासिद्धेन । परेषाम्=दण्डत्वादीनाम् । चरितार्थत्वात्=उक्तरीत्या सङ्ग्रहादित्यर्थः ।

कारणत्वप्रसङ्गे इदमपरमप्यनुसन्धेयम्—सामान्यतः कारणं द्विविधं * साधारणमसाधारणञ्चेति। कार्यमात्रम्प्रति यत्कारणं तत्साधारणम्। यथा—दिक्कालादृष्टादि। कार्यविशेषम्प्रति यत्कारणं तदसाधारणम्। यथा—पटम्प्रति तन्त्वादि। यथा वा—घटम्प्रति कपालादि। अन्योऽपि विशेषः—यदेका कारणता समुदायविश्रान्ता। यथा—घटम्प्रति दण्डादिनिष्ठा कारणता। इयमेव "दण्डचक्रादिन्यायेन कारणता" इत्युच्यते, दण्डादिष्वन्यतमाभावे घटानुत्पत्तेः। एका च प्रत्येकविश्रान्ता। यथा—वह्निम्प्रति तृणारणिमणिसंयोगनिष्ठा कारणता। इयमेव "तृणारणिमणिन्यायेन कारणता" अर्थात् तृणादिष्वन्यतमेनापि वह्निरुत्पद्यते। एवञ्च—तार्णाऽतार्णवह्नौ वैजात्यमित्यपि केचित्॥ २१, २२॥

(का०) **समवायिकारणत्वं द्रव्यस्यैवेति विज्ञेयम्।**

(प्रभा०) † साधर्म्यप्रसङ्गात्पुनस्तदेवाह परममूले—"समवायिकारणत्वम्" इति। मुक्तावल्यां "समवायीति स्पष्टम्" इत्युक्तम्। एवशब्दोऽवधारणार्थकः, तेन समवायिकारणं द्रव्यमात्रस्यैव साधर्म्यमित्युक्तम्भवति।

(का०) **गुणकर्ममात्रवृत्ति ज्ञेयमथाप्यसमवायिहेतुत्वम्॥२३॥**

(मुक्ता०) **गुणकर्मेति। असमवायिकारणत्वं गुणकर्मभिन्नानां वैधर्म्यं नतु गुणकर्मणोः साधर्म्यमित्यत्र तात्पर्यम्। अथवा असमवायिकारणवृत्तिसत्ताभिन्नजातिमत्त्वं तदर्थः। तेन ज्ञानादीनामसमवायिकारणत्वविरहेऽपि न क्षतिः॥ २३॥**

(प्रभा०) मूले असमवायिकारणं गुणकर्मणोः साधर्म्यमित्युक्तम्, परं तन्न युक्तम्, आत्मविशेषगुणा न कस्यापि असमवायिकारणं तस्माज्ज्ञानादिविशेषगुणेष्वव्याप्तिः स्यादिति समवायिकारणलक्षणप्रसङ्गे प्रागुक्तम्। अतो मूलस्यार्थं वैधर्म्यपरतया योजयति—"असमवायिकारणत्वम्"—इति।

क्रमत्यागभीतिं मत्वा साधर्म्यविवक्षयापि यथा नाव्याप्तिदोषः तथा जातिघटितं साधर्म्यमाह—"अथवा"—इति। अयमत्रार्थः—असमवायिकारणं गुणे कर्मणि वा वृत्तिर्यस्याः सा सत्ताभिन्ना जातिः सत्ताया व्याप्या अपरा जातिः गुणत्वकर्मत्वरूपा, तादृशजातिमत्त्वं गुणकर्मणोः साधर्म्यं विवक्षितम्। एवञ्च—गुणत्वं जातिस्तु असमवायिकारणताशून्येष्वपि ज्ञानादिषु गुणेषु वर्त्तते इति नाव्याप्तिदोषगन्धोऽपि इत्यभिप्रायेण व्याचष्टे—"तेन"—इत्यादि।

---

* अत्रेदं ज्ञेयम्—अष्टौ साधारणकारणानि—ईश्वरः, तज्ज्ञानेच्छाकृतयः, प्रागभावः, कालः, दिक्, अदृष्टम्, (धर्माऽधर्मौ) च इति (वाक्यवृत्तौ)। केचित्तु—प्रतिबन्धकसामान्याभावोऽपि नवमं साधारणकारणमङ्गीचक्रुरिति न्यायकोशे।

† प्रासङ्गिकं समाप्य प्रकृतमाचष्टे—"समवायिकारणत्वम्" इति।

असमवायिकारणवृत्तिसत्ताभिन्नजातिमत्त्वम्। अस्य पदकृत्यमित्थं ज्ञेयम्—यदि सत्ताभिन्नजातिमत्त्वमित्येवोच्यते तदा द्रव्येऽतिव्याप्तिः द्रव्यमपि सत्ताभिन्न-द्रव्यत्वजातिमत् तत्रातिव्याप्तिवारणाय "असवायिकारणवृत्ती"त्युक्तम्। द्रव्यत्वं जातिर्नासमवायिकारणवृत्तिः, किन्तु समवायिकारणवृत्तिः। एवं तत्रैव सत्ताजाति-मादायातिव्याप्तिनिवृत्तये सत्ताभिन्नेत्युक्तम्। द्रव्यगुणान्यतरत्वमादाय तत्रैवातिव्याप्ति-परासनाय "जाती"त्युक्तम्। अत्र—वृत्तित्वं जातिमत्त्वञ्च समवायेन विवक्षितं तेन गुणादौ द्रव्यत्वस्य कालिकेन वृत्तित्वात् द्रव्यत्वस्य कालिकेन गुणत्वादिमत्त्वात् द्रव्ये नातिव्याप्तिः॥ २३॥

**(का०) अन्यत्र नित्यद्रव्येभ्य आश्रितत्वमिहोच्यते।**

**(मुक्ता०) नित्यद्रव्याणि परमाण्वाकाशादीनि विहायाश्रितत्वं साधर्म्यमित्यर्थः। आश्रितत्वन्तु समवायादिसम्बन्धेन वृत्तिमत्त्वम्। विशेषणतया नित्यानामपि कालादौ वृत्तेः।**

(प्रभा०) परममूले—"इह"—इति। इह=सप्तपदार्थमध्ये। "नित्य-द्रव्येभ्य"—इति। पृथिव्यप्तेजोवायूनाम्परमाणवः आकाशादिपञ्चकञ्चेति नव नित्य-द्रव्याणि। तेभ्योऽन्यत्र तानि विहाय इत्यर्थः। "आश्रितत्वम्"—इति। अनित्य-द्रव्याणां गुणादीनाञ्च आश्रितत्वं साधर्म्यम्। उक्तञ्च प्रशस्ते—"द्रव्याश्रितत्वञ्चान्यत्र नित्यद्रव्येभ्यः" इति।

ननु—कालिकसम्बन्धेन नित्यद्रव्याण्यपि वृत्तिमन्ति, तत्कथं तानि विहाये-त्युक्तमितीमां शङ्काम्पराणुदन्नेव आह—"आश्रितत्वन्तु"—इति। सर्वाधारता-नियामककालिकविशेषणतादिसम्बन्धातिरिक्तसम्बन्धेन वृत्तिमत्त्वं नित्यद्रव्येतरेषां साधर्म्यमित्यर्थः।

अयम्भावः—कालो देशश्च (दिक्च) एतौ सर्वेषां विशेषणतासम्बन्धेना-धारभूतौ। एतद्द्वारकः सम्बन्धः सर्वस्य सर्वत्र वर्त्तते। कालद्वारको यः सम्बन्धः स "स्वाधिकरणकालवृत्तित्वम्" इति. दिग्द्वारको यः सम्बन्धः स "स्वाधिकरण-देशवृत्तित्वम्" इति च यथाक्रममुच्यते। तेन नित्यानि द्रव्याणि यद्यपि उक्तोभय-सम्बन्धेन * वृत्तिमन्ति प्रतीयन्ते, परं वस्तुतस्तथा न सन्ति। यतः समवायः संयोगश्चेति द्वावेव सम्बन्धौ मुख्यतया † वृत्तिनियामकौ। तेनात्र "आश्रितत्व"पदेन समवायसंयोगान्यतरसम्बन्धेन वृत्तिमत्त्वविवक्षायां न कालिकदैशिकसम्बन्धेन वृत्ति-मत्सु नित्येष्वतिव्याप्तिरिति सर्वं हृदि कृत्वा आह—"आश्रितत्वम्" इत्यारभ्य "वृत्तेः" इत्यन्तम्।

---

* आधेयताधर्मवन्ति।

† वृत्तेः=आधेयतायाः। नियामकौ=अवच्छेदकौ गमकाविति तावत्।

(का०) क्षित्यादीनां नवानान्तु द्रव्यत्वगुणयोगिता ॥२४॥

(मुक्ता०) इदानीं द्रव्यस्यैव विशिष्य साधर्म्यं वक्तुमारभते—"क्षित्यादीनाम्"—इति । स्पष्टम् ॥ २४ ॥

(प्रभा०) "तु"शब्दः द्रव्यभिन्नसाधर्म्यप्रकरणभेदकः । क्षित्यादीनां सर्वेषां द्रव्यत्ववत्त्वं गुणवत्त्वञ्च साधर्म्यमित्यर्थः ॥ २४ ॥

(का०) क्षितिर्जलं तथा तेजः पवनो मन एव च ।
परापरत्वमूर्तत्वक्रियावेगाश्रया अमी ॥२५॥

(मुक्ता०) पृथिव्यप्तेजोवायुमनसाम्परत्वापरत्ववत्त्वं मूर्तत्वं क्रियावत्त्वं वेगवत्त्वञ्च साधर्म्यम् । नच यत्र घटादौ परत्वमपरत्वं वा नोत्पन्नं तत्राव्याप्तिरिति वाच्यम्, परत्वादिसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात् । मूर्तत्वमपकृष्टपरिमाणवत्त्वम्, तच्च तेषामेव, गगनादिपरिमाणस्य कुतोऽप्यपकृष्टत्वाभावात् । पूर्ववत् कर्मवत्त्वम् । कर्मसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वम्, वेगवत्त्वं वेगवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वञ्च बोध्यम् ॥ २४, २५ ॥

(प्रभा०) पृथिव्यादिपञ्चानां साधर्म्यमाह—"पृथिवी"—इति । निरुक्तस्य साधर्म्यस्य अव्याप्तिमाशङ्क्य निरस्यति—"नच" इत्यारभ्य "विवक्षितत्वात्" इत्यन्तेन ग्रन्थेन । अयमर्थः—द्विविधे परत्वापरत्वे दिक्कृते कालकृते चेति गुणप्रस्तावे स्फुटी-भविष्यति । तत्र दिक्कृतयोस्तयोः "इदमस्मात् सन्निकृष्टम्" इत्यपेक्षाबुद्धिर्हेतुः । अयमस्मात्कनिष्ठः=अल्पतरकालसम्बद्धः, अयमस्माज्ज्येष्ठः=बहुतरकालसम्बद्धः इत्यपेक्षा-बुद्धिः कालकृतयोस्तयोर्हेतुः । परं यत्र=उत्पन्नविनष्टे घटादिपदार्थे इयम्बुद्धिर्नोत्पन्ना (यदेयम्बुद्धिः घटादिपदार्थं न विषयीकरोति) तदा तत्र परत्वापरत्वयोरसत्त्वादव्याप्तिरेव साधर्म्यलक्षणस्येतिशङ्काकर्तुराशयः ।

सिद्धान्ती परिहरति—"परत्वादि"—इति । परत्वादिसमानाधिकरणा=यत्र परत्वापरत्वे यदाकदाचिद्भवतः तस्मिन्नेवाधिकरणे वर्त्तमाना या द्रव्यत्वस्य साक्षाद्व्याप्या जातिः पृथिवीत्वं तेजस्त्वमित्यादिः, तादृशजातिमत्त्वं विवक्षितम् । "परत्वा-परत्ववत्त्व"पदेन इति नाव्याप्तिर्घटादौ । यतः तादृशापेक्षाबुद्ध्या अविषयीक्रियमाणेष्वपि घटादौ पृथिवीत्वादिजातिर्वर्त्तत एव ।

आत्मन्यतिव्याप्तिवारणाय समानाधिकरणान्तम् । तत्रैव सत्तामादाय अतिव्याप्तिवारणाय "द्रव्यत्वव्याप्य"—इति । द्रव्यत्वव्याप्यत्वं नाम द्रव्यत्वापेक्षया न्यूनदेशवृत्तित्वम्, अपरजातित्वमित्यर्थः । मूर्तत्वं निर्वक्ति—मूर्तत्वम्"—इति ।

"अपकृष्ट"—इति । परिच्छिन्नपरिमाणवत्त्वमित्यर्थः । तेन परमाण्वादौ नाव्याप्तिः । नव्यास्तु—क्रियाजनकतावच्छेदको जातिविशेषो मूर्त्तत्वमित्याहुः । इयत्तापरिच्छिन्नपरिमाणयोगो मूर्त्तत्वमिति तु प्राञ्चः । गगनादिषु मूर्त्तव्यवहारं वारयितुमवधारयति—"तच्चैषामेव"—इति । क्षित्यादिपञ्चानामेवेत्यर्थः । यत्र घटादौ क्रिया नोत्पन्ना, कन्दुकादौ वा वेगो नोत्पन्नः, तत्रातिव्याप्तिवारणाय पूर्वोक्तं जातिघटितसाधर्म्यलक्षणप्रकारमतिदिशति—"पूर्ववद्"—इति । परत्वादिवदित्यर्थः । विवरणप्रकारः पूर्ववदूहनीयः । ग्रन्थगौरवभयान्न प्रतानितः ॥ २५ ॥

(का०) कालखात्मदिशां सर्वगतत्वम्परमं महत् ।

(मुक्ता०) कालाकाशात्मदिशां सर्वगतत्वं * सर्वमूर्तसंयोगित्वं परममहत्त्वञ्च । परममहत्त्वत्वञ्जातिविशेषः, † अपकर्षानाश्रयपरिमाणत्वं वा ।

(प्रभा०) "काल"—इति । कालादीनां ‡ सर्वगतत्वम्परममहत्त्वञ्च साधर्म्यम् । स्पष्टमन्यत् ।

(का०) क्षित्यादि पञ्च भूतानि—

(मुक्ता०) क्षित्यादीति । पृथिव्यप्तेजोवाय्वाकाशानाम्भूतत्वम् । तच्च बहिरिन्द्रियग्राह्यविशेषगुणवत्त्वम् । अत्र ग्राह्यत्वं लौकिकप्रत्यक्षस्वरूपयोग्यत्वम्बोध्यम् । तेन "ज्ञातो घट" इत्यादिप्रत्यक्षे ज्ञानस्याप्युपनीतभानविषयत्वात्तद्वति आत्मनि नातिव्याप्तिः । नवा प्रत्यक्षाविषयरूपादिमति परमाण्वादावव्याप्तिः, तस्यापि स्वरूपयोग्यत्वात् । महत्त्वलक्षणकारणान्तरासन्निधानाच्च न प्रत्यक्षम् । अथवा—आत्मवृत्तिविशेषगुणवत्त्वं तत्त्वम् ।

(प्रभा०) "क्षित्यादीति"—इति । पृथिव्यादिपञ्चानाम्भूतत्वं साधर्म्यमित्यर्थः । भूतत्वं लक्षयति—"तच्च"—इति । "बहिः"—इति । बहिरिन्द्रियाणि=घ्राणरसनचक्षुस्त्वक्श्रोत्राणि पृथिव्यादिपञ्चभूतकार्याणि, तेषां ग्राह्यो विषयो यो विशेषगुणः यथाक्रमं गन्धादिरेव, तादृशविशेषगुणवत्त्वमेव भूतत्वम् । पृथिव्याः गन्धः, अपां रसः, तेजसो रूपम्, वायोः स्पर्शः, आकाशस्य शब्दो विशेषगुण इत्यग्रे मूल एव स्फुटीभविष्यति । केचित्सामान्यगुणाः केचित् विशेषगुणा इत्यप्यग्र एव विशदम् । एतच्च—"घ्राणरसनचक्षुस्त्वक्श्रोत्राणीन्द्रियाणि भूतेभ्यः" । "पृथिव्यप्तेजोवायुराकाशमिति भूतानि" (न्या० सू० १।१।१२, १३) । इत्यार्षवचनमूलकम् ।

---

* यावन्मूर्त्तपदार्थेषु संयोगसम्बन्धेन सम्बद्धत्वम् ।

† अविभुवृत्तिपरिमाणवत्त्वमित्यर्थः तेन परमाणौ नातिव्याप्तिः । केचित्तु—क्रियाजनकताऽवच्छेदकं मूर्त्तत्वं जातिरित्याहुः ।

‡ कालस्य सर्वगतत्वम् अतीतादिव्यवहारस्य सार्वत्रिकत्वात् ।

भूतलक्षणे "ग्राह्य"पदं दत्तम्, तेन यदि ज्ञानविषयमात्रं विवक्षितं तदात्मनि अतिव्याप्तिः। कथमिति चेत्? शृणु—"अयं घटः" इतिज्ञानोत्तरं भवति हि "मया घटो ज्ञात" इत्याकारकं ज्ञानमपि। आद्यं व्यवसायज्ञानं द्वितीयमनुव्यवसायज्ञानमित्युच्यते। तत्र यदाद्यम्- -"अयं घटः" इत्याकारकं व्यवसायज्ञानं तद् द्वितीयस्मिन् अनुव्यवसायज्ञाने="ज्ञातो घट" इत्याकारके प्रकारीभूतम्=विशेषणभावं प्राप्तम्भवति, आद्यस्य द्वितीयेन विषयीक्रियमाणत्वात्, द्वितीयस्य च आद्येन व्यावर्त्यत्वात्, आद्यस्य च व्यावर्त्तकत्वात्, व्यावर्त्तकञ्च विशेषणमुच्यते। परन्तु यदाद्यम् "अयं घट" इत्याकारकं, तल्लौकिकेन संयोगसन्निकर्षेण चक्षुरिन्द्रियजन्यमपि "चक्षुः*संयुक्तमनःसंयुक्तात्मसमवेतज्ञानविषयत्वेन" अलौकिकेन ज्ञानलक्षणाख्येन सम्बन्धेन घटांशे प्रत्यक्षरूपतया भासते। अर्थात् घटविषयकं ज्ञानमपि चक्षुर्ग्राह्यतया भासते। तादृशज्ञानात्मकविशेषगुणवांश्चात्माऽपि "भूत"पदवाच्यः स्यात्, यतो दर्शितरीत्याऽलौकिकेन सम्बन्धेनापि घटज्ञानं बहिरिन्द्रियजन्यमेव तद्वांश्चात्मा विशेषगुणवान् शक्यतेऽभिधातुमिति स्यादेव भूतलक्षणस्यात्मन्यतिव्याप्तिः। अस्याः परिहाराय लक्षणान्तःपाति-"ग्राह्य"पदस्य विवक्षितमर्थमाह—"ग्राह्यत्वम्' —इत्यादिना। उपनीतभानविषयत्वात्=ज्ञानलक्षणासन्निकर्षविषयत्वादित्यर्थः। "**लौकिकप्रत्यक्ष**"—इति—

लौकिकं यत्प्रत्यक्षं वक्ष्यमाणचाक्षुषादिभेदभिन्नं ज्ञानलक्षणाद्यलौकिकप्रत्यक्षतोऽप्यतिरिक्तं तत्स्वरूपयोग्यत्वं नाम तद्विषयत्वमेव ग्राह्यत्वम्बोध्यम्। अर्थात् बहिरिन्द्रियजन्यमपि यदि लौकिकेन संयोगसंयुक्तसमवायादिसन्निकर्षेण जन्यम्भवति तदेव (तदैव) ग्राह्यत्वपदेन विवक्षितं (विवक्ष्यते) नत्वलौकिकसन्निकर्षजन्यमपीति भावः।

अक्षराणि त्वेवं योजयितव्यानि—"ज्ञातो घटः" इत्याकारकज्ञानस्यापि † **उपनीतभानविषयत्वात्** उपनीतस्य=ज्ञानलक्षणासन्निकर्षेण ज्ञातस्य यद्भानं

---

* घटसंयुक्तं यच्चक्षुः, तत्संयुक्तम्मनः, तादृशघटसंयुक्तचक्षुःसंयुक्तमनःसंयुक्तो य आत्मा, तस्मिन्नात्मनि समवेतं समवायसम्बन्धेन वर्त्तमानं यज्ज्ञानं "ज्ञातो घट" इत्याकारकं घटज्ञानविषयकमनुव्यवसायात्मकं ज्ञानं तादृशस्य ज्ञानस्य विषयता घटज्ञानेऽपि वर्त्तते। कुतः? स्वसंयुक्तमनःसंयुक्तात्मसमवेतज्ञानविषयत्वसम्बन्धेन बहिरिन्द्रियग्राह्यत्वं ज्ञानं विवक्षितम्। अर्थात् स्वं=चक्षुः तत्संयुक्तं मनः, तत्संयुक्त आत्मा, तत्समवेतं "ज्ञातो घट" इति ज्ञाने तद्विषयत्वम् "अयं घट" इति ज्ञाने, एवं बहिरिन्द्रियग्राह्यविशेषगुणज्ञानवत्यात्मनि भूतत्वप्रसक्तिः, अतस्तद्वारणाय **लौकिकेति**। अयमलौकिको ज्ञानलक्षणसन्निकर्षोऽग्रे मूल एव निरूपितः, तद्व्याख्यायामधिकं स्फुटीकरिष्यामः।

† उपनीयते उपस्थाप्यते ज्ञानविषयतामापद्यते ज्ञानमनेनेति **उपनीतम्**=अलौकिको ज्ञानलक्षणासन्निकर्षः (सम्बन्धः)। इदञ्चोपनीतभानम्प्रत्यक्ष एव तिष्ठति नानुमित्यादावित्यपि न विस्मर्त्तव्यम्।

विषयिता तद्विषयत्वात्=तन्निरूप्यत्वात्, तद्वति=तादृशालौकिकसन्निकर्षजन्यघटज्ञान-विषयकज्ञानवति आत्मनि प्रमातरि (समवायेन ज्ञानाधिकरणे) नातिप्रसङ्गः= नातिव्याप्तिः। मञ्जूषाकारस्तु—"उपनीतः ज्ञानलक्षणाश्रयः तन्निष्ठं भानमुपनीत-भानम्। भानशब्दश्च विषयतापरः। "अयं घट" इति ज्ञाने घटो भाति घटो भासते इत्यादौ भातिभासतिभ्यां विषयताया एव प्रत्यायनात्" इति व्याचख्यौ ।

परमाणुरूपादेरप्रत्यक्षत्वात् परमाणौ भूतत्वलक्षणाऽव्याप्तिमाशङ्क्य निरस्यति—"नच"—इत्यादिना । प्रत्यक्षाऽविषयरूपादिमति=प्रत्यक्षस्य अविषयो यो रूपादि-विशेषगुणवान् परमाण्वादिः तत्रेत्यर्थः । अव्याप्तिः=लक्ष्यैकदेशाऽवृत्तित्वरूपो लक्षण-दोषः । तस्यापि=परमाण्वादेरपि । "स्वरूपयोग्यत्वात्"—इति । अयमाशयः—यद्यप्यतीन्द्रियपरमाण्वादीनां रूपादिकं न प्रत्यक्षन्तथापि प्रत्यक्षस्वरूपयोग्यता तत्र वर्त्तते, कथमन्यथा त्रसरेण्वादौ रूपादेः प्रत्यक्षं सम्भवति । यथा—चारण्यस्थ-दण्डो यद्यपि न प्रकृतघटकारणं दूरे पतितत्वात्, तथापि तत्र घटोत्पादनयोग्यता वर्त्तते । एवमत्रापि प्रत्यक्षस्वरूपयोग्यतावत्त्वात्परमाण्वादावपि भूतत्वलक्षणं वर्त्तत एवेति न दोषः ।

प्रत्यक्षस्वरूपयोग्यतायां वर्त्तमानायां कुतो न परमाण्वादेः प्रत्यक्षमिति शङ्कायां कारणमाह—"महत्त्व"—इति । महत्त्वलक्षणं यत् कारणान्तरं तस्य असन्निधानात् अभावान्न प्रत्यक्षत्वमित्यर्थः । नहि रूपवत्त्वमेव प्रत्यक्षताप्रयोजकम्, अपितु महत्त्वमपि प्रत्यक्षसामग्रीकुक्षिप्रविष्टम्, तदभावादेव परमाण्वादेर्न प्रत्यक्षमिति भावः ।

एवं कृतेऽपि चक्षुरिन्द्रियगतरूपादेरनुद्भूतस्य न प्रत्यक्षस्वरूपयोग्यतेति तत्र भूतत्वलक्षणाव्याप्तिरेवेति मत्वा कल्पान्तरमाह—"अथवा"—इति । आत्मावृत्तीति—आत्मनि न वृत्तिर्येषां तादृशा ये विशेषगुणा रूपाद्याः, तद्वत्त्वं भूतत्वमिति भूतलक्षणम् । तथाच पूर्वलक्षणसर्वक्लेशनिवृत्तिरिति भावः ।

(का०) चत्वारि स्पर्शवन्ति हि ॥२६॥

(मुक्ता०) चत्वारीति । पृथिव्यप्तेजोवायूनां स्पर्शवत्त्वम् ॥२६॥

(प्रभा०) "चत्वारि"—इति । स्पष्टम् ॥ २६ ॥

(का०) द्रव्यारम्भश्चतुर्षु स्याद्—

(मुक्ता०) पृथिव्यप्तेजोवायुषु चतुर्षु द्रव्यारम्भकत्वम् । नच द्रव्या-नारम्भके घटादावव्याप्तिः, द्रव्यसमवायिकारणवृत्तिद्रव्यत्वव्याप्यजाति-मत्त्वस्य विवक्षितत्वात् ।

(प्रभा०) द्रव्यारम्भकत्वं नाम द्रव्यसमवायिकारणत्वमित्यर्थः । घटादा-वव्याप्तिमाशङ्क्य जातिघटितलक्षणेन परिहारं मन्वानः "नच"—इत्यादि ग्रथ्नाति ।

शब्दादिवद् विशेषगुणः परं नासावव्याप्यवृत्तिः । किन्तु स्वाश्रये सर्वदेशावच्छेदेन वर्त्तत इत्यर्थः । शिष्टं स्पष्टम् ।

(मुक्ता०) नच रूपादीनामपि कदाचित्तृतीयक्षणे नाशसम्भवात् क्षणिकविशेषगुणवत्त्वं क्षित्यादावतिव्याप्तमिति वाच्यम्, चतुःक्षणवृत्तिजन्यावृत्तिजातिमद्विशेषगुणवत्त्वस्य तदर्थत्वात् । अपेक्षाबुद्धिः क्षणत्रयं तिष्ठति, क्षणचतुष्टयन्तु न किमपि जन्यज्ञानादिकं तिष्ठति। रूपत्वादिकन्तु क्षणचतुष्टयस्थायिन्यपि रूपादौ वर्तत इति तद्व्युदासः । ईश्वरज्ञानस्य चतुःक्षणवृत्तित्वाज्ज्ञानत्वस्य तद्वृत्तित्वाज्जन्येत्युक्तम । यद्याकाशजीवात्मनोः साधर्म्यन्तदा जन्येति न देयम्, द्वेषत्वादिकमादाय लक्षणसमन्वयात्। परममहत्त्वस्य तादृशगुणत्वाच्च चतुर्थक्षणे द्वित्वादीनामपि नाशाभ्युपगमाद् द्वित्वादीमपि तथात्वात्तद्वारणाय विशेषेति । त्रिक्षणवृत्तित्वं वा वाच्यम् । द्वेषत्वादिकमादायात्मनि लक्षणसमन्वयः ॥२७॥

(प्रभा०) यदा कदाचिद् यस्य कस्यापि रूपादिविशेषगुणस्य तृतीयक्षणे नाशो जातस्तदा तादृशक्षणिकविशेषगुणवत्त्वं पृथिव्यादावप्यायातमिति तत्रातिव्याप्तिमाशङ्क्य समाधत्ते "नच" इत्यारभ्य "तदर्थत्वात्" इत्यन्तेन ग्रन्थेन । "चतुःक्षणवृत्ति"—इति । अस्यायमर्थः—चतुःक्षणवृत्तीनि यानि जन्यानि घटादीनि रूपरसादीनि च, तेषु अवृत्तिः ( न वर्त्तमाना ) या जातिः "शब्दत्वम्" "ज्ञानत्वम्" वा इत्याकारा जातिः, तादृशजातिमान् यो विशेषगुणः शब्दो ज्ञानं वा, तद्वान् यथाक्रमं आकाशः आत्मा चेत्येवंविवक्षायां न पृथिव्यादिष्वतिव्याप्तिगन्धोऽपि । चतुःक्षणवृत्तित्वञ्चाधिककालोपलक्षणं नतु चतुःक्षणमात्रवृत्तित्वमेव ग्राह्यम्, तेन पञ्चक्षणवृत्तिघटादिपदार्थेष्वपि तादृशजातेरग्रह एवेति कदापि पृथिव्यादिषु नातिव्याप्तिसम्भावना ।

चतुःक्षणवृत्तिजन्येत्यादेः पदकृत्यं दर्शयितुम् "अपेक्षाबुद्धिः" इत्याद्यग्रिमं ग्रन्थमवतारयति । "अयमेक अयमेक इमौ द्वौ" इत्याकारा द्वित्वविषयिणी बुद्धिः "अपेक्षाबुद्धिः" । एतामन्तरा अन्यत् किमपि जन्यं ज्ञानं न त्रिक्षणपर्यन्तस्थायि भवति । चतुर्थक्षणे अपेक्षाबुद्धेर्नाशो जायते ।

रूपत्वादिका जातिस्तु चतुःक्षणोपलक्षिताधिककालपर्यन्तस्थायिष्वपि रूपादिषु वर्त्तत इति "चतुःक्षणवृत्ति"पदेन तद्वारणम्बोध्यम् । पृथिव्यादावतिव्याप्तिवारणमित्यर्थः । तद्व्युदास =रूपत्वजातिव्युदासः । तथाच—रूपत्वस्य चतुःक्षणवृत्तिजन्यावृत्तित्वाभावात् रूपत्वजातिमद्विशेषगुणवति घटादौ याऽतिव्याप्तिः सा निरस्तेति भावः ।

"जन्य"पदन्तु ईश्वरज्ञानसङ्ग्रहार्थम् । ईश्वरज्ञानमपि चतुःक्षणोपलक्षिताधिकालवर्त्ति नित्यत्वात् । यदि "जन्य"पदं न निवेश्येत तदा ईश्वरेऽव्याप्तिः स्यात् ।

अर्थात् चतुःक्षणवृत्ति ईश्वरीयज्ञानमप्यस्ति, परं तन्न जन्यम्, अतश्चतुःक्षणवृत्ति-जन्यावृत्ति ईश्वरीयज्ञानं तत्र ज्ञानत्वजातिरपि सङ्ग्रहीतुं शक्यते, तादृशजातिमान् विशेषगुणो ज्ञानं तद्वत्त्वं साधर्म्यम् । परमिदं साधर्म्यमाकाशजीवेश्वराणां त्रयाणामेव । जन्यज्ञानादिकमित्यत्र आदिपदेन इच्छादेः परिग्रहः ।

यदि तु कारिकास्थ"शरीरि"पदेन जीवात्मरूप एवार्थोऽभिप्रेतस्तदा "जन्य"-पदनिवेशो न कार्य इत्याशयेनाह—"यदि"—इति । **इदमुपलक्षणम्**—त्रिक्षण-वृत्तित्वमेव निवेशनीयं नतु चतुःक्षणवृत्तित्वमपीति बोध्यम् । **ननु**—ज्ञानत्वादे-रतादृशतया जीवे वा कथं लक्षणसमन्वय इत्यत आह—**द्वेषत्वेत्येके** । अन्येत्वेव-मवतारयन्ति—ननु जन्यत्वाप्रवेशे ज्ञानत्वेच्छात्वप्रयत्नत्वजातीनां * चतुःक्षणवृत्त्य-वृत्तित्वाभावात् कथं लक्षणसमन्वय इत्यत आह—**द्वेषत्वादिकमिति** ।

**अयम्भावः**—"चतुःक्षणवृत्त्यवृत्तिजातिमद्विशेषगुणवत्त्वम्" क्षणिकविशेष-गुणपदेन विवक्षितम् । चतुःक्षणवृत्तीनि यानि घटादीनि रूपादीनि च, तदवृत्तिर्या जातिः द्वेषत्वादिः, तद्वान् यो विशेषगुणो द्वेषादिः शब्दश्च तद्वत्त्वमाकाशजीवात्मनामेव यथायोगमिति न पृथिव्यादिष्वतिप्रसक्तिरित्यभिप्रायवानाह—"**द्वेषत्वादिकमादाय लक्षणसमन्वयाद्**"—इति ।

"विशेष"पदप्रयोजनमाह—"**परममहत्त्वस्य**"—इत्यादिना । परममहत्त्वस्य तादृशगुणत्वात् इत्यस्यार्थः—चतुःक्षणवृत्तिजन्यावृत्तिजातिमद्गुणत्वादिति ।

**अयमाशयः**—चतुःक्षणवृत्तीनि यानि जन्यानि घटादीनि, तदवृत्तिर्या जातिः **परममहत्त्वत्वरूपा**, तद्वान् गुणः परममहत्त्वमेव, तादृशगुणवत्त्वं कालेऽपि वर्त्तत इत्यात्माकाशसाधर्म्यस्य कालेऽप्यतिप्रसक्तिः, तद्वारणाय "विशेष"पदं दत्तम् । परम-महत्त्वं सामान्यगुणो न विशेषगुण इत्यर्थः ।

एवमेव द्वित्वादिकमादाय घटादिष्वतिव्याप्तिरप्यनेन पदेन वारणीया । तथाहि—चतुःक्षणवृत्तिजन्यघटावृत्तिर्या जातिः द्वित्वत्वादिः, तद्वान् गुणो द्वित्वादिः, तादृश-गुणवान् घटादिरिति तेष्वतिव्याप्तिः स्यात् । "विशेष"पदनिवेशे तु नैव दोषः द्वित्वादीनां सामान्यगुणत्वात् । **द्वित्वादीनामपि** तथात्वात्=चतुःक्षणवृत्तिजन्यावृत्तिजातिमद्-गुणत्वादित्यर्थः ।

उपस्थितिकृतं लाघवमभिप्रेत्य "चतुःक्षणवृत्तित्व"स्थाने "त्रिःक्षणवृत्तित्व"पदं मन्वान आह—"**त्रिःक्षणवृत्तित्वम्**"—इति । ज्ञानत्वजातिस्थाने द्वेषत्वादिजाति-ग्रहणं कृत्वा लक्षणं समन्वेतव्यम् । तथाच—योजितमेव ॥ २७ ॥

**(का०) रूपद्रवत्वप्रत्यक्षयोगिनः प्रथमास्त्रयः ।**

---

* अस्मन्मते तु चिन्त्यमेतत् तथाकृतेऽपि तद्ग्रहादिति सूक्ष्ममीक्ष्यम् ।

(मुक्ता०) पृथिव्यप्तेजसां रूपवत्त्वम्, द्रवत्ववत्त्वम्, प्रत्यक्षविषयत्वञ्चेत्यर्थः। नच चक्षुरादीनाम्भर्जनकपालस्थवह्नेरूष्मणश्च रूपवत्त्वे किं मानमिति वाच्यम्, तत्रापि तेजस्त्वेन रूपानुमानात्। एवं वाय्वानीतपृथिवीजलतेजोभागानामपि पृथिवीत्वादिना रूपानुमानम्बोध्यम्। नच घटादौ द्रुतसुवर्णादिभिन्ने तेजसि च द्रवत्ववत्त्वमव्याप्तमिति वाच्यम्, द्रवत्ववद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात्। घृतजतुःप्रभृतिषु पृथिवीषु, जलेषु, द्रुतसुवर्णादौ तेजसि च द्रवत्वसत्त्वात्, तत्र च पृथिवीत्वादिसत्त्वात्तदादाय सर्वत्र लक्षणसमन्वयः। नच प्रत्यक्षविषयत्वम्परमाण्वादावव्याप्तमतिव्याप्तञ्च रूपादाविति वाच्यम्। चाक्षुषप्रत्यक्षविषयवृत्तिद्रव्यत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात्। आत्मन्यतिव्याप्तिवारणाय चाक्षुषेति।

(प्रभा०) परममूले—"रूप"—इति। द्वन्द्वान्तेतिन्यायेन योगिपदस्य प्रत्येकमन्वयः। रूपयोगित्वम्, द्रवत्वयोगित्वम्, प्रत्यक्षयोगित्वञ्च पृथिव्यादित्रयाणां साधर्म्यमित्यर्थः। तदेतद्व्याख्याति—"पृथिव्यप्तेजसाम्"—इत्यादिना। चक्षुरादिषु रूपवत्त्वे शङ्कामुत्थाप्य प्रमाणमाह—"नच" इत्यारभ्य "रूपानुमानात्" इत्यन्तेन ग्रन्थेन। निगदव्याख्यातो ग्रन्थः। अनुमानप्रकारश्चायम्—'चक्षुरिन्द्रियं रूपवत् तेजस्त्वात् सूर्यवत्। भर्जनकपालस्थो वह्निः रूपवान् तेजस्त्वात्" इत्यादि ज्ञेयम्। वाय्वानीतपृथिव्याद्यंशेषु रूपवत्तानुमानमतिदिशति—"एवम्"—इति। वाय्वानीतः पार्थिवभागो रूपवान् पृथिवीत्वात् घटवत्। वाय्वानीतो जलभागो रूपवान् जलत्वात् तटाकस्थजलवत्। वाय्वानीतो वह्नेर्भागो रूपवान् तेजस्त्वात् महानसीयवह्निवत्। इत्यादीन्यनुमानानि तत्र तत्र रूपवत्तासाधकानि ज्ञेयानि। घटादिपृथिव्यां द्रुतसुवर्णादिभिन्ने तेजसि द्रवत्वस्याव्याप्तिमाशङ्क्य जातिघटितेन लक्षणेन समाधत्ते—"नच" इत्यारभ्य "विवक्षितत्वात्" इत्यन्तेन ग्रन्थेन। समाधानग्रन्थस्यायमर्थः—द्रवत्ववति घृतलाक्षादौ वृत्तिर्यस्याः तादृशी या द्रव्यत्वस्य साक्षाद्व्याप्या जातिः "पृथिवीत्वं तेजस्त्वम्" इत्यादि, तादृशजातिमत्त्वं यथाक्रमं त्रिष्वपि पृथिव्यादिषु वर्त्तत इति नाव्याप्तिदोषः। स्वयं लक्षणसमन्वयं मानयति—"घृतजतुःप्रभृतिषु"—इति।

प्रत्यक्षविषयत्वस्य परमाण्वादावव्याप्तिं रूपादिषु चातिव्याप्तिमाशङ्क्य जातिघटितलक्षणविवक्षया समाधत्ते "नच" इत्यादिना "विवक्षितत्वात्" इत्यन्तेन। समाधानग्रन्थाक्षरार्थस्तु—चाक्षुषं (यल्लौकिकं) प्रत्यक्षं, तस्य विषया ये घटादयः, तेषु वृत्तिर्यस्याः सा चासौ द्रव्यत्वस्य साक्षाद्व्याप्या जातिः पृथिवीत्वं जलत्वं तेजस्त्वम् तादृशजातिमत्त्वं पृथिव्यादिपरमाणुषु वर्त्तते रूपादिषु च न वर्त्तते (तेषु रूपत्वादिजातिसत्त्वात्) इति लक्षणसमन्वये नोक्तं दोषद्वयमिति भावः।

परमाण्वादीनां योगिप्रत्यक्षविषयत्वादाह—अतिव्याप्तञ्चेति।

"आत्मन्यतिव्याप्तिवारणाय"—इति। यदि जातिघटितलक्षणे "चाक्षुष"-पदं न निवेश्येत तदा आत्मन्यतिव्याप्तिः स्यात्। कथमिति चेद् ? इत्थम्—सामान्यतो प्रत्यक्षविषयो यथा घटादि, तथा आत्माऽपि प्रत्यक्षविषयः, तस्मिन् आत्मनि वर्त्तते या जातिः आत्मत्वजातिः, तद्वत्त्वमात्मन्यस्तीति कुतो नातिव्याप्तिः? तस्मादेतद्दोषपरिहाराय "चाक्षुष"पदं दातव्यम्। आत्मनो मानसप्रत्यक्षविषयत्वेऽपि न चाक्षुषप्रत्यक्षविषयत्वमिति नोक्तदोषः।

(का०) गुरुणी द्वे रसवती—

(मुक्ता०) गुरुणी इति। गुरुत्ववत्त्वं रसवत्त्वं पृथिवीजलयोरित्यर्थः। नच घ्राणेन्द्रियादीनां वाय्वानीतपार्थिवादिभागानाञ्च रसादिमत्त्वे किं मानमिति वाच्यम्, तत्रापि पृथिवीत्वादिना तदनुमानात्।

(प्रभा०) परममूले 'द्वे' इति। पृथिव्यब्रूपे द्वे द्रव्य इत्यर्थः। "गुरुत्ववत्त्वम्"—इति। गुरुत्वम्=रक्तिकामापतोलकादि। इदमुपलक्षणम्—पतनवत्त्वमपि बोध्यम्। पतनत्वं गुरुत्वाऽसमवायिकारणककर्मत्वम्। "उल्का पतति" इत्यादि प्रयोगस्तु लाक्षणिकः। "पृथिवीजलयोः"—इति। साधर्म्यमिति शेषः। नच घ्राणेन्द्रियादीनामिति ग्रन्थः स्पष्टार्थः। अनुमानप्रकारोऽपि पूर्ववत्। अर्थात् "घ्राणेन्द्रियं रसादिमत् पृथिवीत्वात् जम्बीरफलवत्" इत्यादि स्वयमूहनीयम्।

(का०) द्वयोर्नैमित्तिको द्रवः ॥२८॥

(मुक्ता०) द्वयोरिति। पृथिवीतेजसोरित्यर्थः। नच नैमित्तिकद्रवत्ववत्त्वं घटादौ वह्न्यादौ चाव्याप्तमिति वाच्यम्; नैमित्तिकद्रवत्वसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात् ॥ २८ ॥

(प्रभा०) "द्वयोरिति"—इति। पृथिवीतेजसोर्नैमित्तिकद्रवत्ववत्त्वं साधर्म्यमित्यर्थः। उक्तसाधर्म्यस्य घटादिषु अव्याप्तिं जातिघटितलक्षणेन वारयन् "नचे"त्यादि शङ्कासमाधानतया ग्रन्थाति। "नैमित्तिक"—इति। नैमित्तिकद्रववत्त्वं घृतलाक्षादिपृथिव्यां वर्त्तते तत्रैव पृथिवीत्वादिर्जातिरपि। एवं तादृशद्रवत्वसमानाधिकरणा या द्रव्यत्वस्य साक्षाद्व्याप्या जातिः पृथिवीत्वादिः, तादृशजातिमत्त्वं घटादावप्यस्तीति नाव्याप्तिदोषलेश इत्यर्थः ॥ २८ ॥

(का०) आत्मानो भूतवर्गाश्च विशेषगुणयोगिनः।

(मुक्ता०) पृथिव्यप्तेजोवाय्वाकाशात्मनां विशेषगुणवत्त्वमित्यर्थः।

(प्रभा०) "आत्मानः"—इति। सर्वं सुस्पष्टम्। विशेषगुणाश्च—

बुद्ध्यादिषट्कं स्पर्शान्ताः स्नेह सांसिद्धिको द्रवः ।
अदृष्टभावना शब्दा अमी वैशेषिका गुणा ॥

इत्यग्रे गुणग्रन्थे वक्ष्यन्ते ।

(का०) यदुक्तं यस्य साधर्म्यं वैधर्म्यमितरस्य तत् ॥२९॥

(मुक्ता०) ज्ञेयत्वादिकं विहायेति बोध्यम् । तत्तु न कस्यापि वैधर्म्यं केवलान्वयित्वात् ॥ २९ ॥

(प्रभा०) इत्थं साधर्म्यमुक्त्वा सम्प्रति अल्पेनैव प्रकारेण वैधर्म्यमाचष्टे—"यदुक्तमिति" । यथा—सत्तावत्त्वं द्रव्यादित्रयादन्येषां वैधर्म्यम् । अनयैव रीत्या अन्यदपि ज्ञेयम् ।

मुक्तावल्यां "ज्ञेयत्वादिकम्"—इति । ज्ञेयत्वमभिधेयत्वं प्रमेयत्वन्तु न कस्यापि वैधर्म्यम् । सर्वस्य ज्ञेयत्वात् अभिधेयत्वात्प्रमेयत्वाच्च । अर्थात् ज्ञेयत्वादयः केवलान्वयिनो धर्माः । केवलान्वयित्वन्तु––अत्यन्ताभावाप्रतियोगित्वम् * । यस्य क्वचिदप्यत्यन्ताभावो न स्यात् स धर्मः केवलान्वयी भवति । जगत्यां कश्चिदप्येवंविधः पदार्थो नं वर्त्तते यः कस्यचित् ज्ञेयो न स्यात् । यश्चास्मदादीनां न ज्ञेयः स योगिनामूर्ध्वस्रोतसान्तु ज्ञेय एव । तेषामप्यज्ञेयस्तु ईश्वरीयज्ञानविषयः । एवमेवाभिधेयत्वादिकं बोध्यं, सर्वस्यैव अभिधावृत्तिविषयत्वात् । तेन ज्ञेयत्वादिकं कस्यचिदपि न वैधर्म्यमिति युक्तमुक्तं "ज्ञेयत्वादिकं विहाय"—इति ॥ २९ ॥

(का०) स्पर्शादयोऽष्टौ वेगाख्यः संस्कारो मरुतो गुणाः ।
स्पर्शाद्यष्टौ रूपवेगौ द्रवत्वन्तेजसो गुणाः ॥३०॥
स्पर्शादयोऽष्टौ वेगश्च गुरुत्वञ्च द्रवत्वकम् ।
रूपं रसस्तथा स्नेहो वारिण्येते चतुर्दश ॥३१॥
स्नेहहीना गन्धयुताः क्षितावेते चतुर्दश ।
बुद्ध्यादिषट्कं सङ्ख्यादिपञ्चकम्भावना तथा ॥३२॥
धर्माधर्मौ गुणा एते ह्यात्मनः स्युश्चतुर्दश ।
सङ्ख्यादिपञ्चकं कालदिशोः शब्दश्च ते च खे ॥३३॥
सङ्ख्यादयः पञ्च बुद्धिरिच्छा यत्नोऽपि चेश्वरे ।
परापरत्वे सङ्ख्याद्याः पञ्च वेगश्च मानसे ॥३४॥

* विशेषस्तु—"त्रैविध्यमनुमानस्य केवलान्वयिभेदत" इति ( १४२ ) कारिकाया मुक्तावलीव्याख्यायामग्रे द्रष्टव्यः ।

(मुक्ता०) ते च खे आकाशे ॥ ३०, ३१, ३२, ३३, ३४ ॥

(प्रभा०) वायोर्नवैकादश तेजसो गुणा जलक्षितिप्राणभृतांश्चतुर्दश ।

दिक्कालयोः पञ्च षडेव चाम्बरे महेश्वरेऽष्टौ मनसस्तथैव ॥

इति प्राचीनां कारिकामाश्रित्य वाय्वादीनां द्रव्याणां गुणानाह—"स्पर्शादय"—इति । एतेन उद्देशक्रमानुसारेण पृथिव्यादीनां गुणाः कुतो नोक्ता इति शङ्का व्युदस्ता । स्पर्शसङ्ख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वानि वेगाख्यः संस्कारश्चेति नव वायोर्गुणाः । तेजसो गुणानाह—"स्पर्शाद्यष्टौ"—इति । जलगुणानाह—"स्पर्शादयोऽष्टौ"—इति । पृथिव्याः गुणानाह—"स्नेहहीना"—इति । आत्मनो गुणानाह—"बुद्ध्यादिषट्कम्"—इति । कालदिशोः गुणानां समत्वादाह—"सङ्ख्यादिपञ्चकम्"—इति । आकाशगुणानाह—"शब्दश्च"—इति । ईश्वरगुणानाह—"सङ्ख्यादय"—इति ।

नव्यास्तु—सङ्ख्याबुद्धीच्छाप्रयत्नसुखानीति पञ्चैव गुणानाहुः । "न चाणोरणीयान्महतो महीयान्" इति श्रुत्याऽणुत्वमहत्त्वे तत्राऽधिके स्त इति वाच्यं, विरोधात् । किन्तु देशकालापरिच्छिन्नत्वरूपं महत्त्वं सर्वान्तर्यामित्वरूपमणुत्वम्, अन्यथा कथं विरुद्धयोस्तयोरेकत्र सम्भवः । शिष्टं स्पष्टम् ।

इति प्रभासहितायां मुक्तावल्यां
साधर्म्यवैधर्म्यनिरूपणा नाम
द्वितीया मुक्ता ।

---

(प्रभा०) साधर्म्यवैधर्म्ये निरूप्य सम्प्रति प्रत्येकं पृथिव्यादिकं निरूपयति—

(का०) तत्र क्षितिर्गन्धहेतुः—

(मुक्ता०) गन्धहेतुरिति । * गन्धसमवायिकारणमित्यर्थः । यद्यपि गन्धवत्त्वमात्रं लक्षणमुचितम्, तथापि पृथिवीत्वजातौ प्रमाणोपन्यासाय कारणत्वमुपन्यस्तम् । तथाहि—पृथिवीत्वं हि गन्धसमवायिकारणतावच्छेदकतया सिद्ध्यति, अन्यथा गन्धत्वावच्छिन्नस्याकस्मिकत्वापत्तेः । नच पाषाणादौ गन्धाभावाद्गन्धवत्त्वमव्याप्तमिति वाच्यम्, तत्रापि गन्धसत्त्वात् । अनुपलब्धिस्त्वनुत्कटत्वेनाप्युपपद्यते । कथमन्यथा तद्भस्मनि

---

* अत्रेदम्बोध्यम्—समवायसम्बन्धेन गन्धनिष्ठाधेयतानिरूपिताधिकरणताश्रयत्वमित्यर्थः । अत्र आधेयो गन्धः, अधिकरणम्पृथिवी । आधेयता गन्धनिष्ठा अधिकरणता पृथिवीनिष्ठा । आधेयतायाः अधिकरणतायाश्च परस्परं निरूप्यनिरूपकभावः सम्बन्धः । स च कश्चन स्वरूपसम्बन्धविशेष एवेत्यधिकमन्यत्र ।

गन्ध उपलभ्यते। भस्मनो हि पाषाणध्वंसजन्यत्वात्पाषाणोपादानोपादेयत्वं सिद्ध्यति। यद्द्रव्यं यद्द्रव्यध्वंसजन्यं तत्तदुपादानोपादेयमिति व्याप्तिः। दृष्टश्चैतत्खण्डपटे महापटध्वंसजन्ये। इत्थञ्च पाषाणपरमाणोः पृथिवीत्वात्तज्जन्यस्य पाषाणस्यापि पृथिवीत्वम्। तथाच तस्याऽपि गन्धवत्त्वे बाधकाभावः।

(प्रभा०) पदार्थानां साधर्म्यवैधर्म्ये निरूपिते, सम्प्रति प्रत्येकं पृथिव्यादिकं निरूपयन्नादौ पृथिवीं लक्षयति परममूले—"तत्र"—इति। मूले—"गन्धहेतुरिति"—इति। अस्यार्थः—'गन्धेत्यादि'—इति। कालादीनां कार्यमात्रम्प्रति कारणता सर्वसम्मता। तथाच—पृथिवीलक्षणं तत्र तत्राऽतिव्याप्तमितिशङ्कमानम्प्रति "हेतु"पदस्यार्थमाह—"गन्धसमवायिकारणम्"—इति। समवायेन गन्धकारणं पृथिवीलक्षणमित्यर्थः। कालः कालिकसम्बन्धेन गन्धहेतुः। दिशा दैशिकसम्बन्धेन गन्धहेतुर्नतु समवायसम्बन्धेनेति न तयोरतिव्याप्तिः। नच सुरभ्यसुरभिकपालारब्धे निर्गन्धे घटे (आदिक्षणवर्त्तिनि) लक्षणाव्याप्तिरिति वाच्यम्, गन्धवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वविवक्षायां दोषाभावो यतः। अर्थात् गन्धवन्तो ये कपालाद्याः, तद्वृत्तिर्या द्रव्यत्वस्य साक्षाद्व्याप्या जातिः पृथिवीत्वम्, तादृशजातिमत्त्वं गन्धवत्पदेन विवक्षितं तेनादिक्षणे निर्गन्धेऽपि घटादिपदार्थे पृथिवीत्वसत्त्वाल्लक्षणसमन्वये नाव्याप्तिदोषलेशोऽपि। अयमेव लक्षणसमन्वयप्रकारो यथायथं जलादिलक्षणेष्वपि बोध्यः। 'गन्धवत्त्वं पृथिवीत्वम्' इति लघुलक्षणेनापि निर्वाहे सति "गन्धसमवायिकारणम्" इति गुरुलक्षणकरणे प्रयोजनमाह—"यद्यपि"—इत्यादिना। "पृथिवीत्वं हि"—इति। अस्य ग्रन्थस्यायमाशयः—"समवायसम्बन्धावच्छिन्नगन्धत्वावच्छिन्नगन्धनिष्ठकार्यतानिरूपिता तादात्म्यसम्बन्धावच्छिन्नपृथिवीत्वावच्छिन्नपृथिवीनिष्ठा या समवायिकारणता, सा किञ्चिद्धर्मावच्छिन्ना कारणतात्वात्, घटनिष्ठकार्यतानिरूपितकपालगतकारणतावत्। अर्थात् यथा कपालनिष्ठा कारणता कपालत्वधर्मावच्छिन्ना तथा पृथिवीनिष्ठा कारणता अपि पृथिवीत्वधर्मावच्छिन्ना ज्ञेया" इत्यनुमानं पृथिवीत्वजातौ प्रमाणमिति दर्शयितुमेव लक्षणे कारणपदनिवेश इति। विपक्षे दण्डमाह—"अन्यथा"—इति। गन्धत्वावच्छिन्नम्प्रति हेतुत्वानङ्गीकारे इत्यर्थः। गन्धत्वावच्छिन्नस्य=गन्धमात्रस्य कार्यस्य। आकस्मिकत्वापत्तेः=कारणं विनापि जन्यत्वापत्तेः। परन्तु नहि कारणं विना कार्यम्भवति, यदि तथा स्यात् तदा पानीयमन्तरापि पिपासोपशमः स्यात्, खाद्यमन्तरा च क्षुधोपशमो भवेत्, नचैवं दृश्यते। तस्मात् यद्गन्धस्य कारणं सा पृथिवी। सा च न निरवच्छिन्ना, किन्तु केनचिद्धर्मेणावच्छिन्नैव, यश्च धर्मस्तस्या अवच्छेदकः स एव पृथिवीत्वमिति पृथिवीत्वजातिसिद्धिः। एवञ्च—गन्धम्प्रति पृथिवीत्वेनाऽकारणत्वे कदाचिज्जलादावपि तदुत्पादः स्यादिति निगूढाशयः।

तथाच—कार्यमात्रवृत्तेर्गन्धत्वस्य कार्यतावच्छेदकत्वानुरोधेन तदवच्छिन्ने पृथिवीत्वेन हेतुत्वमावश्यकमिति भावः ।

पाषाणादावव्याप्तिमाशङ्क्य समाधत्ते—"नच" इत्यारभ्य "गन्धसत्त्वात्" इत्यन्तेन । तत्रापि=पाषाणादावपि । गन्धसत्त्वात्=पृथिवीत्वेन गन्धानुमानात् । तदाकारश्चायम्—"पाषाणादिर्गन्धवान् पृथिवीत्वात् घटवत्" इति । यदि पाषाणादौ गन्धोऽस्ति तर्हि घ्राणेन्द्रियसंयोगेऽपि कथं न तस्योपलब्धिरितीमां शङ्कां परिहरति—"अनुपलब्धिस्तु"—इति । उत्कट एव गन्ध उपलभ्यते, अनुत्कटस्तु विद्यमानोऽपि नोपलभ्यत इति भावः । उत्कट उद्भूतः न उत्कट अनुत्कटोऽनुद्भूत इत्यर्थः । अत्र युक्तिं सञ्चारयति—"कथमन्यथा"—इति । अन्यथा=पाषाणादौ पृथिवीत्वानङ्गीकारे । तद्भस्मनि=पाषाणभस्मनि ।

अयम्भावः—पाषाणभस्मनि गन्धः घ्राणजप्रत्यक्षप्रमाणसिद्धः तेन तत्र पृथिवीत्वमङ्गीकरणीयम्, ततो भस्मारम्भकावयवेष्वपि पृथिवीत्वसिद्धिरप्रत्यूहा । ये भस्मारम्भकावयवाः त एव पाषाणारम्भकावयवया इति पाषाणस्य पृथिवीत्वं तत्र च गन्धसिद्धिः । गन्धस्य पृथिवीत्वसामानाधिकरण्यनियमात् ।

एतदेव "भस्मनो हि" इत्यादिग्रन्थेन विशदयति । पाषाणोपादानोपादेयत्वम्=पाषाणस्य उपादानं समवायिकारणं यत् पाषाणारम्भकं पार्थिवावयवरूपं द्रव्यम्, तस्योपादेयत्वं कार्यत्वमित्यर्थः । अस्मिन्नर्थे व्याप्तिनियममभिलाप्य दर्शयति—"यद् द्रव्यम्"—इति । अस्यायमर्थः—यद् द्रव्यम्=भस्मादिद्रव्यम्, यद् द्रव्यध्वंसजन्यम्=पाषाणादिद्रव्यध्वंसजन्यम्, तत्=भस्मादिद्रव्यम्, तदुपादानोपादेयम्=पाषाणादिद्रव्यस्य यदुपादानं पृथिवीपरमाण्वादि तस्योपादेयं नाम तस्य कार्यमित्यर्थः । "पाषाणः पृथिवी पार्थिवपरमाण्वारब्धद्रव्यत्वात् घटवत्" इत्याशयः । उक्तां व्याप्तिं दृष्टान्तेन घटयितुमाह—"दृष्टश्चैतत्"—इति । यथा महापटध्वंसजन्यः खण्डपटः महापटोपादानकारण(समवायिकारण)भूतैस्तन्तुभिर्जन्यः तथा पाषाणध्वंसजन्यं पाषाणभस्माऽपि पाषाणीयसमवायिकारणजन्यमेवेत्यर्थः । किन्तत् पाषाणस्य समवायिकारणमिति जिज्ञासायामुक्तं दृष्टान्तं दार्ष्टान्ते सङ्गमयन्नेवाह—"इत्थञ्च"—इति ।

अयमभिसन्धिः—यथा महापटः तन्तुरूपैः स्वसमवायिकारणभूतैरवयवैरारब्धः, तज्जन्यः खण्डपटोऽपि तदवयवैरेवारब्धः प्रत्यक्षत्वात् । नहि महापटस्यान्यत्समवायिकारणं खण्डपटस्यान्यत्समवायिकारणमित्यत्र किञ्चित्प्रमाणम्पश्यामः । किन्तूभयमपि तन्तूपादानजन्यत्वधर्मावच्छिन्नम्, एवमेव पाषाणः पृथिवीपरमाणुजन्यत्वात् पृथिवीत्वधर्मवान् (पार्थिवः) । इत्थञ्च—पृथिवीपरमाणौ गन्धसत्त्वात्पाषाणेऽपि गन्धवत्तासिद्धिः । अन्यथा तद्भस्मनि कदापि गन्धो नोपलभ्येत, नहि कारणेऽविद्यमानस्य

गुणस्य कार्ये उपलब्धिर्दृष्टचरी । कारणगुणानां कार्यगतगुणान्प्रति असमवायिकारणत्वात् । तथाच पारमर्षे सूत्रे—"*कारणगुणपूर्वकः कार्यगुणो दृष्टः" (वै० ४।२।२४)। "†कारणन्त्वसमवायिनो गुणाः" (वै० २।१।२४) इति।

(का०) नानारूपवती मता।

(मुक्ता०) नानारूपेति । शुक्लनीलादिभेदेन नानाजातीयं रूपं पृथिव्यामेव वर्तते नतु जलादौ, तत्र शुक्लस्यैव सत्त्वात् । पृथिव्यान्तु एकस्मिन्नपि धर्मिणि पाकवशेन नानारूपसम्भवात्। नच यत्र नानारूपं नोत्पन्नं तत्राऽव्याप्तिरिति वाच्यम्, रूपद्वयवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात्, रूपनाशवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वस्य वा वाच्यत्वात् । वैशेषिकनये पृथिवीपरमाणौ रूपनाशस्य रूपान्तरस्य च सत्त्वात्। न्यायनये घटादावपि तत्सत्त्वाल्लक्षणसमन्वयः।

(प्रभा०) परममूले—"नानारूपवती" इति पृथिव्या लक्षणान्तरम्बोध्यम्। एतल्लक्ष्यभूतायाम्पृथिव्यां घटयितुं ग्रन्थमवतारयति—"शुक्लनीलादिभेदेन"—इति। "पाकवशेन"—इति। पाको विजातीयतेजःसंयोगः । यत्र घटादिरूपायाम्पृथिव्यां नानारूपं नोत्पन्नं तत्राव्याप्तिमाशङ्क्य समाधत्ते "नच" इत्यारभ्य "विवक्षितत्वात्" इत्यन्तेन ग्रन्थेन । "रूपद्वयवद्वृत्ति"—इति । रूपद्वयवन्तो ये केऽपि पटाद्याः पदार्थाः तेषु वृत्तिर्यस्याः, एवम्भूता या द्रव्यत्वस्य साक्षाद्व्याप्या जातिः पृथिवीत्वम्, तादृशजातिमत्त्वं नानारूपवत्पदेन विवक्षितम्, तच्च अनानारूपवत्स्वपि घटादिषु वर्त्तत एवेति नाव्याप्तिः। इदञ्च लक्षणमपेक्षाबुद्धिविशेषविषयकत्वरूपं यद् द्वित्वं तेन घटितम्, ततोऽत्रोपस्थितिकृतं गौरवम्भातीति तादृशगौरवपरिहाराय शीघ्रोपस्थितये लक्षणान्तरं प्रणयति—"रूपनाशवद्वृत्ति"—इति । अस्यायमर्थः—यदा आपाके आमघटो निक्षिप्यते तदा पाकेन (विलक्षणतेजःसंयोगेन) पूर्वं श्यामरूपं नश्यति परं रक्तं रूपमुत्पद्यते। एवमेव सर्वत्र पार्थिवेषु पदार्थेषु पाकेन पूर्वरूपपरावृत्तिर्जायते, नात्र कस्यचिद्विवादः । परन्तु पीलुपाकवादिनो वैशेषिकस्य नये पृथिवीपरमाणावेव पूर्वरूपनाशो रूपान्तरोत्पत्तिश्च पाकेन भवति । पिठरपाकवादिनो नैयायिकस्य मते तु न पृथिवीपरमाणौ पाकः। किन्तु परमाणुजन्ये घटाद्यवयविन्येव पाकः, तत्रैव

* कार्यस्य=घटपटादेर्यो विशेषगुणो रूपादिः, स कारणगुणपूर्वकः=कारणस्य कपालतन्त्वादेर्यो रूपादिविशेषगुणः सः पूर्वं=कारणं यस्य स तथा दृष्टः=उपलब्ध इति सूत्रार्थः।

† गुणाः=संयोगादयो गुणाः कारणन्त्वसमवायिनः=असमवायिकारणम्भवन्तीत्यर्थः । संयोगादिगुणनिष्ठा असमवायिकारणता क्वचित् कार्यैकार्थसमवायात्। यथा—आत्ममनःसंयोगस्य आत्मविशेषगुणेषु, संयोगविभागशब्दानाञ्च शब्दे । क्वचित् कारणैकार्थसमवायात् । यथा—कपालादिरूपाणां घटादिरूपादिषु । तदेतदसमवायिकारणलक्षणेऽधस्तात् कृतव्याख्यानम् ।

पूर्वरूपनाशो रूपान्तरोत्पादश्च । सर्वथापि तु घटादिपदार्थो रूपनाशवान् तादृशे रूपनाशवति घटादौ वृत्तिर्यस्याः सा द्रव्यत्वस्य साक्षाद्व्याप्या जातिः पृथिवीत्वमेव, तादृशजातिमत्त्वं "नानारूपवत्त्व"पदेन विवक्षितमिति नाव्याप्तिर्नापि चोपस्थितिकृतं गौरवमिति सर्वथा निर्दुष्टं लक्षणम् । नाशो ध्वंसः । पीलुपाकादिप्रक्रिया * अग्रे वक्ष्यते । शिष्टं स्पष्टम् ।

(का०) षड्विधस्तु रसस्तत्र--

(मुक्ता०) षड्विध इति । मधुरादिभेदेन यः षड्विधो रसः स पृथिव्यामेव । जले च मधुर एव रसः । अत्रापि पूर्ववद्रसद्वयवद्वृत्ति-द्रव्यत्वव्याप्यजातिमत्त्वं लक्षणार्थोऽवसेयः ।

(प्रभा०) "षड्विध इति"—इति । षड्विधरसवत्त्वं पृथिवीत्वमित्यपरं पृथिव्या लक्षणम् । यत्र त्वाम्रादिफले षड्विधो रसो नोत्पन्नः, तत्रापि पूर्ववज्जाति-घटितलक्षणविवक्षयाऽव्याप्तिपरिहारमतिदिशति—"अत्रापि"—इति । अर्थात् रस-द्वयवन्ति यानि आम्रफलादीनि, तद्वृत्तिर्या द्रव्यत्वस्य साक्षाद्व्याप्या जातिः पृथिवीत्वं, तद्वत्त्वविवक्षायां दोषाभावः ।

(का०) गन्धस्तु द्विविधो मतः ॥३५॥

(मुक्ता०) गन्धस्त्विति । द्विविध इति । वस्तुस्थितिमात्रं ननु द्विविधगन्धवत्त्वं लक्षणं द्विविधत्वस्य व्यर्थत्वात् । द्वैविध्यञ्च सौरभाऽसौरभभेदेन बोध्यम् ॥ ३५ ॥

(प्रभा०) यथा नानारूपवत्त्वादिकं पृथिवीलक्षणं तथा द्विविधगन्धवत्त्वमपि लक्षणान्तरं किन्न स्यादिति शङ्कमानम्प्रत्याह—"द्विविध"—इति । "वस्तुस्थिति-मात्रम्"—इति । वस्तुगत्या पृथिव्यां द्विविधो गन्धस्तिष्ठति इति सूचयितुं द्विविध-गन्धकथनं ननु द्वैविध्यस्य लक्षणे प्रवेश इत्यर्थः । "गन्धहेतु"रितिलक्षणेनैवास्य गतार्थत्वान्नेदं लक्षणान्तरमिति भावः ॥ ३५ ॥

(का०) स्पर्शस्तस्यास्तु विज्ञेयो ह्यनुष्णाशीतपाकजः ।

(मुक्ता०) तस्याः पृथिव्या इति । अनुष्णाशीतस्पर्शवत्त्वं वायोरपि वर्तत इत्युक्तम्पाकज इति । इत्थञ्च पृथिव्याः स्पर्शोऽनुष्णाशीत इति ज्ञापनार्थं तदुक्तम् । वस्तुतस्तु पाकजस्पर्शवत्त्वमात्रं लक्षणम्, अधिकस्य वैयर्थ्यात् । यद्यपि पाकजस्पर्शः पटादौ नास्ति, तथापि पाकजस्पर्शवद्-वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वमर्थो बोध्यः ।

(प्रभा०) परममूले—"स्पर्श"—इति । तस्याः=पृथिव्याः स्पर्शः अनुष्णोऽ-

---

* गुणप्रस्तावे "एतेषां पाकजत्वन्तु क्षितौ नान्यत्र कुत्रचित्" इत्यादिकारिकाद्वयेन ।

व्यक्तोष्णः, अशीतोऽव्यक्तशीतश्च सचासौ पाकजश्चेति द्वौ कर्मधारयौ । एवञ्च नाना-रूपवत्त्वम्, षड्विधरसवत्त्वम्, पाकजस्पर्शवत्त्वञ्चेति पृथिव्या लक्षणत्रयं निष्पन्नम्। शिष्टं स्पष्टम्। ननु—न्यायमते पटाद्यवयविनि नैव पाकजस्पर्शः । पाकेन पटादि-दाहोत्पत्तेः पटादेरेव ध्वंस कुतस्तेषां स्पर्शः । वैशेषिकमते तु पटावयवभूतेषु परमाणुष्वेव पाको नावयविनि इति पटादौ पाकासिद्धेरव्याप्तिरित्याशङ्कायां समाधातुं "यद्यपि" इत्यादि प्रथ्नाति । "*पाकजस्पर्शवत्"—इति । पाकजस्पर्शवन्तो ये घटाद्या आम्राद्याश्च तेषु वृत्तिर्वर्त्तनं यस्याः सा चासौ जातिः, अर्थात् पृथिवीत्वम्, तादृशजातिमत्त्वं "पाकजस्पर्शवत्त्व"पदेन विवक्षितमिति न † पटादौ कुत्रापि कश्चिद्दोष इत्यर्थः ।

(का०) नित्यानित्या च सा द्वेधा नित्या स्यादणुलक्षणा ॥३६॥
अनित्या तु तदन्या स्यात्सैवावयवयोगिनी ।

(मुक्ता०) सा पृथिवी द्विविधा नित्या अनित्या चेत्यर्थः। अणुलक्षणा परमाणुरूपा पृथिवी नित्या । तदन्या परमाणुभिन्ना पृथिवी द्व्यणुकादि-रूपा सर्वाप्यनित्येत्यर्थः । सैव अनित्या पृथिव्येवावयववतीत्यर्थः ।

(प्रभा०) सा पृथिवीत्यादिग्रन्थो निगदव्याख्यातार्थः ॥ ३६ ॥

(मुक्ता०) ननु—अवयविनि किम्मानम्परमाणुपुञ्जैरेवोपपत्तेः । नच परमाणूनामतीन्द्रियत्वाद् घटादेः प्रत्यक्षं न स्यादिति वाच्यम्, एकस्य परमाणोरप्रत्यक्षत्वेऽपि तत्समूहस्य प्रत्यक्षत्वात्। यथैकस्य केशस्य दूरेऽ-प्रत्यक्षत्वेऽपि तत्समूहस्य प्रत्यक्षत्वम्। नचैको घटः स्थूल इति बुद्धेरनुप-पत्तिरिति वाच्यम्, एको महान्धान्यराशिरितिवदुपपत्तेः । मवम्, परमाणोरतीन्द्रियत्वेन तत्समूहस्यापि प्रत्यक्षायोग्यत्वात् । दूरस्थकेशस्तु नातीन्द्रियः, सन्निधाने तस्यैव प्रत्यक्षत्वात्।

(प्रभा०) ‡ बौद्धः शङ्कते—"ननु" इत्यारभ्य "उपपत्ते"रित्यन्तेन । "अयं घट" इत्याकारायाः प्रतीतेः विलक्षणसंस्थानविशिष्टैः परमाणुभिरेव निर्वाहे § न

* सत्तारूपजातिमादाय गगनादावतिव्याप्तिवारणाय "द्रव्यत्वव्याप्य" इति । द्रव्यत्व-समानाधिकरणसत्तामादायातिव्याप्तिवारणाय "व्याप्यभागः" । स्पर्शसमानाधिकरणजलत्वादिक-मादाय जलादावतिव्याप्तिवारणाय "पाकज" इति । पाकजद्रवत्वसमानाधिकरणतेजस्त्वमादाय तेजस्यतिव्याप्तिवारणाय "स्पर्श" इति । जलपृथिव्यन्यतरत्वमादाय जलादावतिव्याप्तिवारणाय "जाति"—इति ।

† पटादावित्यत्र आदिपदेन वैशेषिकमतेऽवयवयिमात्रपरिग्रहः ।

‡ अवयविवादमसहमान इति शेषः ।

§ "जलाहरणादिक्रियासिद्धौ" इति तु निगूढाशयः ।

तत्साधनाय प्रत्यक्षप्रमाणमप्यलमिति शङ्काकर्त्तुर्हृदयम् । सिद्धान्तिनोऽभिप्रायमुत्थाप्य खण्डयति बौद्धः "नच" इत्यादिना । परमाणूनाम्—अतीन्द्रियत्वात्=इन्द्रियागोचरत्वात् घटादेः=परमाणुपुञ्जात्मकस्य घटादिपदार्थस्य प्रत्यक्षं न स्यादित्यर्थः । यद्यपि परमसूक्ष्माः परमाणवो नैकैकमिन्द्रियगोचराः तथापि तत्समुदायस्तु भवतीन्द्रियगोचर इति "अयं घट" इत्यादिप्रत्यक्षे नानुपपत्तिः । **तत्समूहस्य**=परमाणुसमूहस्य । एतद् दृष्टान्तेन समर्थयति स एव—"**यथा**"—इति । एकस्य दूरे=दूरत्वदोषे सति अप्रत्यक्षत्वेऽपि=इन्द्रियागोचरत्वेऽपि **तत्समूहस्य**=केशसमूहस्य । प्रत्यक्षत्वम् । पुनराशङ्क्य समाधातुमाह—"**नच**"—इति । यथा–धान्यसमूहस्यैकत्वात् "एक" इति प्रतीतिः । एवमेव संयोगविशेष एव महत्त्वात्मको येन परमाणुपुञ्जे सूक्ष्मेऽपि "महान् घट" इत्याकारा प्रतीतिरिति भावः । पुनराशङ्क्य स्वपक्षे स्थापयति परमाणुपुञ्जवादी (बौद्धः) "**नच**" इत्यादिना । स्पष्टम् ।

सिद्धान्ती (अवयविवादी=पदार्थान्तरोत्पत्तिवादी) समाधत्ते "**मैवम्**" इत्यादिना । **अत्रायमाशयः**—"परमाणुः परमसूक्ष्म आदिरवयवः स्वयं निरवयवः अतीन्द्रियो नित्य" इति नैयायिकवैशेषिकाणां सिद्धान्तः । उक्तञ्च—

जालसूर्यमरीचिस्थं सूक्ष्मं यद् दृश्यते रजः ।
तस्य षष्ठतमो भागः परमाणुः स उच्यते ॥ इति ॥

केचित् "षष्ठितमो भाग" इति पठन्ति । * अत्र युक्ताऽयुक्तत्वं सुधियो विवेचयन्तु । "मूर्त्तत्वे सति निरवयवत्वम्परमाणुत्वम्" इत्यत्र तु न परमाणुवादिनां विवादः, ऋते बौद्धसिद्धान्तात् । तेषां मते उत्पत्तिविनाशवन्तः क्षणभङ्गुराश्च परमाणवः । (आस्तान्तावदियं चिन्ता प्रकृतमनुसरामः) ।

एवम्भूतः परमाणुरतीन्द्रियः तत्समूहोऽपि अतीन्द्रिय एव । यथैकस्य परमाणोरतीन्द्रियत्वेन प्रत्यक्षं न जायते, तत्समूहस्यापि प्रत्यक्षत्वेऽयोग्यतैव । यत्तु—एकस्य दूरस्थकेशस्याप्रत्यक्षत्वेऽपि तत्समूहस्य प्रत्यक्षत्ववत्परमाणुसमूहप्रत्यक्षकथनं बौद्धस्य तदविचारिताभिधानम्, दूरस्थकेशस्तु स्वभावतो नातीन्द्रियः सन्निधाने=सामीप्ये तस्यैव प्रत्यक्षत्वात् । एतदाशयेनाह—"**परमाणोरतीन्द्रियत्वेन**"—इत्यादि । एवञ्च प्रत्यक्षयोग्यतावतः केशस्य दूरत्वप्रतिबन्धकतया तदा न प्रत्यक्षं तदपगमे तु भवत्येव प्रत्यक्षम् । नतु केशस्य स्वाभाविकमप्रत्यक्षत्वं यथा परमाणोः । तथाचोक्तदृष्टान्तदार्ष्टान्तभावो बौद्धस्य बुद्धिमान्द्यम्प्रकटयतीति भावः ।

**(मुक्ता०) नच तदानीमदृश्यपरमाणुपुञ्जाद् दृश्यपरमाणुपुञ्जस्योत्पन्नत्वान्न प्रत्यक्षत्वे विरोध इति वाच्यम्, अदृश्यस्य दृश्यानुपा-**

---

* "षष्ठतम" इति पाठस्तु "मेरुशास्त्रिगोडबाले" इत्याख्यैः प्रणीतायां "वाक्यवृत्तौ" वर्त्तते । अयं ग्रन्थो न्यायवैशेषिकोभयमतानुसारी पुण्यपत्तनमुद्रितः ।

दानत्वात्। अन्यथा चक्षुरूष्मादिसन्ततेरपि कदाचिद् दृश्यत्वप्रसङ्गात्। नचातितप्ततैलादौ कथमदृश्यदहनसन्ततेर्दृश्यदहनोत्पत्तिरिति वाच्यम्, तत्र तदन्तःपातिभिर्दृश्यदहनावयवैः स्थूलदहनोत्पत्तेरुपगमात्। नचाऽदृश्येन द्व्यणुकेन कथं दृश्यत्रसरेणोरुत्पत्तिरिति वाच्यम्, यतो न दृश्यत्वमदृश्यत्वं वा कस्यचित्स्वभावादाचक्ष्महे। किन्तु—महत्त्वोद्भूतरूपादिकारणसमुदायवशाद् दृश्यत्वं तदभावे चादृश्यत्वम्। तथाच—त्रसरेणोर्महत्त्वात्प्रत्यक्षत्वं नतु द्व्यणुकादेस्तदभावात्। नहि त्वन्मतेऽपि सम्भवतीदम्परमाणौ महत्त्वाभावात्।

(प्रभा०) बौद्धपक्षमुत्थाप्य खण्डयति "नच" इत्यारभ्य "दृश्यानुपादानत्वात्" इत्यन्तेन। तदानीम्=कार्योत्पत्तिकाले। अदृश्यपरमाणुपुञ्जात्=दर्शनानर्ह(प्रत्यक्षायोग्य)परमाणुसमुदायात्। दृश्यपरमाणुपुञ्जस्य=प्रत्यक्षार्हपरमाणुसमुदायस्य। उत्पन्नत्वात्=जातत्वात् न प्रत्यक्षत्वे विरोध इति योजना। "अयं घट" इति प्रत्यक्षप्रतीतेर्नाऽनुपपत्तिरिति भावः। "अदृश्यस्य दृश्यानुपादानात्" इति। अत्र—कार्यधर्मस्य कारणधर्मानुरोधित्वमित्यभिप्रायः सिद्धान्तिनः। वैपरीत्ये बाधकमुपन्यस्यति—"अन्यथा"—इति। अन्यथा=अदृश्यस्य दृश्योत्पादकत्वस्वीकारे। चक्षुरूष्मादिसन्ततेः=चक्षुर्नेत्रेन्द्रियम्, ऊष्मा घर्मविशेषः तयोः सन्ततेः=सन्तानस्यापि दृश्यत्वप्रसङ्गात्=साक्षात्कारयोग्यतापत्तेः। यद्यदृश्यं दृश्योपादानं स्यात् तदा चक्षुरिन्द्रियस्य ऊष्मणश्चापि चाक्षुषः साक्षात्कारः स्यात्, नतु तथा दृश्यते, तस्माददृश्यं न दृश्योपादानमित्यर्थः।

पुनराशङ्क्य समाधत्ते "नच" इत्यादिना। अतितप्ततैलादावित्यक्षरार्थो निगदव्याख्यातः।

कटाहस्थतैलघृतादौ पूरिकापर्पटादिपरिपाचनकाले तत्रादृश्यो वह्निर्भवति, यतो जलादिप्रक्षेपे दृश्यवह्नेरुत्पत्तिर्जायते। एवञ्चादृश्यमपि दृश्योपादानमिति पूर्वपक्षयितुराशयः। तत्र=अतितप्ततैलादौ। तदन्तःपातिभिः=अतितप्ततैलान्तःपातिभिः। स्वभावात्=कारणापेक्षाराहित्यात्। अन्तःपातिनो दृश्यस्य दहनस्यावयवास्तैरेव दृश्यभूतैः दृश्यभूतस्य स्थूलस्य वह्नेरुत्पत्तिर्नत्वदृश्यं दृश्योपादानमिति सिद्धान्तिनोऽभिप्रायः।

सिद्धान्ती पुनराक्षिप्य समाधत्ते "नच" इत्यादिना। द्व्यणुकस्य न प्रत्यक्षमतोऽदृश्यं तद्भवति, तत उत्पन्नस्य त्रसरेणोः प्रत्यक्षमिति त्रसरेणुर्दृश्यः। एवञ्च अदृश्यादपि दृश्योत्पत्तौ अदृश्यं न दृश्योपादानमितिवदन्नैयायिकोऽसङ्गत इत्याक्षेप्तुराकूतकम्।

सिद्धान्तग्रन्थस्याऽयमाशयः—महत्त्वोद्भूतरूपादिकारणसमुदायवत्त्वं दृश्यत्वं तद्भिन्नत्वमदृश्यत्वमिति दृश्यादृश्यत्वयोर्विवेकः। त्रसरेणौ महत्त्वादिकं तेनाऽसौ दृश्यः=प्रत्यक्षः। द्व्यणुके तु न महत्त्वादिकं तत्कथं दृश्यं (प्रत्यक्षं) स्यात्। तस्मान्न

दृश्यत्वम् (दर्शनयोग्यता) अदृश्यत्वम् (अदर्शनयोग्यता) वा कस्यचित्पदार्थस्य स्वाभाविको धर्मः (स्वरूपसम्बन्धावच्छिन्नो धर्मः)। किन्तु—महत्त्वादिकारणकलापहेतुकं दृश्यत्वादिकम्बोध्यम्। आदिना आलोकादिपरिग्रहः। बौद्धमते तु परमाणुपुञ्जे महत्त्वादिकारणकलापाभावात् कथम्प्रत्यक्षत्वं * स्यात्। एवञ्च तज्जन्यस्य घटादेरपि प्रत्यक्षतानापत्तौ "अयं घटः" "घटमानय" इत्यादिलौकिकव्यवहारविलोपो बौद्धमतेऽनिवार्य इति नैयायिकस्य हृदयम्। अक्षराणि तु स्पष्टार्थानि।

कटाहस्थतैलघृतादावपि दृश्य एव वह्निर्नत्वदृश्यः। दृश्यैरेव वह्नेरवयवैः स्थूलस्य वह्नेरुत्पत्तिः। अन्यथा उत्पद्यमानो वह्निरपि दृश्यः (चाक्षुषप्रत्यवेद्यः) न भवेत् इति सिद्धान्तिनोऽभिप्रायः। पुनराक्षिप्य समाधत्ते—"नच दृश्येन"—इति। अक्षराणि स्पष्टानि। दृश्यत्वमदृश्यत्वञ्च न कस्यचित्पदार्थस्य स्वाभाविकः (स्वरूपसम्बन्धावच्छिन्नो) धर्मः। किन्तु यत्र महत्त्वोद्भूतरूपादिकारणसमुदायः तत्र दृश्यत्वम् (चाक्षुषसाक्षात्कारयोग्यता), यत्र तु न तथा तत्र अदृश्यत्वम्बोध्यमित्युक्तमेव। त्रसरेणोः महत्त्वमुद्भूतरूपञ्च वर्त्तते अतोऽसौ दृश्यः। द्व्यणुके तु न तथा तत्र महत्त्वोद्भूतरूपादिकारणाभावात्। नन्वेवं परमाणोरपि पुञ्जावस्थायां दृश्यत्वमितरथा तु अदृश्यत्वमिति का क्षतिरित्याशङ्कायां ग्रन्थान्तरमाह—"नच"—इति। तव बौद्धमते नेयं दृश्यत्वादृश्यत्वव्यवस्था यतः परमाणौ न महत्त्वं नाप्युद्भूतरूपादिकमित्यर्थः।

(मुक्ता०) इत्थञ्चावयविसिद्धौ तेषामुत्पादविनाशयोः प्रत्यक्षसिद्धत्वादनित्यत्वम्। तेषाञ्चावयवावयवधारायाः अनन्तत्वे मेरुसर्षपयोरपि साम्यप्रसङ्गः। अतः क्वचिद्विश्रामो वाच्यः। यत्र तु विश्रामस्तस्यानित्यत्वेऽसमवेतभावकार्योत्पत्तिप्रसङ्ग इति तस्य नित्यत्वम्। महत्परिमाणतारतम्यस्य गगनादौ विश्रान्तत्वमिवाणुपरिमाणतारतम्यस्याऽपि क्वचिद्विश्रान्तत्वमस्तीति तस्य परमाणुत्वसिद्धिः। नच त्रसरेणावेव विश्रामोऽस्त्विति वाच्यम्, त्रसरेणुः सावयवः चाक्षुषद्रव्यत्वात् घटवदित्यनुमानेन तदवयवसिद्धौ, त्रसरेणोरवयवाः सावयवाः महदारम्भकत्वात् कपालवदित्यनुमानेन तदवयवसिद्धेः। नचेदमप्रयोजकम्, अपकृष्टमहत्त्वं प्रत्यनेकद्रव्यत्वस्य प्रयोजकत्वात्। नचैवं क्रमेण तदवयवधारापि सिद्ध्येदिति वाच्यम्, अनवस्थाभयेन तदसिद्धेरिति।

(प्रभा०) "इत्थञ्च"—इति। उक्तरीत्या अर्थात् परमाणौ महत्त्वाद्यभावात् परमाणुपुञ्जस्य प्रत्यक्षासिद्धेः, ततोऽतिरिक्त एव घटाद्यवयवी पदार्थः सचानित्यः, यज्जन्यं तदनित्यमिति व्याप्तेः। "तेषाम्"—इति। घटाद्यवयविनामित्यर्थः। अवयवधारायाः=अवयवप्रवाहस्य। अनन्तत्वे=सङ्ख्याशून्यत्वे। मेरुसर्षपयोः=

* परमाणुपुञ्जस्य प्रत्यक्षत्वं धर्मः कथं स्यात्? कथमपि न भवेदित्याशयः।

परस्परमत्यन्तविलक्षणपरिमाणवतोरपि । **साम्यप्रसङ्गः**=परिमाणतारतम्याभावप्रसङ्गः । **अयमभिसन्धिः**—यदि मेरोर्महापर्वतस्य अवयवविभागाः क्रियेरन्, अथ च ततोऽत्यन्तनिकृष्टस्य सर्षपबीजस्यापि अवयवा विभज्येरन् । परमुभयोः कुत्रापि अवयवविभागविश्रान्तिर्न स्वीकृता स्यात्, तदाऽवश्यं स्वीकर्त्तव्यम्भवेत्, यदुभयोः परिमाणकारणीभूता अवयवसङ्ख्या तुल्यैवेति । अवयवसङ्ख्यातौल्ये च उभयोः परिमाणसाम्ये तौल्यापत्तिः, नत्वेवं दृश्यते । तस्मादवयवधारायाः क्वचिद्विश्रान्तिरवश्यं वाच्या ।

**नन्वस्तु** क्वचिद्विश्रामः, परं विश्रामाश्रयो नित्यो निरवयवश्चेति किमत्र गमकमित्यारेकायां विश्रामाश्रयस्य नित्यतां साधयितुमाह—"**यत्र तु**"—इति । "**असमवेत**"—इति । असमवेतञ्च तद्भावकार्यमिति कर्मधारयः ।

**इदमत्राकूतकम्**—अवयवधाराया यो विश्रामस्याश्रयः, असौ चेदनित्यः तर्हि तस्य किमपि समवायिकारणं वक्तव्यम्, अन्यथा भावकार्योत्पत्तिर्न स्यात् । नित्यश्चेत्तदा स एवास्माकं परमाणुः । ततोऽतिरिक्तो घटाद्यवयवी अनित्य इति परमाणुपुञ्जवादी बौद्धः परास्तः ।

अत्रैव युक्त्यन्तरमाह—"**महत्परिमाण**"—इति । **तारतम्यम्**=न्यूनाधिकभावः । त्रसरेणुमारभ्य आकाशाद्यन्तं महत्परिमाणस्य न्यूनाधिकभावो विश्रान्तः, अर्थान्महत्परिमाणस्य परा काष्ठा आकाशादिः, एवमामलक्यादिकमारभ्याणुपरिमाणस्यापि क्वचिद्विश्रामोऽवश्यं स्वीकार्यः समानन्यायात् । यश्चाणुपरिमाणस्य चरमोऽवधिः, यतो न किमप्यणु, स एव परमाणुः । उक्तञ्च—"**न प्रलयोऽणुसद्भावात्**" (४ । २ । १६) सूत्रे न्यायभाष्ये—"यस्मान्नाल्पतरमस्ति, यः परमोऽल्पस्तत्र निवर्त्तते, यतश्च नाल्पीयोऽस्ति तम्परमाणुम्प्रचक्ष्महे" इति संक्षेपः । **गगनादाविति**—आदिना कालदिगात्मानो ज्ञेयाः ।

ननु त्रसरेणुरेव परमाणुर्मन्यतां किमतः परं कल्पनया ? इत्याशङ्कमानम्प्रति पूर्वोत्तरपक्षविधया ग्रथ्नाति—"**नच**"—इत्यादि । त्रसरेणुरपि सावयवः, तदवयवो द्व्यणुकमपि सावयवमिति * द्वाभ्यामनुमानाभ्यां साधितम्, ततश्च त्रसरेणुः तदवयवश्चापि न परमाणुः । किन्तु द्व्यणुकावयव एव परमाणुरिति सिद्धान्तः ।

"यच्चाक्षुषं तत्सावयव"मिति प्रथमप्रयोगे व्याप्तिः, यया त्रसरेणोः सावयवतासिद्धिः । "यो महदवयवः (महत्परिमाणवतः कार्यस्यारम्भकोऽवयवः) असावपि सावयवः" इति द्वितीयप्रयोगे व्याप्तिः, यया द्व्यणुकस्यापि सावयवता निराबाधा ।

**ननु**—अप्रयोजकमिदमनुमानं यत् त्रसरेणोः सावयवतासाधकमित्याशङ्कमानम्प्रति अप्रयोजकताशङ्कावारणाय ग्रथ्नाति "**नच**" इत्यादि । **अप्रयोजकम्**=अनुकूल-

---

* द्वाभ्यामिति—"त्रसरेणुः सावयवः" इत्यादिनेत्यर्थः ।

तर्करहितमित्यर्थः । त्रसरेण्वात्मके पक्षे चाक्षुषद्रव्यत्वं हेतुरस्तु सावयवत्वं साध्यं माभूत् विपक्षे बाधकतर्कानवतारादित्याक्षेपप्रकारः ।

"यदि सावयवत्वं न स्यात् तदा चाक्षुषद्रव्यत्वमपि न स्यात्" इत्ययमेव विपक्षे बाधकस्तर्कः (नहि चाक्षुषद्रव्यत्वाभाववानाकाशादिः सावयवः) इति समाधिप्रकारः।

अयम्भावः—"त्रिभिर्द्व्यणुकैरेकं त्र्यणुकमारभ्यते" इत्यस्ति न्यायनयः । तस्मादनेकावयविजन्यद्रव्यत्वेन त्र्यणुके अपकृष्टमहत्त्वमुत्पद्यते । अपकृष्टमहत्त्वं प्रत्यनेकावयविजन्यद्रव्यत्वस्य प्रयोजकत्वं ( हेतुभावो ) यतः । यदि तु त्र्यणुके चाक्षुषद्रव्यत्वं स्वीक्रियेत, नतु सावयवत्वम्, तदा अपकृष्टमहत्त्वानेकावयविजन्यद्रव्यत्वयोः कार्यकारणभावभङ्गप्रसङ्ग एव स्यात् । तस्मात् त्र्यणुके सावयवत्वमकामेनाप्यभ्युपेयम् ।

अथ त्रसरेणोरवयवे द्व्यणुके एव अवयवत्वधाराया विश्रामः स्यादित्युच्यते ? तदपि न, यो महदारम्भकोऽवयवः स घटाद्यारम्भककपालादिवत्सावयव एव भवति नतु निरवयवः । अस्ति च द्व्यणुके महतस्त्रसरेणोरारम्भकत्वम् । ननु—त्र्यणुकवद् द्व्यणुकेऽपि "द्व्यणुकावयवाः सावयवा महदारम्भकत्वात्कपालवत्" इत्यनुमानेन (द्व्यणुकावयवानामपि) सावयवता स्यादित्येवमेवोत्तरोत्तरमवयवधाराविश्रान्तिर्न भवेदिति चेन्न, द्व्यणुके महत्त्वाभावात् द्व्यणुकावयवा न महदारम्भकाः । "द्वाभ्याम्परमाणुभ्यामेकं द्व्यणुकमारभ्यत" इति सिद्धान्तेन द्व्यणुकमनेकावयवजन्यं नतु अनेकावयविजन्यम्, अनेकावयविजन्यत्वाभावादेव द्व्यणुकेऽपकृष्टमहत्त्वमेव नास्ति, कुतो महत्त्वमिति हृदि कृत्वा "न चैवं क्रमेण तदवयवधारापि सिध्येत्" इत्याद्युक्तम् । एवञ्च द्व्यणुकावयवो निरवयव एषितव्यः, स एव परमाणुः, अणुपरिमाणस्य परोऽवधिः ।

(का०) सा च त्रिधा भवेद्देहमिन्द्रियं विषयस्तथा ॥३७॥

(मुक्ता०) सा चेति । सा कार्यरूपा पृथिवी त्रिधेत्यर्थः । शरीरेन्द्रियविषयभेदादित्यर्थः ॥ ३७ ॥

(प्रभा०) "सा चेति"—इति । स्पष्टम् । उक्तसर्वग्रन्थमूलन्तु—"*पृथिवीत्वा-

---

* अत्राह कन्दलीकारः—"यो हि पृथिवीं स्वरूपतो जानन्नपि कुतश्चिद्व्यामोहात् पृथिवीति न व्यवहरति तम्प्रति विषयसम्बन्धाव्यभिचारेण व्यवहारसाधनार्थमसाधारणो धर्मः कथ्यते" इति । (एवं सति)—"इयम्पृथिवीति व्यवहर्त्तव्या पृथिवीत्वाभिसम्बन्धात् यत्पुनः पृथिवीति न व्यवह्रियते न तत्पृथिवीत्वाभिसम्बद्धं यथावादिकम्"—(इत्यनुमानम्फलति) ।

केचित्तु—पृथिवीत्वस्य लक्ष्यतावच्छेदकत्वान्न लक्षणत्वमित्याहुः । दिनकरभट्टादयस्तु—पृथिवीत्वजातिरपि पृथिव्या लक्षणम् । नच व्यतिरेकसहचारेणाऽन्वयव्याप्तिरेव गृह्यते इत्याचार्यमते पक्षतावच्छेदकस्य न हेतुत्वमिति वाच्यम् । "हेतुः साध्यसमानाधिकरण" इति ज्ञानेऽपि "हेतुमान् साध्यवान्" इति बाधस्याऽनिष्पन्नत्वेन पक्षतावच्छेदकत्वेऽपि हेतुत्वाऽविरोधात् इत्याचक्षते । अधिकमन्यत्र ।

भिसम्बन्धात्पृथिवी" इत्युक्त्वा "नित्याऽनित्या च" इति चाभिधाय "त्रिविधञ्चास्याः कार्यं शरीरेन्द्रियविषयसञ्ज्ञकम्" इति प्रशस्तोक्तम् ॥ ३७ ॥

(का०) योनिजादि भवेद्देहम्—

(मुक्ता०) तत्र देहमुदाहरति—योनिजमयोनिजञ्चेत्यर्थः । योनिजमपि द्विविधम्—जरायुजमण्डजञ्च । जरायुजं मानुषादीनाम् । अण्डजं सर्पादीनाम् । अयोनिजं स्वेदजोद्भिज्जादिकम् । स्वेदजाः कृमिदंशाद्याः । उद्भिज्जास्तरुगुल्माद्याः । नारकिणां शरीरमप्ययोनिजम् । नच मानुषादिशरीराणाम्पार्थिवत्वे किम्मानमिति वाच्यम्, गन्धादिमत्त्वस्यैव प्रमाणत्वात् । नच क्लेदोष्मादेरुपलम्भादाप्यत्वादिकमपि स्यादिति वाच्यम् तथा सति जलत्वपृथिवीत्वादिना सङ्करप्रसङ्गात् । नच तर्हि जलीयत्वादिकमेवास्तु न तु पार्थिवत्वमिति वाच्यम्, क्लेदादीनां विनाशेऽपि शरीरत्वेन प्रत्यभिज्ञानाद्गन्धाद्युपलब्धेश्च पृथिवीत्वसिद्धेः । तेन पार्थिवादिशरीरे जलादीनां निमित्तत्वमात्रम्बोध्यम् । शरीरत्वन्तु न जातिः पृथिवीत्वादिना साङ्कर्यात्, किन्तु चेष्टाश्रयत्वम् । वृक्षादीनामपि चेष्टासत्त्वान्नाव्याप्तिः ।

(प्रभा०) पार्थिवशरीरं विभज्य दर्शयति—"योनिजम्"—इति । शुक्रशोणितयोः परस्परमेलनजन्यं योनिजम्, तद्भिन्नमयोनिजम् । "जरायुजम्"—इति । गर्भवेष्टनचर्मपुटकं जरायुः । "अयोनिजम्"—इति । तथाच पारमर्षं सूत्रम्—

"तत्र शरीरं द्विविधं योनिजमयोनिजञ्च" (वै० २ । ५) ।

एतस्मिन्विषये वेदोऽपि प्रमाणम् । तथाहि—

विश्वान्देवाञ्जगत्याविवेश । तेन चाक्लृपे ऋषयो मनुष्याः ।

(ऋग्वेद अ० ८ । ७ व० १८ । ५)

तस्मादश्वा अजायन्त येके चोभयादतः । गावो ह जज्ञिरे तस्मात् तस्माज्जाता अजावयः ॥ (ऋग्वेद अ० ८ । ४ व० १८ १०) इत्यादि ।

"आदिकम्"—इति । आदिना देवर्षीणां ग्रहणम् । "देवर्षीणां शरीरं धर्मविशेषसहितेभ्योऽणुभ्यो जायते" इति प्रशस्तम् । "नारकिणाम्"—इति । अधर्मविशेषसहितेभ्योऽणुभ्यो नारकिणां शरीरोत्पत्तिः, तथैव क्षुद्रजन्तूनामपि । "मानुषादीनाम्"—इति । आदिना पशुमृगादीनाम्परिग्रहः । "सर्पादीनाम्"—इत्यादिना विहङ्गमादिपरिग्रहः । स्वेदजमुदाहरति—"कृमिदंशाद्या"—इति । यत्तु—"योनिं विना न शरीरम्" इति सर्वाणि शरीराणि योनिजानीति कथनं तत्र "योनि"-पदं कारणमात्रपरं द्रष्टव्यम् ।

मानुषादिशरीराणाम्पार्थिवत्वं साधयितुं "नच" इत्यादि ग्रथ्नाति । "क्लेदो-

ष्मादेः''—इति। क्लेदः=क्षरणम्, स्वेद इति यावत्। ऊष्मा=पाकविशेषः औष्ण्यमिति यावत्। ''सङ्करप्रसङ्गात्''—इति। पृथिवीत्वं विहाय शरीरत्वं जलादित्रितयशरीरेषु, शरीरत्वं विहाय पृथिवीत्वं घटादौ, मानुषशरीरे तु पृथिवीत्वशरीरत्वयोर्द्वयोः समावेश इति जातिबाधकसङ्करदोषभयादित्यर्थः। पार्थिवशरीरे क्लेदादिप्रतीतिस्तु जलादिभागस्योपष्टम्भकत्वेनाप्युपद्यते, तेन तत्र आप्यत्वादिकमपि नेति भावः।

आक्षिप्य समाधत्ते—''नच'' इत्यादिना। ''शरीरत्वेन प्रत्यभिज्ञानात्''—इति। ''तदेवेदञ्चैत्रशरीरम्, तदेवेदम्मैत्रशरीरम्'' इत्याकारकप्रत्यभिज्ञासत्त्वात्। पूर्वदृष्टस्य कालान्तरे पुनरिन्द्रियसम्प्रयोगे ''तदेवेदम्'' इत्याकारकं ज्ञानं प्रत्यभिज्ञा। प्रत्यभिज्ञा, प्रतिसन्धानमित्यनर्थान्तरम्। तत्रैव हेत्वन्तरमाह-''गन्धाद्युपलब्धेश्च''—ध्वंसपर्यन्तं मनुष्यशरीरे गन्धाद्युपलम्भादित्यर्थः। पृथिवीत्वसिद्धेः=मानुषादिशरीराणां पार्थिवकार्यत्वसिद्धिरिति भावः।

''शरीरत्वं न जातिः''—इति। अस्यार्थः पूर्वग्रन्थार्थेन गतार्थः। अर्थात् शरीरत्वाभावाधिकरणे घटादौ पृथिवीत्वम्, पृथिवीत्वाभावाधिकरणे वरुणादिशरीरे शरीरत्वम्, ते उभे एव मनुष्यादिशरीरे इति साङ्कर्यात् शरीरत्वं न जातिरिति। शरीरं लक्षयति—''चेष्टाश्रयत्वम्''—इति। * चेष्टात्वं जातिविशेषः, चेष्टत इति प्रत्यक्षप्रतीतिसिद्धः प्रयत्नजन्यतावच्छेदकः। तथाच पारमर्षं सूत्रम्—

''चेष्टेन्द्रियार्थाश्रयः शरीरम्'' (न्या० १।१।११) इति।

(मुक्ता०) नच वृक्षादेः शरीरत्वे किम्मानमिति वाच्यम्, आध्यात्मिकवायुसम्बन्धस्य प्रमाणत्वात्। तत्रैव किम्मानमिति चेद्भग्नक्षत-

* ईप्सितं जिहासितमर्थमधिकृत्य ईप्साजिहासाप्रयुक्तस्य तदुपायानुष्ठानलक्षणा समीहा ''चेष्टा'' इति भाष्यकारः।

अत्रेदम्बोध्यम्—''चेष्टेन्द्रियार्थाश्रयः शरीरम्'' इत्यपि शरीरलक्षणे यद्यपि चेष्टया स्पन्दमात्रमभिहितम्, तथापि उत्पत्तिसामर्थ्यात् हिताऽहितप्राप्तिपरिहारार्था क्रिया विवक्षिता। तथाच—न घटादावतिप्रसङ्गः। अत्राश्रयत्वमप्यनुविधानरूपमेव ग्राह्यम्। शरीरे पतिते चेष्टादिकं नश्यति, उत्पन्ने च तस्मिन्प्रविशति इति शरीरानुविधानमेव शरीराश्रयत्वम्। एवं वात्स्यायनीयभाष्यानुसारेण प्रत्येकं लक्षणम्। परैश्च सम्पूर्णमेव लक्षणमुक्तम्। तत्र—चेष्टाश्रय इत्युक्ते घटेऽतिप्रसङ्गः तस्यापि स्पन्दरूपचेष्टाश्रयत्वात्। अत उक्तम्—इन्द्रियेति। तथापि—इन्द्रियाणां प्राप्यकारित्वेन इन्द्रियसंयोगित्वाद् घटादेः पुनस्तत्रैवातिप्रसङ्गः। अत उक्तम्—अर्थेति। अर्थाश्रयत्वमपि घटादेः, तेषामपि रूपाद्यर्थाश्रयत्वात् पुनस्तत्रैव अतिप्रसङ्गः। यदि च इन्द्रियाश्रय इत्यत्र इन्द्रियस्य समवायेनाश्रय इति विवक्षितं तदाऽसम्भवः इन्द्रियस्य स्वावयवमात्रे समवायात्। किञ्च—घ्राणादिपार्थिवेन्द्रियाणां समवेतत्वेऽपि श्रोत्रमनसोर्नित्यत्वेनाऽसमवेतत्वात् सम्पूर्णस्यापि लक्षणस्य परमाणुष्वतिप्रसङ्गात् नैतदुपादेयमिति विभावनीयं सुधीभिः।

संरोहणादिना तदनुमानात् । यदि हस्तादौ शरीरव्यवहारो न भवति तदान्त्यावयवित्वेन विशेषणीयम् । नच यत्र शरीरे चेष्टा न जाता तत्राव्याप्तिरिति वाच्यम्, तादृशे प्रमाणाभावात् ।

(प्रभा०) "आध्यात्मिक"—इति । आध्यात्मिकः प्राणाख्यो वायुः । "भग्नक्षत"—इति । भग्नक्षतयोर्विभागविशेषश्लिष्टावयवयोः संरोहणादिकम् । आदिना वृद्धिपरिग्रहः ।

अयमाशयः—"वृक्षादि शरीरमाध्यात्मिकवायुसम्बन्धवत्त्वात् मानुषशरीरवत्, वृक्षादिराध्यात्मिकवायुसम्बन्धवान् भग्नक्षतसंरोहादिमत्त्वात् अस्मदादिशरीरवत्" इत्यनुमानाभ्यां वृक्षादीनां शरीरत्वसिद्धिः । आगमोऽप्यत्र प्रमाणम्—

"शरीरजैः कर्मदोषैर्याति स्थावरतां नरः" इति मनु० ।

"अन्तः संज्ञा भवन्त्येते सुखदुःखसमन्विता" इति च ।

वृक्षादिषु स्फुटतरचेष्टादिप्रतीतेरभावात् प्रायः शरीरव्यवहारो न प्राकृतानामिति ज्ञेयम् ।

ननु—"चेष्टाश्रयः शरीरम्" इति लक्षणं हस्तपादाद्यवयवेऽपि वर्त्तते, नतु तत्र शरीरव्यवहार इत्याशङ्कायामाह—"यदि"—इति । "अन्त्यावयवित्वेन"—इति । "अन्त्यावयवित्वे सति चेष्टाश्रयः शरीरम्" इति लक्षणं कर्त्तव्यमित्यर्थः । द्रव्यान्तरानारम्भकत्वमन्त्यावयवित्वम् । एवञ्च—घटादावतिव्याप्तिवारणाय चेष्टाश्रयत्वम् । हस्तपादाद्यवयवेऽतिव्याप्तिवारणाय अन्त्यावयवित्वम् इति बोध्यम् । आशङ्क्य समाधत्ते—"नच यत्र"—इति ।

(मुक्ता०) अथवा चेष्टावदन्त्यावयविवृत्तिद्रव्यत्वव्याप्यजातिमत्त्वमन्त्यावयविमात्रवृत्तिचेष्टावद्वृत्तिजातिमत्त्वं वा तत् । मानुषत्वचैत्रत्वादिजातिमादाय लक्षणसमन्वयः । नच नृसिंहशरीरे कथं लक्षणसमन्वयः, तत्र नृसिंहत्वस्यैकव्यक्तिवृत्तितया जातित्वाभावाज्जलीयतैजसशरीरवृत्तितया देवत्वस्यापि जातित्वाभावादिति वाच्यम्, कल्पभेदेन नृसिंहशरीरस्य नानात्वेन नृसिंहत्वजात्या लक्षणसमन्वयात् ।

(प्रभा०) मृतशरीरे चेष्टाया अभावेऽपि शरीरव्यवहारसत्त्वादुक्तलक्षणस्याव्याप्तौ कल्पान्तरमाह—"अथवा"—इति । अयमर्थः—चेष्टावांश्चासावन्त्यावयवी, तादृशेऽवयविनि वृत्तिर्यस्याः सा चासौ द्रव्यत्वस्य साक्षाद्व्याप्या जातिर्मनुष्यत्वञ्चैत्रत्वादिकं वेति तादृशजातिमत्त्वं मृतशरीरेऽपि वर्त्तत इति नाव्याप्तिः ।

ननु—अत्र लक्षणे "द्रव्यत्वव्याप्यजाति"पदेन "पृथिवीत्व"मपि धर्तुं शक्यते, तादृशजातिमत्त्वञ्च घटादावपीति शरीरलक्षणं घटादौ गतमित्याशङ्क्याह—"अन्त्यावयवि"—इति । अन्त्यावयविमात्रवृत्तिर्या चेष्टावद्वृत्तिजातिः तादृशजातिमत्त्वमिष्टम् ।

पृथिवीत्वं न केवलमन्त्यावयविवृत्तिः, किन्तु आरम्भकेषु पार्थिवावयवेष्वपि तद्वर्त्तते। मनुष्यत्वादिकन्तु अन्त्यावयविमात्रवृत्ति चेष्टावद्वृत्ति चेति न कश्चिद्दोष इत्यर्थः। "नच नृसिंह"—इति। "कथं लक्षणसमन्वय"—इति। नृसिंहशरीरे कथं शरीरलक्षणं योजनीयमित्यर्थः। "एकव्यक्तिवृत्ति"—इति। व्यक्तेरभेदस्य जातिबाधकत्वादिति भावः। अथ देवत्वमादाय लक्षणं योज्येत? तत्राह—"देवत्वस्य"—इति। तथापि साङ्कर्य्यञ्जातिबाधकं स्यादिति भावः। तथाहि—"जलीयतैजस"—इत्यादिग्रन्थस्यायमर्थः—देवत्वं विहाय तैजसत्वं सुवर्णादिषु, तैजसत्वं विहाय देवत्वं जलीयदेवेषु वरुणादिषु, तदुभयसमावेशः तैजसदेवेषु सूर्यादिषु इति साङ्कर्य्यं देवत्वस्य जातित्वे बाधकम्। "कल्पभेदेन" इति समाधानग्रन्थः। नृसिंहत्वं जातिरेवेति नृसिंहावतारशरीरेऽपि न लक्षणासङ्गतिरित्यर्थः। यदा तु साङ्कर्यस्य जातिबाधकत्वं नाभीष्टं तदा देवत्वस्य जातित्वे न दोषः।

(का०) इन्द्रियं घ्राणलक्षणम्।

(मुक्ता०) इन्द्रियमिति। घ्राणेन्द्रियम्पार्थिवमित्यर्थः। पार्थिवत्वं कथमिति चेदित्थम्। * घ्राणेन्द्रियम्पार्थिवं रूपादिषु मध्ये गन्धस्यैव व्यञ्जकत्वात्। कुङ्कुमगन्धाभिव्यञ्जकगोघृतवत्। नच दृष्टान्ते स्वकीयरूपादिव्यञ्जकत्वादसिद्धिरिति वाच्यम्, परकीयरूपाद्यव्यञ्जकत्वस्य तदर्थत्वात्। नच नवशरावगन्धव्यञ्जकजलेऽनैकान्तिकत्वमिति वाच्यम्, तस्य सक्तुरसाभिव्यञ्जकत्वात्। यद्वा परकीयेति न देयं वायूपनीतसुरभिभागस्य दृष्टान्तत्वसम्भवात्। नच घ्राणेन्द्रियसन्निकर्षस्य गन्धमात्रव्यञ्जकत्वात्तत्र व्यभिचार इति वाच्यम्, द्रव्यत्वे सतीति विशेषणात्।

(प्रभा०) "इन्द्रियमिति"—इति स्पष्टम्। इन्द्रियसामान्यलक्षणन्तु—"आत्मान्यत्वे सति ज्ञानकारणमनःसंयोगाश्रयत्वमिन्द्रियत्वम्"। † एतच्चाग्रेऽपि मूले स्फुटीभविष्यति। घ्राणेन्द्रियस्य पार्थिवत्वसाधकमनुमानमाह—"घ्राणेन्द्रियम्" इति। यद्यत् रूपादिषु मध्ये गन्धस्यैवाभिव्यञ्जकं तत्तत् पार्थिवं दृष्टं यथा कुङ्कुमगन्धाभिव्यञ्जकगोघृतमिति ‡ प्रतिबन्धसिद्धिः। "रूपादिषु मध्ये" इत्यत्र रसगन्ध-

---

* घ्राणेन्द्रियत्वावच्छिन्नोद्देश्यतानिरूपितसमवायतादात्म्यान्यतरसम्बन्धावच्छिन्नपार्थिवत्वावच्छिन्नपार्थिवनिष्ठविधेयताकानुमितित्वावच्छिन्नम्प्रति पार्थिवनिष्ठव्याप्तिप्रकारतानिरूपिता या रूपादिमध्यविशिष्टगन्धीयाभिव्यञ्जकत्वावच्छिन्ना प्रकारता, तादृशप्रकारतानिरूपिता या घ्राणेन्द्रियत्वावच्छिन्ना विशेष्यता, तादृशविशेष्यताशालिनिर्णयः परामर्शत्वेन रूपेण 'घ्राणेन्द्रिम्पार्थिवम्" इत्याकारानुमितिम्प्रति विशिष्य कारणमित्येवंरीत्या सर्वत्रानुमानेषु कार्यकारणभावलापनम्बोध्यम्।

† मूले—इन्द्रियलक्षणं क्लिष्टम्, इदन्तु सरलमित्यपि बोध्यम्।

‡ प्रतिबन्धो व्याप्तिः।

स्पर्शाः आदिपदार्थाः। अत्र सप्तम्या घटकत्वमर्थः, एतल्लाभायैव "मध्ये" इत्युक्तम्। तस्य गन्धपदसमभिव्याहृतैवकारार्थगन्धेतरविषयकज्ञानाऽजनकत्वघटकगन्धेतरस्मिन्नन्वयः। तथाच--रूपरसगन्धस्पर्शघटकीभूतं यद्गन्धेतरत्, तद्विषयकज्ञानाजनकत्वे सति गन्धविषयकज्ञानजनकत्वादिति हेतुरिति प्राचीना प्रभा।

हेतोरसिद्धिमाशङ्क्य निराकरोति "नच" इत्यारभ्य "तदर्थत्वाद्" इत्यन्तेन। दृष्टान्ते कुङ्कुमगन्धाभिव्यञ्जकं गोघृतं न गन्धमात्राभिव्यञ्जकम्, किन्तु स्वरूपाभिव्यञ्जकमपीत्ययं हेतुः स्वरूपासिद्धः। यस्य हेतोः स्वरूपम्=(हेतुतावच्छेदको धर्मः) एवासिद्धं नासौ साध्यसाधनायालमित्याक्षेप्तुराशयः।

"रूपादिषु मध्ये गन्धस्यैव व्यञ्जकत्वात्" इत्यस्य हेतोः परकीयरूपाद्यव्यञ्जकत्वमर्थः। तेन दृष्टान्ते गोघृते स्वरूपव्यञ्जकत्वे सत्यपि परकीयरूपव्यञ्जकत्वम्=स्वभिन्नकुङ्कुमादिरूपव्यञ्जकत्वं नास्तीति हेतुः सिद्ध एव नासिद्ध इति समाधातुरिदयम्। पुनर्हेतोः व्यभिचारित्वं शङ्कते समाधत्ते च "नच" इत्यादिना। यस्यायमर्थः---यो हेतुः साध्याधिकरणे वर्त्तमानः साध्याभावाधिकरणेऽपि वर्त्तेत असावनैकान्तिको व्यभिचारी वेत्युच्यते।

प्रकृते च साध्यम्पार्थिवत्वम्। हेतुश्च "रूपादिषु मध्ये गन्धस्यैवाभिव्यञ्जकत्वात्" इति। परं यत्र नवे शरावे जलम्प्रक्षिप्यते, तदा तेन नवशरावगतो गन्धोऽभिव्यज्यते। जलन्तु न पार्थिवम्, अस्ति तु तत्र जलेऽपि गन्धाभिव्यञ्जकत्वम् तस्मादुक्तो हेतुः पार्थिवत्वरूपसाध्याभाववति जले वर्त्तमानत्वादनैकान्तिकः।

* अस्योत्तरम्---"सक्तुरसाभिव्यञ्जकत्वात्"---इति। "यद्यप्येवं तथापि तज्जलं न केवलं गन्धमभिव्यनक्ति, किन्तु सक्तुरसमपि व्यनक्ति, तस्मात्तादृशजलस्य गन्धमात्राभिव्यञ्जकत्वाभावान्न व्यभिचार" इत्यर्थः।

परकीयेति विशेषणाऽप्रवेशे लाघवमभिप्रेत्याह---"यद्वा"---इति। अर्थात् उक्तेऽनुमाने "परकीय"---इत्यादिविशेषणं नोपादेयम्, घृतञ्च तादृशं न दृष्टान्तीकर्त्तव्यम्, किन्तु "वायूपनीतसुरभिभागवत्"---इति दृष्टान्तो देयः। वायूपनीतसुरभिभागस्तु रूपादिषु मध्ये केवलं गन्धस्यैवाभिव्यञ्जकः। अनेन दृष्टान्तेन व्यभिचारादिसकलक्लेशवारणोपशमः स्वतःसंवृत्त इति भावः।

† ननु---घ्राणेन्द्रियसन्निकर्षोऽपि केवलं गन्धस्याभिव्यञ्जकः। एवञ्चोक्तसन्निकर्षे हेतोर्व्यभिचार इत्याशङ्कावारणाय "नच" इत्यादि "विशेषणात्" इत्यन्तमुक्तम्। "द्रव्यत्वे सति रूपादिषु मध्ये गन्धस्यैवाभिव्यञ्जकत्वात्" इति द्रव्यत्व-

---

* "सक्तुरसाभिव्यञ्जकत्वात्" इत्यस्य फलितार्थमाह---"अस्योत्तरम्" इति।

† प्रकारान्तरेण व्यभिचारशङ्कामुत्थापयति---"ननु"---इति।

विशिष्टो हेतुर्वक्तव्य इत्यर्थः । यद्यपि घ्राणेन्द्रियसन्निकर्षो गन्धमात्राभिव्यञ्जकः, परमसौ न द्रव्यम्, किन्तु संयोगरूपत्वात् गुण इति भावः ।

(का०) विषयो द्व्यणुकादिश्च ब्रह्माण्डान्त उदाहृतः ॥३८॥

(मुक्ता०) विषय इति । उपभोगसाधनं विषयः । सर्वमेव हि कार्यजातमदृष्टाधीनम् । यत्कार्यं यददृष्टाधीनं तत्तदुपभोगं साक्षात्परम्परया वा जनयत्येव । नहि बीजप्रयोजनाभ्यां विना कस्यचिदुत्पत्तिरस्ति । तेन द्व्यणुकादि ब्रह्माण्डान्तं सर्वमेव विषयो भवति । शरीरेन्द्रिययोर्विषयत्वेऽपि प्रकारान्तरेणोपन्यासः शिष्यबुद्धिवैशद्यार्थः ॥ ३८ ॥

(प्रभा०) * "उपभोगसाधनम्"—इति । सुखदुःखान्यतरसाक्षात्कार उपभोगः, तत्प्रयोजकः स सर्वोऽपि विषय एवेत्यर्थः । एवञ्च सर्वोऽपि गन्धवान् विषयः साक्षात्परम्परया च भोगहेतुः पार्थिवविषय इति फलति । अदृष्टस्य कार्यमात्रं प्रति साधारणकारणत्वादाह—"सर्वमेव"—इति । ननु—सर्वस्यैवोपभोगसाधनत्वेन विषयत्वे शरीरेन्द्रिययोः पृथक् विभागोऽयुक्त इत्यत आह—"शरीरेन्द्रिययोः"—इति । "शिष्यबुद्धि"—इति । शिष्याणाम्बुद्धिः=इमानि शरीराणि, इमानि इन्द्रियाणि, तद्भिन्ना एते विषया अपि सन्तीति, इत्येवं या बुद्धिः तस्याः वैशद्यार्थं बालबोधनार्थमित्यर्थः । विस्तरस्तु—न्यायमञ्जूषादौ द्रष्टव्यः । गौरवभयादत्र तत्सारो नोद्धृतः ।

इदन्तु बोध्यम्—गन्धवत्त्वे सति भोगायतनत्वम्पार्थिवशरीरत्वम् । गन्धवत्त्वे सति गन्धज्ञानकरणत्वम्पार्थिवेन्द्रियत्वम् । गन्धवत्त्वे सति उपभोगसाधनत्वम्पार्थिवविषयत्वम् । एवैव दिगन्यत्रापि जलीयादिशरीरादिषु अनुसरणीया ॥ ३८ ॥

इति पृथिवीग्रन्थः ।

---

(का०) वर्णः शुक्लो रसस्पर्शौ जले मधुरशीतलौ ।
स्नेहस्तत्र द्रवत्वन्तु सांसिद्धिकमुदाहृतम् ॥३९॥

(मुक्ता०) जलं निरूपयति –वर्णः शुक्ल इति । स्नेहसमवायिकारणतावच्छेदकतया जलत्वजातिः सिद्ध्यति । यद्यपि स्नेहत्वं नित्याऽनित्यवृत्तितया न कार्यतावच्छेदकम्, तथापि जन्यस्नेहत्वं तथा बोध्यम् ।

---

* साक्षात्परम्परासाधारणोपभोगप्रयोजकत्वमित्यर्थः । तेन द्व्यणुकादेः साक्षादुपभोगसाधनत्वाभावेऽपि नाव्याप्तिः, तस्य परमाणुसाधारण्येऽपि न क्षतिः, तस्यापि विषयत्वादिति प्राचीना प्रभा ।

अथ परमाणौ जलत्वं न स्यात्तत्र जन्यस्नेहाभावात्, नित्यस्य च स्वरूपयोग्यत्वे फलावश्यम्भावनियमादिति चेन्न, जन्यस्नेहजनकतावच्छेदकतया जन्यजलत्वजातेः सिद्धौ, तदवच्छिन्नजनकतावच्छेदकतया जलत्वजातिसिद्धेः।

(प्रभा०) मूले—"वर्णः शुक्ल इति"—इति। सर्वं वाक्यं सावधारणम्, यथा "अब्भक्षो वायुभक्ष" इति न्यायेन अप एव भक्षयति, वायुमेव भक्षयतीत्यर्थो लभ्यते, तथैवात्रापि जले शुक्ल एव वर्णः, मधुर एव रसः, शीत एव स्पर्शः, जल एव स्नेह इति ज्ञेयम्। तथाचार्षं सूत्रम्—"रूपरसस्पर्शवत्य आपो द्रवाः स्निग्धाः" (वै० २।१।२)। तत्र जले द्रवत्वं सांसिद्धिकं स्वाभाविकमुदाहृतमुक्तमिति यावत्। एवञ्च—अभास्वरशुक्लमात्ररूपवत्त्वम्, शीतमात्रस्पर्शवत्त्वम्, स्नेहवत्त्वम्, सांसिद्धिकद्रवत्ववत्त्वमिति जलस्यानेकानि लक्षणानि बोध्यानि।

जलत्वजातौ प्रमाणमाह—"स्नेह"—इति। कारणतावच्छेदकतया धर्मसिद्धौ बाधकाभावात्तस्य जातित्वमिति भावः। अयमर्थः—समवायसम्बन्धावच्छिन्नस्नेहत्वावच्छिन्नस्नेहनिष्ठकार्यतानिरूपिता * तादात्म्यसम्बन्धावच्छिन्ना या जलनिष्ठा समवायिकारणता, सा किञ्चिद्धर्मावच्छिन्ना, कारणतात्वाद् घटगतकार्यतानिरूपितदण्डवृत्तिकारणतावदिति जलत्वजातावनुमानम्मानम्, यथा पूर्वं द्रव्यत्वजातावुक्तम्।

नित्ये जलपरमाणौ स्नेहो नित्य इति नित्यस्नेहवृत्ति स्नेहत्वं धर्मो न † कार्यतावच्छेदकं, तत्कथं स्नेहनिष्ठकार्यतया जलत्वजातिसिद्धिरिति शङ्कते—"यद्यपि"—इति। जलपरमाणौ स्नेहस्य नित्यवृत्तित्वम्, जलद्व्यणुकादौ तस्याऽनित्यवृत्तित्वमत आह "नित्याऽनित्यवृत्तितया"—इति। समाधत्ते—"जन्यस्नेहत्वम्"—इति। (जलीय)द्व्यणुकादिनिष्ठस्नेहस्य जन्यत्वात् तदादाय स्नेहत्वं कार्यतावच्छेदकमपि, तेन जलत्वजातिसिद्धौ बाधाभावः। एवञ्च—प्रदर्शितानुमाने "स्नेह"पदात्पूर्वं "जन्य"-पदनिवेशः कार्य इति भावः।

परमाणौ=जलपरमाणौ जन्यस्नेहत्वाभावेन जलत्वासिद्धिम्=कारणतावच्छेदकधर्मासिद्धिमाशङ्कते—"अथ"—इति।

ननु—यथा अरण्यस्थितो दण्डो न घटादिकार्योपधायकः, तथापि तत्र दण्डत्वं कारणतावच्छेदकजातिरस्त्येव, एवम्परमाणौ जन्यस्नेहाभावेऽपि तस्य स्नेहोत्पत्तियोग्यतावत्त्वात् "जलत्व"जातिरस्त्येवेति प्रतिशङ्कते—"तस्य नित्यस्य स्वरूपयोग्यत्व"—इति। प्रकृते स्नेहोत्पत्तियोग्यत्वे इत्यर्थः। यदि परमाणौ स्नेहोत्पत्तियोग्यता तदा भवितव्यन्तत्र जन्यस्नेहेनापीति हृदयवानाह—"फलावश्यम्भाव-

* कार्यतावच्छेदकञ्च नित्यवृत्ति चेति व्याहतम्।

† "यत्र समवायेन कार्यन्तत्र तादात्म्येन द्रव्यम्" इति नियमः।

नियमात्''—इति । यथारण्यस्थोऽपि दण्डः कदाचिददृष्टवशात् कुलालगृहमुपेतो घटञ्जनयत्येव, एवमेव परमाणावपि कदाचिज्जन्यस्नेहोत्पत्तियोग्यताहेतोर्भवितव्यमेव जन्यस्नेहेनेति पूर्वपक्षयितुराशयः । वस्तुतस्तु—अरण्यस्थदण्डादेरनित्यत्वात्तत्र स्वरूपयोग्यत्वेऽपि फलावश्यम्भावनियमाभावः, नित्यस्य स्वरूपयोग्यतायामवश्यम्फलेन भवितव्यमित्यभिसन्धिः पूर्वपक्षिणः ।

सिद्धान्तम्प्रदर्शयितुमाह—''इति चेन्न''—इति । ''जन्यस्नेहजनकता''—इति । जन्यो यः स्नेहः, तज्जनकम्=जन्यजलम्, तन्निष्ठा=कारणता, तदवच्छेदिका जातिर्जन्यजलत्वमित्यर्थः । **जन्यजलत्वजातेः**=जन्यजलमात्रवृत्तिजातेः । ''तदवच्छिन्ना''—इति । जन्यजलत्वजात्यवच्छिन्नेत्यर्थः । तथाचायम्प्रयोगः फलति—समवायसम्बन्धावच्छिन्नजन्यजलत्वावच्छिन्नजन्यजलनिष्ठा जन्यतानिरूपिता तादात्म्यसम्बन्धावच्छिन्ना या शुद्धजलनिष्ठा समवायिकारणता, सा किञ्चिद्धर्मावच्छिन्ना कारणतात्वात् घटगतकार्यतानिरूपितदण्डवृत्तिकारणतावदिति ।

पूर्वञ्जन्यस्नेहनिष्ठकार्यताधर्मेण कारणतामनुमिमीमहे—तेन जन्यजले जलत्वं कारणतावच्छेदको जातिरूपो धर्मः सिध्यति । पश्चात् जन्यजलनिष्ठकार्यताधर्मेण नित्यजले अर्थात् जलपरमाणौ कारणतानुमानेन शुद्धजलेऽपि जलत्वजातिसिद्धिर्निष्प्रत्यूहेति परमसारः * ।

(मुक्ता०) **शुक्लरूपमेव जलस्येति दर्शयितुमुक्तं वर्णः शुक्ल इति । नतु शुक्लरूपवत्त्वं लक्षणम् । अथवा नैमित्तिकद्रवत्ववद्वृत्तिरूपवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वम्, अभास्वरशुक्लेतररूपासमानाधिकरणरूपवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वं वा तदर्थः । तेन स्फटिकादौ नातिव्याप्तिः ।**

(प्रभा०) ''नतु शुक्लरूपवत्त्वम्''—इति । पृथिव्यादावपि शुक्लरूपसत्त्वादतिव्याप्तिः स्यात्, तस्माद् ''वर्णः शुक्ल'' इति न जललक्षणम्, किन्तु पृथिव्यादिवत् जलेऽपि शुक्लो वर्ण इत्येवं दर्शयितुमुक्तम्बोध्यम् ।

---

* परे तु—''स्थूलजलवृत्तिप्रत्यक्षसिद्धजलत्वरूपजात्यवच्छिन्नसमवायिकारणतावच्छेदकतया परमाणुसाधारणजलत्वजातिसिद्धिः, कार्यतावच्छेदककारणतावच्छेदकयोरैक्ये क्षत्यभावात्, नित्यसाधारणधर्मस्य कार्यतावच्छेदकत्वे दोषाभावाच्चेत्याहुः'' इति **दिनकरी** । परमिमम्पक्षम्प्राचीना ''प्रभा'' न सहते तथाहि—स्थूलजले प्रत्यक्षप्रमाणसिद्धजलत्वमेव व्यवहारबलात् परमाणुद्व्यणुकयोरपि स्वीक्रियते इत्येतावदिष्टसिद्धेः कार्यतावच्छेदककारणतावच्छेदकयोरैक्यस्वीकारस्य नित्यवृत्तिधर्मस्य कार्यतावच्छेदकत्वस्वीकारस्य चायुक्तत्वादिति । परमिदं महच्चित्रमाभात्यस्माकं यद्व्यवहारबलात्परमाणुद्व्यणुकादिनित्याऽनित्यवृत्तिजलत्वे स्वीक्रियमाणेऽपि कार्यतावच्छेदककारणतावच्छेदकयोरैक्यस्वीकारस्याऽयुक्तत्वकथनं नामेति, युक्ताऽयुक्तविवेचने सुधियः सन्तु साक्षिणः ।

इदमपि लक्षणमेवेति प्रकारान्तरेण साधयितुमाह—"अथवा"—इति । **"नैमित्तिकद्रवत्ववद्"**—इति । नैमित्तिकद्रवत्ववती पृथिवी, तेजश्च नैमित्तिकद्रवत्ववत् । तत्र अवृत्तिः=न वृत्तिर्यस्याः तादृशी या रूपवद्वृत्तिः द्रव्यत्वस्य साक्षाद्व्याप्या जातिः, अर्थात् जलत्वमेव तद्वत्त्वम् "शुक्लरूपवत्त्व"पदेन विवक्षितमित्यर्थः । युक्तञ्चैतत् श्रुतिमूलकत्वात् । तथाच श्रुतिः—"यच्छुक्लं तदपाम्" इति । (छां० ६।४।१) एवञ्च शुक्लं रूपमपां स्वाभाविको धर्मः । तथैव रसद्रवत्वस्नेहा नैजा गुणाः प्रतिनियताः, अपर्यनुयोज्या हि वस्तुशक्तिः । स्फटिकादावतिव्याप्तिवारणाय कल्पान्तरमाह—**"अभास्वर"**—इति । अभास्वरम्=पराप्रकाशकं यच्छुक्लं रूपम्, तदितररूपं नीलपीतादिकम्, भास्वरं शुक्लरूपञ्च, तदसमानाधिकरणम्=तदधिकरणभिन्नाधिकरणकं यद्रूपं तादृशरूपवज्जलमेव, तद्वृत्तिर्या द्रव्यत्वस्य साक्षाद्व्याप्या जातिर्जलत्वम्, तादृशजातिमत्त्वं विवक्षितमिति न पृथिव्यादिष्वतिव्याप्तिरूपो दोष इत्यर्थः ।

**(मुक्ता०) रसस्पर्शाविति । जलस्य मधुर एव रसः शीत एव स्पर्शः । तिक्तरसवदवृत्तिमधुरवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वं तदर्थः, तेन शर्करादौ नातिव्याप्तिः । शीतेतरस्पर्शवदवृत्तिस्पर्शवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वं तदर्थः । ननु—शुक्लरूपवत्त्वमेवेति कुतः, कालिन्दीजलादौ नीलिमोपलब्धेरिति चेन्न, नीलजनकतावच्छेदिकायाः पृथिवीत्वजातेरभावाज्जले नीलरूपासम्भवात् । कालिन्दीजले नीलत्वप्रतीतिस्त्वाश्रयौपाधिकी । अत एव वियति विक्षेपे धवलिमोपलब्धिः ।**

(प्रभा०) **"मधुर एव"**—इति । शर्करादावजलेऽपि मधुररससत्त्वादतिव्याप्तिः, ताम्परिहर्तुं जातिघटितलक्षणमाह—**"तिक्तरसवद्"**—इति । तिक्तरसवती पृथिवी तस्यामवृत्तिः*र्या, मधुररसवति (जले) वृत्तिर्वर्तनं यस्याः, सा च तादृशी द्रव्यत्वस्य साक्षाद्व्याप्या जातिर्जलत्वम्, तादृशजातिमत्त्वम् "मधुररसवत्त्व"पदेन विवक्षितम् । शर्करादौ मधुररससत्त्वेऽपि तिक्तरसवदवृत्तिर्जातिः, अर्थात् जलत्वं न वर्त्तते, किन्तु ततो विरुद्धः तिक्तरसवद्वृत्तिः पृथिवीत्वं धर्मो वर्त्तत इति शर्करादौ नातिव्याप्तिः ।

जले शुक्लमेव रूपमित्यसहमानः शङ्कते—**"ननु"**—इति । कालिन्दी=यमुना । तस्याः जलम् । नीलिमोलब्धेः=नीलताप्रतीतेः । समाधत्ते—**"न"**—इति । यदाक्षिप्तं जले नीलरूपं तन्नेत्यर्थः । तत्र हेतुमाह—**"नीलजनकता"**—इति । नीलनिष्ठजन्यतानिरूपितजनकतेत्यर्थः ।

**अयमर्थः**—नीलरूपनिष्ठा या जन्यता=कार्यता तादृशजन्यतानिरूपिता या जनकता, अर्थात् पृथिवीनिष्ठा कारणता, तदवच्छेदकत्वम्पृथिवीत्वं जातिरूपो धर्मः, तस्याभावात् जले नीलरूपस्यैवासम्भवे इति कुतो नीलरूपवत्त्वमिति । कथं तर्हि

---

* न वृत्तिर्वर्त्तनं यस्याः सा "अवृत्तिः" ।

नीलत्वप्रतीतिरित्याह ?—"नीलत्वप्रतीतिस्तु"—इति । स्वसमवायिसंयोगसम्बन्धेन उपष्टम्भकपार्थिवभागगतनीलरूपप्रतीतिः कालिन्दीजलादौ । पृथिवीसम्बन्धेन नीलरूपप्रतीतिः औपाधिकी, नतु स्वाभाविकं नीलरूपं यमुनाजल इत्यर्थः । लापनप्रकारस्तु स्पष्ट एव ।

(मुक्ता०) अथ जले माधुर्ये किम्मानम्, नहि प्रत्यक्षेण कोऽपि रसस्तत्रानुभूयते । नच नारिकेलजलादौ माधुर्यमुपलभ्यत एवेति वाच्यम्, तस्याश्रयौपाधिकत्वात् । अन्यथा जम्बीररसादावम्लाद्युपलब्धेरम्लादिमत्त्वमपि स्यादिति चेन्न, हरीतक्यादिभक्षणस्य जलरसव्यञ्जकत्वात् । नच हरीतक्यामेव जलोष्मसंयोगाद्रसान्तरोत्पत्तिरिति वाच्यम्, कल्पनागौरवात् । पृथिवीत्वस्याम्लादिजनकतावच्छेदकत्वाच्च जले नाम्लादिकम् । जम्बीररसादौ त्वाश्रयौपाधिकी तथा प्रतीतिः । एवञ्चान्यशीतस्पर्शजनकतावच्छेदकञ्जन्यजलत्वम्, तदवच्छिन्नजनकतावच्छेदकन्तु जलत्वस्बोध्यम् । घृष्टचन्दनादौ तु शैत्योपलब्धिश्चन्दनान्तवर्तिशीततरसलिलस्यैव । तेजःसंयोगाज्जले उष्णप्रतीतिरौपाधिकी स्फुटैव । तत्र पाकासम्भवात् ।

(प्रभा०) * स्वसमवायिसंयोगसम्बन्धेन पार्थिवभागगतं नीलरूपं यमुनाजले प्रतीयते, नतु नीलरूपं तत्र समवेतम् । "स्व"पदेन नीलरूपम्, तस्य समवायी=समवायसम्बन्धेनाधारः पृथिवीभागः, तस्य संयोगो जलेन सहास्तीति परम्परासम्बन्धद्वारा जलाधोवर्त्तमानपार्थिवभागरूपोपाधिना जले नीलरूपत्वप्रत्ययो भ्रम इति भावः । अत्रैव गमकमाह—"वियति विक्षेप"—इति । नीलताप्रतीतिघटकस्योक्तसम्बन्धस्य आकाशे जलप्रक्षेपेण नाशादिति भावः ।

जले मधुररसमाक्षिपति—"अथ"—इति । "नहि प्रत्यक्षेण"—इति । रासनप्रत्यक्षेण जले न कस्यचिद्रसस्य प्रत्यय इत्यर्थः । यदि द्राक्षेक्षुनारिकेलजलादौ माधुर्योपलम्भात्तत्र मधुर एव रस इत्युच्येत ? तत्राह—"आश्रयौपाधिकत्वाद्"—इति । पूर्ववत् स्वसमवायिसंयोगसम्बन्धेन पार्थिवभागगतस्यैव मधुररसस्योपलम्भः नत्वसौ स्वाभाविकः । अत्रैव परपक्षे बाधकम्प्रदर्शयन् स्वपक्षसाधकं तर्कमाह—"अन्यथा"—इत्यादिना । आश्रयौपाधिकत्वानङ्गीकारे इत्यर्थः ।

उक्ताक्षेपं तिरस्करोति—"इति चेन्न"—इत्यादिना । "जलरस"—इति । जलीयरसज्ञापकत्वादित्यर्थः । जलेऽनुद्बुद्धो मधुरो रसो वर्त्तत एव, उद्बुद्धरूपतया तस्य प्रतीतिस्तु—यदा हरीतकी आमलकं वा भक्षितं स्यात्, ततो रसनेन्द्रियवर्त्तिविशिष्टमलापनयनेन मधुररसस्य स्पष्टः प्रत्ययो जायत इत्याशयः ।

* स्वम्पार्थिवभागगतं नीलरूपम् ।

आशङ्क्य समाधत्ते–"नच"–इत्यादिना। जलेन सहाऽऽस्यगतवाष्पविशेषस्य सम्बन्धेन हरीतक्यामेव रसान्तरमुत्पद्यते मधुराख्यम्, नतु तज्जलीयमिति शङ्काकर्तुरभिप्रायः।

कल्पनागौरवान्नैतदादरार्हमिति सिद्धान्तिनोऽभिप्रायः। हरीतक्यामेव रसान्तरोत्पत्तिस्वीकारवादिनो मते कल्पनागौरवप्रकारश्चायम्–"फलादिरूपायाम्पृथिव्यां यत्र पूर्वरसनाशे रसान्तरोत्पत्तिर्दृश्यते, तत्र विलक्षणतेजःसंयोगः=पाकविशेष एव हेतुः" इति सार्वभौमो नियमः। यदि तु हरीतकीदृष्टान्तानुरोधेन जलसंयोगोऽपि पृथिवीरसोत्पादकः स्वीक्रियेत, तदा अधिककार्यकारणभावस्य कल्पना गुरुभूतैव, अर्थात् तेजःसंयोगस्तु पृथिवीरसव्यञ्जकः स्वीकृतः=क्लृप्त एव, तत्समो जलसंयोगोऽप्यन्यः कल्पनीय इति प्रतिवादिमते कार्यकारणभावद्वयकल्पनया गौरवम्। मम सिद्धान्तिनो मते तु जलगतस्यैव मधुररसस्य व्यञ्जिका हरीतकीति नास्ति गौरवम्। अधिकं रामरुद्रयादौ निरीक्ष्यं ग्रन्थगौरवभयात्सुकुमारमतीनाञ्चानुपयोगान्न बहु प्रपञ्च्यते।

ननु—अस्तु जले मधुरो रसस्तथापि जम्बीरजलादौ प्रत्यक्षसिद्धस्याम्लरसाऽनुभवस्य कथमपलापः कर्तुं शक्येत इत्याशङ्कमानम्प्रत्याह—"पृथिवीत्वस्य"—इति। आम्लादिरसनिष्ठा या जन्यता, तादृशजन्यता निरूपिता या जनकता (पृथिवीनिष्ठा) तदवच्छेदकम्पृथिवीत्वम्, पृथिव्यामेव नतु जल इति जले नाम्लादिरसस्वीकारः, अर्थात् पृथिवीत्वसमानाधिकरणक एवाम्लादिरसो नतु जलत्वसमानाधिकरणकः।

कथं तर्हि जम्बीररसादावाम्लरसोपलब्धिरिति ? तत्राह–"जम्बीररसादौ"–इति। स्वसमवायिसंयोगसम्बन्धेन पृथिवीगतस्य आम्लरसस्य जले प्रत्यय औपाधिक एवेत्यर्थः।

जलत्वजातावनुमानम्प्रमाणमाह–"एवम्"–इति। "जन्यशीतस्पर्श"—इति। जन्यशीतस्पर्शनिष्ठा या जन्यता, तन्निरूपिता या जनकता, तदवच्छेदकञ्जन्यजलत्वम्। एवञ्जन्यजलनिष्ठा या जन्यता, तन्निरूपिता या जनकता, तदवच्छेदकत्वं शुद्धजलत्वमेव, निरवच्छिन्नायाः जनकताया अभावादित्यर्थः।

ननु–शीतस्पर्शवत्त्वं न जललक्षणञ्चन्दनादिपृथिव्यामपि शैत्यसत्त्वाद्घर्षणेन तदुपलब्धेरितीमां शङ्काम्परिहर्तुमाह—"घृष्टचन्दनादौ"–इति। "सलिलस्यैव"–इति। एवकारो घृष्टचन्दनव्यवच्छेदार्थः। अर्थः स्पष्टः। पूर्वमुक्तम् "शीत एव स्पर्श" इति तत्साधयति—"तेजःसंयोगात्"—इति। स्वसमवायिसंयोगसम्बन्धेन "तेजस एवौष्ण्यञ्जले प्रतीयत" इति भावः। तत्र हेतुमाह—"पाकासम्भवात्"—इति। पूर्वस्पर्शनाशकस्पर्शान्तरोत्पादकविजातीयतेजःसंयोगासम्भवादित्यर्थः।

(मुक्ता०) स्नेहस्तत्रेति। घृतादावपि तदन्तर्वर्तिजलस्यैव * स्नेहः

* उक्तञ्च प्रशस्तपादे द्रव्यग्रन्थे जलनिरूपणे—"स्नेहोऽम्भस्येव सांसिद्धिकञ्च द्रवत्वम्" अत्राह कन्दलीकारः—"निर्विशेष एव स्नेहोऽपां वैधर्म्यमिति ध्वनति" इति।

जलस्य स्नेहसमवायिकारणत्वात् । तेन जल एव स्नेह इति मन्तव्यम् । द्रवत्वमिति । सांसिद्धिकद्रवत्वत्वञ्जातिविशेषः प्रत्यक्षसिद्धः, तदवच्छिन्न-जनकतावच्छेदकमपि तदेवेति भावः । तैलादावपि जलस्य द्रवत्वं स्नेह-प्रकर्षेण च दहनानुकूल्यमिति वक्ष्यति ॥ ३६ ॥

(प्रभा०) "घृतादावपि"—इति । घृतादिपृथिव्यां यः स्नेह उपलभ्यते, असावपि जलस्यैव । जलमेव स्नेहसमवायिकारणमिति भावः । पूर्वं जलत्वजाति-सिद्धौ प्रदर्शितमिदम् । "तदवच्छेदकमपि"—इति । सांसिद्धिकद्रवत्वनिष्ठा या जन्यता, तन्निरूपिता या जनकता, तदवच्छेदकञ्जलत्वमेवेति भावः । शिष्टं स्पष्टम् । ननु—यदि स्नेहो जलधर्मः कथं तर्हि तस्याग्निप्रज्वलनानुकूलता जलेनाग्नेरुपशमो-पलम्भादित्याशङ्क्याह—"तैलादावपि"—इति । प्रकृष्टः स्नेहस्तैलादिगतः जलगुणो दहनानुकूलः, अप्रकृष्टश्च दहनप्रतिकूल इति भावः । "इति वक्ष्यति"—इति । स्नेहनिरूपणावसरे गुणग्रन्थ इति शेषः ॥ ३६ ॥

(का०) नित्यतादि प्रथमवत्किन्तु देहमयोनिजम् ।
इन्द्रियं रसनं सिन्धुहिमादिर्विषयो मतः ॥४०॥

(मुक्ता०) प्रथमवदिति । पृथिव्या इवेत्यर्थः । तथाहि—जलं द्विविधं नित्यमनित्यञ्च । परमाणुरूपं नित्यं द्व्यणुकादिकं सर्वमनित्यमवयव-समवेतञ्च । अनित्यमपि त्रिविधं शरीरेन्द्रियविषयभेदात् । पृथिवीतो यो विशेषस्तमाह । किन्त्विति । देहमयोनिजम् । अयोनिजमेवेत्यर्थः । जलीयं शरीरं वरुणलोके प्रसिद्धम् ।

(प्रभा०) "प्रथमवदिति"—इति । प्रथमस्येव प्रथमवत् । "तत्र तस्येव" (५।१।११६) इति षष्ठ्यन्ताद्वतिप्रत्ययः । "जलीयं शरीरम्"—इति । तच्च पृथिवीभागोपष्टब्धमेव ज्ञेयम् । यथा पार्थिवशरीरमपि जलादिभागोपष्टब्धम् । तेन जलमात्रे हस्तपादादिव्यवस्थाया असम्भवेऽपि न क्षतिः=लक्षणासम्भवदोषो नेत्यर्थः । नन्वेतादृशं शरीरं क्वास्तीति ? आह—"*वरुणलोक"—इति । परमिदं शरीर-मयोनिजमेव । तथाच प्रशस्तपादे उक्तम्—"तत्र शरीरमयोनिजमेव वरुणलोके पार्थिवावयवोपष्टम्भाच्चोपभोगसमर्थम्" इति ।

(मुक्ता०) इन्द्रियमिति । जलीयमित्यर्थः । तथाहि—रसनञ्जलीयं गन्धाद्यव्यञ्जकत्वे सति रसव्यञ्जकत्वात् सक्तुरसाभिव्यञ्जकोदकवत् । रसनेन्द्रियसन्निकर्षे व्यभिचारवारणाय द्रव्यत्वं देयम् । विषयं दर्शयति—

---

* वरुणो नाम अपामधिष्ठात्री देवता । अत्र वेदमन्त्रः—"वरुणः प्राविता भुवन्मित्रो विश्वाभिरूतिभिः । करतां नः सुधारसः ॥ (ऋ० मं० १।६।२४) इति ।

सिन्धुरिति । सिन्धुः समुद्रः । हिमन्तुषारः । आदिपदात् सरित्कासारकरकादिः सर्वोऽपि ग्राह्यः । नच हिमकरकयोः काठिनत्वात् पार्थिवत्वमिति वाच्यम्, ऊष्मणो विलीनस्य तस्य जलत्वस्य प्रत्यक्षसिद्धत्वात्, यद् द्रव्यं यद्द्रव्यध्वंसजन्यमितिव्याप्तेर्जलोपादानोपादेयत्वसिद्धेः । अदृष्टविशेषेण द्रवत्वप्रतिरोधात्करकायाः काठिन्यप्रत्ययस्य भ्रान्तित्वात् ॥४०॥

(प्रभा०) रसनेन्द्रियस्य जलीयत्वेऽनुमानम्मानमाह—"रसनञ्जलीयम्"—इत्यादि । रसनमिति पक्षः, जलीयमिति साध्यम्, गन्धाद्यव्यञ्जकत्वे सतीत्यादि हेतुः, सक्तुरसेत्यादि दृष्टान्तवाक्यम् । रसव्यञ्जके मनसि हेतोर्व्यभिचारमाशङ्कयाह—"गन्धाद्यव्यञ्जक"—इति । मनस्तु गन्धादेरपि व्यञ्जकं नतु केवलं रसव्यञ्जकम्, इदन्तु रसमात्रव्यञ्जकत्वाज्जलीयमिति । यद् गन्धाद्यव्यञ्जकत्वे सति रसव्यञ्जकं तज्जलीयम्, यथा सक्तुरसाभिव्यञ्जकमुदकञ्जलीयमिति प्रतिबन्धसिद्धिः । जलीयम्=जलारम्भकपरमाणुभिर्द्व्यणुकादिक्रमेणारभ्यमाणमित्यर्थः ।

"करकादि" इत्यत्र आदिपदात् कूपादिपरिग्रहः । "कठिनत्वात्"—इति । कठिनस्पर्शवत्त्वादित्यर्थः । विलीनस्य तस्येत्यत्र सप्तम्यर्थे षष्ठी । विलीनताया द्रवत्वरूपाया जलत्वव्यञ्जकत्वादिति भावः । विलीने करकादौ जलत्वस्य प्रत्यक्षे घनावस्थायामपि तज्जलतो न भिन्नमित्यत्र नियमं दर्शयति—"यद् द्रव्यम्"—इति । यज्जलरूपं द्रव्यं यतो हिमकरकादिद्रव्यस्य ध्वंसाज्जन्यम्भवति, तज्जलरूपं द्रव्यं हिमकरकादिद्रव्यस्योपादानरूपेणैवोपादेयम्भवतीत्यत्रोक्तनियमसञ्चारो बोध्यः ।

अनया व्याप्त्या हिमकरकादिर्न जलाद्भिन्नः पदार्थ इति भावः । हिमकरकादिषु कठिनस्पर्शप्रतीतिस्तु भ्रान्त्यैवेति बोध्यम् । यतो जीवानामदृष्टविशेषेणैव जलगतं द्रवत्वं प्रतिबद्धम्, तेन तत्र कठिनताप्रत्ययः, नतु वास्तविकं काठिन्यं येन हिमादीनाम्पार्थिवत्वं स्वीक्रियेतेति रहस्यम् । शिष्टं स्पष्टम् ।

सर्वस्यास्य जलग्रन्थस्य मूलम् "अप्त्वाभिसम्बन्धादपि" इत्यारभ्य "विषयस्तु सरित्समुद्रहिमकरकादिः" इत्यन्तः प्रशस्तग्रन्थो ज्ञेयः ॥ ४० ॥

इति जलग्रन्थः ।

---

(का०) उष्णः स्पर्शस्तेजसस्तु स्याद्रूपं शुक्लभास्वरम् ।
नैमित्तिकं द्रवत्वन्तु नित्यतादि च पूर्ववत् ॥४१॥

(मुक्ता०) तेजो निरूपयति "स्पर्श उष्ण" इत्यादिना । उष्णत्वं स्पर्शनिष्ठो जातिविशेषः प्रत्यक्षसिद्धः । इत्थञ्च जन्योष्णस्पर्शसमवायिकारणतावच्छेदकन्तेजस्त्वञ्जातिविशेषः । तस्य परमाणुवृत्तित्वन्तु जलस्ये-

वानुसन्धेयम् । नचोष्णस्पर्शवत्त्वञ्चन्द्रकिरणादावव्याप्तमिति वाच्यम्, तत्राप्युष्णत्वस्य सत्त्वात् । किन्तु तदन्तःपातिजलस्पर्शेनाभिभवादग्रहः । एवं रत्नकिरणादौ पार्थिवस्पर्शेनाभिभवाच्चक्षुरादौ चानुद्भूतत्वादग्रहः। रूपमित्यादि । वैश्वानरे मरकतकिरणादौ च पार्थिवरूपेणाभिभवा-च्छुक्लरूपाग्रहः ।

(प्रभा०) "उष्णत्वम्"—इति । धर्मत्वमित्यर्थः । प्रत्यक्षसिद्धः"=त्वाच-प्रत्यक्षवेद्यः । "इत्थञ्च"—इति । प्रत्यक्षप्रमाणेन उष्णत्वजातिसिद्धौ चेत्यर्थः । "येनेन्द्रियेण" इत्यादिन्यायेन त्वगिन्द्रियेणोष्णस्पर्शज्ञानम्, तेनैव तन्निष्ठाया उष्णत्व-जातेरपि ग्रहः । एवमुष्णस्पर्शनिष्ठा या कार्यता, तादृशकार्यतानिरूपिता या तेजोनिष्ठा कारणता, तदवच्छेदकत्वं तेजस्त्वं जातिविशेषः, तत्सिद्धिरनुमानेनेत्यर्थपरोऽयम् "जन्यो-ष्णस्पर्श" इत्यादिग्रन्थः । अत्र पारमर्षं सूत्रम्—"तेजोरूपस्पर्शवत्" (वै० २।१।३) इति । श्रुतिरपि—"यदग्ने रोहितं रूपम् तेजसस्तद्रूपम्" ( छां० ६ । ४ । १ ) इति तेज आह । यत्तु—कश्चिद्भास्वरं शुक्लं रूपमिति नवीनाः, लोहितं रूपमिति वैदिका इत्युक्तवान् स भ्रान्तः श्रौतरोहितरूपस्य भास्वरशुक्लार्थपरत्वेनापि नेतुं शक्यत्वात् ।

ननु—जन्योष्णस्पर्शसमवायिकारणञ्जन्यं तेजः, तत्र तेजस्त्वजातिसिद्धावपि तद्भिन्नेषु तेजःपरमाणुषु कथं तेजस्त्वजातिसिद्धिरित्यत आह—"तस्य परमाणु-वृत्तित्वम्"—इति । यथा जन्यजलत्वावच्छिन्नजनकतावच्छेदकतया जलपरमाणौ जलत्वञ्जातिः सिध्यति, तथैव जन्यतेजस्त्वावच्छिन्नजनकतावच्छेदकतया तेजःपरमाणु-ष्वपि तेजस्त्वाख्या जातिः सिध्यतीति भावः ।

किञ्च यत्र समवायेन * आम्रादिफलेषु पूर्वरसादिपरावृत्तिः मधुररसाद्यन्तरो-त्पत्तिश्च, तत्रापि समवायेन विलक्षणतेजःसंयोग एव कारणम्, तादृशकारणता-वच्छेदकतयापि तेजस्त्वजातिसिद्धिर्द्रष्टव्या ।

चन्द्रकिरणादावुष्णस्पर्शवत्त्वस्य तेजोलक्षणस्यातिप्रसक्तिमाशङ्क्य समाधत्ते—"नच" इत्यादिना । "चन्द्रकिरणादौ" इत्यत्र आदिपदेन हीरकादिरत्नकिरणादेरपि परिग्रहः । तत्रापि=चन्द्रकिरणादावपि । उष्णत्वस्य=उष्णस्पर्शस्येत्यर्थः । सत्त्वात्= विद्यमानत्वात् । यदि चन्द्रकिरणादावुष्णत्वं तदा कुतो न त्वचा गृह्यते, प्रत्युत तत्प्रतियोगिनः शीतस्पर्शस्यैव ग्रह इत्याशङ्कायामाह—"किन्तु"—इति । तदन्तः-पातिजलस्पर्शेन=चन्द्रकिरणान्तर्गतजलभागीयशीतस्पर्शेन । अभिभवो नाम बलवत्सजातीयसम्बन्धः । बलवत्सजातीयग्रहणकृतमग्रहणं वा । यथा सुवर्णरूपवृत्ति-

---

* समवायसम्बन्धावच्छिन्ना आम्रादिफलगतमधुररसनिष्ठा या कार्यता, तादृशकार्यता निरूपिता या, समवायसम्बन्धावच्छिन्ना तेजःसंयोगनिष्ठा कारणता, सा किञ्चिद्धर्मावच्छिन्ना निरवच्छिन्नायाः कारणताया अभावात् । यश्च धर्मस्तस्या अवच्छेदकः स एव जातिरिति भावः ।

शुक्लत्वभास्वरत्वयोः पृथिवीभागीयरूपाभिसम्बन्धेनाग्रहः । तथा प्रकृते चन्द्रकिरणादौ उष्णस्पर्शसत्वेऽपि बलवत्सजातीयजलीयस्पर्शेणाग्रहः । उक्तं न्यायं रत्नकिरणादावपि योजयितुमाह—"एवम्"—इति । पार्थिवस्पर्शेन=तदन्तःपार्थिवस्पर्शेनेत्यर्थः । ननु—चक्षुरादौ नाभिभवः, तत्र कुतो नोष्णस्पर्शोपलब्धिरिति शङ्कायामाह—"चक्षुरादौ"—इति । अनुद्भूतत्वात्=अनुत्कटत्वात् । अग्रहः=ज्ञानाभावः । वैश्वानरे=वह्नौ । सुगममन्यत् ।

(मुक्ता०) अथ—तद्रूपाग्रहे धर्मिणोऽपि चाक्षुषत्वं न स्यादिति चेन्न, अन्यदीयरूपेणाऽपि धर्मिणो ग्रहसम्भवात्, शङ्खस्येव पित्तपीतिम्ना । वह्नेस्तु शुक्लरूपं नाभिभूतम्, किन्तु तदीयं शुक्लत्वमभिभूतमित्यन्ये । नैमित्तिकमिति । सुवर्णादिरूपे तेजसि तत्सत्त्वात् । नच नैमित्तिकद्रवत्वं दहनादावव्याप्तं घृतादावतिव्याप्तञ्चेति वाच्यम्, पृथिव्यवृत्तिनैमित्तिकद्रवत्ववद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वस्य विवक्षितत्वात् । पूर्ववदिति । जलस्येवेत्यर्थः । तथाहि—तत् द्विविधं नित्यमनित्यञ्च । नित्यम्परमाणुरूपं तदन्यदनित्यम्, अवयवि च । तच्च त्रिधा शरीरेन्द्रियविषयभेदात् । शरीरमयोनिजमेव । तच्च सूर्यलोकादौ प्रसिद्धम् ॥ ४१ ॥

(प्रभा०) ननु—यदि वह्नौ पार्थिवरूपेण स्वरूपस्य=भास्वरशुक्लरूपस्य अभिभवः तर्हि तस्य=भास्वरशुक्लरूपधर्मिणो वह्नेः प्रत्यक्षं न स्यात्, द्रव्यीयचाक्षुषप्रत्यक्षे स्वगतोद्भूतरूपस्य कारणत्वात् इत्याशङ्कते—"अथ"—इति । क्वचित् "ननु" इति पाठान्तरम् । तद्रूपाग्रहे=वैश्वानरादिरूपादिग्रहे । धर्मिणः=वैश्वानरादेः । चाक्षुषत्वम्=चाक्षुषप्रत्यक्षविषयत्वम् । खण्डयितुमाह—"इति चेन्न"—इति । सिद्धान्तं ग्रथ्नाति—"अन्यदीयरूपेण"—इति । पार्थिवरूपेणेत्यर्थः । अस्यायमर्थः—नायं नियमो यत्स्वगतरूपसाक्षात्कारे सत्येव तद्धर्मिणो द्रव्यस्य साक्षात्कारः । किन्तु द्रव्यीयचाक्षुषप्रत्यक्षे उद्भूतरूपमात्रमपेक्षितं तत्स्वीयं स्यादन्यदीयं वेति नाग्रहः । यथा "पीतः शङ्खः" इत्याकारकशङ्खात्मकप्रत्यक्षं नेत्रगतपीतिमद्रव्यसम्बन्धेन तद्गतपीतप्रत्यक्षेणापि जायते, तथैव पार्थिवभागीयरूपसम्बन्धेन वैश्वानरस्य प्रत्यक्षे न किञ्चित् बाधकम्पश्यामः । अत्रैव मतान्तरमाह—"वह्नेस्तु"—इति । अक्षराणि स्पष्टानि । तथापि—स्वसवायिसमवायिसंयुक्तसमवेतत्वसम्बन्धेन पीतत्वजात्या शुक्लत्वमभिभूतमित्यर्थो बोध्यः । "स्व"पदेन पीतत्वग्रहमुक्तीय सम्बन्धो घटनीयः ।

परममूले—"नैमित्तिकं द्रवत्वम्"—इति । तथाच—"नैमित्तिकद्रवत्ववत्त्वं तेजस्त्वम्" इत्यपरं तेजोलक्षणम् । ननु—तेजसि नास्त्येव द्रवत्वमित्युक्तलक्षणेऽसम्भवो दोष इति शङ्कां वारयितुमाह—"सुवर्णादिरूप"—इति । तत्सत्त्वात्=नैमित्तिकद्रवत्वसत्त्वादित्यर्थः ।

नैमित्तिकद्रवत्वरूपे तेजोलक्षणेऽसम्भवदोषम्परिहृत्य तत्राव्याप्तिदोषमतिव्याप्तिदोषञ्च परिहर्तुमाक्षेपसमाधानाभ्यां ग्रथ्नाति "नच" इत्यादि । समाधानग्रन्थस्याऽयमर्थः—*पृथिव्यामवृत्तिः (न वृत्तिर्वर्त्तनं यस्याः सा अवृत्तिः) नैमित्तिकद्रवत्ववति=तेजसि वृत्तिर्यस्याः सा तादृशी या द्रव्यत्वस्य साक्षाद्व्याप्या जातिः तेजस्त्वं तादृशजातिमत्त्वम् "नैमित्तिकद्रवत्ववत्त्व"पदेन विवक्षितमिति नाग्न्यादावव्याप्तिर्नापि घृतादिरूपायाम्पृथिव्यामतिव्याप्तिः । पूर्ववदितीत्यादिग्रन्थो निगदव्याख्यातः ।

(का०) इन्द्रियं नयनं वह्निस्वर्णादिर्विषयो मतः ।

(मुक्ता०) अत्र यो विशेषस्तमाह—ननु चक्षुषस्तैजसत्वे किम्मानमिति चेत्, चक्षुस्तैजसम्परकीयस्पर्शाद्यव्यञ्जकत्वे सति परकीयरूपव्यञ्जकत्वात्प्रदीपवत् । प्रदीपस्य स्वीयस्पर्शव्यञ्जकत्वादत्र दृष्टान्तेऽव्याप्तिवारणाय प्रथमम्परकीयेति । घटादेः स्वीयरूपव्यञ्जकत्वाद्व्यभिचारवारणाय द्वितीयम्परकीयेति । अथवा प्रभाया दृष्टान्तत्वसम्भवादाद्यम्परकीयेति न देयम् । चक्षुःसन्निकर्षे व्यभिचारवारणाय द्रव्यत्वं देयम् ।

(प्रभा०) "इन्द्रियं नयनम्"—इत्यादिना । चक्षुषस्तैजसत्वमाक्षिपति—"ननु"—इति । तत्रानुमानम्प्रमाणयति—"चक्षुस्तैजसम्'—इति । यत् परकीयस्पर्शाद्यव्यञ्जकत्वे सति परकीयरूपव्यञ्जकं तत् तैजसं दृष्टम्, यथा प्रदीप इति प्रतिबन्धसिद्धिः ।

यदि हेतुविशेषणम् "स्पर्शाद्यव्यञ्जकत्वे सति" इत्येवोच्येत, तदा दृष्टान्ते प्रदीपे विशेषणासिद्धिरूपो दोषः स्यात् तं निवारयितुम् "परकीय" इतिपदं निवेशितमित्यभिप्रायेणाह—"दृष्टान्तेऽव्याप्तिवारणाय"—इति । प्रदीपः स्वीयस्पर्शव्यञ्जकः सन्नपि न परकीयस्पर्शव्यञ्जकत्वे समर्थः ।

परन्तु घटाद्या अपि पदार्थाः परकीयस्पर्शाव्यञ्जकाः सन्तो विषयतासम्बन्धेन स्वीयरूपव्यञ्जकाः, एवञ्च तेषु हेतोर्व्यभिचारः स्यादतस्तद्वारणाय हेतौ द्वितीयम् "परकीय"पदं दत्तमित्यभिप्रायेणाह—"घटादेः स्वीयरूप"—इत्यादि ।

हेतौ शरीरकृतं लाघवमभिप्रेत्य कल्पान्तरमाह—"अथवा"—इति । प्रदीप-

---

* अस्य जातिघटितलक्षणस्य पदकृत्यप्रकारोऽयम्—नैमित्तिकद्रवत्ववद्वृत्तिः पृथिवीत्वजातिः, तामादाय पृथिव्यामतिव्याप्तिः, यदि "पृथिव्यवृत्ति"पदं नोच्येत । अतस्तत्र अतिव्याप्तिनिरासाय "पृथिव्यवृत्ति"पदमुपात्तम् ।

यदि तु "नैमित्तिकद्रवत्ववत्त्व"पदं न दीयेत तदा "पृथिव्यवृत्तिजाति"पदेन जलत्वमपि गृहीतुं शक्यते, तेन जलेऽतिव्याप्तिः । एवमेव वायुत्वमादाय वायावतिव्याप्तिः, तद्वारणाय "नैमित्तिकद्रवत्ववद्वृत्ति" इति पदं दत्तम् । वायुतेजोऽन्यतरत्वमादाय वायावप्यतिव्याप्तिरायाति तन्निवारणाय "जाति"पदं निवेशितम् ।

दृष्टान्तस्थाने "प्रभावत्" इति दृष्टान्तवाक्यं स्यात् । तथाच प्रथमं "परकीय"पदं न देयम्, हेतुस्तु—"स्पर्शाद्यव्यञ्जकत्वे सति परकीयरूपव्यञ्जकत्वात्" इति कल्पनीय इत्यर्थः । तेन नैव विशेषणासिद्धिवारणक्लेशः । नहि प्रभा स्वस्पर्शव्यञ्जने परकीयस्पर्शव्यञ्जने वा समर्था इति हेतोर्विशेषणं सिद्धमेवेति भावः । ननु—तथापि हेतौ व्यभिचारो दोषः घटचक्षुःसंयोगः स्पर्शादेरव्यञ्जकः परकीयरूपव्यञ्जकश्च, परं न तैजसः, एवं तैजसत्वसाध्याभाववति चक्षुःसंयोगे गतत्वादयं हेतुर्व्यभिचारीति शङ्कां वारयितुमाह—"चक्षुःसन्निकर्ष"—इति । तथाच—"द्रव्यत्वे सति स्पर्शाद्यव्यञ्जकत्वे सति परकीयरूपव्यञ्जकत्वात्" इति हेतुशरीरं घटनीयम् । घटचक्षुःसंयोगः स्पर्शाद्यव्यञ्जकः परकीयरूपव्यञ्जकोऽपि न द्रव्यम्, अपि तु गुण इति न व्यभिचारगन्धः ।

(मुक्ता०) विषयं दर्शयति—वह्निरिति । ननु सुवर्णस्य तैजसत्वे किस्मानमिति चेन्न, सुवर्णं तैजसमसति प्रतिबन्धके अत्यन्तानलसंयोगेऽप्यनुच्छिद्यमानजन्यद्रवत्वात् यन्नैवं तन्नैवम्, यथा पृथिवीति । नचाप्रयोजकम्, पृथिवीद्रवत्वस्य जन्यजलद्रवत्वस्य चात्यन्ताग्निसंयोगनाश्यत्वात् । ननु—पीतिमगुरुत्वाश्रयस्य पार्थिवभागस्यापि तदानीं द्रुतत्वात्तेन व्यभिचार इति चेन्न, जलमध्यस्थमसीक्षोदकवत्तस्याद्रुतत्वात् अपरे तु—पीतिमाश्रयस्य अत्यन्ताग्निसंयोगेऽपि पूर्वरूपापरावृत्तिदर्शनात्तत्प्रतिबन्धकं विजातीयद्रवद्रव्यं कल्प्यते । तथाहि—अत्यन्ताग्निसंयोगे पीतिमगुरुत्वाश्रयः विजातीयरूपप्रतिबन्धकद्रवद्रव्यसंयुक्तः अत्यन्ताग्निसंयोगे सत्यपि पूर्वरूपविजातीयरूपानधिकरणत्वात्, जलमध्यस्थपीतपटवत् । तस्य च पृथिवीजलभिन्नस्य तेजस्त्वनियमात् ।

(प्रभा०) "विषयं दर्शयति"—इति । तैजसो विषयश्चतुर्विधः । भौमदिव्यौदर्याकरजभेदात् । भौमं वह्न्यादिकम् । अविन्धनं दिव्यं विद्युदादि । भुक्तस्य परिणामहेतुरुदर्यम् । आकरजं सुवर्णादीत्यभिप्रायवान् "वह्निस्वर्णादिर्विषयो मतः" इति परममूलग्रन्थः । उक्तञ्च न्यायकन्दल्याम्—भोगिनामदृष्टवशेन भूयसाम्पार्थिवावयवानामुपष्टम्भादनुद्भूतरूपस्पर्शं पिण्डीभावयोग्यं सुवर्णादिकमारभ्यते, तत्र पार्थिवद्रव्यसमवेता इमे रसादयो गृह्यन्त इति ।

सुवर्णस्य तैजसत्वे मानम्पृच्छति—"ननु"—इति । किमाक्षेप इति केचित् । नास्त्येव सुवर्णस्य तैजसत्वे मानं तद्विरुद्धप्रमाणसत्त्वात् । तथाहि—सुवर्णम्पार्थिवं नैमित्तिकद्रवत्ववत्त्वाज्जतुप्रभृतिवदित्यनुमानेन सुवर्णम्पार्थिवमेवेति आक्षेप्तुराशयः ।

तदेतत्समाधत्ते—"न"—इति । "सुवर्णं तैजसम्" इति प्रतिज्ञावाक्यम् । "असति प्रतिबन्धक" इत्यादि हेतुवाक्यम् । "यन्नैवं तन्नैवम्" इत्यादि व्यतिरेकि-

दृष्टान्तवाक्यम् । तदयमर्थः—असतिप्रतिबन्धके=प्रतिबन्धकसंसर्गाभावे सति अत्यन्तं योऽनलसंयोगो वह्निसंसर्गः तस्मिन्सत्यपि अनुच्छिद्यमानमविनश्यद् यद् द्रवत्वं तस्वात् । यन्नैवम्=यदसतिप्रतिबन्धकेऽत्यन्तानलसंयोगे अनुच्छिद्यमानद्रवत्त्वाधिकरणं न अर्थात् तादृशप्रतिबन्धकसंसर्गाभावकालेऽप्यत्यन्तानलसंयोगेन यस्य द्रवत्वमुच्छिन्नम्= विनाशि भवति । तन्नैवम्=तत्तैजसमपि न भवति । यथा पृथिवी । घृतलाक्षारूपायाः पृथिव्या असति प्रतिबन्धके अत्यन्तानलसंयोगे द्रवत्वं विनश्यति । अत एव घृतादिकं न तैजसम् । सुवर्णन्तु पृथिवीविरुद्धस्वभावत्वात्तैजसमेव ।

ननु—इदमनुमानमप्रयोजकम् ? । सुवर्णपक्षे "असतिप्रतिबन्धक" इत्यादिकं हेतुरस्तु साध्यं यत् तैजसं तन्माभूत् विपक्षे बाधकतर्काऽसत्त्वादित्याक्षेपपूर्वकं समाधानमाह—"नच"—इत्यादिना ।

घृतलाक्षादिपृथिव्यां जन्यजले च द्रवत्वमस्ति, तदग्निसंयोगनाश्यं सुवर्णद्रवत्वन्तु अत्यन्ताग्निसंयोगे सत्यपि न नश्यति । यदि सुवर्णं तैजसं न स्यात्, तर्हि अत्यन्तानलसंयोगाऽनाश्यद्रवत्वधर्मावच्छिन्नमपि न स्यात् । यथा घृतादिरित्ययमेव विपक्षबाधको ममानुकूलस्तर्क इति भावः ।

किञ्च—"अग्नेरपत्यम्प्रथमं हिरण्यम्" इत्याद्यागमान्यथानुपपत्तिरपि मम सिद्धान्तिनोऽनुकूलस्तर्कः । अर्थात् सुवर्णं यदि तैजसं न स्यात्, तर्ह्येतदागमप्रतिपाद्यन्यपत्यत्ववन्न स्यात् इति तर्कस्य सत्त्वमानुकूल्यम् ।

उक्तानुमाने व्यभिचारमाशङ्कते—"ननु"—इति । पीतस्य भावः पीतिमा, गुरोर्भावो गुरुत्वम्, पीतिमा च गुरुत्वञ्च ते पीतिमगुरुत्वे, तयोराश्रयः पार्थिवद्रव्यमित्यर्थः, तस्य पीतमगुरुत्वाश्रयस्य । तेजसि पीतमवर्णाभावात् गुरुत्वाभावाच्च । तदानीम्=अत्यन्तानलसंयोगकाले । द्रुतत्वात्=द्रवणवत्त्वात् । व्यभिचारः=हेतोः साध्याभावाधिकरणवृत्तित्वम् । साध्यं तैजसत्वम्, तदभावस्तैजसत्वाभावः, तदधिकरणम्पृथिवीभागः, तत्रापि "अत्यन्तानलसंयोगादिहेतोर्गतत्वमेव" इति व्यभिचारः । समाधत्ते—"न" इति । "जलमध्यस्थ"—इति । जलमध्ये स्थितो यो मसीक्षोदः चूर्णविशेषः तद्वत् । अर्थात् यथा जले द्रवति सति तदन्तर्वर्त्तिनि मसीक्षोदेऽपि द्रवणप्रत्ययो जायते, परमसौ प्रत्ययो भ्रमात्मकः, एवमेव अत्यन्तानलसंयोगेन सुवर्णे द्रवति सति तन्मध्यवर्त्तिनि पीतिमगुरुत्वाश्रयपार्थिवभागेऽपि जायमानो द्रवणप्रत्ययो न वास्तविक इति भावः ।

प्रकारान्तरेण सुवर्णस्य तैजसत्वं साधयताम्मतमुपन्यस्यति—"अपरे तु"—इत्यादिना । पीतिमाश्रयस्य=पार्थिवभागस्य अत्यन्ताग्निसंयोगेऽपि पूर्वरूपापरावृत्तिदर्शनात्=पूर्वरूपस्य पीतवर्णस्य अपरावृत्तिदर्शनात्=परावर्त्तनम्=परावृत्तिः, परावृत्तेर्दर्शनम्परावृत्तिदर्शनम्, न परावृत्तिदर्शनम्=अपरावृत्तिदर्शनं तस्मात् । अर्थात्

पूर्वरूपस्य पीतवर्णस्य पूर्ववदेव विद्यमानत्वात्। पृथिवीगतरूपस्य अग्निसंयोगेन परावृत्तिर्जायते इति नियमः। अत्र तु तद्विरुद्धतादर्शनात्। **तत्प्रतिबन्धकम्**=रूपपरावृत्तिप्रतिबन्धकम्। **विजातीयद्रवद्रव्यम्**=विलक्षणद्रवत्त्वधर्मवद् द्रव्यम्। **कल्प्यते**=अनुमीयते।

कल्पनाप्रकारमेव दर्शयति—"**तथाहि**" इत्यादिना। अत्यन्ताग्निसंयोगे पीतिमगुरुत्वाश्रयः" इति पक्षः। विजातीयेत्यादि साध्यम्। अत्यन्ताग्निसंयोगे सत्यपि पूर्वरूपविजातीयेत्यादि हेतुः। जलमध्यस्थेति दृष्टान्तः।

"**विजातीय**"—इति। विजातीयरूपप्रतिबन्धकं यद् द्रवद्रव्यं तत्संयुक्तः, तेन सह संयोगसम्बन्धवान्। "**पूर्वरूप**"—इति। पूर्वं रूपं पीतरूपं तद्विजातीयरूपं श्यामादिकं तस्यानधिकरणं तदनाश्रयः तत्त्वादित्यर्थः।

**अयमत्राशयः**—यदाऽतिप्रदीप्ते वह्नौ सुवर्णपिण्डः प्रक्षिप्यते, तदाऽसौ पानीयवद् द्रवति। तदन्तर्वर्त्ती पीतवर्णाश्रयः पार्थिवो भागोऽपि द्रवतीव। परमयं नियमो वर्त्तते—"यद्रूपरसगन्धस्पर्शाः पृथिव्यास्पाकजा अनित्याश्च" इति। यदा पार्थिवभागस्य वह्निनाऽतिसंयोगो भवति, तदा तस्य पूर्वरूपतः किमपि विलक्षणं रूपमुत्पद्यते। यथा श्यामवर्णस्याऽऽमघटस्य वह्नौ प्रक्षेपे रक्तरूपपरावृत्तिर्दृश्यते। परं सुवर्णपिण्डान्तर्वर्त्तिनस्तस्य तादृगेव रूपं तिष्ठति, यादृशम्पूर्वमासीत्। नच परावर्त्तते, तेन वयमनुमिमीमहे=कल्पयामः, यदस्ति किमपि तादृशं द्रव्यम्, यदतिमात्रमग्निसंयोगे सत्यपि पार्थिवभागस्य रूपपरावृत्तिं प्रतिबध्नाति। तन्न पृथिवी अनुच्छिद्यमानद्रवत्वात्, नापि जलमग्नेरनुपशमात्। किन्तु पृथिवीजलाभ्यां भिन्नमेव। यच्च तद्भिन्नं तत्तेज एवेति सिद्धः सुवर्णस्य तेजोभावः।

**नवीनास्तु**—सुवर्णं न तैजसम्, किन्तु पार्थिवम् "पीतं सुवर्णम्" "द्रुतं सुवर्णम्" इति प्रत्यक्षे जायमाने विनैव दोषं तस्य भ्रमत्वकथनमयुक्तम्। अग्निसंयोगेऽपि यत्तस्य न पूर्वरूपनाशः, तत्र विलक्षणं स्वर्णद्रव्यमेव प्रतिबन्धकमिति * वदन्ति। सोऽयं सर्वोऽपि सुवर्णप्रपञ्चः (ग्रन्थः) "**तेजस्त्वाभिसम्बन्धात् तेजः**" इत्यारभ्य "**आकरजं सुवर्णादि**" इत्यन्तप्रशस्तग्रन्थमूलक एव।

इति तेजोग्रन्थः।

---

* वदन्तीत्यनेनास्वरसः सूचितः। स च पार्थिवस्यापि भागस्य तदानीं द्रवत्वानङ्गीकारसम्भवेन प्रमात्वसम्भवात्। स च प्रतिषिद्धः ग्रन्थकृता मसीचोदवत् पार्थिवभागस्याऽद्रुतत्वाङ्गीकारात्। द्रव्यान्तरसंयोगस्यैवाऽन्यत्र पार्थिवरूपद्रवत्वनाशप्रतिबन्धकत्वेन क्लृप्ततया तत्रैव तादात्म्येन स्वस्य तदुभयनाशकनाशप्रतिबन्धकत्वकल्पनेऽन्यत्राऽदृष्टकल्पनापत्तेरिति तदुपेक्षितम्।

(का०) अपाकजोऽनुष्णाशीतस्पर्शस्तु पवने मतः ॥४२॥
तिर्यग्गमनवानेष ज्ञेयः स्पर्शादिलिङ्गकः ।
पूर्ववन्नित्यताद्युक्तं देहव्यापि त्वगिन्द्रियम् ॥४३॥

(मुक्ता०) वायुं निरूपयति—अपाकज इति । अनुष्णाशीतस्पर्शस्य पृथिव्यामपि सत्त्वादुक्तमपाकज इति । अपाकजस्पर्शस्य जलादावपि सत्त्वादुक्तमनुष्णाशीत इति । तेन वायवीयो विजातीयः स्पर्शो दर्शितः । तज्जनकतावच्छेदकं वायुत्वमिति भावः । एष वायुः स्पर्शादिलिङ्गकः । वायुर्हि स्पर्शशब्दधृतिकम्पैरनुमीयते, विजातीयस्पर्शेन विलक्षणशब्देन तृणादीनां धृत्या शाखादीनां कम्पेन च वायोरनुमानात् । यथाच वायोर्न प्रत्यक्षं तथाग्रे वक्ष्यते ।

(प्रभा०) वायुं लक्षयति परममूले—"अपाकज"—इति । उक्तलक्षणस्य पदकृत्यं दर्शयति—"अनुष्णाशीतस्पर्शस्य"—इत्यादिना । वायौ पाकजः स्पर्शो न भवतीति पृथिवीस्पर्शव्युदासः । अनुष्णाशीतोऽव्यक्तशीतोष्णो विजातीयः=पार्थिव-जलीयस्पर्शाभ्यां विलक्षण इत्यर्थः । एतेन अनुष्णाशीतस्पर्शवत्त्वं वायुत्वमिति वायु-लक्षणम्फलितम् । उक्तञ्चर्षिणा—"*स्पर्शवान् वायुः" (वै० २ १।४) । अत्र स्पर्शोऽनुष्णाशीतो ग्राह्यः । तेन वायवीयो विजातीयस्पर्शो लभ्यते" इति विवृतिकारः ।

एष वायुः तिर्यग्गमनवान् । अत्र युक्तिमाह—"ज्ञेय"—इति । स्पर्शशब्द-धृतिकम्पाः स्पर्शादिपदार्थाः, एते लिङ्गमनुमानं यस्य स स्पर्शादिलिङ्गकः । तथाच वायुरनुमेयो न प्रत्यक्ष इत्यर्थः । इत्याशयेनाह—"वायवीय"—इति । "तज्जनकता-वच्छेदकम्"—इति । विजातीयानुष्णाशीतस्पर्शनिष्ठजन्यतानिरूपिता या जनकता सा किञ्चिद्धर्मावच्छिन्ना, इत्यादिरीत्या वायुनिष्ठजनकतावच्छेदकं वायुत्वमिति वायुत्व-जातिसिद्धिः । इदमुपलक्षणम्—शब्दविशेषस्य निमित्तकारणतावच्छेदकतयाऽपि वायुत्वजातिसिद्धिः । स्पर्शादिलिङ्गकः=स्पर्शादीनि लिङ्गानि यस्य स तथा । "धृतिः"—इति । गुरुणो द्रव्यस्याऽपतनम्=पतनाभावः धृतिः । "वायोरनु-मानात्"—इति । अनुमानप्रकारश्च—"योऽयं रूपवद्द्रव्याऽसमवेतः स्पर्शः स क्वचिदाश्रितः स्पर्शत्वात् पृथिवीसमवेतस्पर्शवत्" इति । तथाच पारमर्षं सूत्रम्—"न दृष्टानां स्पर्श इत्यदृष्टलिङ्गो वायुः" (वै० २।१।१०) । अस्यायमर्थः—उपलभ्यमानोऽयं विजातीयः स्पर्शः दृष्टिविषयाणां प्रत्यक्षभूतानां पृथिव्यप्तेजसां नैव भवितुमर्हति,

---

* उपस्कारकारस्तु—रूपाऽसमानाधिकरणस्पर्शसमानाधिकरणजातिमत्त्वम्, रसाऽ-समानाधिकरणाऽनुष्णाशीतस्पर्शसमानाधिकरणजातिमत्त्वम्, गन्ध समानाधिकरणाऽनुष्णाशीतस्पर्श-समानाधिकरणजातिमत्त्वं वेत्यादि वायुलक्षणञ्चकार ।

विलक्षणत्वात् । अतोऽदृष्टलिङ्गः=अदृष्टविशेषव्याप्तिकोऽदृष्टः, स लिङ्गमनुमापकं यस्य, स वायुरित्यर्थः । अनुमानेन=*सामान्यतोदृष्टेन विलक्षणस्पर्शाश्रयस्य सिद्धावपि तस्य विशेषसञ्ज्ञा वायुरिति "प्राणाद्वायुरजायत" (यजु० ३१।१२) इत्यागमाद्बोध्या। उक्तञ्चर्षिणा—"तस्मादागमिकम्" (२।१।१७) इति।

(मुक्ता०) पूर्ववदिति। वायुर्द्विविधो नित्योऽनित्यश्च। परमाणुरूपो नित्यस्तदन्योऽनित्योऽवयवसमवेतश्च। सोऽपि त्रिविधः, शरीरेन्द्रियविषयभेदात्। तत्र शरीरमयोनिजं पिशाचादीनाम्। परन्तु जलीयतैजसवायवीयशरीराणाम्पार्थिवभागोपष्टम्भादुपभोगक्षमत्वञ्जलादीनामप्राधान्याज्जलीयत्वादिकमिति। अत्र यो विशेषस्तमाह—देहव्यापीति। शरीरव्यापकं स्पर्शग्राहकमिन्द्रियं त्वक्। तच्च वायवीयं रूपादिषु मध्ये स्पर्शस्यैवाभिव्यञ्जकत्वात्, अङ्गसङ्गिसलिलशैत्याभिव्यञ्जकव्यजनपवनवत् ॥ ४२, ४३ ॥

(प्रभा०) "पूर्ववत्" इति स्पष्टयति "वायुर्द्विविध" इत्यादिना। "अयोनिजम्"—इति। अयोनिजमेवेत्यर्थः। "पिशाचादीनाम्"—इति। मरुतां लोके प्रसिद्धमिति शेषः। प्रशस्तपादे इत्थमेव दर्शनात्। शिष्टं स्पष्टम्।

ननु—वायवीयशरीरैः कथञ्जीवानाम्भोगः वायौ करचरणाद्यवयवाभावात् इत्याशङ्कायामाह—"परन्तु"—इति। पार्थिवभागोपष्टम्भात्=पार्थिवांशसंयोगविशेषात्। उपभोगक्षमत्वम्=भोगसाधनयोग्यता। आक्षेपसमाधानयोस्तुल्यत्वात् प्रकरणलाघवमनुसरन् साधारणं समाधानं वक्तुम् "जलीयतैजसवायवीयशरीराणाम्" इत्युक्तम्। सर्वत्र जलीयादिशरीरेषु पार्थिवभागस्यैव साहाय्येन भोगसाधनत्वं ज्ञेयमिति भावः। अत्र=त्वगिन्द्रिये। यो विशेषः=अधिष्ठानादिः। त्वचि स्थितमिन्द्रियं त्वगिन्द्रियम्। तस्य लक्षणमाह—"स्पर्श"—इति। अत्र—स्पर्शविषयकत्वेन ज्ञानस्य निवेशे गौरवात् स्पार्शनत्वेनैव निवेशः। तथाच—स्पार्शनत्वावच्छिन्नकार्यतानिरूपितकारणत्वं त्वगिन्द्रियलक्षणमिति फलितम्। कार्यमात्रजनककालादावतिव्याप्तिवारणाय "इन्द्रियम्"—इति। चक्षुरादावतिव्याप्तिवारणाय "स्पर्शग्राहक"—इति। त्वक्=त्वगिन्द्रियमित्यर्थः। त्वगिन्द्रियस्य वायुकार्यत्वमनुमानेन साधयति—"तच्च" इत्यादिना। "रूपादिषु मध्य"—इति। "यद् रूपादिषु मध्ये स्पर्शस्यैवाभिव्यञ्जकम्=ग्राहकं तद् वायवीयम्" इति व्याप्तिः। अत्र दृष्टान्तमाह—"अङ्गसङ्गि"—इति। अङ्गसङ्गिसलिलम्=स्वेदः तन्निष्ठं शैत्यं शीतस्पर्शः

* सामान्यतो दृष्टं नाम—यत्राऽप्रत्यक्षे लिङ्गलिङ्गिनोः सम्बन्धे केनचिदर्थेन लिङ्गस्य सामान्यादप्रत्यक्षो लिङ्गी गम्यते तत्। यथा इच्छादिभिरात्मा। इच्छादयो गुणाः, गुणाश्च द्रव्यसंस्थानाः, तद्यदेषां स्थानं स आत्मा, इति न्यायभाष्ये।

तस्याभिव्यञ्जको व्यजनपवनो यथा वायवीयः=वायुपरमाणुभिरारभ्यमाणः तथैव त्वगिन्द्रियं स्पर्शमात्रव्यञ्जकत्वाद्वायवीयमित्यर्थः ।

"येनेन्द्रियेण यद् गृह्यते" इति न्यायेन स्पर्शत्वजातेरप्यभिव्यञ्जकं त्वगिन्द्रियं नतु स्पर्शस्यैवाभिव्यञ्जकमित्यसिद्धो हेतुरिति शङ्कानिरासाय "रूपादिषु मध्य"—इत्युक्तम् । एवं मनसि व्यभिचारवारणाय "एव"पदम् । त्वगिन्द्रियसन्निकर्षेऽतिव्याप्तिवारणाय "द्रव्यत्वे सति" इत्यपि हेतौ विशेषणं देयमिति शम् ॥ ४२, ४३ ॥

**(का०) प्राणादिस्तु महावायुपर्यन्तो विषयो मतः ।**

**(मुक्ता०) विषयं दर्शयति—प्राणादिरिति । यद्यप्यनित्यो वायुश्चतुर्विधः । तस्य चतुर्थी विधा प्राणादिरित्युक्तमाकरे । तथापि संक्षेपादत्र त्रैविध्यमुक्तम् । प्राणस्त्वेक एव हृदादिनानास्थानवशान्मुखनिर्गमादिनानाक्रियावशाच्च नानासंज्ञां लभत इति ।**

(प्रभा०) परममूले—"प्राणादिस्तु"—इति । आदिना अपानसमानोदानव्यानाः पञ्च शरीरान्तःसञ्चारिणः, बाह्याश्च वृक्षादिकम्पनहेतवो गृह्यन्ते । तत्र सर्वेषामवधिर्महावायुः । अयम्प्रलयकालिकः पुराणादिप्रसिद्धः । तथाचोक्तं श्रीमद्भागवतमहापुराणे एकादशस्कन्धे तृतीयाध्याये—

"वायुना हृतगन्धा भूः सलिलत्वाय कल्प्यते" इति ।

"प्राणस्त्वेक एव"—इति । तथाचोक्तम्—

"हृदि * प्राणो गुदेऽपानः समानो नाभिसंस्थितः ।
उदानः कण्ठदेशे स्याद्व्यानः सर्वशरीरगः ॥ इति ॥

इति तत्तत्स्थानरूपोपाधिवशान्मुखनिर्गमनादिक्रियारूपोपाधिवशाच्च एकस्यापि प्राणस्य पञ्च भेदा जाता इत्यर्थः । अत्र वायुसाधकान्यनुमान्तराण्यपि द्रष्टव्यानि । तथाहि—असति रूपवद्द्रव्याभिघाते योऽयम्पर्णादिषु शब्दसन्तानः स स्पर्शवद्वेगवद्द्रव्यसंयोगजन्यः अविभज्यमानावयवद्रव्यसम्बन्धिशब्दसन्तानत्वात् दण्डाभिहतभेरीशब्दसन्तानवत् ।

नभसि तृणतूलजस्तनयित्नुविमानानां धृतिः स्पर्शवद्वेगवद्द्रव्यसंयोगहेतुका अस्मदाद्यनधिष्ठितद्रव्यधृतित्वात् नौकाधृतिवत् ।

रूपवद्द्रव्याभिघातमन्तरेण वृक्षादिकम्पः स्पर्शवद्वेगवद्द्रव्याभिघातजन्यः विजातीयकम्पत्वात् नदीपूराहतकुशकाशादिकम्पवत् । एषाम्प्रपञ्चस्तु ग्रन्थगौरवभयान्न कृतः, स्वयमूह्यः ।

इति वायुग्रन्थः ।

---

* मुखनासिकाभ्यां निष्क्रमणप्रवेशनात् प्राणः, मलादीनामधोनयनात् अपानः, आहारेषु पाकार्थं वह्नेः समुन्नयनात् समानः, अन्नादेरूर्ध्वनयनात् उदानः, नाडीमुखेषु विततनाद्

इदानीं शिष्यबुद्धिवैशद्याय कार्यद्रव्यस्योत्पत्तिविनाशप्रक्रियाक्रममाचक्ष्महे—

महेश्वरस्य चिकीर्षावशात्प्रथमम्परमाणुषु क्रियोत्पद्यते। ततो द्वयोः परमाण्वोः संयोगः, तेन द्व्यणुकमुत्पद्यते। तत्र (द्व्यणुकोत्पत्तौ) परमाणुः समवायिकारणम्, परमाणुद्वयसंयोगोऽसमवायिकारणम्, परमेश्वरः तज्ज्ञानमिच्छा, तत्कृतिः कालो दिक् प्रागभावोऽदृष्टम् (धर्माधर्मौ) प्रतिबन्धकाभाव इति निमित्तकारणम्। एतानि कार्यमात्रम्प्रति साधारणनिमित्तकारणानि इति स्थलान्तरेऽवोचाम। एवं द्व्यणुकोत्पत्त्यनन्तरं महेश्वरेच्छावशात् द्व्यणुकेषु क्रिया, ततस्त्रिभिर्द्व्यणुकैरेकं त्र्यणुकमारभ्यते। एवमत्रापि द्व्यणुकानि समवायिकारणम्, तेषां संयोगोऽसमवायिकारणम्, ईश्वरेच्छादिकं निमित्तकारणम्। एवमेव पूर्ववत्तेषु सजातीयेषु त्र्यणुकेषु क्रिया, तैश्चतुर्भिः त्र्यणुकैरेकञ्चतुरणुकमुत्पद्यते। तेऽप्यसङ्ख्याता एवोत्पद्यन्ते। एवञ्चतुरणुकोत्पत्तौ सत्यां ततः पञ्चभिश्चतुरणुकैर्मिलित्वा एकं स्थूलतरं कार्यमारभ्यते, ततस्तैः स्थूलतरैः पञ्चभिः पञ्चाणुकैर्मिलित्वा स्थूलतमं पञ्चाणुकाख्यं कार्यमारभ्यते। एवमेव पूर्वपूर्वकार्यापेक्षयोत्तरोत्तरं स्थूलकार्योत्पत्तिक्रमेण महती पृथिवी, महत्य् आपः, महत्तेजः, महान् वायुश्चोत्पद्यते।

ननु—त्रिभिः परमाणुभिरेकं द्व्यणुकं कुतो नारभ्यते? द्व्यणुकद्वयेन वा कुतो न त्र्यणुकोत्पत्तिरिति चेन्न प्रथमस्य द्रव्यारम्भकत्वे गौरवम्। द्वितीयस्य तथात्वे महत्त्वानुपपत्तिः, कार्यमहत्त्वे कारणमहत्त्वस्य कारणबहुत्वस्य वा हेतुत्वात्।

एवं महेश्वरस्य कार्यद्रव्यसञ्जिहीर्षावशात् परमाणुषु क्रियोत्पत्तिः। ततः परमाणुद्वयस्य विभागः, ततो द्वयोः परमाण्वोः संयोगनाशः, ततो द्व्यणुकनाशः, ततस्त्र्यणुकनाशः, एवञ्चतुरणुकादिनाशक्रमेण महापृथिव्यादीनां नाशः। अयमेवावान्तरप्रलय इत्युच्यते। सर्वकार्यद्रव्यध्वंसोऽवान्तरप्रलय इति तल्लक्षणात्। महाप्रलयस्तु सर्वभावकार्यध्वंसः। भावकार्यञ्च अनित्यं द्रव्यम्, अनित्या गुणाः, अनित्यं कर्म चेति बोध्यम्।

पुनः सृष्टिसद्भावे किम्मानमिति चेत्? "धाता यथापूर्वमकल्पयत्" (ऋ० १०।१९०।१–२–३) इत्यादिश्रुतिरपि। मीमांसकास्तु संसारप्रवाहो बीजाङ्कुरन्यायेन अनादिरनन्तः, नैव प्रलयसद्भावे मानमित्याहुः। समवायिकारणनाशाद् द्रव्यनाशः, क्वचिदसमवायिकारणनाशादपि इति प्राञ्चः। सर्वत्रासमवायिकारणनाशाद् द्रव्यनाशः, एवं सति लाघवमिति नव्याः। विस्तरोऽन्यतोऽनुसन्धेयः।

इति कार्यद्रव्योत्पत्तिविनाशक्रमः।

---

व्यान इत्येकस्यैव वायोः क्रियास्थानाभ्याम्भेदेन व्यवहार इत्याशयः। अन्येऽपि प्राणवायोर्नागाद्या भेदा मतान्तररीत्या तर्कसङ्ग्रहस्य "बालबोधिनी"टीकायाम्मया प्रपञ्चिताः, तत एव निरीक्षणीयाः।

(का०) आकाशस्य तु विज्ञेयः शब्दो वैशेषिको गुणः ॥४४॥

(मुक्ता०) आकाशं निरूपयति—आकाशस्येति । आकाशकालदिशामेकैकव्यक्तित्वादाकाशत्वादिकं न जातिः । किन्तु आकाशत्वं शब्दाश्रयत्वम् । वैशेषिक इति कथनन्तु विशेषगुणान्तरव्यवच्छेदाय । एतेन प्रमाणमपि दर्शितम् । तथाहि-शब्दो विशेषगुणः चक्षुर्ग्रहणाऽयोग्यबहिरिन्द्रियग्राह्यजातिमत्त्वात् स्पर्शवत् । शब्दो द्रव्यसमवेतो गुणत्वात् संयोगवत् इत्यनुमानेन शब्दस्य द्रव्यसमवेतत्वे सिद्धे, शब्दो न स्पर्शवद्विशेषगुणः अग्निसंयोगाऽसमवायिकारणकत्वाभावे सत्यकारणगुणपूर्वकप्रत्यक्षत्वात् सुखवत् । पाकजरूपादौ व्यभिचारवारणाय सत्यन्तम् । पटरूपादौ व्यभिचारवारणायाऽकारणगुणपूर्वकेति । जलपरमाणुरूपादौ व्यभिचारवारणाय प्रत्यक्षेति । शब्दो न दिक्कालमनसां गुणः विशेषगुणत्वात् । नात्मविशेषगुणो बहिरिन्द्रियग्राह्यत्वाद्रूपवत् । इत्थञ्च—शब्दाधिकरणं नवमं द्रव्यं गगननामकं सिध्यति । नच वाय्ववयवेषु सूक्ष्मशब्दक्रमेण वायौ कारणगुणपूर्वकः शब्द उत्पद्यतामिति वाच्यम्, अयावद्द्रव्यभावित्वेन वायुविशेषगुणत्वाभावात् ।

(प्रभा०) परममूले—"आकाशस्य"—इति । विशेष एव वैशेषिकः । विनयादिभ्यष्ठक् (५।४।३४) इति पाणिनिसूत्रेण स्वार्थे ठक् । किति च (७।२।११८) इति वृद्धिः । आकाशस्य शब्द एवैको विशेषगुणो नेतरे इत्यर्थः । तथाच—समवायेन शब्दाधिकरणत्वम्=शब्दगुणकत्वमाकाशत्वम्" इत्याकाशलक्षणम् । ननु "शब्दवत्त्वमाकाशत्वम्" इति । शब्दस्य सर्वदा आकाशे उपलब्धेरभावात् । यदि शब्दवत्त्वं लक्षणं स्यात् तदा तस्य सदैव शब्दवत्त्वमर्थः स्यात्, नित्ययोगे मतुप्प्रत्ययविधानात् । तथाचोक्तम्—

भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने ।
सम्बन्धेऽस्ति विवक्षायाम्भवन्ति मतुबादयः ॥ इति ।

एवं सति लक्षणस्याऽसम्भवो दोषः प्रसज्येत, तस्माच्छब्दाधिकरणत्वमेव लक्षणं युक्तम् ।

लाघवमनुसन्धाय कालत्वादीनामत्रैव जातित्वं निषेधयति—"आकाशकाल"—इति । आकाशत्वं कालत्वं दिक्त्वञ्चेत्यर्थः न जातिरिति । तत्र हेतुमाह—"*एकव्यक्तिकत्वात्"—इति । अनेकसमवेतत्वाभावात् एकव्यक्तिवृत्तिधर्मस्य

* सजातीयनिष्ठभेदाऽप्रतियोगी एकः । यथा—"अत्रायमेको भुङ्क्ते" इत्यत्र "एतद्देशाधिकरणकभोजनकर्तृनिष्ठभेदाऽप्रतियोगी भुङ्क्ते" इत्याकारको बोधः । एकत्वञ्च—"रूपरसगन्-

जातिबाधकत्वात्, किन्त्वाकाशत्वादिकमुपाधिः । एतद्विस्तरेण जातिबाधकप्रसङ्गेऽवोचाम । इदन्तु बोध्यम्—किमिदमेकत्वं नामेति ? उच्यते—"एकत्वसङ्ख्यायोगि एकम्" इत्येकस्य लक्षणमिति चेत् ? इदं न सम्यक् घटादावतिव्याप्तेः, आकाशवद् घटादीनामप्येकत्वापत्तेः । "द्वित्वाद्यभाववदेकम्" इति चेत् तदपि न, "अयं घटः, अयमाकाशः, इमौ द्वौ" इति प्रतीत्या आकाशेऽपि द्वित्वसत्त्वं नतु द्वित्वाभावः, तस्य व्यासज्यवृत्तित्वात्, तथाचाऽसम्भवो लक्षणदोषः । "सजातीयमात्रवृत्तिद्वित्वाभाववदेकम्" इत्यपि न साधु, आकाशसजातीयस्याकाशान्तरस्याभावात् तादृशद्वित्वस्याऽप्रसिद्धेः द्वित्वाभावाप्रसिद्धिरेव । "स्वप्रतियोगिकभेदासमानाधिकरणधर्मवत्त्वमेकत्वम्" इति तु युक्तम्पश्यामः । प्रकृते "स्व"पदेनाकाशग्रहः, स आकाशः प्रतियोगी यस्यैवंविधो यो भेदोऽन्योन्याभावः, तस्य असमानाधिकरणो यो धर्म आकाशत्वम्, तद्वत्त्वमेव आकाशे एकत्वम्, आकाशप्रतियोगिको भेदो नाकाशे (स्वस्मिन्स्वभेदाभावात्) किन्तु पृथिव्यादिषु वर्त्तते, तत्र च नाकाशत्वं धर्मः, अत एव आकाशत्वं स्वप्रतियोगिकभेदाऽसमानाधिकरणमुच्यत इति भावः ।

"विशेषगुणान्तर"—इति । रूपादीत्यर्थः, तस्य व्यवच्छेदोऽभावबोधनम् । शब्दं विहाय नान्यो रूपादिः कश्चिदप्याकाशे विशेषगुणः । तथाचार्षं सूत्रम्—"त आकाशे न विद्यन्ते" ( वै० २।१।५ ) इति । ते रूपरसगन्धस्पर्शाश्चत्वारो गुणा आकाशे न सन्तीत्यर्थः । एतेन="वैशेषिको गुण" इति कथनेन । प्रमाणम्=अनुमानम् । "तथाहि"—इति ।

"*चक्षुर्ग्रहणायोग्य"—इति । हेतुवाक्यस्याऽयमर्थः—चक्षुर्ग्रहणायोग्या या बहिरिन्द्रियग्राह्या जातिः अर्थात् शब्दत्वम, तादृशजातिमत्त्वात् । "यो यश्चक्षुर्ग्रहणायोग्यबहिरिन्द्रियग्राह्यजातिमान् स स विशेषगुण" इति व्याप्तिः । स्पर्शवदिति दृष्टान्तः । चक्षुर्ग्रहणम्=चाक्षुषः साक्षात्कारः । ग्राह्यत्वम्=विषयता । वैयाकरणा मीमांसकाश्च शब्दस्य गुणत्वं न मन्वते, तदुक्तेनाऽनुमानेन खण्डितम्बोध्यम् । घटादौ व्यभिचारवारणाय "अयोग्य"—इत्युक्तम् । आत्मनि व्यभिचारवारणाय "बहिरिन्द्रियग्राह्य"—इति । रसत्वादौ व्यभिचारवारणाय "जातिमद्"—इति ।

सम्प्रति शब्दस्य द्रव्याश्रितत्वं साधयति अनुमानान्तरेण—"शब्दो द्रव्यसमवेत"—इति । शब्दात्मके पक्षे द्रव्यसमवेतत्वं साध्यम्, गुणत्वादिति हेतुः ।

---

स्पर्शव्यतिरेकादर्थान्तरमेकत्वम्" ( वै० ७।२।१ ) इत्यार्षसूत्रोक्तलक्षणकम्बोध्यम् । स्वरूपाभेद इति भूषणम् । तन्न युक्तम्, घटस्वरूपाऽभेदश्चेदेकत्वं तदा पटादावेकत्वप्रत्ययो न स्यादिति उपस्कारकारः । अधिकन्तु व्युत्पत्तिवादादिभ्योऽवगन्तव्यम् ।

* अत्र—शब्दः पक्षः, विशेषगुण इति साध्यम्, चक्षुर्ग्रहेत्यादि पञ्चम्यन्तं वाक्यं हेतुः, स्पर्शवत् इति दृष्टान्तः । एवमेवाग्रेऽपि यथायोगं ज्ञेयम् ।

"यो यो गुणः स स सर्वोऽपि * द्रव्यसमवेत" इति व्याप्तेः संयोगवदिति दृष्टान्तः। भवति हि करखड्गसंयोगः समवायेन करखड्गात्मकद्रव्याश्रितः गुणत्वात्। शब्दोऽपि गुणः, असावपि कस्यचिद् द्रव्यस्याश्रित एव। नच "गुणत्वं" हेतुः स्वरूपासिद्ध इति वाच्यम्, पूर्वानुमानेन तत्साधितं यतः।

"इत्थञ्च"—इति। उक्तेनानुमानेन। शब्दस्य द्रव्यसमवेतत्वे=समवायसम्बन्धेन द्रव्याश्रितत्वे। सिद्धे—अनुमिते। तदनु परिशेषानुमानेन आकाशस्य सिद्धिः कर्त्तव्येति शेषः। तत्प्रकारं दर्शयति—"शब्दो न"—इति। स्पर्शवत् पृथिव्यादिचतुष्टयम्। तस्य=पृथिवीजलतेजोवायूनामित्यर्थः। "चत्वारि स्पर्शवन्ति हि"—इत्युक्तं साधर्म्यवैधर्म्यप्रकरणे। शब्दो न पृथिव्यादीनां विशेषगुणः। शब्दः पक्षः, पृथिव्यादिसम्बन्धित्वेन विशेषगुणत्वाभावः साध्यम्। तत्र हेतुमाह—"अग्निसंयोगासमवायि"—इत्यादि। अस्यायमर्थः—अग्निसंयोगाऽसमवायिकारणं यस्य स अग्निसंयोगासमवायिकारणकः, तस्य भावस्तत्त्वम्, तदभावे सति इति। इदं हेतोर्विशेषणपदम्। "सप्तम्यन्तं विशेषणम्" इति नियमात्। अकारणगुणपूर्वकप्रत्यक्षत्वात्=कारणगुणपूर्वकप्रत्यक्षं यस्य तत्कारणगुणपूर्वकप्रत्यक्षम्, न कारणगुणपूर्वकप्रत्यक्षं तदकारणगुणपूर्वकप्रत्यक्षम्, तस्य भावः तस्मात्, अकारणगुणपूर्वकत्वे सति प्रत्यक्षत्वादित्यर्थः। ततश्चेत्थं व्याप्तेराकारः—यदग्निसंयोगरूपासमवायिकारणकत्वाभावविशिष्टाकारणगुणपूर्वकप्रत्यक्षं तन्न स्पर्शवद्विशेषगुणः। यदि विशेष्यभागमात्रमुच्येत तदा पाकजरूपादौ हेतोर्व्यभिचारः=अतिव्याप्तिः स्यात्। अस्ति च पृथिवीनिष्ठपाकजरूपादिचतुष्टये अकारणगुणपूर्वकप्रत्यक्षत्वम्। परन्तु तत्र अग्निसंयोगाऽसमवायिकारणकत्वाभावः। यदि तु विशेषणभाग एव हेतूक्रियेत, तदा पटरूपादावतिव्याप्तिः=हेतोर्व्यभिचारः। अस्ति च पटरूपादीनां कारणगुणपूर्वकप्रत्यक्षत्वम्, यतः पृथिवीनिष्ठा अपाकजा रूपादयः कारणगुणोत्पन्ना उच्यन्ते। कारणगुणोत्पन्नत्वञ्च=स्वाश्रयसमवायिसमवेतगुणजन्यत्वम्। तद्यथा—"स्वं" पटस्य रूपम्, तदाश्रयः पटः, तस्य समवायी तन्तुः, तत्र समवेतो गुणः तन्तुरूपमेव, तेन तन्तुरूपेण असमवायिकारणेन पटरूपं † जन्यते, अतः पटादिपृथिवीनिष्ठाऽपाकजरूपादिकं कारणगुणोत्पन्नमुच्यते, यतस्तथोत्पद्यते, अतः कारणगुणपूर्वकमेवैषाम्प्रत्यक्षमिति युक्तम्। ततश्च—पटरूपादावपि अग्निसंयोगाऽसमवायिकारणकत्वाभावः, नहि पटरूपादावग्निसंयोगः असमवायिकारणम्, तथासति तेन तद्दाहापत्तेः, किन्तु पटरूपम्प्रति तन्तुरूपमेवासमवायिकारणम्। एवञ्चैकैकभागस्यानुपादाने हेतुर्व्यभिचारी स्यात्, अत उभयदलमुपात्तम्। "जलपरमाणुरूपादौ"—इति। अस्ति हि जलपरमाणुरूपे

---

* समवायसम्बन्धेन द्रव्याश्रित इत्यर्थः।

† एतद् असमवायिकारणलक्षणज्ञानेन सुज्ञेयम्।

अग्निसंयोगासमवायिकारणकत्वाभावविशिष्टाकारणगुणपूर्वकत्वं धर्मः, ततश्च सर्वस्यैव हेतोर्व्यभिचारः, तस्मात् "प्रत्यक्ष"—इति पदं हेतौ निवेशितम् । जलपरमाणुरूपे प्रत्यक्षविषयत्वाभावान्न व्यभिचार इत्यर्थः ।

अयमत्र सारः—पृथिवीजलतेजोवायवः एते चत्वारः स्पर्शवन्तः, स्पर्शवतां यो विशेषगुणः, यथा—पृथिव्या गन्धः, जलस्य शीतस्पर्शः, तेजस उष्णस्पर्शः, वायोरनुष्णाशीतस्पर्शः । एतेषां यद्यद्विशेषगुणस्य प्रत्यक्षम्भवति तत्कारणगुणपूर्वकमेव, नतु शब्दस्य तथा प्रत्यक्षम् । शब्दस्य प्रत्यक्षञ्चेद्गन्धादिवदेव भवेत्, तदाऽयम्पृथिव्यादिष्वन्यतमस्यैव गुणः स्यात् । परन्तु—अग्निसंयोगासमवायिकारणकत्वाभावविशिष्टाकारणपूर्वकप्रत्यक्षत्वधर्मवानयं शब्दः तस्मान्न स्पर्शवतां विशेषगुणः । किन्तु तत् विलक्षणस्यैव द्रव्यस्य गुण इति ध्येयम् । तथाच पारमर्षं सूत्रम्—"कार्यान्तराप्रादुर्भावाच्छब्दः स्पर्शवतामगुणः" (वै० २ । १ । २५) इति । दण्डाद्यभिघातेन भेर्यादिकार्ये शब्दस्य प्रादुर्भावेऽपि तद्भिन्ने घटपटादौ कार्यान्तरे तत्प्रादुर्भावाभावात् शब्दः स्पर्शवताम्पृथिव्यप्तेजोवायूनामगुणो विशेषगुणो नेत्यर्थः ।

सारसारस्तु—अयावद्द्रव्यभावी अयं शब्दः । द्रव्यस्थितिकालपर्यन्तं यस्य स्थितिः, असौ यावद्द्रव्यभावी । यथा—पृथिव्या गन्धादिगुणा उत्पद्यमाना यावत्कार्यस्थायिनो यावद्द्रव्यभाविन इत्युच्यन्ते । शब्दस्तु न तथा, किन्त्वयस्मन्दमन्दतरमन्दतमादितारतम्यविशिष्टः शनैः शनैर्नाशमुपैति । अस्याश्रयो द्रव्यमाकाशन्तु न नश्यति, तस्मात्पृथिव्यादिगतगन्धादिगुणविपरीतधर्मत्वानयं न पृथिव्यादीनां विशेषगुणः ।

ननु—माभूत्पृथिव्यादिचतुष्टयस्य शब्दो गुणः दिक्कालमनसां वा भविष्यति ? तत्राह—"शब्दो न दिक्कालमनसाम्"—इति । तत्र हेतुमाह—"विशेषगुणत्वात्"—इति । यो लौकिकसंयुक्तसमवायादिसम्बन्धेनेन्द्रियग्राह्यः, अस्ति च तेनैव सम्बन्धेन द्वीन्द्रियग्रहणाऽयोग्यत्वधर्मवान् गुणत्वव्याप्यजातिमांश्च स विशेषगुण इत्युच्यते । एतच्च गुणप्रस्तावे स्फुटीभविष्यति । दिक्कालमनःसु कश्चिदपि विशेषगुणो न वर्त्तत इति भावः ।

ननु—मा सैत्सीत् शब्दो दिगादीनां गुणः आत्मनस्तु सेत्स्यति ? तत्राह—"नात्मविशेषगुण" इति । बहिरिन्द्रियग्राह्यत्वादिति हेतुः ग्राह्यत्वम्=प्रत्यक्षत्वम् । रूपवदिति दृष्टान्तः । यथा रूपं बहिरिन्द्रियजन्यप्रत्यक्षत्वधर्मवत् अतो नात्मगुणः एवं शब्दोपि । आत्मविशेषगुणानामिच्छादीनां बहिरिन्द्रियेण प्रत्यक्षमेव न भवतीति-भावः । "इत्थञ्च" इति । परिशेषानुमानेन शब्दाधिकरणस्य नवमद्रव्यस्याकाशस्य सिद्धिरित्यर्थः ।

एतदुक्तम्भवति—प्रसक्तप्रतिषेधेऽन्यत्राप्रसङ्गाच्छिष्यमाणे सम्प्रत्ययः परिशेषः ।

यत्र प्राप्तिसम्भावना तत्र निषेधे सति, तद्भिन्नेऽप्राप्तिपूर्वकं शेषविषयेऽनुमितिकरणं परिशेषानुमानम् ।

तथाच—"शब्दः पृथिव्याद्यष्टद्रव्यातिरिक्तद्रव्याश्रितः अष्टद्रव्यानाश्रितत्वे सति द्रव्याश्रितत्वात्" इति प्रयोगः ।

अस्ति शब्दो गुणः, तेन च क्वचिद्द्रव्य एव स्थेयम् । द्रव्यं विना गुणस्थितेरयोगात् । परन्तु रूपादिवन्नायं शब्दो येन पृथिव्याद्याश्रितः स्यात्, प्रदर्शितेन प्रकारेण पृथिव्याद्याश्रितत्वं तस्य प्रतिषिद्धमेव । गुणकर्मादिकं शब्दस्याश्रयो भवेदिति तु सर्वथाऽसम्भवि, नहि गुणो वा कर्म वा गुणकर्मणोराश्रयः अपितु तयोराश्रयो द्रव्यमेव । एवञ्च पृथिव्याद्यष्टद्रव्यशिष्टं यद्द्रव्यं तदेव समवायेन शब्दाश्रयः । स एव आकाशाख्यं नवमं द्रव्यमिति भावः ।

उक्तञ्च—"परत्र समवायात्प्रत्यक्षत्वाच्च नात्मगुणो न मनोगुणः । परिशेषाल्लिङ्गमाकाशस्य" (वै० २ । १ । २६ । २७) इति । परत्रेति—आत्मभिन्ने समवायात् नात्मगुणः, यदि शब्दो ज्ञानादिवदात्मनि समवेतः स्यात् तर्हि बधिरोऽपि शृणुयात् । प्रत्यक्षत्वाच्च न मनोगुणः, जातिमत्त्वे सति बाह्येकेन्द्रियजन्यप्रत्यक्षविषयत्वादित्यर्थः । एतेनैव हेतुना दिक्कालयोरपि न गुण इति सूत्रसूचितमेव । परिशेषादाकाशस्यैव लिङ्गमनुमापकमित्यर्थः ।

उक्तानुमाने बाधं स्वरूपासिद्धिञ्च शङ्कते "नच"—इति । "वायौ"—इति । तथाच स्पर्शवद्वायुगुणत्वस्य तत्र सत्त्वात् तदभावसाधने बाधितो हेतुः ।

समाधत्ते—"अयावद्द्रव्यभावित्वेन"—इति । यावद्द्रव्यस्थितिकालस्थितिकत्वम्, द्रव्यध्वंसवत्त्वं, स्वाश्रयनाशप्रतियोगित्वं वा यावद्द्रव्यभावित्वम् । यत्तन्न तदयावद्द्रव्यभावित्वम् । इदञ्च पूर्वमेव स्पष्टीकृतम् ।

ननु—"आकाशे * डयते बलाका" इति प्रतीत्या आकाशं चाक्षुषमेव मन्यताम् ? अन्यथा अधिकरणाप्रत्यक्षे उक्तप्रत्ययो न स्यात् आधेयताप्रत्यक्षम्प्रति अधिकरणताप्रत्यक्षस्य प्रयोजकत्वादिति चेद् ? न, असौ प्रत्ययः आलोकमेवावगाहते नत्वाकाशं चाक्षुषप्रत्यक्षम्प्रति महत्त्वोद्भूतरूपवत्त्वस्य प्रयोजकत्वात्, आकाशे रूपाभावाच्चेत्यन्यत्र विस्तरः ।

---

* अत्रेदम्बोध्यम्—डीङ् विहायसा गतौ । अयं धातुर्भौवादिको दैवादिकश्च, आद्ये "डयते" इति, द्वितीये "डीयते" इति प्रयोगः । बोपदेवोऽपि—"डयते पक्षी" इत्युदाजहार । अस्यापि निष्ठायाम् "डीनः" इति कातन्त्राः । धातुपारायणिकास्तु—सेटं मत्वा "डयित" इत्याहुः । गोयीचन्द्रोऽपि—"डयितः, डयितवान्" इत्युदाजहार । स्वमते—(बोपदेवमते) तु "डीत" इत्येव साधुरिति कृतं तर्के बहु शब्दमीमांसया ।

(का०) इन्द्रियन्तु भवेच्छ्रोत्रमेकः सन्नप्युपाधितः ।

(मुक्ता०) तत्र शरीरस्य विषयस्य चाभावादिन्द्रियं दर्शयति—इन्द्रियमिति । नन्वाकाशं लाघवादेकं सिद्धं श्रोत्रन्तु पुरुषभेदेन भिन्नं कथमाकाशं स्यादिति चेत्तत्राह—एकः सन्नपीत्यादि । आकाश एकः सन्नपि उपाधेः कर्णशष्कुल्यादेर्भेदाद्भिन्नं श्रोत्रात्मकम्भवतीत्यर्थः ।

(प्रभा०) आकाशस्येन्द्रियन्तु श्रोत्रमेव । श्रूयतेऽनेनेति "श्रु" धातोः करणे † ष्ट्रन्प्रत्ययः । ननु—आकाशस्यैकत्वे कथं श्रोत्रेन्द्रियस्य नानात्वम् ? तत्राह—"उपाधे"रिति । शष्कुलीव कर्ण इति कर्णशष्कुली । "शष्कुली पूरिका प्रोक्ता" इति निघण्टुः । कर्णशष्कुलीविवरावच्छिन्नमाकाशं श्रोत्रमित्यर्थः ।

इदन्तु बोध्यम्—आकाशमेकं विभु नित्यञ्च । "घटाकाशो मठाकाश" इति नानाव्यपदेशस्तु घटमठाद्युपाधिभेदवशाद्बोध्यः । विभुत्वञ्च शब्दस्य सर्वत्रोपलम्भयोग्यतावत्त्वात् । मूर्त्तद्रव्यवृत्तिसंयोगवत्त्वाच्च । अतएव च नित्यत्वमपि । "आत्मन आकाशः सम्भूत" ( तै०उ० २ । १ । १ ) इत्याद्याकाशोत्पत्तिवादिनी श्रुतिस्तु ब्रह्माण्डरूपोपाधिवशादाकाशाभिव्यक्तिपरा, अन्यथा परमाणूनामप्यनित्यताऽऽपद्येत । वस्तुतस्तु—‡ आत्माकाशयोर्जन्यजनकभावोऽनुमानविरुद्धः । तेन श्रौतं तथाकथनमर्थवादरूपमेव । आकाशस्य शरीरन्तु न वर्त्तते । परञ्जीवादृष्टाऽलौकिकमाहात्म्यात् इन्द्रियमस्ति, तच्च श्रोत्रम् । "शब्दधीजनकमिन्द्रियं श्रोत्रम्" इति तल्लक्षणम् । श्रोत्रेन्द्रियस्याकाशत्वे किम्मानमिति चेत् ? "यदिन्द्रियं रूपादिषु मध्ये यद्गुणग्राहकं तदिन्द्रियं तद्गुणयुक्तम्" इति व्याप्तेः श्रोत्रस्य शब्दगुणत्वेन शब्दगुणकत्वम्=समवायसम्बन्धेन शब्दसमवायिकारणत्वञ्चाकाशत्वमित्याकाशलक्षणलक्ष्यत्वादाकाशत्वसिद्धिरिति संक्षेपः । "शब्दः प्रत्यक्षत्वे सत्यकारणगुणपूर्वकत्वाद् अयावद्द्रव्यभावित्वात्" इत्यादि प्रशस्तमपि मूलं ज्ञेयम् ।

इत्याकाशग्रन्थः ।

---

(का०) जन्यानाञ्जनकः कालो जगतामाश्रयो मतः ॥४५॥

(मुक्ता०) कालं निरूपयति—जन्यानामिति । तत्र प्रमाणं दर्शयितुमाह—जगतामिति । तथाहि—इदानीं घट इत्यादिप्रतीतिः सूर्यपरिस्पन्दादिकं यदा विषयीकरोति तदा सूर्यपरिस्पन्दादिना घटादेः सम्बन्धो वाच्यः, स च सम्बन्धः संयोगादिर्न सम्भवतीति काल एव तत्सम्बन्धघटकः कल्प्यते । इत्थञ्च तस्याश्रयत्वमपि सम्यक् ॥ ४५ ॥

---

† "सर्वधातुभ्यः ष्ट्रन्" ( ३०४ । १५६ ) इत्युणादिसूत्रेणेत्यर्थः ।

‡ परमिदं नैयायिकेभ्य एव रोचते नत्वौपनिषदेभ्यः ।

(प्रभा०) "कालम्"—इति । अवसरप्राप्तं कालं लक्षयतीत्यर्थः । "जन्यानाम्"—इति । जन्यानां कार्याणाम्=उत्पत्तिमताञ्जनकः=निमित्तकारणं यः स "काल" इत्यर्थः। अत्रच—कार्यमात्रम्प्रति कालः समवायिकारणम्भवितुं नार्हति, द्रव्यत्वाच्च असमवायिकारणमपि नैवेति हेतोः जनकपदस्य निमित्तकारणमर्थो बोध्यः ।

तथाच कार्यत्वावच्छिन्नम्प्रति कालिकसम्बन्धावच्छेदेन निमित्तकारणत्वं कालत्वम् । अर्थात् कालिकसम्बन्धावच्छिन्नकार्यत्वावच्छिन्ना या कार्यता, तन्निरूपिता या तादात्म्यसम्बन्धावच्छिन्नाधिकरणता, तादृशाधिकरणतया निमित्तकारणत्वं कालत्वमिति काललक्षणम् ।

"कालिकसम्बन्धावच्छिन्ने"ति निवेशेन दिशि, अधिकरणतयेति पदेन च अदृष्टादौ नातिव्याप्तिः । तथाचार्षं सूत्रम्—

"नित्येष्वभावादनित्येषु भावात्कारणे कालाख्येति" (वै० २।२।६) इति ।

नित्येष्वाकाशादिषु अभावात्="युगपज्जातः चिरञ्जातः क्षिप्रञ्जातः इदानीञ्जातः दिवा जातः नक्तञ्जातः" इत्यादिप्रत्ययस्याभावात्, अनित्येषु=घटपटादिकार्येषु चोक्तप्रत्ययस्य भावात् अन्वयव्यतिरेकाभ्यां कार्यमात्रम्प्रति यत्कारणं स काल इत्यर्थः ।

"तत्र"—इति । काले इत्यर्थः । प्रमाणम्=अनुमानम् । तच्च—यथाऽस्ति तथा घटयितुं सन्दर्भं रचयति—"तथाहि"—इति । "इदानीं घटोऽस्ति" इत्यादिप्रतीतिः=ज्ञानम् । "सूर्यपरिस्पन्द"—इति । सूर्यपरिस्पन्दः=सूर्यक्रिया गतिरूपा। विषयीकरोति=अवगाहते । लोके तथा व्यवहारदर्शनादिति भावः । तथाच—सूर्यक्रियया सह घटादेः=जन्यपदार्थमात्रस्येत्यर्थः । "संयोगादिः"—इत्यादिना समवायग्रहः । "न सम्भवति"—इति । न प्रमाणसिद्धो भवतीत्यर्थः । सम्बन्धं विना च उक्तप्रतीत्या न भाव्यम्, तेन भवितव्यं केनचित्सम्बन्धेन । सच सम्बन्धः "स्वाश्रयतपनसंयोगिसंयोगस्वरूप" एव । एवमेवंविधसम्बन्धघटकः यः कश्चन पदार्थः, स एव काल इति कल्प्यते=अनुमीयते ।

अत्र "स्व"पदेन सूर्यक्रियाया: ग्रहणम्, तस्या आश्रयः सूर्यः, तस्य संयोगी कालः, तत्संयोगः (कालिकसम्बन्धः) घटादौ वर्त्तते, उक्तसम्बन्धघटकः काल एव पदार्थ इत्यर्थः । अयमेव सम्बन्धः "स्वसमवायिसंयुक्तसंयोग" इत्युच्यते । "स्व"पदेन पूर्ववत् सूर्यक्रियाया ग्रहणम्, तस्य समवायी सूर्यः, तत्संयुक्तः कालः, तेन सह घटादीनाम्=जन्यानां संयोगः सम्बन्धो भवति, "द्रव्ययोः संयोग" इति नियमात् । "इदानीं घटरूपमुत्पन्नम्" इत्यादौ रूपादिगुणेन कालसम्बन्धस्तु—"स्वसमवायिसंयुक्तसंयोगिसमवेतरूपो" घटनीयः ।

"जगतामाश्रयो मत"—इति । "कालः सर्वत्वान्" इति प्रतीत्या सर्वाधिकरणत्वेन कालाख्यद्रव्यसिद्धिरिति भावः ॥ ४५ ॥

(का०) परत्वापरत्वधीहेतुः क्षणादिः स्यादुपाधितः ।

(मुक्ता) प्रमाणान्तरं दर्शयति—परत्वापरत्वेति । परत्वापरत्वबुद्धेरसाधारणं निमित्तं काल एव । परत्वापरत्वयोरसमवायिकारणसंयोगाश्रयो लाघवादतिरिक्तः काल एव कल्प्यते इति भावः । नन्वेकस्य कालस्य सिद्धौ क्षणदिनमासवर्षादिसमयभेदो न स्यादत आह—क्षणादिरिति । कालस्त्वेकोऽपि उपाधिभेदात्क्षणादिव्यवहारविषयः । उपाधिस्तु स्वजन्यविभागप्रागभावावच्छिन्नं कर्म । पूर्वसंयोगावच्छिन्नविभागो वा । पूर्वसंयोगनाशावच्छिन्नोत्तरसंयोगप्रागभावो वा । उत्तरसंयोगावच्छिन्नं कर्म वा । नचोत्तरसंयोगानन्तरं क्षणव्यवहारो न स्यादिति वाच्यम्, कर्मान्तरस्यापि सत्त्वादिति । महाप्रलये क्षणादिव्यवहारो यद्यस्ति तदानायत्या ध्वंसेनोपपादनीय इति । दिनादिव्यवहारस्तु तत्तत्क्षणकूटैरेवेति ।

(प्रभा०) परममूले—"परत्वापरत्वधीहेतुः"—इति । परत्वापरत्वबुद्धेरसाधारणनिमित्तं काल एव । "परत्वापरत्वबुद्धेः"—इति । अयमस्माज्ज्येष्ठ इत्येकस्मिन्भ्रातरि परत्वप्रत्ययः, अयमस्मात्कनिष्ठ इत्यपरस्मिन्भ्रातरि अपरत्वप्रत्ययः । सच परत्वापरत्वगुणधीनिबन्धनः । तथाचानुमानम्—"परत्वापरत्वे च असमवायिकारणजन्ये भावकार्यत्वात् घटादिवत्" इत्यनुमानेन ते सासमवायिकारणके । असमवायिकारणञ्च तयोः कालपिण्डसंयोग एवेति परत्वापरत्वयोरसमवायिकारणसंयोगाश्रयतयापि कालसिद्धिरिति भावः * ।

नन्वेवम्—तादृशसंयोगम्प्रति समवायिकारणमपि काल इति कथं सर्वत्र कालस्य निमित्तकारणतया प्रथमलक्षणप्रणयनम् ? उच्यते—यद्यपि कार्यमात्रम्प्रति निमित्तकारणं काल इत्युक्तम्परमसौ कालिकसम्बन्धेन । स्ववृत्तिद्वित्वसंयोगादिगुणान् प्रति तु द्रव्यत्वादसौ समवायिकारणं समवायसम्बन्धेनेति न पूर्वापरविरोधः शङ्कनीयः । "कालोऽमुं दिवमजनयत्, काल इमाः पृथिवीरुत"—(अथर्व० कां०१९। सू०५३। मं०५) इत्याद्यागमोऽपि काले प्रमाणम् ।

आशङ्कते—"ननु"—इति । समयभेदः=समयव्यवहारभेदः । सच "अद्य गन्ता, श्व आगन्ता, परश्वः पठिता" इत्यादिरूपः । समाधत्ते—"क्षणादिः"—इति । "उपाधित"—इति । उपाधिभेदात् एकस्मिन्नपि क्षणदिनादिव्यवहार इत्यर्थः । कः

---

* न्यायलीलावतीकारस्तु—अत्र विषये बहु शास्त्रार्थयन् "तपनस्पन्दभेदपिण्डसंसर्गोपनायकः पदार्थ इतरेभ्यो भिद्यते उपाधिभेदसंसर्गोपनायकत्वात्, न यदेवं न तदेवं यथा पृथिवी" इत्यनुमानमाचष्टे ।

स उपाधिरित्याकाङ्क्षायां मूर्त्तद्रव्यक्रियारूपमुपाधिं दर्शयितुमाह—"**उपाधिस्तु**"—इति । तत्र प्रथममुपाधिमाह—"**स्वजन्यविभाग**"—इति । स्वजन्यविभागप्रागभावावच्छिन्नं कर्म प्रथमक्षणोपाधिरित्यर्थः । अत्र "स्व"पदेन मूर्त्तद्रव्यनिष्ठाया क्रियाया ग्रहणम्, क्रिया कर्मेत्यनर्थान्तरम् ।

पूर्वं क्रिया, क्रियातो विभागः, विभागात्पूर्वदेशसंयोगनाशः, तत उत्तरदेशसंयोगश्चेति नियमः । एतन्नियमपूर्वकं मूर्त्तद्रव्यनिष्ठया यया क्रियया द्वितीयस्मिन्क्षणे विभाग उत्पादनीयः तस्य विभागस्य प्रथमक्षणे प्रागभावः, एवमसौ क्रिया स्वजन्यविभागप्रागभावविशिष्टा सती "**स्वजन्यविभागप्रागभावावच्छिन्ना**" इत्युच्यते । अयमेव च प्रथमक्षणस्योपाधिः । अर्थात् क्रियया जनिष्यमाणविभागस्य प्रागभावविशिष्टा या क्रिया तद्द्वारैव काले "**अयम्प्रथमः क्षण**" इति व्यवहारो जायते ।

क्रियाविभागप्रागभावौ द्वावेव यस्मिन्काले वर्त्तेते, स कालः "प्रथमक्षण" उच्यते । क्रिया च तस्योपाधिरिति विभागप्रागभावविशिष्टक्रियोपलक्षितः काल आद्यः क्षण इति सारः ।

द्वितीयक्षणोपाधिमाह—"**पूर्वसंयोगावच्छिन्ना**"—इति । मूर्त्तद्रव्यस्य यः पूर्वदेशेन संयोगः तादृशसंयोगावच्छिन्नो यः क्रियाजन्यो विभागः अर्थात्संयोगपूर्वको विभागः सोऽयं द्वितीयक्षणोपाधिरित्यर्थः । पूर्वसंयोगावच्छिन्नविभागोपलक्षितः कालो द्वितीयः क्षण इत्यर्थः ।

परिष्कृतार्थस्तु—स्वजन्यविभागनाश्यपूर्वसंयोगविशिष्टस्वजन्यविभागः । 'स्वं" क्रिया तज्जन्यो विभागः अर्थाद् घटादिमूर्त्तद्रव्यस्य विभक्तप्रत्ययहेतुर्गुणः, तेन विभागेन नाश्यो यः पूर्वसंयोगः, तद्विशिष्टो यः स्वजन्यः=क्रियाजन्यो विभाग इति । एवं विवक्षया यत्किञ्चित्पूर्वसंयोगविशिष्टस्य स्वजन्यविभागस्य त्र्यादिक्षणवृत्तित्वेऽपि, किंवा यत्किञ्चिद्विभागस्य स्वजन्यविभागनाश्यपूर्वसंयोगविशिष्टस्य तथात्वेऽपि न क्षतिः अर्थात् द्वितीयक्षणोपपादकोपाधिलक्षणस्य त्र्यादिक्षणस्वरूपोपपादने नातिव्याप्तिः ।

तृतीयक्षणोपाधिमाह—"**पूर्वसंयोगनाशावच्छिन्ना**"—इति । पूर्वदेशवर्त्ती यः मूर्त्तद्रव्यस्य संयोगः तादृशसंयोगनाश(ध्वंस)सहितो य उत्तरदेशसंयोगप्रागभावः स एव तृतीयक्षणोपाधिः । अर्थात् प्रथमक्षणे जायमानया क्रियया द्वितीयक्षणे उत्पद्यमानेन विभागेन तृतीयक्षणे पूर्वदेशवृत्तिसंयोगस्य नाशो भवति, तस्मिन्नेव तृतीयक्षणे चतुर्थक्षणजनिष्यमाणोत्तरदेशवर्त्तिसंयोगस्य प्रागभावोऽपि विद्यते, एवं रीत्या पूर्वसंयोगनाशावच्छिन्नोत्तरसंयोगप्रागभावस्तृतीयक्षणकल्पकत्वात् तृतीयक्षणोपाधिरित्यर्थः । पूर्वसंयोगनाशावच्छिन्नोत्तरसंयोगप्रागभावोपलक्षितः कालस्तृतीयः क्षण इत्यर्थः ।

**इदन्तु बोध्यम्**—प्रागभावप्रतियोग्युत्पादकः कारणकलाप एव प्रागभावस्य नाशकः, तेन चतुर्थक्षणोत्पद्यमानोत्तरदेशसंयोग एव स्वोत्पत्तिक्षणे प्रागभावं

विनाशयतीति । उत्तरदेशसंयोगप्रागभावः तृतीयक्षणपर्यन्तस्थायी नत्वधिककाल-पर्यन्तस्थायीति ।

चतुर्थक्षणोपाधिमाह—"**उत्तरसंयोगावच्छिन्नम्**"—इति । उत्तरदेशवर्त्ति-संयोगविशिष्टा क्रियैव चतुर्थक्षणोपाधिः ।

**अयमाशयः**—प्रथमक्षणे घटे क्रिया, द्वितीयक्षणे घटस्य पूर्वदेशात् क्रियाजन्यो विभागः, तृतीयक्षणे क्रियाजन्यविभागात् घटस्य पूर्वदेशवृत्तिसंयोगनाशः, ततश्चतुर्थे क्षणे क्रियया घटस्योत्तरदेशसंयोगः, एवमुत्तरदेशसंयोग एव स्वहेतुक्रियाया नाशकः, अर्थात् पञ्चमक्षणे सा क्रिया न तिष्ठति चतुर्थक्षणे तु विद्यमाना सैव उत्तरदेश-संयोगात्मकविशेषणविशिष्टा चतुर्थक्षणोपाधिः । उत्तरसंयोगावच्छिन्नक्रियोपलक्षितः कालश्चतुर्थः क्षण इत्यर्थः ।

**उदयनाचार्यास्तु**—उत्पन्नं द्रव्यं यावद्गुणमुत्पद्यते, अन्त्यतन्तुसंयोगे वा यावन्न पटः, उत्पन्ने वा कर्मणि यावन्न विभागः * तावत्कालः † क्षणः । सामग्री वा कार्यरहिता क्षणः ।

**श्रीधराचार्यास्तु**—निमेषस्य चतुर्थो भागः क्षणः, क्षणद्वयेन लवः, अक्षि-पक्ष्मकर्मोपलक्षितः कालो निमेष इत्याहुः ।

पञ्चमादिक्षणे क्षणादिव्यवहाराभावमाशङ्कते—"**नच**"—इति । उत्तरसंयोग-सत्त्वे क्रियाया नष्टत्वात् इति शङ्काग्रन्थार्थः ।

समाधत्ते—"**कर्मान्तरस्यापि**"—इति । चतुर्थक्षणे क्रियायां नष्टायामपि तस्मिन्नेव घटादिमूर्त्तद्रव्ये क्रियान्तरसत्त्वात्पूर्ववत् क्षणादिव्यवहारसिद्धिरिति नानुपपत्ति-श्चतुर्थादिक्षणानामिति समाधानग्रन्थार्थः ।

ननूक्तक्षणलक्षणं महाप्रलयात्मकक्षणे अव्याप्तं तत्र तद्घटककर्मणोऽभावादिति शङ्कायामाह—"**महाप्रलय**"—इति । सर्वकार्यध्वंसात्मके महाप्रलये ‡ क्षणादि-

* "तावत्काल" इति तु स्पष्टम् ।

† उक्तञ्च किरणावल्याम्—

क्षणद्वयं लवः प्रोक्तो निमेषस्तु लवद्वयम् ।
पञ्चदश निमेषाश्च काष्ठास्त्रिंशत्तु ताः कलाः ॥ इति ।

‡ शास्त्रे तु महाप्रलयक्रम एवं दर्शितः । तथाहि—

जगत्प्रतिष्ठा देवर्षे पृथिव्यप्सु प्रलीयते ।
तेजस्यापः प्रलीयन्ते तेजो वायौ प्रलीयते ॥
वायुश्च लीयते व्योम्नि तच्चाऽव्यक्ते प्रलीयते ।
अव्यक्तं पुरुषे ब्रह्मन् ! निष्कले सम्प्रलीयते ॥ इति ।

व्यवहारो नेति सिद्धान्तानुयायिनः । तादृशव्यवहारेष्टौ तु अगत्या पदार्थध्वंस एव क्षणात्मककालोपाधिरवसेयः ।

अस्तु क्षणव्यवहारसिद्धिः दिनादिव्यवहारः कथं सेत्स्यति ? तत्राह—"दिनादि"—इति । तत्तत्क्षणकूटैः=तत्तत्क्षणसमुदायैरित्यर्थः । आदिना मासादि-व्यवहारग्रहः । तथाचाह किरणावलीकारः—

त्रिंशत्कालो मुहूर्त्तः स्यात् त्रिंशद्रात्र्यहनी च ते ।
अहोरात्राः पञ्चदश पक्षो मासस्तु तावुभौ ॥
ऋतुर्मासद्वयं प्रोक्तमयनन्तु ऋतुत्रयम् ।
अयनद्वितयं वर्षो मानुषोऽयमुदाहृतः ॥
एष दैवस्त्वहोरात्रस्तैः पक्षादि च पूर्ववत् ।
दैववर्षसहस्राणि द्वादशैव चतुर्युगम् ॥
चतुर्युगसहस्रन्तु ब्रह्मणो दिनमुच्यते ।
रात्रिश्चैतावती तस्य ताभ्यां पक्षादिकल्पना ॥ इति ॥

एवञ्च सकलकालग्रन्थविलोडनेन कालस्य लक्षणत्रयं सुनिष्पन्नम् तथाहि—

विभुत्वे सति दिगसमवेतपरत्वापरत्वासमवायिकारणं कालः । परत्वापरत्वा-नाश्रयत्वे सति विजातीयपरत्वापरत्वासमवायिकारणसंयोगाश्रयः कालः । ❋ अतीतादि-व्यवहारहेतुर्वा कालः । वर्त्तमानध्वंसप्रतियोगित्वमतीतत्वम् । वर्त्तमानप्रागभाव-प्रतियोगित्वम्भविष्यत्त्वम् । ध्वंसप्रागभावानधिकरणकालवृत्तित्वं वर्त्तमानत्वमिति विवेकः । एतेषां लक्षणानां समन्वयप्रकारो ग्रन्थगौरवभयान्न प्रतानितः । स्वयमूह्यः ।

कालसाधकानुमानप्रकारस्तु—ज्येष्ठकनिष्ठशरीरनिष्ठे परत्वापरत्वे असमवायि-कारणजन्ये जन्यगुणत्वात् रूपवत् ।

अन्ये तु—बहुतरसूर्यपरिस्पन्दविशिष्टपिण्डज्ञानात् कालिकपरत्वमुत्पद्यते । अल्पतरसूर्यपरिस्पन्दविशिष्टपिण्डज्ञानात्कालिकापरत्वोत्पत्तिः । ततश्चैवं कालानुमानम्—"तद्विशिष्टज्ञानं विशेषणविशेष्योभयसम्बन्धघटकसापेक्षं साक्षात्सम्बन्धाभावे सति विशि-ष्टज्ञानत्वात् लोहितः स्फटिक इति विशिष्टज्ञानवत् । अत्र—"अयं शरीरादिरूपपिण्डो बहु-तरसूर्यपरिस्पन्दवान्" इत्याकारककालिकपरत्वनिमित्तविशिष्टज्ञानम् "तद्विशिष्टज्ञानम्†" इति पक्षपदार्थः । क्रियारूपं विशेषणं पिण्डरूपं विशेष्यं तदुभयसम्बन्धघटको यः कश्चन पदार्थः, तत्सापेक्षमिति साध्यपदानामर्थः । शिष्टान्यक्षराणि सुगमानि । "यत् साक्षात्सम्बन्धाभावविशिष्टं विशिष्टज्ञानं तत् विशेषणविशेष्योभयसम्बन्धघटक-

---

❋ नच तादृशव्यवहारः सूर्यपरिस्पन्दादिरूपोपाधिमादायाऽपि सम्भवतीति वाच्यम्, अनुगतव्यवहारस्याऽनुगतविषयं विनाऽसम्भवेनाऽतिरिक्तकालस्वीकारात्" इति भास्करोदया ।

† अथवा—"इदानीं घट" इति विशिष्टज्ञानम् ।

सापेक्षम्" इति व्याप्तेराकारः । यथा--लोहितः स्फटिक इति ज्ञानम् । अत्र स्वभावतः शुक्लः स्फटिको विशेष्यम्, लोहितरूपं विशेषणम् । परन्तु लोहितरूपस्य साक्षात्सम्बन्धो नैवास्ति स्फटिके । संयोगसमवायश्चेति द्वावेव सम्बन्धौ साक्षात्सम्बन्धपदेनोच्येते । तत्र स्फटिके लौहित्यस्य न संयोगो नापि समवायः तस्य जवापुष्पादिद्रव्यसमवेतत्वात् । जवापुष्पस्य च स्फटिकेन सह संयोगः साक्षात्सम्बन्धो नतु लौहित्यस्य, परन्तु स्वसमवायिसंयोगरूपेण परम्परासम्बन्धेन लौहित्यं स्फटिके भासते । "लोहितः स्फटिकः" इत्याकारकं विशिष्टज्ञानं साक्षात्सम्बन्धाभावे सति विशिष्टज्ञानत्वात् विशेषणविशेष्योभयसम्बन्धघटकं यद् जवापुष्पादिद्रव्यं तत्सापेक्षमेव । इत्थमयञ्ज्येष्ठः पिण्डो बहुतरसूर्यपरिस्पन्दवान्" इति विशिष्टज्ञानमपि तत्त्वात् विशेषणविशेष्योभयसम्बन्धघटकसापेक्षम् । बहुतरसूर्यपरिस्पन्दो विशेषणम्, शरीरादिपिण्डस्तु विशेष्यम्, परमुभयोः न साक्षात्सम्बन्धः, किन्तु स्वसमवायिसंयुक्तसंयोगरूपः परम्परासम्बन्ध एवोभयसम्बन्धः । अत्र "स्व"पदेन सूर्यक्रियारूपविशेषणग्रहः, तस्य समवायी सूर्यः, तत्संयुक्तः कालः, तस्य कालस्य संयोगः पिण्डेन सह वर्त्तत एवेति रीत्या सूर्यक्रियापिण्डसम्बन्धघटकः पदार्थः काल इति सिद्धम् ।

साङ्ख्याचार्यास्तु—पञ्चविंशतितत्त्वप्रतिज्ञाभङ्गभिया कालमतिरिक्तम्पदार्थं न मन्वते । किन्तु एकत्वेऽपि कालस्य क्षणदिनादिभेदो यैरुपाधिभिः स्वीकृतः त एवोपाधयोऽतीतादिव्यवहारहेतवो नतु तादृशोपाधिविलक्षणः कश्चनातिरिक्तः कालः । यथाचाहुर्योगभाष्यकाराः—"स खल्वयं कालो वस्तुशून्यो बुद्धिनिर्माणः शब्दज्ञानानुपाती लौकिकानां व्युत्थितदर्शनानां वस्तुस्वरूप इवावभासते" इति * ।

योगवार्त्तिककारस्तु—क्षणात्मकः कालः स्वीकर्त्तव्य एवेत्यभिप्रायवान् "क्षणस्तु वस्तुपतित" इत्याद्युत्तरभाष्यानुरोधात् अन्यथा क्रमिकपरिणामानुपपत्तिः । एवञ्च क्षणाद्याः सर्वेऽपि कालाः सर्ववस्तुपरिणामहेतव इत्याह इति संक्षेपः ।

(का०) दूरान्तिकादिधीहेतुरेका नित्या दिगुच्यते ॥४५॥

(मुक्ता०) दिशं निरूपयति--दूरान्तिकेति । दूरत्वमन्तिकत्वञ्च दैशिकम्परत्वमपरत्वम्बोध्यम् । तद्बुद्धेरसाधारणम्बीजं दिगेव । दैशिकपरत्वापरत्वयोरसमवायिकारणसंयोगाश्रयतया लाघवादेका दिक् सिध्यतीति भावः ॥ ४६ ॥

---

* इत्थञ्च—"जातिदेशकालसमयानवच्छिन्नाः सार्वभौमा महाव्रतम्" ( यो० सा० पा० सू० ३१) इति, "देशकालाकारनिमित्तापबन्धान्न खलु समानकालमात्मनामभिव्यक्तिरिति', इति चैवमादिषु कृतः कालशब्दप्रयोगः स्वतन्त्रकालपदार्थवादिमतसिद्धकालोपाधिनिबन्धन एवेत्यभिमानः ।

(प्रभा०) "इदमस्मात् दूरम्, इदं नेदिष्ठम्" इत्याकारकबुद्धेरसाधारणं निमित्तकारणं दिक् इत्याशयवान् दिशं निरूपयति—"दूरान्तिकादि"—इति । किं दूरत्वम्, किमन्तिकत्वमित्याकाङ्क्षायामाह—"दैशिकम्परत्वमपरत्वम्"—इति । "दैशिकपरत्वापरत्वयोः"—इति । अस्यायमर्थः—समीपदेशस्थितघटादिमूर्त्तद्रव्यापेक्षया दूरदेशस्थितघटादिमूर्त्तद्रव्ये दैशिकम्परत्वम् । एवं दूरदेशस्थितघटादिमूर्त्तद्रव्यापेक्षया समीपदेशस्थितघटादिमूर्त्तद्रव्ये दैशिकमपरत्वं वर्त्तते । तत्र—दैशिके परत्वापरत्वे असमवायिकारणजन्ये जन्यगुणत्वात् घटनिष्ठरूपवत् । यो यो जन्यगुणः स सर्वोऽपि असमवायिकारणजन्यः यथा घटनिष्ठं रूपं जन्यगुणत्वात् कपालगतरूपासमवायिकारणजन्यं तथा दूरत्वम्=परत्वम् अन्तिकत्वम्=अपरत्वं नाम गुणोऽपि जन्यगुणत्वात् असमवायिकारणजन्यः स्यात् । एवं यस्मिन्मूर्त्ते=घटादिपिण्डे परत्वापरत्वे उत्पद्येते तेन सह यस्य द्रव्यस्य संयोगः=असमवायिकारणरूपः, तदेव द्रव्यं दिगिति बोध्यम् । तदसमवायिकारणं दिशावस्तुनोः संयोग एवेति भावः ।

काललक्षणवदत्रापि लक्षणान्तरं कल्प्यम् । तथाहि—दैशिकविशेषणतासम्बन्धावच्छिन्नकार्यत्वावच्छिन्नकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नतया यत् निमित्तकारणं सा दिक् । तथाचार्षं सूत्रम्—

"इत इदमिति यतस्तद्दिश्यं लिङ्गम्" (वै० २ । २ . १० ) इति ।

इतः=संयुक्तसंयोगाल्पीयस्त्वाधिकरणाद् द्रव्यात् इदम्=बहुतरसंयुक्तसंयोगाधिकरणं द्रव्यं परं नाम दूरम्, इतश्च संयुक्तसंयोगभूयस्त्वाधिकरणाच्च द्रव्यात् इदं संयुक्तसंयोगाल्पीयस्त्वाधिकरणं द्रव्यमपरं नाम अन्तिकमित्येषा प्रतीतिर्यतो यस्मात्परत्वापरत्वनिमित्तात् उक्तप्रतीतिविषयभूताद्भवति तदेव परत्वमपरत्वञ्च * दिश्यं लिङ्गम्=दिगनुमापकं लिङ्गं हेतुरित्यर्थः ।

अयमाभसन्धिः—(यत्किमपि) मूर्त्तद्रव्यमवधिं कृत्वा (येषु केषुचित्) मूर्त्तेष्वेव यत् "इदमस्मात्परमिदञ्चास्मादपरम्" इति धीरुत्पद्यते, यथा स्याल(शालि)-कोटेऽवस्थितस्य पुंसः वजीराँबादमपेक्ष्य लवपुरं परम्=दूरमिति यावत् । लवपुरमपेक्ष्य वजीराँबादोऽपरम्=अन्तिकमिति यावत् । एवमाकारायां बुद्धौ परत्वापरत्वे निमित्तम् । संयुक्तसंयोगभूयस्त्वाश्रयत्वम्परत्वम्, संयुक्तसंयोगाल्पीयस्त्वाश्रयत्वमपरत्वम् ।

ते च भूयासोऽल्पीयांसो वा संयुक्तसंयोगाः लवपुरं वजीराँबादं वा न साक्षादाश्रयितुं समर्थाः, तेषां तत्र तत्र पृथिवीप्रदेशे समवेतत्वात्, लवपुरे वजीराँबादे समवायाभावाच्च, अतोऽन्येन केनचित् तत्र ते संयोगा अवश्यमुपनेतव्याः, पृथिव्यादिस्तु परिच्छिन्नत्वान्न तथासंयोगहेतुः, आकाशस्तु न तादृशसम्बन्धप्रयोजकः, कालोऽपि

---

* इदन्तु ध्येयम्—दैशिकपरत्वप्रकारकबुद्धिम्प्रति दैशिकपरत्वं कारणम्, दैशिकापरत्वप्रकारकबुद्धिम्प्रति दैशिकाऽपरत्वं कारणमिति ।

क्रियामात्रसम्बन्धप्रयोजकत्वाच्च तथा, भवति च जडमपि द्रव्यमन्यद्रव्यवृत्तिधर्मस्यान्यत्र प्राप्तौ निमित्तम्, यथा जवापुष्पं स्फटिके लौहित्यस्य, परमत्र साक्षात्सम्बन्धः कश्चिन्न प्रमाणसम्प्रतिपन्नः, तादृशी धीस्तु सम्बन्धमन्तरा उत्पत्तुमेव नार्हति, ततश्च यदेव द्रव्यं स्वसमवायिसंयुक्तसंयोगाख्यसम्बन्धद्वारा स्यालकोटादारभ्य भूयसः संयुक्तसंयोगान् लवपुरे, ततोऽल्पीयसः संयुक्तसंयोगांश्च वजीराँबादे उपनयति, तदेवाचेतनम्पृथिव्यादिभ्यो विलक्षणं दिगाख्यं द्रव्यमिति ध्येयम्।

अत्र "स्व"पदेन बहुतरसंयोगस्य अल्पतरसंयोगस्य वा ग्रहणम्, तेषां समवायि मूर्त्तं द्रव्यम्, तेन सह संयुक्ता=संयोगसम्बन्धवती दिगेवेति उक्तसम्बन्धघटनप्रकारः।

एवमस्याः सिद्धावनुमानान्तरमपि—"इदं दूरमिति प्रत्ययः, इदं समीपमिति प्रत्ययश्च पृथिव्याद्यष्टद्रव्यातिरिक्तद्रव्यसम्बन्धप्रयुक्तः परत्वापरत्वहेतुकत्वात् कालिकपरत्वापरत्ववत्" इति सामान्यतोदृष्टम्बोध्यम्।

इयमपि कार्यमात्रम्प्रति साधारणं निमित्तम्। "इह दिशि कृष्णः, परस्यां दिशि रामः" इत्यादिप्रत्ययात्।

(का०) उपाधिभेदादेकापि प्राच्यादिव्यपदेशभाक्।

(मुक्ता०) नन्वेकैव दिग् यदि तदा प्राचीप्रतीच्यादिव्यवहारः कथमुपपद्यतामित्यत आह—उपाधिभेदादिति। यत्पुरुषस्य उदयगिरिसन्निहिता या दिक् सा तस्य प्राची। एवमुदयगिरिव्यवहिता या दिक् सा प्रतीची। एवं यत्पुरुषस्य सुमेरुसन्निहिता या दिक् सोदीची। तद्व्यवहिता त्ववाची। "सर्वेषामेव वर्षाणां मेरुरुत्तरतः स्थित" इति नियमात्।

(प्रभा०) आशङ्कते—"ननु"—इति। समाधत्ते—"उपाधिभेदात्"—इति। वस्तुतो दिश एकत्वेऽपि तत्तदुपाधिभेदेन प्राच्यादिसञ्ज्ञाभेद इत्यर्थः। प्राच्यादिसञ्ज्ञासु निमित्तभूतानुपाधीनाह—"यत्पुरुषस्य"—इति। पुरुषस्येति पदार्थमात्रोपलक्षणम्। तथाच—*यदपेक्षयोदयगिरिसन्निहितं यन्मूर्त्तं सा ततः "प्राची" प्रागस्यामञ्चति सूर्य इति व्युत्पत्तेः। यथा प्रयागात् काशी। यस्मादुदयाचलविप्रकृष्टं यन्मूर्त्तं तत्तस्य "प्रतीची" प्रातिकूल्येनास्यामञ्चति सूर्य इति व्युत्पत्तेः। यथा गयायाः पाटलीपुत्राद्वा काशी। यस्मात्सुमेरुसन्निकृष्टं यन्मूर्त्तं तत्तस्य "उदीची" उदगस्यामञ्चति सूर्य इति व्युत्पत्तेः। यथा रामेश्वरक्षेत्रात् काशी। यस्मात्सुमेरुविप्रकृष्टं

---

* तदपेक्षयोदयगिरिसन्निहितत्वञ्च—तन्निष्ठोदयगिरिसंयुक्तसंयोगापेक्षया अल्पतरोदयगिरिसंयोगवत्त्वम्। इत्थञ्च—"मथुरायाः प्राच्यः प्रयागः" इत्यत्र मथुरानिष्ठोदयगिरिसंयुक्तसंयोगपर्याप्तसङ्ख्याव्याप्यसङ्ख्यापर्याप्त्यधिकरणोदयगिरिसंयुक्तसंयोगवन्मूर्त्तवृत्तिः प्रयाग इत्यन्वयबोध इत्यादिर्दिनकर्यत्राऽनुसन्धेया।

यन्मूर्त्तं तत्तस्य "अवाची" अवागस्यामञ्चति सूर्य इति व्युत्पत्तेः । यथा काश्या रामेश्वरक्षेत्रम् । एवं खण्डान्तराण्यप्यूहनीयानि । इममेवाभिप्रायमनुसृत्याह—"सर्वेषामेव"—इति । तथाचर्षेः सूत्राणि—

"आदित्यसंयोगाद्भूतपूर्वाच्च भविष्यतो भूताच्च प्राची" ।

"तथा दक्षिणा प्रतीच्युदीची च" ।

"एतेन दिगन्तरालानि व्याख्यातानि" । (वै० २।२।१४;१५,१६) इति ।

सर्वसारस्तु—सूर्योदयसन्निहिता दिक् प्राची । तद्व्यवहिता दिक् प्रतीची । प्राच्यभिमुखस्थितपुरुषवामदेशावच्छिन्ना दिक् उदीची । तादृशपुरुषदक्षिणदेशावच्छिन्ना दिक् अवाची । यतः पतति सा दिक् ऊर्ध्वा । यत्र पतति सा अधः । एवं विदिशोऽपि अन्या: * कल्पनीया दिक् । इदन्तु बोध्यम्—जन्यमात्रं क्रियामात्रं वा कालोपाधिः । मूर्त्तमात्रन्तु दिगुपाधिरिति ।

दिक्कालौ नेश्वरादतिरिच्येते । किन्तु ईश्वर एव तत्तदुपाधिविशिष्टः क्षणदिन-प्राचीप्रतीच्यादिव्यवहारनिमित्तमिति दीधितिकृतां मतं तन्न युक्तम् प्रमाणाभावात् । जीव एव तथा निमित्तं स्यादिति † विनिगमनाविरहाच्च । ईश्वरस्य जगज्जन्मादिकं क्लृप्तजीवानां तत्कल्पनीयमिति लाघवतर्कस्यैव विनिगमकत्वे न दोष इति चेत् ? तदा अदृष्टादिसाधारणकारणानामपीश्वरेऽन्तर्भावप्रसङ्ग इति कृतं ‡ विस्तरेण ।

इति दिग्ग्रन्थः ।

---

(का०) आत्मेन्द्रियाद्यधिष्ठाता करणं हि सकर्तृकम् ॥४७॥

(मुक्ता०) आत्मानं निरूपयति—आत्मेन्द्रियाद्यधिष्ठातेति । आत्मत्व-जातिस्तु सुखदुःखादिसमवायिकारणतावच्छेदकतया सिद्ध्यति । ईश्वरेऽपि सा जातिरस्त्येव । अदृष्टादिरूपकारणाभावाच्च सुखदुःखा-द्युत्पत्तिः । नित्यस्य स्वरूपयोग्यत्वे फलावश्यम्भाव इति नियमस्याऽ-प्रयोजकत्वात् । परे त्वीश्वरे सा जातिर्नास्त्येव प्रमाणाभावात् । नच दशमद्रव्यत्वापत्तिः, ज्ञानवत्त्वेन विभजनादित्याहुः । इन्द्रियादीति । इन्द्रियाणां शरीरस्य च परम्परया चैतन्यसम्पादकः । यद्यप्यात्मनि "अहं जाने अहं सुखी" इत्यादिप्रत्यक्षविषयत्वमस्त्येव तथापि विप्रतिपन्नं

---

* व्यवहाराऽनुरोधादिति भावः ।

† एकपक्षपातिनी युक्तिर्विनिगमना ।

‡ विस्तरस्तु—न्यायमञ्जूषादिभ्योऽवसेयः । अस्माभिर्ग्रन्थगौरवभयात् मूलार्थबुबोधयिषा-तत्परैर्न कृत इति भावः ।

प्रति प्रथमत एव शरीरादिभिन्नस्तत्प्रतीतिगोचर इति प्रतिपादयितुं न शक्यत इत्यतः प्रमाणान्तरं दर्शयति—करणमिति। कुठारादीनां छिदादिकरणानां कर्तारमन्तरेण फलानुपधानं दृष्टम् एवं चक्षुरादीनां ज्ञानकरणानोऽफलोपधानमपि कर्तारमन्तरेण नोपपद्यत इत्यतिरिक्तः कर्ता कल्प्यते ॥ ४७ ॥

(प्रभा०) "आत्मानं निरूपयति"—इति । अवसरसङ्गत्या इति शेषः । परममूले—"आत्मा"—इति । इन्द्रियादीनामधिष्ठाता अवच्छेदकतासम्बन्धेन इन्द्रियादीनाञ्चैतन्यसम्पादकः ज्ञानवत्त्वसम्पादकः । शरीरेन्द्रियाद्यवच्छेदकम्, आत्मा अवच्छेद्य इत्यर्थः । आदिना शरीरपरिग्रहः । एवञ्च—इन्द्रियाद्यधिष्ठातृत्वम्, समवायेन ज्ञानाधिकरणत्वं वा आत्मनो लक्षणम्फलितम् । कालिकादिसम्बन्धेन कालादीनामपि ज्ञानाधिकरणत्वेऽतिव्याप्तिः स्यात् तद्वारणाय समवायेनेत्युक्तम् । ज्ञानमितीच्छादीनामप्युपलक्षणम् ।

तत्रात्मनि प्रमाणमाह—"करणम्"—इति । तथाच पारमर्षं सूत्रम्—"*आत्मेन्द्रियार्थसन्निकर्षाद्यन्निष्पद्यते तदन्यत्" (वै० ३ । १ । १८) इति । आत्मेन्द्रियसन्निकर्षात्तावज्ज्ञानमुत्पद्यते तदात्मनि लिङ्गमित्यर्थः । इदञ्च लिङ्गम्—असिद्धादिहेत्वाभासेभ्योऽन्यत्=सद्धेतुरित्यर्थः । तथाहि—"ज्ञानं क्वचिदाश्रितं कार्यत्वाद्रूपवत्" इत्यनुमानमात्मनि प्रमाणमिति फलितम् ।

नन्वात्मजातौ किम्मानमित्याह—"आत्मत्वजातिस्तु"—इति । "सुखदुःखादि"—इत्यादिना ज्ञानेच्छादिग्रहः । तथाच गौतमीयं सूत्रम्—

"इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्गमिति" (न्या० १।१।१०) इति ।

समवायसम्बन्धावच्छिन्ना या सुखदुःखादिनिष्ठा कार्यता, तादृशकार्यतानिरूपिता या आत्मनिष्ठा समवायिकारणता सा किञ्चिद्धर्मावच्छिन्ना कारणतात्वात् तन्तुनिष्ठकारणतावत् तादृशकारणतावच्छेदकत्वञ्च प्रकृते आत्मत्वमेव । ज्ञानत्वावच्छिन्नम्प्रत्यात्मवच्छिन्नत्वस्य हेतुत्वमिति भावः ।

अथवा—जीवेश्वरनिष्ठा या आत्मपदशक्यता सा किञ्चिद्धर्मावच्छिन्ना

---

* यत्तु—कश्चित्सकलदर्शनप्रक्रियासङ्करकरः—आत्मेन्द्रियार्थसन्निकर्षात्=आत्माधिष्ठितानां घ्राणादीनामिन्द्रियाणां गन्धादिभिः प्रातिस्विकैरर्थैः सह संयुक्तसमवायादिलक्षणात् सम्बन्धविशेषात् यत्=तत्तदर्थानुभवात्मकं ज्ञानमुत्पद्यते तदन्यत्=स्वरूपभूतात् ज्ञानात् भिन्नमित्यर्थ इत्याह, तन्मन्दम्, वैशेषिकादिप्रक्रियायां चित्स्वरूपात्मवादाऽनभ्युपगमात् ज्ञानस्वरूपस्य ज्ञानगुणाश्रयत्वकथने उपचारबीजाभावात्, इच्छादीनां स्पष्टतयैवाऽऽत्मनो विशेषगुणताङ्गीकारात्, अरुन्धतीन्यायेनापि शास्त्रेष्वधिकारितारतम्यप्रयुक्तप्रक्रियाभेदाङ्गीकारे दोषाभावाच्च, तेनाऽपि प्रक्रियाभेदाऽभ्युपगमस्य स्वीकृतत्वादिति कृतमनवस्थितचित्तानां बहुक्षोदकरणात् ।

शक्यतात्वात् पटनिष्ठपटपदशक्यतावत्। एतादृशशक्यतावच्छेदकत्वञ्च प्रकृते आत्मत्वमेवेत्यात्मपदशक्यतावच्छेदकतयाप्यात्मत्वजातिसिद्धिर्बोध्या।

ईश्वरे आत्मत्वजातौ मानाभाव इति वादिनम्प्रत्याह—"ईश्वरेऽपि सा"—इति। "आत्मा वारे द्रष्टव्यः" (बृहदा० २।४।५) इत्यादौ ईश्वरेऽपि आत्मपदव्यवहारादिति भावः।

नन्वेवञ्जीववदीश्वरोऽपि दुःखादिमान् स्यात्? अत आह—"अदृष्टादिरूप"—इति। * अदृष्टमेव सुखदुःखाद्युपभोगहेतुः। ईश्वरे च तन्नास्त्यतो जातिसत्त्वेऽपि न सुखाद्युत्पत्तिरिति भावः। नहि सत्यपि प्रधाने कारणे सहकारिणमन्तरा कार्यं दृष्टचरमिति तु परमार्थः।

ननु—आत्मत्वं नित्यम्, यत्र नित्ये यत्स्वरूपयोग्यता तत्र कदाचित्तत्फलमपि भवति, यथा च अरण्यस्थोऽपि दण्डः कदाचित् घटस्य कारणं स्यादेव, अन्यथा स्वरूपयोग्यतास्वरूपस्यैव निर्धारणा न भवेत्। एवमीश्वरे सुखादियोग्यतायां कदाचिदसौ जीववत् सुखादिमान् स्यादेवेत्याशङ्कायामाह—"नित्यस्य"—इति। "अप्रयोजकत्वात्"—इति। कारणतास्वरूपानाधायकत्वात् नायं नियमोऽव्यभिचारीत्यर्थः। जलपरमाणौ स्नेहयोग्यतायां विद्यमानायामपि स्नेहानुत्पत्तेः। जलपरमाणौ स्नेहयोग्यतासत्त्वेऽपि जन्यजल एव स्नेहो जायत इत्युपपादितमधस्तात्।

"परे तु"—इति। स्पष्टम्। नन्वेवं द्रव्यविभाजकवाक्ये आत्मपदेन जीवस्यैव ग्रहणे ईश्वरपदस्य पृथङ् निवेशे दशमद्रव्यत्वापत्तिः स्यादित्यत आह—"नच"—इति। आत्मपदं विहाय तत्स्थाने "ज्ञानवत्" इति पदं निवेशयिष्यामः ज्ञानवत्त्वञ्च † द्विविधञ्जीवेश्वरभेदादिति च व्याख्यास्याम इत्यर्थः। आहुरिति कथनेन नेदम्मम सम्मतम्मतमिति सूचितम्।

"इन्द्रियाणाम्"—इति। "इन्द्रियाद्यधिष्ठाता" इति मूलस्य व्याख्यानम्। आदिपदगृहीतं दर्शयितुमाह—"शरीरस्य"—इति। चैतन्यं ज्ञानवत्त्वम् ‡। एतेनात्मनि प्रमाणं दर्शितम्। "इन्द्रियाणि शरीरञ्च ज्ञात्राधिष्ठितम् अचेतनत्वे सति जनकतासम्बन्धेन अवच्छेदकतासम्बन्धेन वा ज्ञानवत्त्वात् वास्यादिवदित्यनुमानमित्यर्थः। अचेतनञ्चेतनाधिष्ठितं कार्यं करोतीति व्याप्तेः। "अहं सुखी"—इत्यादिना अहं दुःखी अहञ्जानामि इत्यादि बोध्यम्।

---

* अर्थात् ईश्वरे आत्मत्वजातिसत्त्वेऽपि धर्माऽधर्मात्मकशरीरहेत्वन्तरविरहादेव न सुखाद्युत्पत्तिः।

† एवम्—समवायसम्बन्धेन ईश्वरस्याऽपि ज्ञानवत्त्वमिति न दोषलेशोऽपि।

‡ इदन्तु—इन्द्रियाणां जनकतासम्बन्धेन शरीरस्यावच्छेदकतासम्बन्धेन इति विविच्य ज्ञेयम्।

"प्रत्यक्षविषयत्वम्"—इति । मानसप्रत्यक्षविषयत्वमित्यर्थः । नच—"तत्रात्मा मनश्चाप्रत्यक्षे" (वै० ८।१।२) इति सूत्रविरोधः । परात्माभिप्रायेण तस्य व्याख्यातत्वात् । स्फुटमिदमात्मतत्त्वविवेके । "विप्रतिपन्नम्प्रति"—इति । अहमिति प्रतीतेः शरीराद्यतिरिक्तविषयकत्वे विवादग्रस्तश्चार्वाकादिकम्प्रतीत्यर्थः ।

"करणमिति"—इति । हि यतः करणं कुठारादिसकर्तृकम्फलोत्पादने कर्तृसहकृतं दृष्टं लोक इति शेषः ।

चक्षुरादीनि इन्द्रियाणि रूपाद्युपलब्धौ सकर्तृकाणि करणत्वात् छिदादिक्रियासाधकतमकुठारादिवत् । यश्चैषां कर्त्ता=प्रेरकः (सञ्चालकः) यथा कुठारादेः तक्षा स एवात्मेत्यनुमानमात्मनि प्रमाणम् ॥ ४७ ॥

(का०) शरीरस्य न चैतन्यम्मृतेषु व्यभिचारतः ।
तथात्वञ्चेदिन्द्रियाणामुपघाते कथं स्मृतिः ॥४८॥

(मुक्ता०) ननु—शरीरस्यैव कर्तृत्वमस्त्वत आह—शरीरस्येति । ननु—चैतन्यं ज्ञानादिकमेव मुक्तात्मनां त्वमन्मत इव मृतशरीराणामपि तदभावे का क्षतिः प्राणाभावेन ज्ञानाभावस्य सिद्धेरिति चेन्न, शरीरस्य चैतन्ये बाल्ये विलोकितस्य स्थाविरे स्मरणानुपपत्तेः, शरीराणामवयवोपचयाऽपचयैरुत्पादविनाशशालित्वात् । नच पूर्वशरीरोत्पन्नसंस्कारेण द्वितीयशरीरे संस्कार उत्पद्यत इति वाच्यम्, अनन्तसंस्कारकल्पने गौरवात् ।

(प्रभा०) देहात्मवादी चार्वाकः शङ्कते—"ननु"—इति । "मृतेषु"—इति । अध्यात्मवायुसम्बन्धरहितेषु शवभूतेषु शरीरेषु । व्यभिचारतः=चैतन्याभावदर्शनादित्यर्थः । यदि चैतन्यं शरीरस्य धर्मः स्यात्तर्हि मृतेष्वपि रूपादिवदुपलभ्येतेति भावः । तस्योत्तरमाह—"शरीरस्य"—इति । यदि शरीरं चेतनं कर्तृ स्यात् तर्हि मृतेऽपि शरीरे चैतन्यमुपलभ्येत, परन्तु नोपलभ्यते अतो न शरीरश्चक्षुरादीन्द्रियनियमनकर्तृ इति भावः ।

पुनः स एव देहात्मवादी चार्वाकः शङ्कते—"ननु चैतन्यम्"—इति । यथा—तव नैयायिकस्य मते मुक्तात्मनाम्प्राणाभावेन ज्ञानाभावः, एवमेव ममापि सिद्धान्ते मृतशरीरे चैतन्याभावेऽपि तस्यात्मत्वे न किञ्चिद् दुष्यति । यथा ज्ञानेच्छाकृत्यादीनि त्वन्मते मुक्तात्मसु न भवन्ति, मन्मते मृतशरीरेषु इत्युभयत्रापि समा समापत्तिरिति नैक एव प्रतिक्षेप्य इति पूर्वपक्षिणोऽभिप्रायः । सिद्धान्ती समाधत्ते—"न"—इति । "शरीरस्य"—इति । यदि शरीरमेव चेतन आत्मा तर्हि बाल्ये यत्कन्दुकक्रीडादिकमनुभूतं वार्धक्ये तस्य स्मृतिर्न भवेत् तदा तस्य=अनुभवा-

श्रयस्य बाल्यशरीरस्य नष्टत्वात् । "यस्यानुभवः तस्यैव स्मृतिः" इति नियमादिति भावः । "शरीराणाम्"—इति । उपचयः=वृद्धिः । अपचयः=ह्रासः । "स्थाविर"—इति । वार्धक्ये इत्यर्थः । अत्र स्थाविरपदम्बाल्यकौमारयोरप्युपलक्षकं तेन न न्यूनता ।

अथ—स्वप्रयोज्यसंस्कारवत्त्वसम्बन्धेन बाल्यशरीरानुभवजन्यसंस्कारा वृद्धशरीरे जायन्त इति न स्मरणानुपपत्तिदोष इति ब्रूषे ? तर्ह्यनन्तसंस्काराणां कल्पने गौरवमापद्येत, अर्थात् अवयवानां वृद्धिह्रासाभ्यामप्रतिक्षणं शरीरम्परिणमति एवमुत्तरोत्तरसंस्कारोत्पत्तिकल्पने महद्गौरवं तव मते, मम तु देहाद्भिन्नं एक एवानुभवतज्जन्यसंस्कारयोः स्मृतेश्चाश्रय आत्मा इति महल्लाघवमित्यभिप्रायवान् "नच" इत्यारभ्य "गौरवात्" इत्यन्तो ग्रन्थः ।

(मुक्ता०) एवं शरीरस्य चैतन्ये बालकस्य स्तन्यपाने प्रवृत्तिर्न स्यात्, इष्टसाधनताज्ञानस्य तद्धेतुत्वात्तदानीमिष्टसाधनतास्मारकाभावात् । मन्मते तु—जन्मान्तरानुभूतेष्टसाधनत्वस्य तदानीं स्मरणादेव प्रवृत्तिः । नच जन्मान्तरानुभूतमन्यदपि स्मर्यतामिति वाच्यम्, उद्बोधकाभावात् । अत्र त्वनायत्या जीवनादृष्टमेवोद्बोधकं कल्प्यते । इत्थञ्च—संसारस्यानादितया आत्मनोऽनादित्वसिद्धावनादिभावस्य नाशासम्भवान्नित्यत्वं सिद्ध्यतीति बोध्यम् ।

(प्रभा०) देहात्मवादे दोषान्तरमुत्थापयति—"एवम्"—इति । इष्टसाधनताज्ञानस्य "इदम्ममेष्टसाधनम्" इत्याकारकज्ञानस्य । तद्धेतुत्वात्=प्रवृत्तिहेतुत्वात् । तदानीम्=जन्मकाले, स्तन्यपानप्रवृत्तिपूर्वकाले इत्यर्थः । "इष्टसाधनता"—इति । "इष्टसाधनत्वानुभावकाभावात्" इति प्राक्तनानेकव्याख्याकर्तृसम्मतः पाठः । अर्थस्तु—इन्द्रियसन्निकर्षरूपकारणाभावात् प्रत्यक्षानुत्पत्त्या ज्ञानसामान्याभावादेव इष्टसाधनत्वविषयकानुमित्याद्यनुत्पत्तिसम्भवादिति ज्ञेयः । स्मारकाभावादिति पाठेऽपि—अनुभवाऽभावे, संस्काराभावात्स्मृत्यनुपपत्तेः स्मारकहेतोरनुपपत्तिरेव फलतीति मे भाति ।

अयम्भावः—यावद्यत्र विषये इष्टसाधनताज्ञानं न भवति तावत्तत्र न काचिदपि प्रवृत्तिरुदेति । इष्टसाधनताज्ञानञ्चाननुभूते पदार्थे नैव जायते, यदि देह एवात्मा स्यात्तदा पूर्वं तेन कदाचिदपि स्तन्यपानं नानुभूतम्, तर्हि कथं तत्संस्काराः ? कथन्तरां तादृशं ज्ञानम् ? कथन्तमां वा मातुः स्तन्यपाने बालः प्रवर्त्तेतेति सर्वथा दुरुत्तरञ्चार्वाकस्येति । ननु—प्रवृत्त्यन्यथाऽनुपपत्तिस्तवापि समानेतिशङ्कायां स्वमते सिद्धान्ती प्रवृत्तिं समर्थयते—"मन्मते तु"—इति । "जन्मान्तरानुभूत"—इति । देहातिरिक्तेन उत्क्रान्तिगत्यागतिभाजा आत्मना पूर्वस्मिञ्जन्मनि स्तन्यपानम्ममेष्टसाधनमिति बहुवारं स्तन्यपाननिष्ठमिष्टसाधनत्वमनुभूतम्, तेन तदानीम्=स्तन्यपानप्रवृत्त्यव्यहितपूर्वकाले तत्स्मरणादेव जायते प्रवृत्तिरिति न क्षतिः ।

ननु—अन्यदपि पूर्वजन्मानुभूतं कुतो न स्मर्यते बालेन इत्याह—"नच"—इति। "उद्बोधकाभावात्"—इति। नायं नियमो यद्देहाच्छिन्नश्चेदात्मा सर्वं स्मरेद् इति। किन्तु अनुभवजनिताः संस्कारा उद्बुद्धाः सन्त एव स्मृतिहेतवो नानुद्बुद्धाः। प्रकृते च—इष्टसाधनताभिन्नपदार्थविषयकसंस्काराणां न किमप्युद्बोधकमिति नान्यत् स्मर्यते। यत्र तु उद्बोधकं कारणं समापतति तत्रान्यदपि स्मर्येत चेन्नास्माकं काचिदपि क्षतिः, पुराणेतिहासादिपु बहुधा तादृशाख्यानोपलम्भनादिति भावः। अनायत्या=अगत्येकगतिन्यायेन। जीवनादृष्टम्=धर्माधर्मौ। कल्प्यते=अनुमीयते। अन्यथा—इष्टसाधनताया अनुभवाभावेन उद्बोधकाभावेन च स्मरणासम्भवः, तेन च प्रवृत्त्यसम्भवेन बालः शुष्ककण्ठो म्रियेतेति भावः। सिद्धान्ती आत्मनो नित्यत्वं साधयति—"इत्थञ्च"—इति। स्तन्यपानप्रवृत्त्यनुकूलेष्टसाधनत्वस्मरणे। "भावस्य"—इति। इदन्तु अनादिनोऽपि प्रागभावस्य नाशम्मत्वोक्तम्—"नाशासम्भवात्"—इति। यो यो जन्यो भावः स सर्वोऽपि विनाशीति व्याप्तेः। आत्मनोऽनादित्वेन * जन्यभावत्वरूपहेतोरभावान्नैव नाशो भवितुमर्हतीत्यर्थः। श्रुतिश्च—"अविनाशीवारेऽयमात्मानुच्छित्तिधर्मा" ( बृहदा० अ० ६। ब्रा० ५। कं० १४ ) इत्येवञ्जातीयका भवत्यात्मनो नित्यत्वे प्रमाणम्।

अयमत्र चार्वाकमतसङ्क्षेपः—

अत्र चत्वारि भूतानि भूमिवार्यनलानिलाः।
चतुर्भ्यः खलु भूतेभ्यश्चैतन्यमुपजायते॥
किण्वादिभ्यः समेतेभ्यो द्रव्येभ्यो मदशक्तिवत्।
अहं स्थूलः कृशोस्मीति सामानाधिकरण्यतः॥
देहः स्थौल्यादियोगाच्च स एवात्मा न चापरः।
मम देहोऽयमित्युक्तिः सम्भवेदौपचारिकी॥ इति।

चत्वार्य्येव भूतानि तत्त्वानि, देह एवात्मा, मिलितेभ्यो भूतेभ्यो मदशक्तिवच्चैतन्यमुपजायते विनष्टेषु तेषु स्वयमेव विनश्यति, नास्ति परलोकः, न पुण्यं पापं वा कर्म यत्फलं तत्र भुञ्जीत †। प्रत्यक्षमेवैकं प्रमाणम्। अङ्गनालिङ्गनादिजन्यं ‡ सुखमेव पुरुषार्थः, मृतिरेव मोक्षः। उक्तञ्च—

---

* जन्यभावस्य घटादेर्नाशादनादीत्युक्तम्।

† देहातिरिक्तात्मनोरभावादिति भावः।

‡ अङ्गनालिङ्गनाजन्यं सुखमेव पुमर्थता।
कण्टकादिव्यथाजन्यं दुःखं निरय उच्यते॥
लोकसिद्धो भवेद्राजा परेशो नापरः स्मृतः।
देहस्य नाशो मुक्तिस्तु न ज्ञानान्मुक्तिरिष्यते॥ इत्याद्यधिकमन्यत्र।

यावज्जीवं सुखं जीवेदृणं कृत्वा घृतं पिबेत् ।
भस्मीभूतस्य देहस्य पुनरागमनं कुतः ॥ इति ।

धूर्त्ता एव स्वार्थलोलुपाः लोकसुखवञ्चका बहुवित्तव्ययायाससाध्ये अग्निहोत्रादिकर्मणि प्रवर्त्तयन्ते, नास्ति वेदाः प्रमाणमिति । उक्तञ्च—

अग्निहोत्रं त्रयो वेदास्त्रिदण्डं भस्मगुण्ठनम् ।
बुद्धिपौरुषहीनानां जीविकेति बृहस्पतिः ॥

अस्य मतस्य प्रवर्त्तको बृहस्पतिर्देवगुरुरिति केचित् । एतन्नामा अन्य एव पुरुष इत्यन्ये । अस्यैव देहात्मवादमतस्य मुक्तावलीकारेण सिद्धान्तयुक्त्या सङ्क्षिप्तखण्डनं कृतम् । यस्यायमाशयः—

नास्ति देह आत्मा, किन्तु तद्भिन्नः पुण्यापुण्यकर्त्ता तत्फलभोक्ता च । यदि देह एवात्मा स्यात्तदा राजरङ्कादिव्यवस्था न सम्भवेत्, नहि पुण्यं कर्म विना कश्चिद्राजा भवेत् कश्चिद्वा पापं कर्म विना रङ्कः । अपि च देहस्यात्मत्वे अकृतकर्मणां फलावाप्तिः, कृतकर्मणाश्च विनैव फलदानं नाश इत्यकृताभ्यागमप्रसङ्गो दुर्वारश्चार्वाकस्य ।

किञ्च—देहाद्भिन्न आत्मा न चेत् ? तर्हि जन्मकाल एव बालः स्तन्यपानकर्मणि न ?— प्रवर्त्तेत, नहि पूर्वं स्तनपानसुखं केनचिद्बालेन (जन्तुना) पूर्वस्मिञ्जन्मन्यनुभूतं येन इष्टसाधनतास्मरणेन तत्र प्रवर्त्तेत, प्रवृत्तिमात्रम्प्रति इष्टसाधनताज्ञानस्य हेतुत्वात् । अनुभवसंस्कारस्मृतीनाञ्च एकस्मिन्नेवाधिकरणे नियमः, तथा च सिद्धो देहादतिरिक्तो ज्ञानेच्छासुखादिगुणवानात्मा, तत्सिद्धौ च पुनर्भवोऽप्यवश्यम्भावी परलोकसाधकः, सुखदुःखादिवैचित्र्यञ्च स्वहेतुभूतमदृष्टं * विनाऽनुपपन्नं तदनुमापकम् । ऐहिकं सुखन्तु न परः पुरुषार्थो दुःखानुषक्तत्वात् । नापि मृतिर्मोक्षः, किन्तु एकविंशतिदुःखध्वंस एव । वेदाश्च † वक्तृयथार्थवाक्यार्थधीगुणजन्यत्वात्प्रमाणमेव । नच

---

* इदमुपलक्षणञ्चटकादिजन्तूनाञ्चुञ्चुपूर्वककणादानादिप्रवृत्तेरित्यपि बोध्यम् । उक्तञ्च कुसुमाञ्जलौ न्यायाचार्यैः—

सापेक्षत्वादनादित्वाद्वैचित्र्याद्विश्ववृत्तितः ।
प्रत्यात्मनियमाद्भुक्तेरस्ति हेतुरलौकिकः ॥ इति ।

अस्यैवादृष्टस्य वैशेषिकदर्शने षष्ठाध्याये विशिष्टा परीक्षा कृता भगवता कणादेन । किञ्च—"चैत्रस्य शरीरादिकं तदीयविशेषगुणजन्यं कार्यत्वे सति तदीयभोगहेतुत्वात् तदीयप्रयत्नजन्यकुसुमपर्यङ्कादिवत् । यद्यत्कार्यत्वे सति तदीयभोगहेतुकं (दृष्टम्) तत्तत्तदीयविशेषगुणजन्यम्" इति प्रतिबन्धसिद्धिरित्यनुमानमप्यदृष्टसाधकं ज्ञेयम् ।

† इदञ्च—"बुद्धिपूर्वा वाक्यकृतिर्वेदे" (वै० ६।१।१) इत्यार्षसूत्रमूलम् । सूत्रार्थस्तु—वेद इति घटकत्वं सप्तम्यर्थः, तस्य कृतान्वयः । ऋग्यजुःसामाथर्वाख्यवेदघटकं यद्वाक्यरूपं कृतिः कार्यं रचनाविशेषः सा बुद्धिपूर्वा अर्थात् वेदघटकं यद्वाक्यरूपं कार्यं तद्बुद्धिपूर्वम्=स्वार्थविषयक-

स्वयमपि बहुवित्तव्ययायासङ्कुर्वाणा निःस्वार्थाः परमविरक्ताश्च वेदप्रमाणवादिनो ब्राह्मणा व्यासाद्या भ्रान्ताः प्रतारका वा भवितुमर्हन्ति । प्रत्यक्षादतिरिक्तमनुमानाद्यप्यस्त्येव प्रमाणं न प्रत्यक्षमात्रम्। अन्यथा गृहाद्गतम्पतिमपश्यन्ती चार्वाककामिनी मृतम्मत्वा सोरःस्ताडमाक्रन्देत्। पत्रादिलिङ्गेन तत्सत्ताज्ञाने त्वनुमानप्रमाणस्वीकार इति सर्वथा युक्तिप्रमाणविरुद्धं * चार्वाकमतमिदमनादेयं कल्याणेप्सुभिरिति सङ्क्षेपः ।

इति चार्वाकमतखण्डनम् ।

---

(मुक्ता०) ननु—चक्षुरादीनामेव ज्ञानादिकम्प्रति करणत्वं कर्तृत्वञ्चास्तु विरोधे साधकाभावादत आह—तथात्वमिति । तथात्वञ्चैतन्यमित्यर्थः । उपघाते नाशे सति अर्थाच्चक्षुरादीनामेव। कथमिति। कथं स्मृतिः, पूर्वञ्चक्षुषा साक्षात्कृतानाञ्चक्षुषोऽभावे स्मरणं न स्यात्, अनुभवितुरभावात् । अन्यदृष्टस्यान्येन स्मरणासम्भवात् । अनुभवस्मरणयोः सामानाधिकरण्येन कार्यकारणभावादिति भावः ॥ ४८ ॥

(प्रभा०) सम्प्रति चार्वाकैकदेशी "काणोऽहञ्जानामि" इत्यहम्प्रत्ययबलादिन्द्रियाण्येवात्मेति शङ्कते—"ननु"—इति । "करणत्वम्"—इति । करणम्=साधकतमम्, तस्य भावस्तत्त्वम् । कर्तृत्वम्=क्रियानुकूलकृतिमत्त्वञ्च एतद् द्वयमपि चक्षुरादीन्द्रियाणामेवास्तु धर्मः । तदतिरिक्तात्मस्वीकारो वृथैवेति भावः । ननु—कथन्तदेव करणं कर्ता च उभयोर्विरुद्धस्वभावत्वादित्याह—"विरोधे साधकाभावात्"—इति । विरोधे=भिन्नाधिकरणवृत्तित्वे । साधकाभावात्=प्रमाणाभावादित्यर्थः । अयम्भावः—विरुद्धमिति क्व नः सम्प्रत्ययो यत्प्रमाणासहिष्णुत्वं नाम । यत्तु—प्रमाणेन तथैव सम्प्रतिपन्नं यथार्हतानामेकस्मिन्नेव सदसती तत्कथं विरोधः ? तदेतत्सिद्धान्ती खण्डयति—"तथात्वमिति"—यदीन्द्रियाणाञ्चैतन्यं धर्मः अर्थाद् इन्द्रियाण्येव क्रियानुकूलकृतिमन्ति (कर्तॄणि) तदा उपघाते=इन्द्रियनाशे "सती"ति

---

वक्तृयथार्थज्ञानरूपगुणजन्यम्प्रमाणशब्दत्वात् महाभारताद्यन्तर्गतवाक्यवत् । अनेकविद्यास्थानोपबृंहितस्य प्रदीपवत्सर्वार्थावद्योतिनः सर्वज्ञकल्पस्य भगवतो वेदस्य रचनया अवश्यम्बुद्धिपूर्विकया भाव्यम् । तत्र—अस्मदादिबुद्धिपूर्वकत्वासम्भवात् सर्वज्ञेश्वरबुद्धिपूर्वकत्वसिद्धौ प्रामाण्यं निराबाधमिति भावः ।

* "चारुः" लोकसम्मतो "वाकः" वाक्यं यस्य स "चार्वाक" इति व्युत्पत्तेरन्वर्थेयं संज्ञा । अस्यापरं नाम "लौकायतिक" इति । लोके आयतं विस्तीर्णम्प्रसिद्धमिति यावत् यत् प्रत्यक्षम्प्रमाणं तल्लोकायतम्, तत्प्रतिपादकं शास्त्रमपि लोकायतं । "तदधीते तद्वेद" (४।२।५९) इति सूत्राधिकारे—"क्रतूक्थादिसूत्रान्ताट्ठक्" (४।२।६०) इत्यनेन उक्थादिगणान्तर्गतात् लोकायतशब्दात् ठक् प्रत्ययः । लोकायतमधीते वेद वेति लौकायतिकः ।

शेषः । कथं स्मृतिः स्यात् न कथमपीति भावः । तत्र हेतुमाह—"अनुभवितुरभावात्"—इति । स्मृतिज्ञानाधिकरणस्यात्मनो नष्टत्वादित्यर्थः । भवति तु पूर्वं चक्षुष्मतः पश्चादन्धभावम्प्राप्तस्यापि पुरुषस्य प्रत्ययः "यौ पितरावद्राक्षं तौ स्मरामीति" । एवमनुभवितुरेव स्मृतिदर्शनान्नेन्द्रियाण्यात्मेति भावः । चक्षुषोऽनुभूतानाम्=चक्षुषा साक्षात्कृतानां रूपाद्यर्थानाम् ।

ननु—इन्द्रियान्तरेण स्मृतिर्भविष्यतीति ? अत आह—"अन्यदृष्टस्य"—इति । स्मरणासम्भवात्=अनुसन्धानाभावादित्यर्थः । नह्यन्यदृष्टमन्यः स्मरतीति नियमः । वैपरीत्ये रामदृष्टं कृष्णोऽपि स्मरेत् । अत्र हेतुं वक्ति—"अनुभवस्मरणयोः"—इति । सामानाधिकरण्येन=एकाधिकरणसम्बन्धेन एकात्मतारूपाधिकरणे समवायसम्बन्धावच्छिन्नवृत्तित्वेनेत्यर्थः । कार्यकारणभावात्=अनुभवः संस्कारद्वारा कारणं, स्मृतिः कार्यम् । यत्रानुभवः तत्रैव स्मरणमिति नियम इति भावः ।

किञ्च—सर्वाणीन्द्रियाणि सम्भूय एकस्मिन् शरीरे एक आत्मा ? आहोस्वित् प्रत्येकं नाना आत्मानः ? । आद्ये नष्टेऽपि श्रोत्रे चक्षुषा शब्दसाक्षात्कारः स्यात्, किंवा किमपि रूपादिकं न भायात्, आत्मनो नष्टत्वात् । "मृतोऽयम्" इत्यबाधितः प्रत्ययश्च सर्वस्य सर्वत्र समुन्मिषेत् । द्वितीये तु प्रत्येकं सर्वेषां स्वातन्त्र्ये कदाचिदनैकमत्ये विरुद्धदिक्क्रियैस्तैरधिष्ठितं शरीरं विदीर्येत । यदि च तानि नैव सर्वथा स्वतन्त्राणि, तर्हि यत्तन्त्राण्येतानि स एवात्मा इन्द्रियभिन्नो रूपादिविषयेषु यथेच्छमिन्द्रियाणाम्प्रवर्त्तकः कुठारप्रवर्त्तक इव तक्षेति । या च "अहं काण" इत्याकारा प्रतीतिः इन्द्रियात्मसाधनायोपन्यस्ता, साच "मम देह" इति प्रत्ययवत् "ममेन्द्रियम्" इतिबाधकप्रत्ययसद्भावाद्भ्रान्तैवेति नतरामिन्द्रियात्मवादिमतमपि सम्यक् ॥४८॥

इतीन्द्रियात्मवादखण्डनम् ।

---

(का०) मनोऽपि न तथा ज्ञानाद्यनध्यक्षन्तदा भवेत् ।

(मुक्ता०) ननु—चक्षुरादीनाञ्चैतन्यं मास्तु मनसस्तु नित्यस्य चैतन्यं स्यादत आह—मनोऽपीति । न तथा, न चेतनम् । ज्ञानादीति । मनसोऽणुत्वात्प्रत्यक्षे च महत्त्वस्य हेतुत्वान्मनसि ज्ञानसुखादिसत्त्वे तत्प्रत्यक्षानुपपत्तिरित्यर्थः । यथा मनसोऽणुत्वं तथा वक्ष्यते ।

(प्रभा०) मनआत्मवादी शङ्कते—"ननु"—इति । "नित्यस्य"—इति । नित्यम्मन इति नैयायिकैरपि स्वीक्रियते, आत्मा च नित्यः, एवं सति इन्द्रियाद्यात्मवादपक्षे कृतविप्रणाशादिरूपो यो दोषः सोऽप्येतस्मिन्मते न भविष्यतीति पूर्वपक्षिणोऽभिप्रायः । सिद्धान्ती उत्तरयति—"न तथा"—इति । इन्द्रियवन्मनोऽपि न

चेतनमित्यर्थः । तत्र हेतुमाह—"ज्ञानादीति"—इति । ज्ञानेच्छादीनां विशेषगुणानाम् "जाने इच्छामि" इत्याद्याकारकम्प्रत्यक्षं न स्यादित्यर्थः । तदेव विवृणोति—"मनसोऽणुत्वात्"—इति ।

अस्यायमाशयः—मनोऽणुपरिमाणं तस्यैव न तावत्प्रत्यक्षम्, कुतः पुनः तदाश्रितानां सुखादीनाम्प्रत्यक्षसम्भावनापि । ऋषिरपि—"*युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गमिति" (न्या० १।१।१६) इति मनसोऽप्रत्यक्षत्वमाचष्टे । सन्ति तु सुखादयः प्रत्यात्मवेदनीयाः, नचैषाम्प्रत्यक्षोपलब्धिरपलपितुं शक्यते । किञ्च मनस आत्मत्वस्वीकारे पूर्वं क्लृप्ता कर्तृत्वशक्तिस्तस्मिन्नुपादीयेत तत्पूर्णतायै च करणान्तरं कल्प्येत इति किमपूर्वं वादिना कृतं स्यादित्यतिसङ्क्षेपः । "वक्ष्यते" इत्यग्रे पञ्चाशीतिसङ्ख्यायां कारिकायां † साधयिष्यते इत्यर्थः ।

इति मनआत्मवादखण्डनम् ।

---

(मुक्ता०) नन्वस्तु—विज्ञानमेवात्मा, तस्य स्वतःप्रकाशरूपत्वाच्चेतनत्वम्, ज्ञानसुखादिकन्तु तस्यैवाकारविशेषः, तस्यापि भावत्वादेव क्षणिकत्वम्, पूर्वपूर्वविज्ञानस्योत्तरोत्तरविज्ञानहेतुत्वात् सुषुप्तावप्यालयविज्ञानधारा निराबाधैव, मृगमदवासनावासितवसन इव पूर्वपूर्वविज्ञानजनितसंस्काराणामुत्तरोत्तरविज्ञाने सङ्क्रान्तत्वान्नानुपपत्तिः स्मरणादेरिति चेन्न, तस्य जगद्विषयकत्वे सर्वज्ञत्वापत्तिः । यत्किञ्चिद्विषयकत्वे विनिगमनाविरहः । सुषुप्तावपि विषयावभासप्रसङ्गाच्च, ज्ञानस्य सविषयत्वात् ।

(प्रभा०) क्षणिकविज्ञानवादी योगाचारः शङ्कते—"ननु"—इति । "विज्ञानम्"—इति । क्षणिकविज्ञानमित्यर्थः । विज्ञानत्वम्प्रमेयत्वस्य सत्त्वस्य व्यापकं नवेति विप्रतिपत्तिः । तत्र विधिकोटिर्योगाचारस्य निषेधकोटिर्नैयायिकस्येति बोध्यम् ।

---

* युगपत् एककाले एकात्मनि ज्ञानानामनुत्पत्तिर्यतः स एव धर्मो ज्ञानकारणाणुत्वं नाम मनसो लिङ्गं लक्षणमिति सूत्रार्थः । आत्माधिष्ठितानां घ्राणादीनामिन्द्रियाणां गन्धादिभिः स्वस्वसन्निकर्षे सत्यपि यस्य कारणान्तरस्य असंयोगात् रसनेन रसगोचरं ज्ञानं न जन्यते, घ्राणेन च संयोगाद्गन्धगोचरं ज्ञानञ्जन्यते, तदेव कारणान्तरमन्तःकरणसंज्ञकं **मन** इति भावः ।

† अत्रैवं वदन्ति—यद्यपि मानसान्यप्रत्यक्षम्प्रत्येव महत्त्वस्य कारणत्वोपगमे नैष दोषः, अत एव माध्वादिमते जीवानामणुत्वमेवाङ्गीकृतम्, तथापि—मानसान्यत्वप्रत्यक्षत्वयोर्विशेषणविशेष्यभावे विनिगमनाविरहेण गुरुतरकार्यकारणभावद्वयापत्त्या गौरवापत्तेर्न तथोपगमसम्भवः, नच—सिद्धान्तिमते अनन्तजीवानां कल्पनीयतया कारणताद्वयकल्पने गौरवमिति वाच्यमनेकजीवकल्पनागौरवस्य फलमुखत्वेनाऽदोषत्वादिति भावः ।

क्षणिकत्वञ्च द्वितीयक्षणवृत्तिध्वंसप्रतियोगित्वम्=एकक्षणमात्रस्थायित्वमेव विज्ञानवादिनये । यद्यपि अस्य मते सर्वं वस्तु विज्ञानमेव तथापि आत्मप्रकरणत्वात् "आत्मा" इति विशिष्योक्तम् ।

* एतच्च द्विविधम्प्रवृत्तिविज्ञानमालयविज्ञानञ्चेति । "अयं घटः" "अयम्पटः" इत्याकारकं विज्ञानम् "प्रवृत्तिविज्ञानम्" । "अहमहम्" इत्याकारकं विज्ञानम् "आलयविज्ञानम्" इत्युच्यते । विज्ञानम्बुद्धिरित्यनर्थान्तरम् ।

ननु—विज्ञानापरपर्याया बुद्धेः कथञ्चेतनत्वञ्जडायास्तस्या आत्मत्वायोगादित्याह—"तस्य स्वतःप्रकाशरूपत्वात्"—इति । स्वतःप्रकाशत्वञ्च स्वपरव्यवहारे स्वभिन्नप्रकाशानपेक्षत्वम् । "ज्ञानसुखादिकम्"—इति । तुना पक्षान्तरं व्यावर्त्यते । तस्यैव=विज्ञानस्यैव आकारविशेषः निर्विशेषस्यापि सांवृतिको विशिष्ट आकारः । अर्थात् "अहञ्जानामि" "अहं सुखी" इत्याद्यनेकाकारं विज्ञानमेव सुखादिरूपेण भासते, न ततो भिन्नमित्यर्थः । विज्ञानस्य एव सुखादय आकाराः † संवृत्या पृथगिवाऽवभासन्ते । "भावत्वादेव"—इति । "यत् सत् तत्क्षणिकम्" इति व्याप्तेः । यथा दीपशिखा भावरूपत्वात् क्षणिका=प्रतिक्षणम्परिणामवती तथैव सर्वं वस्तु भावत्वात् क्षणिकम्, तथा च विज्ञानमपि ।

ननु—क्षणिकं विज्ञानञ्चेदात्मा तदा सुषुप्तिर्न सिद्ध्येत्, तदा पूर्वविज्ञानस्य नष्टत्वाद्विज्ञानान्तरस्य चाभावादत आह—"पूर्वपूर्व"—इति । पूर्वपूर्वविज्ञाननिष्ठा या जनकता तादृशजनकतानिरूपिता या जन्यता उत्तरोत्तरविज्ञाननिष्ठा तत्त्वादित्यर्थः । सुषुप्तावपि=गाढनिद्रावस्थायाम्पुरीतद्देशावस्थितमनःसंयोगरूपायामपीत्यर्थः । आलयविज्ञानधारा=आलयविज्ञानसन्ततिः । निराबाधैव=प्रमाणान्तरबाधशून्यैव ।

सारार्थस्तु—यद्यपि पूर्वम्पूर्वं विज्ञानं नश्यति, उत्तरमुत्तरञ्चोत्पद्यते, सुषुप्तौ च विज्ञानोत्पादिका सामग्री नास्ति, तथापि "अहमहम्" इत्याकारा आलयविज्ञानसन्ततिस्तत्राप्यनुवर्त्तत एवेति न सुषुप्तावात्मनोऽभावः । यद्यपि तत्र प्रवृत्तिविज्ञानं नास्ति, आलयविज्ञानन्तु वर्त्तेत इति तत्त्वम् ।

ननु—क्षणिकञ्चेद्विज्ञानं, विज्ञानाश्रिता विज्ञानस्वरूपा संस्कारा अपि क्षणिकाः तेषां नष्टत्वात् तव मते कस्यापि स्मृतिर्न स्यादत आह—"मृगमदवासना"—इति । यथैकस्मिन्नेव वस्त्रपुटे मृगमदः=कस्तूरिका तिष्ठति, किन्तु सर्वाण्येव वस्त्रपुटकानि तद्वासनावासितानि जायन्ते, उत्तरोत्तरस्मिन् पुटके मृगमदवासनायाः सङ्क्रान्तत्वात् तथेहापि पूर्वपूर्वविज्ञानोत्पन्नाः संस्कारा उत्तरोत्तरस्मिन्विज्ञाने सङ्क्रमन्ते इति न स्मृतेरसिद्धिर्मम मत इति भावः । "इति"—इत्यन्तः सर्वो ग्रन्थः पूर्वपक्षिणः ।

---

* क्षणिकविज्ञानञ्च । स्वर्थे चायं चः पठितः ।

† संवृणोत्यात्मनो रूपमिति "संवृतिः" अविद्या तयेत्यर्थः ।

सिद्धान्ती समाधत्ते—"न"—इति । विकल्पद्वयं करोति—"तस्य"—इति । भवन्मतसिद्धक्षणिकविज्ञानस्येत्यर्थः । जगद्विषयकत्वे=यावद्वस्तुविषयकत्वे, ※ सर्वज्ञत्वापत्तिः जीवात्मनामिति शेषः । अर्थात् हे ! योगाचार ! भवदभिमतविज्ञानस्य को विषयः ? सर्वञ्जगद् ? जगदन्तःपाती कश्चिदेव वा पदार्थः ? आद्ये—सर्वज्ञत्वात्सर्वः सर्वञ्जानीयात्, परं नतु जानाति तस्मान्नाद्यः पक्षः क्षोदक्षमः । द्वितीये—सुषुप्तावपि विषयप्रतीतिः सम्भवेत् । यत्किञ्चित्पदेन गृहीतस्य यस्य कस्यापि घटादेः पदार्थस्य तद्विषयत्वेन एकपक्षपातिन्या युक्तेरभावात् सुषुप्तौ विषयाः प्रतीयेरन् । आलयविज्ञानं तत्र वर्त्तत इति तव मतं तच्च न निर्विषयम्भवितुमर्हतीति युक्तम्, तदा अन्यतमविषयस्फुरणमित्यभिप्रायेणाह—"ज्ञानस्य सविषयत्वात्"—इति ।

(मुक्ता०) तदानीं निराकारा चित्सन्ततिरनुवर्तत इति चेन्न, तस्याः स्वप्रकाशत्वे प्रमाणाभावात् । अन्यथा घटादीनामपि ज्ञानत्वापत्तिः । न चेष्टापत्तिर्विज्ञानव्यतिरिक्तवस्तुनोऽभावादिति वाच्यम्, घटादेरनुभूयमानस्यापलपितुमशक्यत्वात् । आकारविशेष एवाऽयं विज्ञानस्येति चेत्, किमयमाकारोऽतिरिच्यते विज्ञानात्तर्हि समायातं विज्ञानव्यतिरिक्तेन । नातिरिच्यते चेत्तर्हि समूहालम्बने नीलाकारोऽपि पीताकारः स्यात्, स्वरूपतो विज्ञानस्याऽविशेषात् ।

(प्रभा०) पुनर्बौद्धः शङ्कते—"तदानीम्"—इति । सुषुप्तिकाल इत्यर्थः । निराकारा=निर्विषया । चित्सन्ततिः=विज्ञानधारा । अनुवर्त्तते=विद्यते इत्यर्थः । इति चेत्=यद्येवम्ब्रूषे, न=तन्न युक्तमित्यर्थ इति सिद्धान्ती खण्डयति—"तस्या"—इति । तस्याः=निराकाराया निर्विषयायाश्चित्सन्ततेः । स्वप्रकाशत्वे=ज्ञानस्वरूपत्वे । "प्रमाणाभावात्"—इति । ज्ञानत्वस्य=विषयिताव्याप्यत्वादित्यर्थः । सुषुप्तौ निर्विषया चित्सन्ततिरनुवर्त्तत इत्यत्र न किमपि मानम्पश्यामः, प्रमाणेन विना तदा कथं सा सिध्येत्, विना प्रमाणम्प्रमेयसिद्ध्यङ्गीकारे गगनकुसुमादीनामप्यभ्युगमप्रसङ्गोऽनिवार्यः स्यात् । किञ्च—नहि निर्विषयं विज्ञानम्, ज्ञानत्वस्य † विषयताव्याप्यत्वनियमादिति भावः । अन्यथा=यदि विनैव प्रमाणं सुषुप्तौ ज्ञानमङ्गीक्रियेत तदा । "घटादीनाम्"—इति । घटपटादिविषयाणामपि ज्ञानस्वरूपापत्तिः, अर्थात् जाग्रदाद्यवस्थाकालेऽपि घटादि‡पदार्थसत्ता न स्वीकर्त्तव्या ।

---

※ यत्तु—"नचेष्टापत्तिः—यदल्पं तन्मर्त्यम् (छान्दो० २४ खं० । ७ प्र० । २ कं०) इति श्रुतेरल्पज्ञत्वोपगमात्तस्येति भाव" इत्याह कश्चित्तन्मन्दं योगाचारम्प्रति श्रुतेरप्रामाण्यात्, "तदल्पमविद्याकालभावी"ति भाष्यकारविवरणाभिप्रायविरुद्धत्वात्, भूमातिरिक्तस्य सर्वस्यैव बाध्यतार्थविवक्षणार्थकत्वाच्छ्रुतेः, अल्पज्ञतारूपार्थबोधने सर्वथैवौदासीन्याच्चेति ।

† "यत् ज्ञानं तत्सविषयकम्" इति व्याप्तिः । ‡ घटपटादिविषयसत्तेत्यर्थः ।

आक्षिप्य समाधत्ते—"नच" इत्यारभ्य "अशक्यत्वात्" इत्यन्तेन। "इष्टापत्तिः"—इति। घटपटादिविषयसत्तानङ्गीकारो मम विज्ञानमात्रैकवादिनोऽभीष्ट एव, अर्थात् वस्तुतो घटाद्याः पदार्था मम मते न परमार्थसन्तः किन्तु प्रतिभासमात्रशरीरास्ते विज्ञानस्वरूपा एवेति ममेष्टमेव त्वया गदितमिति बौद्धस्य हृदयम्। "विज्ञानव्यतिरिक्तवस्तुनोऽभावात्" इति स्वेष्टापत्तौ हेतुरुक्तः।

घटाद्याः पदार्था बाह्यविषयतास्वरूपेण सर्वानुभवगोचराः कथमपलप्येरन्। अर्थात् यद्येते विज्ञानस्वरूपात्पृथङ् न स्युः तर्हि "अयं घटः अयम्पटः" इत्यादिप्रत्ययेन न भाव्यम्। किन्तु "इदं विज्ञानम्, इदं विज्ञानम्" इत्येव प्रत्ययो भवेद् आच पण्डितेभ्यः आच पांसुलपादेभ्यो हालिकेभ्यः। नत्वेवं दृश्यते, तस्माद्विज्ञानाद्भिन्ना घटाद्या विषयाः सन्ति, विज्ञानविषयाश्चैते इति नैयायिकस्य तर्कः। अनुभूयमानस्य=विज्ञानभिन्नत्वेन विषयीक्रियमाणस्य अपलपितुम्=बाधितुमित्यक्षरार्थः।

पुनराशङ्कते बौद्धः—"आकारविशेष"—इति। अयम्=घटादिपदार्थः। विज्ञानस्य=क्षणिकबुद्धेः। आकारविशेषः=स्वरूपविशेष एवास्ति। यथा पटस्तन्तूनां स्वरूपविशेषो नतु तन्तुसत्तातिरिक्तसत्तावानेवमित्यर्थः।

सिद्धान्ती विकल्प्य दूषयति—"किमयम्"—इति। अयं घटाद्याकारविशेषो विज्ञानस्वरूपाद्भिन्नो वाऽभिन्नो (विज्ञानस्वरूपम्) वा?। आद्ये दूषणमाह—"तर्हि समायातम्"—इति। आद्यपक्षे विज्ञानात्पृथग्विषयसत्तासिद्धौ "सर्वं विज्ञानम्" इति बौद्धस्य प्रतिज्ञाहानिः। द्वितीये त्वाह—"समूहालम्बन"—इति। * नानाधर्म्यवगाहि एकं ज्ञानं समूहालम्बनम्। यथा "इमे नीलपीते वस्त्रे" इत्याकारकं नीलपीतधर्मविशिष्टनीलपीतात्मकानेकधर्मिविषयकमेकं ज्ञानम्।

अयम्भावः--तव मते विज्ञानाद्विषयाणां न भेदः, एवं यद्विज्ञानं नीलविषयकं तदेव पीतं विषयीकरोति, नीलपीतयोश्च स्वयं सत्ता नास्ति, एवञ्चनीलाकारोपि=नीलस्वरूपमपि पीताकारः=पीतस्वरूपम्भायात् तदभिन्नाऽभिन्नस्य तदभिन्नत्वनियमात्, प्रकृते नीलाकारपीताकारौ समूहालम्बनात्मकविज्ञानादभिन्नौ। तथाच नीलाकाराभेदवतो विज्ञानादभिन्नः पीताकारोऽपि नीलाकारादभिन्न एव प्रतीयेत, तेन नीलेऽपि पीतप्रत्ययो यथार्थः स्यात्। अर्थात् "इमे नीलपीते" इत्यस्य स्थाने "इमे नीले" इत्येव "इमे पीते" इत्येव वा प्रत्ययो भवेत्। अत्र हेतुमाह--"स्वरूपत"--इति। विज्ञानस्वरूपस्येत्यर्थः। अविशेषात्=एकत्वात्।

(मुक्ता०) **अपोहरूपो नीलत्वादिर्विज्ञानधर्म इति चेन्न, नीलत्वादीनां विरुद्धानामेकस्मिन्नसमावेशात्। इतरथा विरोधावधारणस्यैव दुरुप-**

---

* नानाविशेष्यतानिरूपितनानाप्रकारताशालिज्ञानमित्यत्र तात्पर्यम्। संशये तु नानाप्रकारतानिरूपिताया एकविशेष्यतायाः सत्त्वान्न समूहालम्बनात्मकज्ञानलक्षणातिप्रसक्तिरिति ध्येयम्।

पादत्वात् । नच वासनासङ्क्रमः सम्भवति, मातृपुत्रयोरपि वासनासङ्क्रमप्रसङ्गात् । नचोपादानोपादेयभावो नियामक इति वाच्यम्, वासनायाः सङ्क्रमासम्भवात् । उत्तरस्मिन्नुत्पत्तिरेव सङ्क्रम इति चेन्न, तदुत्पादकाभावात् । चितामेवोत्पादकत्वे तदानन्त्यसङ्गः ।

(प्रभा०) पुनः * शङ्कते स एव—"अपोहरूप"—इति । गोशब्दश्रवणात् सर्वासां गोव्यक्तीनामुपस्थितेः अतस्मात्=गोभिन्नादश्वादितो व्यावृत्तिदर्शनाच्च अतद्व्यावृत्तिरूपः=†अगोव्यवच्छेदरूपः "अपोह" एव शब्दार्थः=वाच्यार्थः, सच विज्ञानधर्म एवेति बौद्धमतम् । एवञ्च प्रकृतेऽपोहरूपो नाम अनीलव्यावृत्तिरूपो (नीलत्वादिरेव) विज्ञानस्य=क्षणिकविज्ञानस्य धर्मः तेन नीलाकारोऽनीलव्यावृत्तिरूपः पीताकारश्च अपीतव्यावृत्तिरूप इति नोभयोराकारयोरभेदबुद्धिः, अर्थात् तौ द्वावाकारावभिन्नावेव भेदप्रतीतिस्तयोर्नीलत्वपीतत्वयोः, सापि न पारमार्थिकी, किन्तु सांवृतिकीति बौद्धस्याशयः ।

तदेतत्सिद्धान्ती निराकरोति—"न"—इति । "नीलत्वादीनाम्"—इति । एकस्मिन्=विज्ञानरूपे धर्मिणि विरुद्धानाम्=नीलत्वादीनां धर्माणामसमावेशात्=सामानाधिकरण्याभावात् । अर्थात् नीलत्वं नीलत्वनिष्ठम्, पीतत्वम्पीतनिष्ठमिति द्वावपि विरुद्धौ परस्परानात्मानौ धर्मौ कथमेकस्मिन्नधिकरणे (विज्ञानात्मके) स्थातुं पारयेताम् । एवञ्च तयोर्नैव सामानाधिकरण्यम् । इतरथा=विरुद्धानामपि नीलत्वादीनां सामानाधिकरण्ये । विरोधावधारणस्यैव=विरोधनिश्चयस्यैव दुरुपपादत्वात्=निश्चेतुमशक्यत्वात् अर्थात् विरोधनिश्चयः कुत्रापि न स्यात् । सर्वस्मात् संसाराद्विरोधकथा सुदूरमुत्सारिता भवेदिति भावः ।

ननु—न वयं समूहालम्बने नीलाकारादिकम्प्रतीमः, किन्तु चित्राकारमेकमेवेति नोक्तदोष इतिवादिनो बौद्धस्य मुख्यं वासनासङ्क्रमपक्षं दूषयति—"नवा"—इति । अस्यायमर्थः—यत्पूर्वमभिहितं मृगमदद्दष्टान्तेन पूर्वपूर्वविज्ञानसंस्कारा उत्तरोत्तरमुत्पन्ने विज्ञाने सङ्क्रमिष्यन्ते, तेन मम मतेऽनित्ये क्षणिकेऽपि विज्ञानात्मनि न स्मरणानुपपत्तिरूपो दोष इति तदप्ययुक्तम् । अत्रार्थे सिद्धान्ती हेतुमाह—"मातृ-

* नीलाकारः पीताकारादभिन्न एवास्माकं सिद्धान्ते, भेदप्रत्ययस्तु अपारमार्थिकः, अर्थात् अतद्व्यावृत्तिरूपत्वेनैक्येऽपि विज्ञानभिन्नयोर्नीलत्वपीतत्वयोर्भेदात् भेदप्रतीतिरित्याशयवान् पूर्वपक्षयतीत्यर्थः ।

† तत्त्वसङ्ग्रहे तट्टीकायाम्पञ्जिकायाञ्च अपोहवादस्वरूपस्य बहूपपादनं दृश्यते—

"स्वलक्षणेऽपि तद्धेतावन्यविश्लेषभावतः ॥१००९॥
प्रसज्यप्रतिषेधश्च गौरगौर्न भवत्ययम् ।
अतिविस्पष्ट एवाऽयमन्यापोहोऽवगम्यते" ॥१०१०॥ इत्यादि ।

पुत्रयोः"—इति । वासनासङ्क्रमप्रसङ्गात्=संस्कारसञ्चारापत्तेः । अर्थात् यदि वासनासङ्क्रमः स्यात्, तर्हि मात्राऽनुभूतस्य गर्भस्थेन पुत्रेण स्मरणं कृतम्भवेत्, नत्वेवं तस्मादयुक्तमेतत् ।

ननु—उपादानेनाऽनुभूतमुपादेयेन स्मर्यते, मातृपुत्रयोर्नोपादानोपादेयभाव इति न मातृदृष्टम्पुत्रः स्मर्तुमर्हतीत्याशयवतो बौद्धस्य पक्षमुत्थाप्य निराकरणाय आह सिद्धान्ती—"नच"—इति । "सङ्क्रमासम्भवात्"—इति । सञ्चारासम्भवादित्यर्थः । धर्मत्वाद्वासना धर्मिणं विहाय परत्र गन्तुं न समर्थेति भावः । मृगमदसङ्क्रमेऽपि कस्तूरिकायाः परमाणव एवादृष्टवशादुत्तरत्र परपुटे संयुक्तिभाजो भवन्तीति सर्वथा बौद्धोऽज्ञातपदार्थस्वभावः ।

पुनः शङ्कते—"उत्तरस्मिन्"—इति । अयमर्थः—सङ्क्रमः सञ्चारः पूर्वविज्ञानवासनाया उत्तरस्मिन् विज्ञाने उत्पन्ने तेन सहैवोत्पत्तिर्वासनानाम्, सैव सङ्क्रम इति ब्रूमः ।

एतद् दूषयति—"न"—इति । "तदुत्पादकाभावात्"—इति । नहि उत्पादकमन्तरा कस्याप्युत्पत्तिः, पूर्वविज्ञानन्तु नष्टमेव, तत्कथं स्ववासनामुत्तरत्रोत्पादयेत, तदुत्पादनक्षणे तस्याभावात् । तत्सत्तास्वीकारे तु अधिकक्षणावस्थायित्वाद् विज्ञानं क्षणिकमिति तव मतं दत्तजलाञ्जलितामापद्येत, तस्माद्वासनासङ्क्रमनिरूपणं दुःशकम्बौद्धस्येति नैयायिकस्याभिप्रायः ।

दूषणान्तरमप्याह—"चितामेव"—इति । अयमर्थः—मा नाम जीजनत् पूर्वविज्ञानमुत्तरविज्ञाने वासनाम्, उत्तरोत्तरमुत्पद्यमानं विज्ञानं स्वयमेव वासनामप्युत्पादयिष्यतीति चेत्? तदा संस्कारानन्त्यप्रसङ्गः संस्कारोत्पादकानां विज्ञानानामनन्तत्वात् । चिताम्=विज्ञानानाम् ।

(मुक्ता०) क्षणिकविज्ञानेऽतिशयविशेषः कल्प्यत इति चेन्न, मानाभावात्कल्पनागौरवाच्च । एतेन क्षणिकशरीरेष्वेव चैतन्यमपि प्रत्युक्तम्, गौरवादतिशये मानाभावाच्च । बीजादावपि सहकारिसमवधानाऽसमवधानाभ्यामेवोपपत्तेः कुर्वद्रूपत्वाकल्पनाच्च ।

(प्रभा०) पुनः शङ्कते—"क्षणिकविज्ञान"—इति । अतिशयविशेषः=शक्तिविशेषः । अर्थात् उत्तरविज्ञाने अस्ति किमप्यलौकिकं सामर्थ्यं स्मृतिरूपकार्यगम्यम्, येन अनुभवजन्यसंस्कारोत्पत्त्या स्मृतेर्नानुपपत्तिः । सिद्धान्ती उत्तरयति—"न"—इति । "मानाभावात्"—इति । कार्यानुकूलशक्तौ प्रमाणाभावादित्यर्थः । अर्थात् यद्यपि स्मृतिकार्यान्यथानुपपत्तिरेव मानम्, तथापि अनन्तविज्ञानेष्वनन्ततादृशशक्तिकल्पने महद्गौरवम्, अतो वरं तस्माद्विज्ञानाद्भिन्नस्य नित्यस्य ज्ञाना-

धिकरणस्यात्मनः स्वीकारः । "*कल्पनागौरवात्"—इति । "स एवायम्" इत्यापामरप्रत्यभिज्ञानात् क्षणिकानन्तशक्तितत्प्रागभावप्रध्वंसकल्पने गौरवम् ।

"एतेन"—इति । पूर्वोक्ततर्केणेत्यर्थः । क्षणिकशरीरेष्वेव चैतन्यम्=चेतनता क्षणिकशरीराणां धर्म इत्यर्थः । प्रत्युक्तम्=खण्डितम्बोध्यमिति शेषः । यथा क्षणिकविज्ञानवादो वासनासङ्क्रमानुपपत्तिरूपतर्कपराहतः तथा क्षणिकशरीरचेतनतावादोऽपि परेषां नास्तिकानां व्युदस्त इति भावः ।

सम्प्रति बौद्धस्य "कुर्वद्रूपत्ववादं" खण्डयितुमाह—"बीजादावपि"—इति । अत्र बौद्धस्य वासनासङ्क्रमवादसाधनायाऽयं तर्कः—क्षेत्रे उप्तस्यैव बीजस्योत्पत्तिर्भवति, नतु कुसूले स्थितस्य । अतोऽङ्कुरत्वावच्छिन्नम्=अङ्कुररूपं कार्यम्प्रति "†कुर्वद्रूपम्" कारणमवश्यं वाच्यम् । एवमेव क्षणिकशरीरेष्वपि उत्तरोत्तरशरीरनिष्ठवासनोत्पादकत्वरूपं कुर्वद्रूपत्वञ्जातिविशेषः स्वीकर्त्तव्यो येन नैव वासनासङ्क्रमानुपपत्तिरूपो दोषः । किन्तु दृष्टान्ते बीजे कुर्वद्रूपत्वस्य यथा समा व्याप्तिः, तथैव तस्य विज्ञानत्वेन सहापि समा व्याप्तिः, अर्थात् "यत्र यत्र कार्यजनकत्वं तत्र तत्र कुर्वद्रूपत्वम्, यत्र यत्र कुर्वद्रूपत्वं तत्र तत्र कार्यजनकत्वमिति" तस्या आकारः ।

एवन्तत्खण्डनपरः सिद्धान्तग्रन्थोऽयम्—"बीजादावपि"—इति । अस्याऽयमर्थः—बीजादावपि अङ्कुरजननहेतुभूतः कुर्वद्रूपत्वाङ्गीकारो निष्फलः। कुत इत्याह—"सहकारी"—इति । धरणिसलिलसंयोगादिरूपो यः सहकारी तस्य समवधानम्=सान्निध्यविशेषः, तेनाङ्कुरोत्पत्तिः । कुसूलादौ तु तदसमवधानात्=तादृशसहकारिसंयोगविशेषाभावादेव नाङ्कुरोत्पत्तिः, अतो हेतोः कुर्वद्रूपत्वकल्पनं न युक्तम् ।

अयमत्राशयो नैयायिकस्य वेदितव्यः—यत्फलजननाय योग्ये धान्यादिबीजे सहकारिभिर्धरणिसलिलसंयोगादिभिः अतिशयः=कश्चन उपकार आधीयते, इत्येवाऽवश्यं स्वीकर्त्तव्यम् । एतेनैवाङ्कुरादिनियमोपपत्तौ अलं कुर्वद्रूपत्वकल्पनेन । ततो बौद्धमते वासनासङ्क्रमानुपपत्तिरूपो दोषस्तदवस्थ एवेत्ययुक्तो विज्ञानवादिसमयः ।

इदमधिकमत्र वेदितव्यम्—एक एव बुद्धो भगवानुपदेष्टा, परन्तु तस्य शिष्याश्चतुर्विधा भावनाभेदाद्भिन्नभिन्नमतय आसन् । तेषु मुख्यो माध्यमिकः सर्वशून्यतावादी, यस्येदम्मतं सङ्क्षिप्तम्—यत्सत् तद्विनश्यति । अतः सर्वं शून्यं शून्यमिति भावनीयम् । दृष्टार्थो व्यवहारः स्वप्नव्यवहारवत् संवृत्या भासते । अत एवोक्तम्—

---

*तथाच—शक्तेरपि भावत्वेन क्षणिकतया अनन्तशक्तितत्प्रागभावादिकल्पनागौरवस्याऽत्रापि तुल्यत्वेन लाघवाभावादिति भावः इति प्राचीना प्रभा ।

† कुर्वत्=फलोन्मुखं रूपं यस्य, तस्य भावः "कुर्वद्रूपम्" इत्यर्थः । अङ्कुरोपधायकक्षणिकबीजव्यक्तिमात्रवृत्तिर्बीजत्वव्याप्यो जातिविशेषः ।

परिव्राट्कामुकशुनामेकस्यां प्रमदातनौ।
कुणपः कामिनी भक्ष्य इति तिस्रो विकल्पना॥ इति।

तस्मात् १—"सर्वं * क्षणिकं क्षणिकम्"। २—"दुःखं दुःखम्"। ३—"स्वलक्षणं स्वलक्षणम्"। ४—"शून्यं शून्यम्" इति भावनाचतुष्टयबलात्सकलवासनानिवृत्तौ परं निर्वाणभूतं "शून्यतत्त्वम्" प्राप्यते। तस्माद्वयं कृतार्थाः नास्माकमुपदेश्यं नाम किञ्चिदस्ति।

**योगाचारास्तु**—स्वयम्प्रकाशं विज्ञानमवश्यं स्वीकर्त्तव्यम्, अन्यथा जगदान्ध्यं प्रसज्येत। ग्राह्यग्राहकसंवित्तीनां वस्तुतोऽभेदेऽपि पृथगवभास एकस्मिंश्चन्द्रमसि द्वित्वावभास इव भ्रमः। ततश्च भावनाचतुष्टयबलाद्विविधविषयाकारविवर्जितशुद्धक्षणिकविज्ञानोदयस्वरूपमोक्षप्राप्तौ कृतार्थता भवति" इत्याहुः।

**सौत्रान्तिकास्तु** इत्थमाचक्षते—बाह्यं घटपटाद्यर्थजातमस्त्येव, परं न प्रत्यक्षम्, किन्त्वनुमेयमेव। यथा भाषया देशः, यथा वा सम्भ्रमेण स्नेहः। एवं ज्ञानाकारेण ज्ञेयमनुमेयम्। अर्थात् ज्ञानाकारानुमेयक्षणिकबाह्यार्थ एवात्मेति।

**वैभाषिकास्तु**—द्विविधोऽर्थो ग्राह्याध्यवसायभेदात्। तत्र ग्राह्यग्राहकं निर्विकल्परूपं ग्रहणम्=ज्ञानं कल्पनापोढत्वादभ्रान्तम्प्रत्यक्षम्प्रमाणम्। अध्यवसायस्तु—सविकल्परूपः=अनुमानमप्रमाणं कल्पनारूपत्वात्। सौत्रान्तिकवैभाषिकयोरियानेव भेदो यदाद्यो बाह्यानुमेयपदार्थवादी, परो बाह्यप्रत्यक्षार्थवादी।

कथमेषां सञ्ज्ञा जातेति चेच्छृणु—शिष्यैस्तावत् योगश्चाचारश्च इति द्वयमपि करणीयम्। तत्राऽप्राप्तप्राप्तये पर्यनुयोगो **योगः**। गुरूक्तस्याङ्गीकरण**माचारः**। गुरूक्तस्याङ्गीकरणादुत्तमाः पर्यनुयोगस्य=प्रश्नस्य अकरणादधमाश्च इत्येकेषां "**माध्यमिका**" इति सञ्ज्ञा सञ्जाता।

गुरूक्तभावनाचतुष्टयम्बाह्यार्थशून्यत्वञ्चाङ्गीकृत्य आन्तरस्य शून्यत्वमङ्गीकृतम्, तत्कथमिति पर्यनुयोगकरणादपरेषाम् "**योगाचार**" इति प्रथाऽभूत्।

सूत्रस्य अन्तम्=रहस्यम्पृच्छताम् "भवन्तः सूत्रस्यान्तम्पृष्टवन्तः सौत्रान्तिका भवन्तु" इति भगवता बुद्धेनाऽभिधानात्परे "**सौत्रान्तिका**" इति प्रसिद्धा आसन्।

बाह्येषु गन्धादिषु आन्तरेषु च रूपादिषु स्कन्धेषु सत्स्वपि तत्रानास्थामुत्पादयितुं सर्वं शून्यमिति माध्यमिकान् प्रति, विज्ञानमेवैकं सदिति योगाचारान्

---

* "यत् सत् तत् क्षणिकम्" इत्यत्र सर्वेषाम्बौद्धानामैकमत्यम्। तथाचाहुः—

यत्सत्तत्क्षणिकं यथा जलधरः सन्तश्च भावा अमी
सत्ता शक्तिरिहार्थकर्मणि मितः सिद्धेषु सिद्धा न सा॥
नाप्येकैव विधाऽन्यथा परकृतेनापि क्रियादिर्भवेत्
द्वेधाऽपि क्षणभङ्गसङ्गतिरतः साध्ये च विश्राम्यति॥ इति।

उभयं सत्यमिति सौत्रान्तिकान् प्रति भगवान् बुद्धो तत्तद्विनेयबुद्धिमनुसरन् विरुद्धमचीकथत् । "सेयं विरुद्धा भगवता भाषा" इति वर्णयन्तोऽपरे "वैभाषिका" इति नाम्ना ख्यातिङ्गताः । सर्वेश्चायम्बुद्धस्य भगवत उपदेशो विनेयबुद्धिभेदाद्भिन्नोऽपि भिक्षुपादप्रसारणन्यायेन सर्वशून्यतापर्यवसायीति सङ्क्षेपः ।

एतेषां विशिष्टा प्रक्रिया ग्रन्थगौरवभयान्नेह प्रदर्शिता । अधिकजिज्ञासवस्तु * अपोहप्रकरणतत्त्वसङ्ग्रहादिबौद्धग्रन्थान् भामतीम्=व्याससूत्रोपरिशाङ्करभाष्यटीकाञ्चाऽवलोकयन्तु ।

इति क्षणिकविज्ञानवादियोगाचारमतखण्डनम् ।

---

**(मुक्ता०) अस्तु तर्हि क्षणिकविज्ञाने गौरवान्नित्यविज्ञानमेवात्मा "अविनाशी वाऽरेऽयमात्मा" (बृहदा० ५ ब्रा० । १४ कं०)। "सत्यं ज्ञानमनन्तम्ब्रह्म" ( तैत्ति० आ० व० । अनु० १ ) इत्यादिश्रुतेरिति चेन्न, तस्य विषयासम्भवस्य दर्शितत्वात्, निर्विषयस्य ज्ञानत्वे मानाभावात्, सविषयत्वस्याप्यननुभवात् । अतो ज्ञानादिभिन्नो नित्य आत्मेति सिद्धम् ।**

(प्रभा०) योगाचारे परास्ते नित्यविज्ञानवादी वेदान्ती शङ्कते--"अस्तु तर्हि"--इति । 'गौरवात्',--इति । पूर्वप्रदर्शितरीत्या गौरवपराहतं योगाचारमतं न सम्यगिति स्वीकुर्मः । किन्तु नित्यम्=त्रैकालाबाध्यमेकरसं विज्ञानम्=स्वप्रकाशचैतन्यमात्मा अस्तु=सच्चिदानन्दस्वरूपम्ब्रह्मैवात्मा नान्य इत्यर्थः । अत्र बृहदारण्यकश्रुतिम्प्रमाणयति—"अविनाशी"--इति । अस्मिन्नेवार्थे तैत्तिरीयश्रुतिं संवादयति--"सत्यं ज्ञानम्"--इति । † सत्यम्=त्रैकालाबाध्यम्, ज्ञानम्=चित्स्वभावः, अनन्तम्=त्रिविधपरिच्छेदरहितम्, ब्रह्म=आत्मा । "बृहत्वाद्बृंहणत्वाच्च आत्मा ब्रह्मेति गीयते" इत्युक्तेः । सत्यादिकम्ब्रह्मणः स्वरूपलक्षणमित्यर्थः । यत्र निरस्तसमस्तपुन्दूषणा श्रुतिरेवात्मानं नित्यविज्ञानस्वरूपमाह तत्र किमन्यदपेक्षितव्यमिति भावः । "इति

---

* अयं ग्रन्थः "एशियाटिक-सोसायटी"मुद्रितः ।

† अत्रेदम्बोध्यम्—"सत्यं ज्ञानमनन्तम्ब्रह्म" इति श्रौतं वाक्यम्ब्रह्मणो लक्षणार्थम्प्रवृत्तम् । ब्रह्मेति लक्ष्यपदम्, सत्यादीनि त्रीणि लक्षणपदानि । निर्विशेषस्यैव ब्रह्मणोऽत्र सत्यादयो विशेषाः, एतैर्हि ब्रह्म यदा विशेष्यते तदा सत्यादिविरुद्धेभ्योऽसत्यजाड्यपरिच्छिन्नेभ्यो व्यावृत्तम्ब्रह्म सिद्ध्यति । यथा—"नीलमुत्पलम्, रक्तमुत्पलम्" इत्यादिप्रयोगे व्यक्त्यन्तरेभ्यो व्यावृत्तमुत्पलमवगम्यते, तथा यदन्येभ्योऽसत्यादिभ्यो व्यावृत्तमवधीयते तद्ब्रह्मैव इत्येवं व्यावृत्तत्वे सति सच्चिदेकतानम्परिपूर्णं तदिति ब्रह्मस्वरूपं ज्ञातम्भवति । व्यावृत्तिश्चेन्न ज्ञायेत तदाऽनृतादिभ्यो व्यावृत्त्यसिद्धेर्न ब्रह्म ज्ञातं स्यात्, व्यावृत्तेश्च ब्रह्मस्वरूपाऽनतिरेकात् न निर्विशेषाद्वैतवादक्षतिरित्यौपनिषदानां निगूढोऽभिप्रायः । विस्तरस्त्वन्यत्र ।

चेत्''—इति । एवं वेदान्तिना स्वमते स्थापिते सिद्धान्ती उत्तरयति—''न''—इति । ''तस्य''—इति । तस्य=विज्ञानस्य । विषयत्वासम्भवस्य दर्शितत्वात्=''जगद्विषयकत्वे'' इत्यादिग्रन्थेन योगाचारमतखण्डनावसरे निरूपितत्वादित्यर्थः ।

अयम्भावः—भो ! वेदान्तिन् ! भवदभिमतं नित्यविज्ञानं सविषयकं निर्विषयकं वा ! आद्ये—तस्य को विषयः ? सर्वंजगदिति चेत् ? सर्वे सर्वज्ञाः स्युः । यत्किञ्चिद्वस्तुजातं तस्य विषय इति चेत् ? तदा सुषुप्तावपि रूपादिविषया भायुर्विनिगमकाभावात् । द्वितीयम्पक्षं दूषयति—''निर्विषयस्य ज्ञानत्व''—इति । ''*विषयनिरूप्यं हि ज्ञानम्'' इति नियमात्, नहि निर्विषयं किमपि ज्ञानम् । एतदेवोपपादयति—''सविषयत्वस्याप्यननुभवात्''—इति । ''घटस्य ज्ञानमिदम्'' इत्यनुभवात् ज्ञानस्य घटादिविषयकत्वमङ्गीकृतम् ''घटस्यात्मा'' इत्यनुभवाऽभावात् आत्मनो न सविषयकत्वमित्यर्थः । अस्मद्गुरुचरणास्तु—ग्रन्थस्वारस्यात् ''सविषयत्वस्याप्यनुभवात्'' इति पाठः समीचीनो भाति, तदाऽयमर्थः सम्पद्यते—सर्वं ज्ञानम्प्रत्यात्मं सविषयकमनुभूयत इत्येवमाहुः † । ''अत''—इति । उक्तदोषेण सविषयकत्वासम्भवाद्धेतोर्यतो न तर्कसहो वेदान्तिसमयः । अतो ज्ञानादिभिन्नः ज्ञानसुखेच्छादिगुणवान् यः स नित्य आत्मेति सिद्धम्=अवश्यमङ्गीकरणीयमिति भावः ।

(मुक्ता०) सत्यं ज्ञानमिति हि ब्रह्मपरञ्जीवेषु नोपयुज्यते । ज्ञानाज्ञानसुखित्वादिभिर्जीवानाम्भेदसिद्धौ सुतरामीश्वरभेदः । अन्यथा बन्धमोक्षव्यवस्थानुपपत्तिः । योऽपीश्वराभेदबोधको वेदः सोऽपि तदभेदेन तदीयत्वम्प्रतिपादयन्स्तौति । अभेदभावनयैव च यतितव्यमिति वदति । अत एव ''सर्वं एवात्मनि समर्पिताः'' इति श्रूयते । मोक्षदशायामज्ञाननिवृत्तावभेदो जायत इत्यपि न, भेदस्य नित्यत्वेन नाशाऽयोगात् । भेदनाशेऽपि व्यक्तिद्वयं स्थास्यत्येव । नच द्वित्वमपि नश्यतामिति वाच्यम्, तव निर्धर्मके ब्रह्मणि सत्यत्वाभावेऽपि सत्यस्वरूपं तदितिवद् द्वित्वाभावेऽपि व्यक्तिद्वयात्मकौ ताविति सुवचत्वात् ।

(प्रभा०) यदपि ''सत्यम्''—इत्यादिश्रुतिरद्वैतब्रह्मात्मपक्षे प्रमाणमुपन्यस्ता साप्यन्यार्थपरेत्याशयवानाह—''सत्यं ज्ञानम्''—इति । इदं वाक्यम्ब्रह्मस्वरूपम्प्रतिपादयति नतु जीवस्वरूपनिर्णयपरमित्यर्थः ।

---

* ज्ञानं विषयम्प्रकाशयति घटादिविषयश्च ज्ञानप्रकाश्यः । विषयो ज्ञानं निरूपयति इति विषयो ज्ञाननिरूपकः ज्ञानन्तु विषयनिरूप्यम् इत्थं ज्ञानविषययो प्रकाश्यप्रकाशकभावः निरूप्यनिरूपकभावश्च सम्बन्धो ज्ञेयः ।

† सविषयकत्वस्याऽनुभवादिति पाठो बहुग्रन्थसम्मतः प्राक्तनटीकाकारानुमतश्चेत्याभाति ।

ननु—जीवब्रह्मणोरभेदान्नेदं वाक्यमन्यार्थपरमित्याह—"ज्ञानाज्ञान"—इति। एवं सति—जीवब्रह्मणोरैक्याज्जीवस्य ज्ञानभिन्नत्वे उक्तश्रुतिविरोधस्तदवस्थ इत्याक्षेपो न भविष्यतीति भावः।

"सुखित्वात्"—इत्यादिना दुःखित्वपरिग्रहः। "भेदसिद्धौ"—इति। "जीवेशौ भिन्नौ विरुद्धधर्माश्रयत्वात् दहनतुहिनवत्" इत्येवम्भेदाऽनुमितौ इत्यर्थः।

अयमाशयः—ईश्वरः सर्वज्ञः सर्ववित् सर्वशक्तिमान् नियामको नित्यमुक्तः, जीवस्तु—अल्पज्ञोऽल्पशक्तिर्दुःखी नियाम्यः, तत् कथमत्यन्तं विरुद्धधर्मयोर्जीवेश्वरयोरभेदः सम्भवेत्, भेदस्य विरुद्धधर्माध्यासत्वात्।

प्राचीनप्रभाकारस्तु—"भेदसिद्धौ"—इति। परस्परभेदाऽनुमितावित्यर्थः। तथाच—एतच्छरीरावच्छेद्यविज्ञानादिमान् एतच्छरीरसमानकालीनयोगाद्यजन्यैतच्छरीरसजातीयैतच्छरीरभिन्नशरीरावच्छिन्नभिन्नः एतच्छरीरसमानकालीनैतच्छरीरसजातीयैतच्छरीरभिन्नयोगाद्यजन्यशरीरावच्छेद्यज्ञानाद्याधारत्वादिति व्यतिरेक्यनुमानात् जीवानाम्परस्परभेदः सिद्ध्यतीति भाव इति व्याचख्यौ।

विपक्षे दण्डमाह—"अन्यथा"—इति। ईश्वरस्य जीवस्वरूपत्वे इत्यर्थः। जीवानामीश्वराऽभिन्नत्वे इति तु तात्पर्यम्। "बन्धमोक्ष"—इति। कश्चित् संसारी बद्धः कश्चित् संसारी मुक्त इति व्यवस्था नोपपद्येत। वेदान्तिमते सर्वस्य ब्रह्मरूपत्वादिति भावः।

ननु—"तत्त्वमसि" इत्यादिवाक्यानामखण्डार्थपरतया जीवब्रह्मणोरभेद एवेत्यत आह—"योऽपि"—इति।

"तत्त्वमसि" इति महावाक्यञ्छान्दोग्योपनिषदि उद्दालकश्वेतकेतुप्रसङ्गे नवकृत्वः समाम्नातम्। तस्य त्रीणि पदानि, "तत्–त्वम्–असि" इति। अत्र तत्पदवाच्यः परोक्षत्वादिधर्मविशिष्ट ईश्वरोऽन्तर्यामी। त्वम्पदवाच्यः अपरोक्षत्वादिधर्मविशिष्टो जीवः पुण्यापुण्यकर्त्ता नियाम्यः। "तत्–त्वम्" इति पदद्वयन्तु समानविभक्तिकमभेदान्वययोग्यम्। परन्तु पदद्वयवाच्ययोर्विशिष्टयोरैक्यं नोपपद्यते, अर्थात् सर्वज्ञत्वादिविशिष्टस्य तत्पदवाच्यस्येश्वरस्य अल्पज्ञत्वादिविशिष्टेन जीवेन सहैक्यायोगाद् वेदवाक्यस्य च प्रमाणत्वात्=सत्यार्थद्योतकत्वात् तयोरैक्यसिद्धये चिन्मात्रवपुषि ब्रह्मणि द्वयोः पदयोर्जहदजहल्लक्षणा *। तया लक्ष्यमद्वितीयम्ब्रह्मेति युक्तं तत्त्वमस्यादिवाक्यानामभेदप्रतिपादकत्वमिति वेदान्तिनः सङ्क्षिप्तोऽभिप्रायः।

तत्र नैयायिक आह —एवंविधः सर्वोपीश्वराभेदबोधको वेदो योऽस्ति सोऽपि=स सर्वोऽपि तदभेदेन=ईश्वराऽभेदेन तदीयत्वम्=तत्स्वरूपत्वम् प्रतिपादयन्=निरूपयन् स्तौति=अर्थवादरूपताम्भजते इत्यर्थः। अर्थात् तदीयत्वेन तदभेदम्प्रतिपादयति, ननु

---

* सर्वज्ञत्वाल्पज्ञत्वादिविरुद्धधर्मत्यागेन चैतन्यांशमात्रे भागत्यागलक्षणा।

वास्तवञ्जीवब्रह्मणोरभेदम् । यथा पुत्रविषयें पितुर्वाक्यम् "ममात्मा भद्रसेन" इति । अत्र भद्रसेनस्य तत्पितुश्च भेदे स्पष्टे उपचारेण=स्वजन्यजनकत्वसम्बन्धेन आत्मपदद्वारा अभेदव्यवहारः, तथैव--पितृस्थानीयस्योत्पादकस्येश्वरस्य पुत्रस्थानीयैः*जीवैः सह तदीयत्वेन=†तत्सम्बन्धित्वेन अभेद औपचारिको न भाविक इति ध्येयम् ।

स्तौतीति कथनेन तथाचान्यान्यप्यभेदवाक्यानि सति वास्तवे भेदे वेदे सन्त्येव । यथा "‡यजमानः प्रस्तरः" "आदित्यो यूप" इत्यादीनि । यथा तत्रोपचारस्तथा प्रकृतेपीति बोधयति । अत्र......"अभेदभावनया"--इति । भावना=उपासना विजातीयप्रत्ययानन्तरितः समानाकारप्रत्ययप्रवाहश्चेतसो निदिध्यासनापरपर्यायाभिध इति यावत् । अनयैवाऽभेदोपासनया यतितव्यम्मुमुक्षुणेति शेषः । "इति वदति" इत्यनेन "वेद" इति कर्त्तृपदं सम्बद्धयते । अर्थादेनमाशयार्थमुक्तश्रुतिरेव बोधयति । निरतिशयानन्दे ब्रह्मणि परानुरक्तिसम्पादनायाभेदोपासनापराण्यभेदवाक्यानीति भावः । उक्तार्थदृढतायै श्रुतिम्प्रमाणयितुमाह—"अत एव"--इति । यस्मात् परमेश्वरे परानुरक्तिसम्पादनपरकत्वमभेदवाक्यानामतो हेतोरित्यर्थः । अत्रार्थे उपष्टम्भकं श्रुतिवाक्यमुद्धरति--"सर्वं एवात्मनि"-- इति । विद्वान् पुरुषः पुत्रशरीराद्यात्मानम्मुख्यमात्मस्वरूपमात्मानञ्च आत्मनि=परब्रह्मणीश्वरे समर्पयति=तद्भावनया भावयतीति श्रुतेर्विवक्षितोर्थः । प्राक्तनग्रन्थसम्मतः श्रुतिपाठस्तु--"सर्वे आत्मानः समर्पिताः" इत्येवंरूपोऽस्ति । तस्यायमर्थः--सर्वे आत्मानो जीवा ईश्वरसेवार्थे नियुक्ता इति । इयं श्रुतिः कस्याः शाखायाः किंरूपाश्चोत अध्ययनकालेऽपि निर्णेतुं नापीपरम् । इति=एतादृशोऽर्थः । श्रूयते=श्रुतिवाक्यजन्यशाब्दबोधविषयीक्रियते ।

इत्थञ्च-जीवब्रह्मणोरभेदे सेव्यसेवकभावप्रतिपादकश्रुतेरप्रामाण्यार्थापत्तिः स्यात् एकव्यक्तौ तदसम्भवादिति प्राक्तनव्याख्याकर्त्तारः ।

अन्योऽन्याभावमनित्यमङ्गीकुर्वताम्मुक्तावभेदमेव मन्यमानानाम्भट्टभास्करप्रभृति-

---

* "अमृतस्य पुत्राः" इति श्रुतिः ।

† सम्बन्धश्च प्रकृते नियाम्यनियामकभावादिः ।

‡ एतच्च—पूर्वमीमांसायाः प्रथमाध्याये चतुर्थे पादे त्रयोदशाधिकरणे तत्सिद्धिपेटिकायाश्चिन्तितम् । किं "यजमानः प्रस्तरः" इत्येप गुणविधिः किंवा अर्थवाद इति । किं तावत्प्राप्तम् ? गुणविधिरिति अर्थात् जघन्यप्रस्तरपदलक्षितप्रस्तरकार्यस्रुग्धारणोद्देशेन यजमानोऽधिकरणत्वेन विधीयते । इत्येवम्प्राप्ते सिद्धान्तमाह—प्रत्यक्षविध्यश्रवणात् "प्रस्तरमुत्तरम्बर्हिषः सादयति" इति विध्यन्तरैकवाक्यत्वाच्च तस्यार्थवादत्वमेवेति सिद्धान्तितम्, यजमानपदन्तु गौण्या वृत्त्या प्रस्तरस्तावकम् । इदन्तु बोध्यम्—प्रकृतीष्टौ चतस्रो दर्भमुष्टयः छिद्यन्ते । प्रथमा दर्भमुष्टिर्मन्त्रैः संस्कृता येयां जुहूर्यस्यां निधीयते, विधृतिसञ्ज्ञकयोरुदगग्रयोर्दर्भयोरुपरि या च स्थापिता भवति सा "प्रस्तर" इत्युच्यते ( श्रौतपदार्थनिर्वचनम् ) ।

म्भेदाभेदवादिनम्प्रत्याह—"मोक्षदशायाम्"—इति । तत्त्वज्ञानाऽव्यवहितोत्तरकाल इत्यर्थः । अज्ञाननिवृत्तौ=मिथ्याज्ञाननिवृत्तौ । अभेदः=जीवब्रह्मणोरैक्यम् । जायते= भवति । इत्यपि न=इदम्मतमपि न समीचीनमित्यर्थः । तत्र हेतुमाह—"भेदस्य नित्यत्वेन"—इति । अन्योन्याभावस्य नित्यत्वेन तन्नाशाऽसम्भवादित्यर्थः । अभ्युपगम-सिद्धान्तेनाह—"भेदनाशेऽपि"—इति । "व्यक्तिद्वयम्"—इति । जीवब्रह्मरूपं व्यक्तिद्वयम् । अर्थात् यथा अपेक्षाबुद्धिनाशे द्वित्वनाशः तथापि व्यक्तिद्वयं तिष्ठति तथा कारणीभूताऽनियतापेक्षाबुद्धिनाशादज्ञाननाशेऽपि व्यक्तिद्वयावस्थितिर्निराबाधा ।

ननु—व्यक्तिद्वये सत्यपि द्वित्वं न भविष्यति मोक्षे इत्याह—"नच"—इत्यादि । "निर्धर्मके"—इति । निर्विशेषे इत्यर्थः । यथा सकलधर्मशून्यम्ब्रह्म सत्यत्वधर्माभाववत् तव मते सत्स्वरूपं तथैव मोक्षे द्वित्वधर्माभावेऽपि तौ जीवेश्वरौ व्यक्तिद्वयात्मकौ व्यक्तिद्वयस्वरूपावेवेत्यपि मया वक्तुं शक्यत इति भावः ।

(मुक्ता०) मिथ्यात्वाभावोऽधिकरणात्मकस्तत्र सत्यत्वमिति चेदेक-त्वाभावो व्यक्तिद्वयात्मको द्वित्वमित्यप्युच्यताम् । प्रत्येकमेकत्वेऽपि पृथिवीजलयोर्न गन्ध इतिवदुभयं नैकमित्यस्य सर्वजनसिद्धत्वात् । योऽपि तदानीमभेदप्रतिपादको वेदः सोऽपि निर्दुःखत्वादिना साम्यम्प्रति-पादयति । सम्पदाधिक्ये पुरोहितोऽयं राजा संवृत्त इतिवत् । अत एव "निरञ्जनः परमं साम्यमुपैति" इति श्रूयते ।

(प्रभा०) * ननु—न मया ब्रह्मणि सत्यत्वम्भवदभिमतरीत्या स्वीक्रियते । "यन्मिथ्या तदसत्" एवं मिथ्यात्वाभाव एव ब्रह्मणि सत्यत्वम्, कल्पितवस्तुनो नाशस्याधिकरणस्वरूपत्वात् "अधिष्ठानावशेषो हि नाशः कल्पितवस्तुना" इत्युक्तेः । ततश्च नोक्तदोष इत्यभिप्रायवान् "मिथ्यात्वाभाव"—इत्यारभ्य "इति"—पदान्तो ग्रन्थः पूर्वपक्षिणः ।

तत्रोत्तरमाह—"एकत्वाभाव"—इति । एकत्वमभावो यस्येति व्युत्पत्त्या एकत्ववदन्योन्याभाव इत्यर्थः । तेन उत्पत्तिकालीनघटस्य एकत्वाभाववत्तया तादृशाऽ-भावस्यैकव्यक्त्यात्मकत्वेऽपि न क्षतिरिति प्राचीनाः । वयन्तु बालबोधार्थमेवमभिप्राय-म्प्रकटयामः—यथा तव नये मिथ्याप्रपञ्चाभावाधिकरणम्ब्रह्मैव सत्स्वरूपम्, सत्यत्वञ्च ततो नातिरिक्तम्, एवमस्मन्नयेऽपि एकत्वसङ्ख्याया अभावस्वरूपमेव व्यक्तिद्वयात्मकं द्वित्वमित्यपि वक्तुं सुशकम्, सर्वथापि मोक्षे नैव जीवब्रह्मणोरैक्यमिति सिद्धान्तिनो हृदयम् । स्वोक्तिं दृष्टान्तेन समर्थयति सिद्धान्ती—"प्रत्येकम्"—इति । प्रति-

* अत्र वेदान्तिनः—निर्धर्मकत्वञ्च ब्रह्मणो धर्मिस्वरूपातिरिक्तधर्मशून्यत्वमभिमतम् । तथाच—सत्यत्वन्तत्र (ब्रह्मणि) मिथ्यात्वाभावः । सच ब्रह्मण्यधिष्ठाने तत्स्वरूप एव । एवञ्च—सत्यत्वधर्मो धर्मिस्वरूप एवेति तदतिरिक्तधर्मशून्यत्वमक्षतमित्येतदाह—"ननु" इति ।

व्यक्तीत्यर्थः । एकत्वेऽपि=अभेदेऽपि । उभयं नैकम्=जीवब्रह्मणी एकत्वाऽभिन्नसङ्ख्यावन्ती नेति प्रकृते योज्यम् ।

अयमर्थः--गन्धः पृथिवीगुणो नतु जलस्य तथापि "*पृथिवीजलयोर्न गन्ध" इति व्यवह्रियते लोके, तस्य नायमर्थो यत्पृथिव्यामपि गन्धो नास्ति, किन्तु पृथिव्यामेव गन्धो नतु जले । तथैव प्रत्येकं सर्वासु व्यक्तिषु एकत्वे=अभेदे सत्यपि "उभयं नैकम्" इत्ययम्भेदसाधकः प्रत्ययः सर्वानुभवसिद्धो नापलपितुं शक्यः । सम्प्रति "ब्रह्मविद् ब्रह्मैव भवति" इति मोक्षदशायामभेदबोधकस्यागमस्य व्यवस्थामाह--"योऽपि"--इति । तदानीम्=मोक्षकाले । अभेदप्रतिपादकः=जीवब्रह्मणोरैक्यप्रमितिजनकः आगमः="ब्रह्मवेद ब्रह्मैव भवति" (मुण्ड० ३ । २ । ६) इत्यादिशब्दप्रमाणम् । सोऽपि निर्दुःखत्वादिना=निर्दुःखित्वादिविशिष्टात्मत्वेन रूपेणेत्यर्थः । साम्यम्=ब्रह्मसाम्यम् । स्तौति=अभेदत्वेन प्रतिपादयति । एवञ्चाऽभेदार्थस्य प्रातीतिकार्थत्वेऽपि साम्यस्यैव वास्तविकार्थत्वाद् दोषाभावः ।

ननु--साम्यबोधनाभिप्रायेण एकत्वप्रतिपादने न कमपि दृष्टान्तम्पश्याम इतीमां शङ्कां परिहरति--"सम्पदाधिक्ये"--इति । यथाऽत्यन्तधनिनि राजपुरोहिते अराजन्यपि "अयं राजा" इत्यमुख्यो व्यवहारः । एवमेव अब्रह्मण्यपि निवृत्तमिथ्याज्ञाने जीवे "ब्रह्मैवायम्" इति जघन्यार्थपरतयोक्तश्रुतेर्व्यवहार इति भावः । उक्तार्थोपष्टम्भकं श्रुत्यन्तरं वक्तुमाह--"अत एव"--इति । साम्यप्रतिपादकत्वादेवेत्यर्थः । "निरञ्जनः"--इति । निर्दुःखः सन् मुक्तः परमम्=अपुनर्भवरूपम्, साम्यम्=मोक्षाख्यम्, उपैति=प्राप्नोति । इति श्रुतेरर्थः ।

(मुक्ता०) ईश्वरोऽपि न ज्ञानसुखात्मा किन्तु ज्ञानाद्याश्रयः । "नित्यं विज्ञानमानन्दम्ब्रह्म" (बृहदा० ५।६।७) विज्ञानपदेन ज्ञानाश्रय एवोक्तः । "यः सर्वज्ञः स सर्ववित्" (मुं० १ । ६) इत्यनुरोधात् । आनन्दमित्यस्याप्यानन्दवदित्यर्थः । अर्श-आदित्वान्मत्वर्थीयोऽच्प्रत्ययः, अन्यथा पुँल्लिङ्गत्वापत्तिः । आनन्दोऽपि दुःखाभावे उपचर्यते, भाराद्यपगमे सुखी संवृत्तोऽहमितिवत्, दुःखाभावेन सुखित्वप्रत्ययात् । अस्तु वा तस्मिन्नानन्दो नत्वसावानन्दः "अ(सु)खम्" (बृह० ५।८।८) इति श्रुतेः । न विद्यते

---

* अत्राहुः—"पृथिवीजलयोर्न गन्ध" इति प्रतीत्या पृथिवीजलत्वोभयत्वरूपव्यासज्यवृत्तिधर्मावच्छिन्नाऽनुयोगिताकगन्धात्यन्ताभावो यथा स्वीकृतः तथा "उभयं नैकम्" इति प्रतीत्या उभयत्वरूपव्यासज्यवृत्तिधर्मावच्छिन्नाऽनुयोगिताकैकत्ववदन्योन्याभावस्वीकारे बाधकाभाव इति प्राचीना नृसिंहशास्त्रिणः । अत्र बहुवक्तव्यमपि ग्रन्थगौरवभयात् वर्त्तमानकालिकसुकुमारमतीनां काठिन्यभयाच्चोपेक्षितम् ।

**सुखं यस्येति कुतो नार्थ इति चेन्न, क्लिष्टकल्पनापत्तेः । प्रकरणविरोधादानन्दमित्यत्र मत्वर्थीयाच्प्रत्ययविरोधाच्चेति सङ्क्षेपः ।**

(प्रभा०) यत्तु वेदान्तिना ईश्वरस्य ज्ञानसुखस्वरूपत्वमुक्तं तदपि न युक्तमिति दर्शयति—"ईश्वरोऽपि"—इति । अपिना यथा जीवो न ज्ञानसुखात्मा तादृशार्थसाधकप्रमाणाभावात् तथेश्वरोऽपि न ज्ञानसुखात्मेति सूचितम् । तदेवोपपादयति—"किन्तु"—इति । ननु—बार्हदारण्यकश्रुतौ ब्रह्मणो विज्ञानस्वरूपतैवोक्ता इत्याशङ्कायां तां श्रुतिमुद्धृत्यार्थान्तरपरतया व्याचष्टे—"ज्ञानाद्याश्रय"—इति । नित्यज्ञानाद्यधिकरण इत्यर्थः । श्रुतिस्थविज्ञानपदं धर्मधर्मिभावपरतया व्याचष्टे—"विज्ञानपदेन"—इति । विज्ञानमस्मिन्नस्तीति "विज्ञानम्" इति व्युपसृष्ट"ज्ञा"-धातोः "करणाधिकरणयोश्च ( ३ । ३ । ११७ ) इति सूत्रेण अधिकरणार्थकल्युट्-प्रत्ययान्तम्पदमिदमिति भावः । अस्मिन् पक्षे मुण्डकश्रुतिमप्युपन्यस्यति—"यः सर्वज्ञ"—इति । इत्थञ्च—"नित्यं विज्ञानमानन्दम्ब्रह्म" इति श्रुतौ विज्ञानपदस्य भावार्थकत्वे "यः सर्वज्ञः" इत्यादिश्रुतिविरोधोऽपरिहार्यः स्यादिति भावः ।

**ननु**—ज्ञानब्रह्मणोर्गुणगुणिभावपक्षे "विज्ञानमानन्दम्ब्रह्म" इति श्रुतिस्थाऽऽनन्दपदस्य का गतिः ? इत्याह—"आनन्दम्"—इति । "अर्श आदिभ्योऽच्" ( ५ । २ । १२७ ) इति पाणिनिसूत्रेण मतुवर्थकाच्प्रत्ययनिष्पन्नमिदं नपुंसकलिङ्गमानन्दपदम्—आनन्दोऽस्यास्तीति व्युत्पत्तेः । ततश्च "आनन्दम्" इत्यस्यानन्दवदर्थो बोध्यः । अन्यथा—सुखार्थानन्दशब्दस्य पुँल्लिङ्गत्वनियमेन मत्वर्थीयाच्प्रत्ययान्तत्वं विना कथं नपुंसकत्वापत्तिः स्यात् ।

**ननु**—आनन्दवदित्यर्थो न युक्तस्तव मते ईश्वरेऽप्यानन्दाभावात् सुखापरपर्यायस्य आनन्दस्य पुण्यफलत्वात् ईश्वरस्य च * पुण्यादेरभावकारणादित्याह—"आनन्दोऽपि"—इति । "उपचर्यते"—इति । दुःखाभावम्प्रवृत्तिनिमित्तीकृत्य ईश्वरे आनन्दशब्दः प्रयुज्यते, अर्थात् लक्षणवृत्त्या दुःखाभावबोधकोऽयमानन्दशब्दो नतु "समवायेनानन्दवान्" इत्यर्थपरकः । ततो नोक्तदोष इत्यर्थः । एतद् दृष्टान्तेन स्फुटयति—"भाराद्यपगम"—इति । सम्भवति मुख्येऽर्थे जघन्यवृत्तिकल्पनमन्याय्यमिति तत्राह—"अस्तु वा"—इति । नानन्दब्रह्मणोरभेद इत्यर्थः । अत्र श्रुतिमाह—"असुखम्"—इति । "न सुखम्" इति नञ्तत्पुरुषसमासाश्रयेण प्रकृते नञ् ब्रह्मणः सकाशात् सुखस्य भेदम्बोधयति । एवं श्रुतिघटको नञ् सुखभेदपर इति भावः ।

वेदान्ती शङ्कते—"न विद्यते"—इति । तथाच—न तत्पुरुषसमासः, किन्तु बहुव्रीहिरित्याशयः ।

---

* विहितक्रियाजन्यो धर्मः पुण्यम् । विहिता च क्रिया यागादिरेव । नचेश्वरो यागाद्यनुष्ठाता, तदधिकारी वा येनाऽसौ पुण्यजन्यसुखफलभाग्भवेदित्याशयः ।

नैयायिकः समाधत्ते—"न"—इति । क्लिष्टकल्पनापत्तेः=नञस्तत्र लक्षणापत्तेरित्यर्थः। अयमाशयः—भवत्कृतो बहुव्रीहिः समासोऽन्यपदार्थप्रधानः । तत्र च "नञ्"पदस्यान्यपदार्थे लक्षणा क्लिष्टकल्पनैव तत्पुरुषसमासे तु नायं दोषः । अत्र हेतुमाह—"प्रकरणविरोधात्"—इति । बार्हदारण्यके अस्थूलादिवाक्ये सर्वत्र नञ्तत्पुरुषसमास एवाश्रितः, समानप्रवाहपतिताऽसुखपदस्यापि प्रकरणेन स एवाऽऽश्रयणीयो भवति नतु बहुव्रीहिरिति भावः।

स्वोक्तेऽर्थे हेत्वन्तरमाह—"प्रकरणविरोधात्"—इति । शरीरभेदाद्यर्थकाशरीरमित्यादिश्रुतिघटकसुखशब्दस्य सुखाभाववदर्थकत्वाऽसम्भवादित्यर्थः । अत्रैव विरोधान्तरमाह—"आनन्दमित्यत्र"—इति। मतुबर्थोऽच्प्रत्ययः। अन्यथा नित्यपुँल्लिङ्गस्यानन्दशब्दस्य नपुंसकत्वाऽनुपपत्तिरेव । "असुखम्" इत्यत्र बहुव्रीहिसमासाश्रयणे तु एतेनापि विरोधः स्यादिति भावः। अपिच "आनन्दम्ब्रह्मणो विद्वान्" इत्यादिश्रुत्या आनन्दब्रह्मणोः स्पष्ट एव भेद आम्नातः । सोऽप्यस्माकं गुणगुणिनोर्भेदवादिनां मते सङ्गच्छते, नत्वभेदवादिनामित्याशयवानाह—"सङ्क्षेप"—इति।

अयमस्य वेदान्तमतस्य सङ्क्षिप्तसारः—सच्चिदानन्दस्वरूपमद्वैतम्ब्रह्मैव परमार्थसत्यं ततोऽन्यत्प्रतीयमानं मरुमरीचिकेव शुक्तिरजतमिव भ्रान्तिविलसितं मिथ्यैव । मिथ्यात्वञ्च यत्र यस्यात्यन्ताभावः तत्रैव तस्य प्रतीयमानत्वम् । तदिदम्प्रतिभासशब्देनाप्युच्यते । तदेवैकम्ब्रह्मोपाधिवशाज्जीवभावम्प्राप्तमिव भाति । उपाधीनामनेकत्वान्नाना जीवाः। यथा घटमठाद्युपाधिभेदेन एकस्मिन्नप्याकाशे नानात्वव्यवहारः। सचोपाधिर्द्विविधः। मायाऽविद्या च। मायोपाधिकञ्चैतन्यमीश्वरः। अविद्योपाधिकञ्चैतन्यञ्जीवः। रागद्वेषात्मकप्रबन्धानुपाती संसारो बन्धः। अविद्यैव तस्य निदानम्। जीवस्य (ब्रह्म)स्वरूपाविर्भावो मोक्षः । तत्त्वमस्यादिमहावाक्यजन्या "अहम्ब्रह्मास्मि" इत्यखण्डाकारा वृत्तिर्ब्रह्मविद्या । सेयमुक्तम्बन्धं समूलघातं हन्तीति मोक्ष एव परः पुरुषार्थः। उक्तञ्च—

यथैव बिम्बं मृदयोपलिप्तं तेजोमयं भ्राजते तत्सुधौतम्।
तद्वदात्मतत्त्वं प्रसमीक्ष्य देही एकः कृतार्थो भवते वीतशोकः॥
यदात्मतत्त्वेन तु ब्रह्मतत्त्वं दीपोपमेनेह युक्तः प्रपश्येत्।
अजं ध्रुवं सर्वतत्त्वैर्विशुद्धं ज्ञात्वा देवं मुच्यते सर्वपाशैः॥

(श्वेता० २ । १४, १५)

---

(मुक्ता०) एतेन प्रकृतिः कर्त्री पुरुषस्तु पुष्करपलाशवन्निर्लेपः, किन्तु चेतनः। कार्यकारणयोरभेदात् कार्यनाशे सति कार्यरूपतया तन्नाशो न स्यादित्यकारणत्वं तस्य । बुद्धिगतचैतन्याभिमानान्यथानुपपत्त्या तत् कल्पनम्। बुद्धिश्च प्रकृतेः (प्रथमः) परिणामः। सैव महत्तत्त्वमन्तःकरण-मित्युच्यते । तत्सत्त्वासत्त्वाभ्याम्पुरुषस्य संसारापवर्गौ तस्या एवेन्द्रिय-प्रणालिकया परिणतिर्ज्ञानरूपा घटादिना सम्बन्धः।

(प्रभा०) सम्प्रति साङ्ख्यमतं दूषयितुमुपन्यस्यति—'एतेन''—इति । एतेन=पूर्वोक्तयुक्त्या आत्मनो ज्ञानवत्त्वसाधनेन, वक्ष्यमाणग्रन्थेन च। अस्य "मत-मपास्तम्" इत्यनेनान्वयः । "प्रकृतिः''—इति । मूलप्रकृति*रित्यर्थः। साच सत्त्व-रजस्तमसां साम्यावस्था । उक्तञ्च ब्रह्मवैवर्त्ते प्रकृतिखण्डे प्रथमाध्याये, देवीभागवते नवमे स्कन्धे प्रथमाध्याये च—

प्रकृष्टवाचकः प्रश्च कृतिश्च सृष्टिवाचकः ।
सृष्टौ प्रकृष्टा या देवी प्रकृतिः सा प्रकीर्त्तिता ॥
गुणे प्रकृष्टसत्त्वे च प्रशब्दो वर्त्तते श्रुतौ ।
मध्यमे रजसि कृश्च तिःशब्दस्तमसि स्मृतः ॥ इति ।
मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त ।
षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः ॥ इति ।

इति साङ्ख्याभिताः पञ्चविंशतिः पदार्थाः तत्र प्रकृतिरेव ( सकलजगतः ) कर्त्री=उपादानं कारणमित्यर्थः । परिणामस्वभावत्वात्। कर्त्तृत्वञ्चात्र कर्त्तृभूतान्तःकरण-प्रकृतित्वमेव नत्वनुकूलकृतिमत्त्वं कर्त्तृत्वरूपमिष्टं साङ्ख्यानाम्, तेषां मते तस्य अन्तःकरणधर्मत्वात् । पुरुषः=जीवश्चेतनालक्षणः अपरिणामी । "निर्गुणत्वान्न चिद्धर्मा" ( सां० १। १४७ ) इत्युक्तेः। पुष्करपलाशवत्=पद्मपत्रवत् । निर्लेपः= †असङ्गः, "असङ्गो ह्ययम्पुरुषः" ( बृहदा० ६।३।१६ ) इत्युक्तेः। "किन्तु"—इति। किन्तु=यतः चेतनः=चित्स्वभावः। तथाच—पुरुषो लिप्तत्वाभाववान् चेतनत्वात् यन्नैवं

---

* सत्त्वादीनां स्वरूपमुक्तं साङ्ख्यतत्त्वकौमुद्याम्—

सत्त्वं लघुप्रकाशकमिष्टमुपष्टम्भकञ्चलञ्च रजः ।
गुरुवरणकमेव तमः प्रदीपवच्चार्थतो वृत्तिः ॥ इति ।

† ननु—किमिदं नाम निर्लिप्तत्वम् ? उच्यते—अनुयोगितासम्बन्धेन विजातीयसंयोगवत्त्वं लिप्तत्वम्। तदभाववान् निर्लेपः, तत्त्वञ्च निर्लिप्तत्वम् । वैजात्यञ्चात्र—अम्भसा लिप्तम्, भस्मना लिप्तम्, तैलेन लिप्तं शरीरमित्याद्यनुगतप्रतीतिसिद्धनोदनत्वव्याप्यजातिविशेषरूपम्बोध्यम्। विस्तर-स्त्वन्यतोऽनुसन्धेयः।

तन्नैवम्। यथा प्रकृतिरित्यनुमानं निर्लिप्तत्वे मानम्। यथा पद्मपत्रमम्भसा न * लिप्तम्भवति, तथा पुरुषः कर्त्तृत्वादिधर्माश्रयो न भवतीत्यर्थः। इत्थमनुमानान्तरमपि फलितम्—"पुरुषः कर्त्तृत्वादिधर्माभाववान् कारणत्वाभावात् यन्नैवं तन्नैवम्" यथा प्रकृतिः। कारणत्वाभावादित्यस्य हेतोरसिद्धिशङ्कां वारयति—"**कार्यकारणयोः**"—इति। अभेदात्=तादात्म्यलक्षणात्सम्बन्धादित्यर्थः। साङ्ख्यमत इति शेषः। **तन्नाशः**=पुरुषनाशः। **न स्यात्**=माभूत्। इति=हेतोः अकारणत्वम्=अकर्त्तृत्वम्। तस्य=पुरुषस्य। स्वीकार्यमिति शेषः। तथाच—नाशाऽप्रतियोगित्वरूपनित्यत्वाऽनुपपत्त्या पुरुषे कारणत्वं नाङ्गीकर्त्तव्यमिति भावः।

**अयमभिप्रायः**—पुरुषश्चेत्कारणं स्यात् तर्हि धर्मलक्षणावस्थापरिणामेष्ववश्यमन्यतमपरिणामाश्रयः स्यात्, तेन च तस्य कौटस्थ्यं श्रुतियुक्तिसिद्धं व्याहन्येत।

**ननु**—एवंविधनिरतिशयपुरुषसत्त्वे किम्मानम्? अत आह—"**बुद्धिगता**"—इति। बुद्धिगतो बुद्धिवर्त्ती यश्चैतन्याभिमानः "चेतनोऽहम्" इत्याकारकः, तस्य अन्यथानुपपत्त्या=पुरुषानङ्गीकारेऽसिद्ध्या। **तत्कल्पनम्**=पुरुषसिद्धिरित्यर्थः। इदमत्र तत्त्वम्—साङ्ख्यसिद्धान्ते बुद्धिः प्रकृतेः प्रथमः परिणामः, प्रकृतिश्च जडा, तत्कार्यभूताया बुद्धेरपि जाड्यं स्वभावः। उपादानानुविद्धत्वादुपादेयस्य। यथा मृदनुविद्धत्वाद् घटोऽपि मृदेव, परन्तु तत्र ज्ञानेच्छादिधर्मोपलब्धेश्चैतन्यमपि प्रतीयते। तत्तादृशचेतनस्वभावपुरुषसम्बन्धमन्तरा नार्हति भवितुम्, क्वचित्प्रसिद्धस्यैव चैतन्यस्य बुद्धावारोपसम्भवात्। यथा "रक्तः स्फटिकः" इत्याकारायाम्प्रतीतौ जवाकुसुमोपरागेणैव स्फटिके लौहित्यम्भाति तद्वत्।

**ननु**—का सा बुद्धिर्यस्याम्पुरुषोपरागवशाच्चैतन्यम्प्रतीयते? इति जिज्ञासायामाह—"**बुद्धिश्च**"—इति। प्रकृतेः=प्रधानस्य † परिणामः=अवस्थाविशेषः। "**सैव**"—इति। सेयम्बुद्धिः महत्तत्त्वम्, अन्तःकरणमिति च ख्यायते। **तत्सत्त्वा-**

---

* "लिप्यते न स पापेन पद्मपत्रमिवाम्भसा" (भ० गी०) इति भगवदुक्तेः।

† **अत्रेदम्बोध्यम्**—धर्मलक्षणावस्थाभेदात् त्रिधा परिणामः। उक्तञ्च पातञ्जले—"एतेन भूतेन्द्रियेषु धर्मलक्षणावस्थापरिणामा व्याख्याताः" (यो० पा० ३। सू० १३) इति। **अस्यायमर्थसारः**—मृद्रूपस्य धर्मिणो घटाकारपरिणामः **धर्मपरिणामः**। तस्यैव घटस्य अनागताध्वपरित्यागेन वर्त्तमानाध्वस्वीकारः, तत्परित्यागेन चातीताध्वपरिग्रहो **लक्षणपरिणामः**। तस्यैव घटस्य नूतनप्रत्नादिभेदेन क्षणे क्षणे परिक्षयतारूपोऽ**वस्थापरिणामः**। अतः प्रतिक्षणं हि परिणामिनो भावा ऋते चितिशक्तेः। एवम्प्रकृतेर्महत्तत्त्वं धर्मपरिणामो बोध्यः। अवस्थितस्य वस्तुनः पूर्वाऽवस्थापरित्यागेन (पूर्वधर्मनिवृत्तौ) धर्मान्तरोत्पत्तिः **परिणामः**। **नैयायिकास्तु**—परिणामं विनाशमेवाहुः।

**सत्त्वाभ्याम्**=बुद्धिसत्त्वासत्त्वाभ्यामित्यर्थः । **पुरुषस्य**=जीवस्य । * **संसारापवर्गौ**=बन्धमोक्षौ स्त इति शेषः । नित्यशुद्धबुद्धमुक्तस्वभावस्यापि पुरुषस्य बुद्ध्युपरागकृतः संसारः कुसुमोपरागकृतं लौहित्यमिव, तदपगमे च मोक्षः स्वो भावः । कुसुमापगमे यथा स्फटिकस्य स्वो भावः श्वेतिमा । "**तस्या एव**"—इति । "**तस्याः**" इति पदस्य "**परिणतिः**" इति पदेन सम्बन्धः । **इन्द्रियप्रणालिकया**=चक्षुरादीन्द्रियरूपनालिकाद्वारा यो **घटादिना**=घटपटादिविषयेन सह **सम्बन्धः**=स्वाकारतासमर्पणरूपः तत्तद्विषयाकारतास्वरूपः । अर्थात् बुद्धेरेव महत्तत्त्वाख्यायाः सा **ज्ञानरूपा** ज्ञानाकारा परिणतिर्बुद्धेरेवेत्यन्वितार्थः । एवमिच्छाद्या अपि बुद्धेः परिणामाः । इदमेव ज्ञानमध्यवसायपदेनाप्यभिलप्यते ।

**इदन्तु बोध्यम्**—यथा स्वभावतः चलनस्वभावमपि जलाशयान्तर्वर्त्ति सलिलं निर्गममार्गप्रतिबन्धे सति क्षेत्रमुपसृत्य तदाकारम्भवितुं नार्हति, तदेव तु प्रतिबन्धापगमे छिद्रद्वारा बहिर्निर्गत्य कुल्यात्मना क्षेत्रमुपसर्पत् केदाराकारेण परिणतञ्जायते । तथा स्वभावतः सर्वविषयप्रकाशनसमर्थमपि बुद्धिसत्त्वं तमोगुणेन प्रतिबद्धं सत् स्वयं घटपटादिविषयोपसर्पणेऽसमर्थमपि चक्षुरादीन्द्रियसन्निकर्षद्वारा तमो निरासे सति इन्द्रियात्मनालिकाद्वारा विषयदेशङ्गत्वा तत्तद्विषयाकारेण परिणमते, सोऽयम्बुद्धितत्त्वस्य विषयाकारतारूपः परिणामः अध्यवसायो वृत्तिरिति ज्ञानम् इति चाभिधीयते । उक्तञ्च योगभाष्यकारैः—"फलमविशिष्टः पौरुषेयश्चित्तवृत्तिबोधः" इति ।

इन्द्रियप्रणालिकया अर्थसन्निकर्षानन्तरं जायमाना "अयं घटः" इत्याकारा चित्तवृत्तिः, तद्विषयको यः "अहं घटञ्जानामि" इत्याकारोऽनुभवः स प्रमाणभूतायाश्चित्तवृत्तेः फलम् । सचानुभवः पौरुषेयः=चितिचित्तयोरभेदाग्रहात्पुरुष उपचर्यमाणत्वेन पुरुषवर्त्तीत्यर्थः । वस्तुतस्त्वसङ्गे तस्मिन् कदापि नोपपद्यते इति साङ्ख्याकूतकम् । एतच्चानुपपदं मूले स्फुटीभूतं व्याख्यातञ्चास्माभिः ।

**(मुक्ता०) पुरुषे कर्तृत्वाभिमानो बुद्धौ चैतन्याभिमानश्च भेदाग्रहात् । ममेदं कर्तव्यमिति मदंशः पुरुषोपरागो बुद्धेः स्वच्छतया तत्प्रतिबिम्बादतात्त्विको दर्पणस्येव मुखोपरागः । इदमिति विषयोपरागः, इन्द्रियप्रणालिकया परिणतिभेदस्तात्त्विको निःश्वासाभिहतदर्पणस्येव मलिनिमा । कर्तव्यमिति व्यापारांशः । तेनांशत्रयवती बुद्धिः । तत्परिणामेन ज्ञानेन पुरुषस्यातात्त्विकः सम्बन्धो दर्पणमलिनिम्नेव मुखस्योपलब्धिरुच्यते । ज्ञानादिवत्सुखदुःखेच्छाद्वेषप्रयत्नधर्माऽधर्मा अपि बुद्धेरेव कृतिसामानाधिकरण्येन प्रतीतेः । नच बुद्धिश्चेतना परिणामित्वादिति मतमपास्तम्,**

---

* बुद्धिसत्त्वे घटादिर्विषयः स्वाकारपरिणामिबुद्ध्यगृहीतासंसर्गकत्वसम्बन्धेन पुरुषनिष्ठः पुरुषस्वरूपतिरोधानेन पुरुषस्य संसारापादक इति भावः ।

कृत्यदृष्टभोगानामिव चैतन्यस्याऽपि सामानाधिकरण्यप्रतीतिस्तद्भिन्ने मानाभावाच्च।

(प्रभा०) ननु—यदि पुरुषो न कर्त्ता कथं तर्हि पुरुषोऽहङ्करोमीति प्रत्ययः ? इत्याशङ्कां बुद्धौ चैतन्यानुभव इव बुद्धिपुरुषयोर्विवेकाऽग्रहमूलको भ्रमरूप एव पुरुषे कर्त्तृत्वाऽनुभव इति ताम्परिहर्त्तुमाह—"पुरुष" । कर्त्तृत्वाभिमानः="अहङ्करोमि" इत्याकारोऽहम्प्रत्ययः। बुद्धौ=महत्तत्त्वाख्ये प्रकृतेः प्रथमे परिणामे, चैतन्याभिमानः= "अहञ्चेतनोऽस्मि" इति प्रत्ययः। अत्र हेतुमाह—"भेदाग्रह"—इति। भेदाग्रहात्= बुद्धिपुरुषयोरसंसर्गाग्रहात् विवेकग्रहाभावात् पुरुषगतञ्चैतन्यम्बुद्धौ बुद्धिगतं कर्त्तृत्व-म्पुरुषे प्रतीयत इति तत्र द्वयोर्मिथुनीभावे कारणं द्वयोर्विविच्य ग्रहाभाव एवोक्ताकार-प्रत्ययहेतुरिति भावः।

"बुद्धिरुपलब्धिर्ज्ञानमित्यनर्थान्तरम्" (न्या० १। १। १५) इति नैयायिको बुद्ध्युपलब्ध्योर्भेदं न स्वीकरोति तन्मतम्परासितुम्बुद्धित उपलब्धेर्भेदं दर्शयन् तस्या अंशत्रयम्प्रदर्शयति—"ममेदम्"—इत्यादिना । बुद्धिपुरुषयोर्भेदाग्रहादेकत्वाभिमानः पुरुषोपराग इत्यर्थः। अस्मच्छब्दार्थभूतस्य पुरुषस्य सम्बन्धो ममेति षष्ठ्या बोध्यते इत्याह—"पुरुषोपराग"—इति । पुरुषोपरागः=पुरुषसम्बन्धः, दर्पणस्य यथा मुखसम्बन्धः। ममेति प्रथमोंऽशः।

ननु—पुरुषेण बुद्धेः कः सम्बन्धः, न तावद्विषयविषयिभावाख्यः बुद्धेर्बुद्ध्य-परिणामित्वेन निर्विषयत्वात् । नच तादात्म्यञ्चिज्जडयोस्तादात्म्याभावादत आह— "बुद्धेः स्वच्छतया"—इति। सत्त्वोद्रेक एव बुद्धेः स्वाच्छ्यमिति भावः। तत्प्रति-बिम्बात्=तस्य पुरुषस्य तादात्म्यभ्रमादित्यर्थः। सोऽयं सम्बन्धो "योग्यतालक्षण" इत्यपि परिभाष्यतेऽस्मिन्दर्शने । तथाच—बुद्धौ पुरुषस्य तादात्म्याभावेऽपि स्वच्छतौपाधिक-तादात्म्यभ्रमसत्त्वात् यदारोपितैकत्वं स एव पुरुषोपराग इत्यर्थः। स्वरूपबुद्धौ पुरुषै-क्यस्याऽवर्त्तमानतया अवास्तवत्वे दृष्टान्तमाह—"दर्पणस्येव"—इति। दर्पणे मुख-सम्बन्धाभावेऽपि स्वच्छत्वरूपौपाधिप्रयुक्तमुखसम्बन्धो यथाऽध्यासिकः प्रतीयते, अर्थात् तादृशोपाधिप्रयुक्ताऽऽध्यासिकमुखसम्बन्धवत्त्वं यथा दर्पणे भाति, तद्वत् प्रकृतेऽपि बोध्यम्। सम्प्रति द्वितीयमंशं दर्शयति—"इदमिति"—इति । इदम्पदस्य घटादि-रूपविषयार्थकतया तत्सम्बन्धवत्त्वम्बुद्धौ स्वीकार्यमित्याह—"विषयोपराग"—इति। विषयोपरागः=विषयसम्बन्धः । तद्दर्शयति—"इन्द्रियप्रणालिकया"—इति । तदेतदधस्तात्कृतव्याख्यानम्। * निःश्वासेनाभिहतः यो दर्पणः तत्र यः मलिनिमा= मालिन्यम् । परिणतिभेदः="अयं घटः" इत्यादिज्ञानरूपः बुद्धेः परिणाम एव विषयेण=घटादिना । अर्थात् विभिन्ना विलक्षणा परिणतिरिति परिणतिभेदः।

* फूत्कारजन्यवायुसम्बन्धाज्जायमानदर्पणनिष्ठमलिनिमेवेत्यर्थ इति प्राचीना प्रभा।

"कृदभिहितो भावो * द्रव्यवत्प्रकाशते" इति न्यायात् भिद्यतेऽनेनेति व्युत्पत्त्या भेद-शब्दस्य वैलक्षण्यार्थकत्वात् "अयं घटः, अयम्पटः" इत्याकारप्रतीतिरेव विवक्षिता । तथाच—बुद्धौ घटाद्याकारकज्ञानपरिणामित्वैव विषयसम्बन्ध इति भावः । अयमेव ज्ञानमुपलब्धिर्वृत्तिरिति चोच्यते इति द्वितीयांशः ।

**"कर्त्तव्यमिति"**—इति । पूर्वोक्तपुरुषोपरागविषयोपरागाभ्यां कर्त्तव्यस्य= घटादेरवभासः । तेन "कर्त्तव्यम्" इति निश्चयात्मकोऽध्यवसायो व्यापारांश इत्यर्थः । इति तृतीयांशः । अत्रापि बुद्ध्या सह घटादेर्विषयस्य संयोगादिसम्बन्धाऽसम्भवात् कर्त्तव्यत्वाकारिज्ञानपरिणामित्वमेव बुद्धौ कर्त्तव्यतासम्बन्ध इति तु न विस्मर्त्तव्यम् ।

**"तेन"**—इति । बुद्धेर्ममेदं कर्त्तव्यमित्याकारकत्वेनेत्यर्थः । इत्थमंशत्रयवती पुरुषसम्बन्ध-विषयसम्बन्ध-व्यापारसम्बन्धरूपांशत्रयवती बुद्धिः । **तत्परिणामेन**= ज्ञानेन वृत्तिरूपेण । **पुरुषस्य**=निरतिशयचैतन्यस्वभावस्य । **अतात्त्विकः**=आरोपितः "चेतनोऽहङ्करोमि, चेतनोऽहञ्जानामि" इत्याकारकः पुरुषे ज्ञानपरिणामिबुद्धितादात्म्य-भ्रमरूपः सम्बन्धः । वस्तुतः पुरुषस्य असङ्गत्वात् । सोऽयमतात्त्विकः सम्बन्ध एव दर्पणस्य मलिनिम्नेव मुखस्य उपलब्धिरिति ख्यायते साङ्ख्ये कृतान्ते, नतु बुद्धिरेवो-पलब्धिरिति न्यायदर्शनं युज्यत इति भावः । अतात्त्विकभावे दृष्टान्तः— **"†दर्पणस्य"**—इति ।

तथा च "चेतनोऽहञ्जानामि" इत्याकारो बुद्धावारोपितस्य यः सम्बन्धोऽ-तात्त्विकः स उपलब्धिः नतु बुद्धिरेवोपलब्धिरिति, उच्यते=कथ्यते साङ्ख्यमते इति परः सारः । **"ज्ञानवत"**—इति । **अस्यायमर्थः**—ज्ञानम्=वृत्तिरूपम् यथा "अयं घट" इत्याकारकम् बुद्धिधर्मः तथा सुखाद्या अपि तस्या बुद्धे एव ‡ परिणामविशेषाः । **"कृतिसामानाधिकरण्येन"**—इति । कर्त्तृनिष्ठत्वेनाऽनुभवसिद्धत्वात् । अर्थात् "अहं करोमि" इति यत्र=यदधिकरणकः प्रत्ययः तत्रैव "अहं सुखी, अहं दुःखी" इत्यादि प्रत्ययोऽपि बोध्यः ।

---

* "कृदभिहितो भावो द्रव्यवद्भवती"ति "उपपदमतिङ्" ( २ । २ । १९ ) इति सूत्रभाष्य उक्तम् ।

† दर्पणमुखयोरसंसर्गाग्रहात् दर्पणनिष्ठमालिन्यस्य यथा मुखे भ्रमः तथा बुद्धिपुरुषयो-रसंसर्गाग्रहात् बुद्धिनिष्ठज्ञानपरिणामित्वस्यापि पुरुषे भ्रम इति भावः ।

‡ उक्तञ्च—"अध्यवसायो बुद्धिः । तत्कार्यं धर्मादि" (सां० द० २ । सू० १३, १४) साङ्ख्यतत्त्वकौमुद्याञ्च—

अध्यवसायो बुद्धिर्धर्मो ज्ञानं विराग ऐश्वर्यम् ।
सात्त्विकमेतद्रूपं तामसमस्माद्विपर्यस्तम् ॥ इति ।

ननु—चैतन्यं यदि बुद्धेर्धर्मो व्यर्थस्तर्हि चेतनात्मकपुरुषस्वीकार इतीमां शङ्कामपरिहरन्नाह—"नच"—इति । अर्थात् कृतिस्तु बुद्धेरेव धर्मः, साच परिणामनस्वभावा । न चेतना=पुरुषो नेत्यर्थः । अत एवाऽनित्येत्याशयवान् "नच" इत्यादिग्रन्थः । "इतिसाङ्ख्यम्"—इति । उक्तवक्ष्यमाणयुक्त्या खण्डितमित्यर्थ इति नैयायिकः समाधातुमाह । "कृत्यदृष्टभोगानाम्"—इति । कृतिः=प्रयत्नः । अदृष्टम्=धर्माधर्मौ । भोगः=सुखदुःखान्यतरसाक्षात्कारः । एते—कृत्यादयः यस्मिन्नधिकरणे प्रतीयन्ते तत्रैव चैतन्यस्यापि प्रतीति अर्थात् कृतिः स्वसमानाधिकरणमेवादृष्टञ्जनयति, अदृष्टं स्वसमानाधिकरणमेव भोगञ्जनयति इति कृत्यदृष्टभोगानाम्परम्परया सामानाधिकरण्यम्=एकाधिकरणवृत्तित्वम् तत्प्रतीतिवत् "चेतनोऽहङ्करोमि" इति प्रतीतिरपि एकाधिकरणवृत्तित्वसम्बन्धेनैव ज्ञेया । तस्माच्चैतन्यम्पुरुषस्वभावः कृत्यादयो बुद्धेरेवेति साङ्ख्यमतमसङ्गतमेव । "तद्भिन्न"—इति । कर्त्तृभिन्ने चेतने मानाभावात्=नैव प्रमाणम्पश्यामो यत इत्यर्थः । उक्तञ्च कुसुमाञ्जलावाचार्यैः—

* कर्त्तृधर्मा नियन्तारश्चेतिता च स एव नः ।
अन्यथानपवर्गः स्यादसंसारोऽथवा ध्रुवः ॥ इति ।

(मुक्ता०) चेतनोऽहं करोमीति प्रतीतिश्चैतन्यांशे भ्रम इति चेत् कृत्यंशे किं नेष्यते । अन्यथा बुद्धेर्नित्यत्वे मोक्षाभावोऽनित्यत्वे तत्पूर्वमसंसारापत्तिः । नन्वचेतनायाः प्रकृतेः कार्यत्वाद् बुद्धेरचैतन्यं कार्यकारणयोस्तादात्म्यादिति चेन्न, असिद्धेः । कर्तुर्जन्यत्वे मानाभावात् । वीतरागजन्मादर्शनादनादित्वम् । अनादेर्नाशासम्भवान्नित्यत्वम् । तत्किं प्रकृत्यादिकल्पनेन ।

(प्रभा०) साङ्ख्यः शङ्कते, नैयायिकश्च प्रतिक्षिपति—"चेतनोऽहम्"—इत्यादिना । उक्ताकारा प्रतीतिः=प्रत्ययः चैतन्यांशे=ज्ञानस्वरूपांशे भ्रमः=इत्यर्थः इति चेत्=हे ! साङ्ख्य ! ब्रूषे तर्हि कृत्यंशे=प्रयत्नांशे अपि भ्रम एव किम्=कुतः नेष्यते=न मन्यते भवता ।

अयमभिप्रायः—स्वभावतो जडापि बुद्धिः चेतनपुरुषसम्बन्धात् तत्प्रतिबिम्बोद्ग्राहिणी भूत्वा स्वस्यां मिथ्यैवाभिमानं धत्ते चेतनोऽहङ्करोमीति तस्माच्चैतन्यम्=ज्ञानं न कृत्यादिसमानाधिकरणकमिति साङ्ख्याशयः ।

---

* कर्त्तृधर्माः=कृतिसमानाधिकरणास्तावद्धर्माऽधर्मेच्छाद्वेषाद्याः नियन्तारः=भोगस्य कृतिसामानाधिकरण्यगमका एते । एवं यः चेतिता=चेतनः स एव नः=अस्माकं मते कृतिमान् अर्थात् कृतिमानेव चेतनः, अत एव चेतनोऽहं करोमीति प्रत्ययः । विपक्षे दूषणमाह—"अन्यथा"—इति । स्पष्टम्, टीकायां व्याख्यातप्रायश्चैतत् ।

नैयायिक उत्तरयति—"कृत्यंश"—इति। यदि चैतन्यांशे भ्रमम्मन्यसे तथैव युक्त्या कृत्यंशेऽपि भ्रमो मन्यताम् ? अर्थात् यथा चैतन्यम्पुरुषनिष्ठमपि बुद्धावरोपितम्, एवं कृतिरपि पुरुषनिष्ठा सती बुद्धौ भ्रमेण भासते, वस्तुतोऽसौ पुरुषधर्म एवेत्यपि स्वीक्रियताम्। तथाच तवानुमानबाधकमनुमानम्—"बुद्धिः कर्तृत्वाभाववती जन्यधर्माश्रयत्वात्" इति जानीहि। "अन्यथा"—इति। कर्तृचेतनयोर्भेदाङ्गीकारे। पृच्छामो वयं यत् बुद्धिर्नित्या अनित्या वा ? इत्याद्यपक्षमाश्रित्याह—"बुद्धेर्नित्यत्व"—इति। मोक्षाभावः=सर्वदैव बुद्धिपुरुषयोः सम्बन्धात्कस्यापि कदापि मुक्तिर्न स्यात्। द्वितीये दोषमाह—"तत्पूर्वम्"—इति। बुद्धेरुत्पत्तेः प्रथमतः असंसारापत्तिः=संसारो न भवेत्। सादिः संसारः स्यादित्यर्थः। ततश्च कृतनाशाऽकृताभ्यागमप्रसङ्गो भवेदित्याशयः।

अस्यायमाशयः—तव मते चेतने सुखदुःखयोरभावस्तत्र बन्धमोक्षव्यवहारः सर्वथाऽसम्भवी, तस्मादसौ बुद्धिसत्त्वासत्त्वहेतुक एव मन्तव्यः, तद्यदि बुद्धिर्नित्या तदा तद्धेतुकसंसारस्य सदातनत्वापत्तौ मोक्षाभावः। यद्यनित्या तदा तु उत्पत्तेः पूर्वम्बुद्धेरभावात्संसारोत्पत्तिरेव न स्यात्, अर्थात् बुद्ध्युत्पत्तेः पूर्वं संसारोत्पत्तिनिमित्तमदृष्टमेव न भविष्यति, तदभावे च कुतो बुद्धेरुत्पत्तिः, बुद्ध्यनुत्पत्तौ च कथं संसार इति। एवं सति संसाराभावे सर्वथा साङ्ख्यो निरुत्तरः।

पुनः शङ्कते स एव—"ननु"—इति। अचेतनायाः=जडायाः प्रकृतेः=प्रधानस्य कार्यत्वात् बुद्धेरचैतन्यम्=चेतनताया अभावः। अत्र हेतुमाह—"कार्यकारणयोस्तादात्म्यात्"—इति।

सिद्धान्ती खण्डयति—"न"—इति। "असिद्धेः"—इति। बुद्धिः प्रकृतिकार्यमित्यस्यासिद्धेरित्यर्थः। केचित्तु—असिद्धेः=मूलप्रकृतेरेवाऽसिद्धेः मूलप्रकृतौ प्रमाणाभावादिति भाव इति व्याचक्षते। "कर्त्तुः"—इति। "यः यः कर्त्ता स सः सर्वोऽपि जन्य एवे"त्यत्रापि प्रमाणाभावो यतः। कर्तृत्वस्य जन्यत्वेऽनुकूलतर्काभावादिति भावः। प्रत्युत तद्विपरीतानादित्वग्राहकतर्कसत्त्वादनादिरेव कर्त्ता इत्याह—"*वीतराग"—इति। न्यायदर्शनस्य तृतीयेऽध्याये प्रथमे आह्निके पञ्चविंशतितमं सूत्रमिदम्। सरागो जायत इति सूत्रस्यार्थार्थः। "अनादित्वम्"—इति। अयमर्थः—स्तन्यपाने या बालस्य प्रवृत्तिः सा इष्टसाधनताज्ञानं विना न भवति, तच्च नानुभवरूपम्बाधात्, किन्तु स्मरणरूपम्, तच्च संस्कारापेक्षम्, संस्काराश्चानुभवसापेक्षाः, अनुभवश्च अनुभवितारमन्तरा नोपपद्यते, ततश्च पूर्वजन्मसिद्धिः। ततोऽपि पूर्वप्रवृत्त्यनुरोधेन पूर्वम्पूर्वजन्म सिद्ध्यतीति जन्मप्रवाहस्यानादित्वे सुतराम्पुरुषस्याऽ-

---

* वीतरागो रागशून्यस्तावन्नोत्पद्यते, अपितु सरागः। तत्र च जन्मान्तरीयेष्टसाधनताज्ञानाधीनस्मरणं हेतुरिति निगूढाशयः।

नादित्वमिति । अनादेरित्यस्य भावस्येति शेषः * । जन्यभावत्वस्य नाशे कारणत्वमिति भावः । "तत्किम्"—इति । मूलप्रकृत्यादिकल्पनेन किम्प्रयोजनमित्यर्थः । तस्मात् प्रकृत्यादिकल्पना मुधैव साङ्ख्यानाम्पुरुषस्यैव कर्त्तृत्वात् । कृत्यादीनाञ्चैतन्यसामानाधिकरण्यस्य युक्तिसिद्धतया साङ्ख्यप्रक्रिया नैवादरार्हेति भावः ।

(मुक्ता०) नच—"प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः । अहङ्कारविमूढात्मा कर्त्ताहमिति मन्यते ॥" (गीता० अ० ३ श्लो० २७) इत्यनेन विरोध इति वाच्यम्, प्रकृतेरदृष्टस्य गुणैरदृष्टजन्यैरिच्छादिभिः कर्त्ताहमेवेत्यस्थ तदर्थत्वात् । "तत्रैवं सति कर्त्तारमात्मानं केवलन्तु यः" इत्यादि वदता भगवता प्रकटीकृतोऽयमुपरिष्टादाशय इति सङ्क्षेपः ।

(प्रभा०) पुनराशङ्क्य साङ्ख्यमतन्निरस्यति सिद्धान्ती—"नच"—इत्यादिना । प्रकृतिः=प्रधानं सत्त्वरजस्तमसां साम्यावस्थेति यावत् । तस्याः=गुणैः=सत्त्वादिलक्षणैः क्रियमाणानि=अनुष्ठीयमानानि कर्माणि=शुभाशुभलक्षणाः क्रियाः सन्तीति शेषः । अहङ्कारोऽहमिति प्रत्ययः महतः कार्यभूतः, तेन विमूढ आत्मा अन्तःकरणं यस्य तथाविधः पुरुषः अर्थात् अहमितिप्रत्ययविषयान्तःकरणागृहीतासंसर्गकः अहङ्कर्त्तेति मन्यते इति भगवदाशय इत्याशयेन सह विरोधस्तव नैयायिकस्य पुरुषनिष्ठकर्त्तृत्ववादिना इति साङ्ख्यस्य पूर्वपक्षः । अस्योत्तरमर्थान्तरयोजनया सिद्धान्ती दर्शयति—"प्रकृतेः"—इति । नहि प्रकृतिपदम्भवदभिमतप्रधानपरकम्, किन्तु जीवादृष्टपरकम् । तेन स्वतन्त्रकर्त्तृत्वाभाव एव प्रतिपाद्यते नतु कर्त्तृत्वसामान्याभाव इति भावः । तदर्थत्वात्=गीतार्थत्वात् । "अहमेव"—तथाच यः अदृष्टादिनिरपेक्षं केवलमात्मानं कर्त्तारम्मन्यते स एव मूढ इति भगवदभिप्रायः । अत्रैव किं गमकमित्युत्तरं गीतावचनमेव प्रमाणमाह—"तत्रैवम्"—इति ।

अधिष्ठानन्तथा कर्त्ता करणञ्च पृथग्विधम् ।
विविधाश्च पृथक् चेष्टा दैवञ्चैवात्र पञ्चमम् ॥ इति ।

इति पञ्चानामेव कर्त्तृत्वमुपपाद्य "तत्रैवम्"—इत्यादिना स्वतन्त्रकर्त्तृत्वस्यैव निषेधः कृतो भगवता । "सङ्क्षेप"—इति । यत्तु कार्यकारणयोरभेद इत्युक्तन्तदपि न पूर्वापरभावादिभेदेन † तद्भेदसिद्धेरित्याद्यधिकं विस्तरभीत्या नोक्तमित्यर्थः ।

इति साङ्ख्यमतखण्डनम् ।

---

* अत्र भावरूपस्यैवाऽभिधानात् प्रागभावव्यावृत्तिरित्याशयः ।

† कार्यकारणयोर्भेदसिद्धेरित्यर्थः ।

(का०) धर्माधर्माश्रयाध्यक्षो विशेषगुणयोगतः ॥४६॥

(मुक्ता०) धर्माधर्माश्रय इति । आत्मेत्यनुषज्यते । शरीरस्य तदाश्रयत्वे देहान्तरकृतकर्मणां देहान्तरेण भोगानुपपत्तेः । विशेषगुणयोगत इति । योग्यविशेषगुणस्य ज्ञानसुखादेः सम्बन्धेनात्मनः प्रत्यक्षत्वं सम्भवति न त्वन्यथा, अहञ्जाने अहङ्करोमीत्यादिप्रतीतेः ॥४६॥

(प्रभा०) "धर्माधर्माश्रय इति"—इति । अयमात्मा धर्माधर्मयोराश्रयः समवायेनाधिकरणम्, शरीरमेव कुतो नाश्रयो धर्मादेरित्याक्षेपसम्भावनयाऽऽह—"शरीरस्य"—इति । तदाश्रयत्वे=धर्माऽधर्माश्रयत्वे । देहान्तरकर्मणाम्=देहान्तरे कृतानि कर्माणि यैरिति समासेन देहान्तराऽवच्छेद्यकर्मविषयकसफलयत्नवतामित्यर्थः । देहान्तरेण=देहान्तरावच्छेदेन । "भोगानुपपत्तेः"—इति । सुखदुःखाऽनुभवानुपपत्तेरित्यर्थः । तथाच कृतविप्रणाशःकृताभ्यागमप्रसङ्गोऽनिवार्यः स्यात् । तदेतत् "शरीरदाहे पातकाभावात्" ( न्या० ३ । १ । ४ ) इति सूत्रभाष्ये बहु स्पष्टमिति गौरवभयान्नेह प्रपञ्चितम् । "अहञ्जाने"—इत्यात्मनो मानसप्रत्यक्षे हेतुरुक्तः । "विशेष"—इति । अध्यक्षः=प्रत्यक्षः । अर्थात् अहं सुखीत्याद्याकारकयोग्यविशेषगुणप्रकारेणैव आत्मप्रत्यक्षस्याऽनुभवसिद्धत्वम्बोध्यम् ॥ ४६ ॥

(का०) प्रवृत्त्याद्यनुमेयोऽयं रथगत्येव सारथिः ।
अहङ्कारस्याश्रयोऽयम्मनोमात्रस्य गोचरः ॥५०॥

(मुक्ता०) अयमात्मा परदेहादौ प्रवृत्त्यादिनाऽनुमीयते । प्रवृत्तिरत्र चेष्टा । ज्ञानेच्छाप्रयत्नादीनां देहेऽभावस्योक्तप्रायत्वाच्चेष्टायाश्च प्रयत्नसाध्यत्वाच्चेष्टया प्रयत्नवानात्माप्यनुमीयत इति भावः । अत्र दृष्टान्तमाह—रथेति । यद्यपि रथकर्मचेष्टा न भवति । तथापि तेन कर्मणा सारथिर्यथाऽनुमीयते तथा चेष्टात्मकेन कर्मणा परात्मापीति भावः । अहङ्कारस्येति अहङ्कारोऽहमिति प्रत्ययस्तस्याश्रयो विषयः आत्मा न शरीरादिरिति । मन इति । मनोभिन्नेन्द्रियजन्यप्रत्यक्षाविषयो मानसप्रत्यक्षविषयश्चेत्यर्थः । रूपाद्यभावेनेन्द्रियान्तरायोग्यत्वात् ॥५०॥

(प्रभा०) यद्यप्यात्मा प्रत्यात्मप्रत्यक्षः तथापि परस्य परदेहादौ न तथेति तत्र तस्यानुमानेन ज्ञानं कर्तुं सुशकमित्याह—"अयमात्मा"—इति । परदेहादौ=परकीयशरीरादौ । आदिना वीणादिपरिग्रह इति प्राचीना प्रभा । परकीयप्रयत्नवृत्त्यादेरतीन्द्रियत्वेन हेतुज्ञानासम्भवात् स्वरूपासिद्धिर्हेतुदोषः स्यादित्याह—"प्रवृत्तिरत्र"—इति । एतद्वाक्यघटकप्रवृत्तिपदलक्ष्यार्थश्चेष्टा इत्यर्थः । तथाच—"चैत्रशरीरञ्चेतनाधिष्ठितप्रवृत्तिमत्त्वात् रथवत्" इत्यनुमानम्फलितम् । शरीरे समवायेन चेष्टानुमितस्याऽ-

वच्छेदकतया प्रयत्नस्य समवायेनाश्रय आत्मैवेति भावः। "ज्ञानेच्छादीनाम्"—इति। "उक्तप्रायत्वात्"—इति। "शरीरस्य न चैतन्यम्मृतेषु व्यभिचारत" इत्यादिना ग्रन्थेन ज्ञानाभावस्य उक्तत्वात् इच्छादीनामभावस्य कण्ठतोऽनुक्तेश्च प्रायपदम्। "प्रयत्नवानात्मा"—इति। तथाच—"इदम्परकीयशरीरमवच्छेदकतासम्बन्धेन प्रयत्नवत् चेष्टावत्त्वात् मच्छरीरवत्" इत्येवमनुमानेन प्रयत्नसिद्धौ तदाश्रयतया परात्मा सिद्ध्यतीति भावः। दृष्टान्तासिद्धिमाशङ्क्य निराकरोति—"यद्यपि"—इति। "हिताहितप्राप्तिपरिहारानुकूलक्रिया चेष्टा" इति चेष्टाया लक्षणम्। सा च जडे रथादौ नार्हति भवितुम्, तथापि रथव्यापारेण यथा सारथेरनुमानं तथैव प्रयत्नजनितेन चेष्टात्मकेन कर्मणा परदेहस्थोऽप्यनुमातुं शक्यते। तथाचोत्तरदेशसंयोगयोग्यक्रियावत्त्वमेव "प्रवृत्तिमत्त्व"हेतुना विवक्षितमिति भावः।

"अहङ्कारस्य"—इति। तथाच आत्मन एव कर्तृत्वात् अहमितिशब्दबोध्योप्यात्मैवेति भावः। उक्तमेवार्थं स्फुटयति—"न शरीरादिः"—इति। "मनोभिन्ने०"—इति। तादृशप्रत्यक्षनिरूपितलौकिकविषयताशून्य इत्यर्थः। "मानसप्रत्यक्ष"—इति। मानसत्वाऽवच्छिन्नलौकिकविषयतावानित्यर्थः। आत्मनो मनोमात्रजन्यज्ञानविषयत्वे कारणमाह—"रूपाद्यभावेन"—इति ॥५०॥

(का०) विभुर्बुद्ध्यादिगुणवान्—

(मुक्ता०) विभुत्वम्परममहत्त्वम्। तच्च पूर्वोक्तमपि स्पष्टार्थमुक्तम्।

(प्रभा०) "परममहत्त्वम्"—इति। "कालखात्मदिशां सर्वगतत्वम्परमं महत्" इति २६ कारिकायां तथा "बुद्ध्यादिषट्कम्" इति कारिकायामुक्तमपि! तच्च=परममहत्त्वञ्चेत्यर्थः। तथाचात्मनि परममहत्त्वोपस्थितिं विना उक्तशङ्काया अपरिहारात् झटिति तदुपस्थित्यर्थम्पुनः कथनमिति भावः।

अत्रेदम्बोध्यम्—सर्वोऽयमात्मग्रन्थो न्यायाचार्यविश्वनाथेन सिद्धान्तरीत्या यथा प्रणीतस्तथैवार्षग्रन्थेषूपलभ्यते। तथाहि—

प्राणापाननिमेषोन्मेषजीवनमनोगतीन्द्रियान्तरविकाराः
* सुखदुःखेच्छाद्वेषप्रयत्नाश्चात्मनो लिङ्गानि ॥
(वै० अ० ३। आ० २। सू० ४)

प्रशस्तपादसङ्ग्रहेऽपि—"आत्मत्वाभिसम्बन्धादात्मा"—इत्याद्यभिधाय शरीरसमवायिनीभ्यां हिताहितप्राप्तिपरिहारयोग्याभ्याम्प्रवृत्तिनिवृत्तिभ्यां रथकर्मणा

---

* "सुखदुःखेच्छा"—इति। यस्तावत् गुणः स द्रव्याश्रितो दृष्टः, यथा रूपम्। सुखदुःखादयोऽपि गुणाः तैरपि क्वचिदाश्रितैर्भाव्यम्, नन्वेतेऽयावद्द्रव्यभाविनोऽहम्प्रत्ययसमानाधिकरणाः बाह्येन्द्रियाऽप्रत्यक्षाः सन्तः पृथिव्यादीनि द्रव्याणि कथञ्चिदप्याश्रयितुम्पारयन्ते, द्रव्येण च केनचित्तदाश्रयेण भाव्यम्, अतो यद् द्रव्यं सुखादीनामाश्रयः स एवात्मेति भावः।

सारथिवत् प्रयत्नवान् विग्रहस्याधिष्ठाताऽनुमीयते प्राणादिभिश्च" इति बहूक्तम् । तस्मादाधुनिकाः स्वयमप्रतिभातशास्त्रा न्यायमुक्तावलीं कपोलकल्पितां वदन्तः स्वयमेव तथा वेदितव्याः ।

बुद्ध्यादीति गुणवानिति--बुद्धिसुखदुःखेच्छादयश्चतुर्दशगुणाः पूर्वोक्ताः वेदितव्याः । "बुद्ध्यादि"--इति । स्पष्टम् ।

इति प्रभासहितायां न्यायमुक्तावल्या-
मात्मस्वरूपनिरूपणा नाम
तृतीया मुक्ता ।

---

(का०) बुद्धिस्तु द्विविधा मता ।
अनुभूतिः स्मृतिश्च स्यादनुभूतिश्चतुर्विधा ॥५१॥

(मुक्ता०) अत्रैव प्रसङ्गाद् बुद्धेः कतिपयं * प्रपञ्चं दर्शयति--बुद्धिस्त्विति । द्वैविध्यं व्युत्पादयति । अनुभूतिरिति । अनुभूतिश्चतुर्विधेति । एतासाञ्चतसृणां कारणानि चत्वारि "प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि" (१।१।३) इति सूत्रोक्तानि वेदितव्यानि ॥५१॥

(प्रभा०) आत्मनिरूपणानन्तरम्मनोद्रव्यनिरूपणे प्राप्ते तद्विहाय बुद्धि(गुण)-निरूपणप्रयोजनमाह--"अत्रैव प्रसङ्गाद्"--इति । स्मृतस्योपेक्षानर्हत्वरूपप्रसङ्गसङ्गतिवशादित्यर्थः । अनुभूतेश्चातुर्विध्ये महर्षिमूलम्मानयन्नाह--"सूत्रोक्तानि"--इति ।

अयम्भावः--प्रत्यक्षात्मिकैवानुभूतिरिति चार्वाकाः । अनुमितिरपीति कणादसुगतौ । उपमितिरपीति साङ्ख्याः । अर्थापत्तिरपीति प्राभाकराः । अनुपलब्धिरपीति भाट्टा वेदान्तिनश्च । सम्भवैतिह्ये अपीति पौराणिकाद्याः । तत्सर्वमयुक्तमिति सूचयितुमनुभूतेश्चातुर्विध्यमुक्तं न्यायशास्त्रप्रवर्त्तकगोतममुनिसूत्रञ्च प्रमाणत्वेनोद्धृतम् । "प्रत्यक्षानुमान"--इति । इदं सूत्रम्प्रथमाध्याये प्रथमाह्निकस्य तृतीयम् । प्रमाणचतुष्टयेषु अधिकानामन्तर्भावः न्यूनसङ्ख्यायाञ्च निर्वाहानुपपत्तिरिति बोध्यम् । एतच्चाग्रे १४० कारिकाव्याख्यायां स्फुटीकरिष्यामः ।

उक्तञ्च तार्किकरक्षायाम्--

प्रत्यक्षमेकञ्चार्वाकाः कणादसुगतौ पुनः ।
अनुमानञ्च † तच्चाथ साङ्ख्याः शब्दञ्च ते अपि ॥

---

* अत्र--प्रपञ्चशब्दो धर्मपरः, कतिपयशब्दश्च ईषत्परः तस्याऽभेदेन धर्मे अन्वयः, तस्य धात्वर्थेऽन्वयः । तथाच--बुद्धिविशेष्यकेषदभिन्नावान्तरधर्मप्रकारकज्ञानजनकशब्दाऽनुकूलकृतिमानिति बोध इति प्राचीना प्रभा । † तत्=प्रत्यक्षमित्यर्थः ।

न्यायैकदेशिनोऽप्येवमुपमानञ्च केचन ।
अर्थापत्त्या सहैतानि चत्वार्याह प्रभाकरः ॥
अभावषष्ठान्येतानि भाट्टा वेदान्तिनस्तथा ।
सम्भवैतिह्ययुक्तानि तानि पौराणिका जगुः ॥ ५१ ॥

(का०) प्रत्यक्षमप्यनुमितिस्तथोपमितिशब्दजे ।
घ्राणजादिप्रभेदेन प्रत्यक्षं षड्विधम्मतम् ॥५२॥

(मुक्ता०) इन्द्रियजन्यं ज्ञानम्प्रत्यक्षम् । यद्यपि मनोरूपेन्द्रियजन्यं सर्वमेव ज्ञानम्, तथापीन्द्रियत्वेन रूपेणेन्द्रियाणां यत्र ज्ञाने कारणत्वं तत्प्रत्यक्षमिति विवक्षितम् । ईश्वरप्रत्यक्षन्तु न लक्ष्यम् । "इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकम्प्रत्यक्षम्" (न्या० १।१।४) इति सूत्रे तथैवोक्तत्वात् ।

(प्रभा०) परममूले--"प्रत्यक्षमनुमितिः"--इति । प्रतिगतमक्षम्प्रत्यक्षम्=प्रतिगमकम्, इन्द्रियमिति व्युत्पत्त्या व्युत्पन्नः प्रत्यक्षशब्दः प्रत्यक्षप्रमाकरणमिन्द्रियम्बोधयति, तादृशेन्द्रियजन्यं ज्ञानम्प्रत्यक्षप्रमारूपाऽनुभूतिरित्यर्थः । एवमनुमीयतेऽनेनेत्यनुमानमनुमितिकरणम्, तज्जन्यं ज्ञानमनुमितिप्रमारूपा द्वितीयानुभूतिः । उपमीयतेऽनेनेति उपमानमुपमितिकरणम्, तज्जन्यं ज्ञानमुपमितिप्रमारूपा तृतीयानुभूतिः । शब्द्यते=प्रतिपद्यतेऽर्थोऽनेनेति शब्दः शाब्दीप्रमाकरणम्, तज्जन्यं ज्ञानं शब्दजा=शाब्दी प्रमारूपा चतुर्थी अनुभूतिरित्यर्थः । एवञ्चतुर्विधानामनुभूतीनां करणान्यपि चतुर्विधान्येवेति महर्षिगोतमसम्मतोऽयम्पक्ष इति सिद्धम् ।

उद्दिष्टासु प्रमासु प्रथमोपस्थितम्प्रत्यक्षं (प्रत्यक्षप्रमां) लक्षयति मुक्तावल्याम्--"इन्द्रियजन्यम्"--इति । इन्द्रियजन्यमिन्द्रियरूपादावप्यस्ति चक्षुरादीन्द्रियगतरूपादेश्चक्षुरादीन्द्रियजन्यत्वात अतस्तत्रातिव्याप्तिः स्यात्, तां वारयितुम् "ज्ञानम्" इत्युक्तम् । यदि "ज्ञानम्प्रत्यक्षम्" इत्येतावदेव उच्येत, तदा अनुमित्यादिप्रमासु अतिव्याप्तिः स्यादत "इन्द्रियजन्यम्" इत्युपात्तम् ।

तथाकृतेऽपि लक्षणेऽनुमित्यादावतिव्याप्तिस्तदवस्थैव सर्वस्यानुमित्यादिज्ञानस्य मनोरूपेणेन्द्रियेणापि जन्यत्वादित्याशयवान्छङ्कते--"यद्यपि"--इति । "सर्वमेव ज्ञानम्"--इति । जन्यज्ञानसामान्यमित्यर्थः । समाधत्ते--"तथापि"--इति ।

अयमाशयः--इन्द्रियत्वेन रूपेण "शब्देतरोद्भूतविशेषगुणानाश्रयत्वे सति" इत्याद्यग्रे इन्द्रियलक्षणं निरूपयिष्यते, तल्लक्षणलक्षितेनेन्द्रियत्वेन रूपेण यस्मिन् ज्ञाने इन्द्रियाणां करणता, तादृशं ज्ञानम्प्रत्यक्षमित्यभिप्रेतम् । मनसस्तु मनस्त्वेन रूपेण ज्ञानमात्रम्प्रति=अनुमित्यादिसकलसाधारणज्ञानम्प्रति करणता नत्विन्द्रियत्वेन

रूपेण, सुखादिसाक्षात्कारम्प्रत्येव मनस इन्द्रियत्वेन कारणता नत्वितरत्र, तथाच—ज्ञानमात्रम्प्रति साधारणं कारणं मनः, चक्षुरादीनीन्द्रियाणि तु तत्तद्रूपादिज्ञानम्प्रत्यसाधारणकारणानि, अतोऽनुमित्यादौ कथमपि नातिव्याप्तिः ।

परे तु—"इन्द्रियत्वेन"—इति । इन्द्रियत्वव्याप्यघ्राणत्वादिनेत्यर्थः । अन्ये तु—सन्निकर्षषट्कान्यतमत्वेनेत्यर्थ इत्यनेकधा व्याचक्रुः । तदीयपरिष्कारप्रकारो बालमतिव्यामोहनभीत्योपेक्षितः ।

ननु—ईश्वरप्रत्यक्षस्य इन्द्रियजन्यत्वाभावादव्याप्तिर्लक्षणदोषः ? अत आह—"ईश्वरप्रत्यक्षन्तु न लक्ष्यम्"—इति । जैवम्=जन्यम्प्रत्यक्षं लक्ष्यमित्यर्थः । अत्र पारमर्षं सूत्रम्प्रमाणयति—"इन्द्रियार्थसन्निकर्षोत्पन्नम्"—इति । इन्द्रियस्य=चक्षुरादेः अर्थेन=घटादिना सन्निकर्षात्=संयोगादिषड्विधव्यापारात् उत्पन्नम्=यदुत्पद्यते ज्ञानं तत् प्रत्यक्षम् । सूत्रे * भ्रमवारणाय † अव्यभिचारीत्युक्तम् । तच्च द्विविधम् । अव्यपदेश्यम्=निर्विकल्पम्, व्यवसायात्मकम्=सविकल्पमिति द्विविधम्प्रत्यक्षमित्यर्थ इत्यस्मिन् सूत्रे तथैवोक्तत्वात्=ईश्वरप्रत्यक्षाऽलक्ष्यत्वस्यैवाभिप्रेतत्वादित्यर्थः ।

(मुक्ता०) **अथवा ज्ञानाकरणकं ज्ञानम्प्रत्यक्षम् । अनुमितौ व्याप्तिज्ञानस्योपमितौ सादृश्यज्ञानस्य शाब्दबोधे पदज्ञानस्य स्मृतावनुभवस्य करणत्वात्तत्र तत्र नातिव्याप्तिः । इदं लक्षणमीश्वरप्रत्यक्षसाधारणम् । परामर्शजन्यं ज्ञानमनुमितिः । यद्यपि परामर्शप्रत्यक्षादिकम्परामर्शजन्यम्, तथापि परामर्शजन्यं हेत्वविषयकं यज्ज्ञानं तदेवानुमितिः । नच कादाचित्कहेतुविषयकानुमितावव्याप्तिरिति वाच्यम्, तादृशज्ञानवृत्त्यनुभवत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात् ।**

(प्रभा०) यदि तु जीवेश्वरसाधारणप्रत्यक्षज्ञानं लक्ष्यमभिप्रेत तदा लक्षणान्तरं करणीयमित्याह—"अथवा"—इति । "ज्ञानाकरणकम्"—इति । ज्ञानं न करणं यस्य तद् ज्ञानाकरणकम्, तादृशं ज्ञानम्प्रत्यक्षम् । "ज्ञान"पदेनात्र व्याप्तिज्ञानादेर्ग्रहणम् । तथाच—अनुमितिम्प्रति व्याप्तिज्ञानम्, उपमितिम्प्रति सादृश्यज्ञानम्, शाब्दबोधम्प्रति पदज्ञानं करणम्, प्रत्यक्षम्प्रति किमपि ज्ञानं न करणम् । एवं ज्ञानाकरणकं ज्ञानम्प्रत्यक्षमिति जीवेश्वरसाधारणमनुमित्यादावतिव्याप्तिशून्यञ्चेति निर्दुष्टमिदम्प्रत्यक्षप्रमालक्षणम् ।

ननु—कपोलकल्पितमिदं लक्षणं न सौत्रमिति चेत् ? भ्रान्तोसि—सूत्रस्थमिन्द्रियार्थसन्निकर्षोत्पन्नमितिपदं सावधारणम्, तेनाऽस्य "इन्द्रियार्थसन्निकर्षातिरिक्ता-

---

* "शुक्तौ इदं रजतम्" इति जायमानं ज्ञानमपि इन्द्रियार्थसन्निकर्षोत्पन्नम्, अतस्तत्राऽतिव्याप्तिवारणायेत्यर्थः । तथाच भ्रमभिन्नमिति फलितम् ।

† संवादिप्रवृत्तिजनकमित्यर्थः ।

नुत्पन्नम्" इत्यर्थः। अतिरिक्तश्चात्र ज्ञानमेव। तच्च दर्शितरीत्या व्याप्तिज्ञानादिकमेवेति मौलमिदं लक्षणं नायुक्तमित्येतत्सर्वमभिप्रेत्य "अनुमितौ"—इत्यारभ्य "इदं लक्षणमीश्वरप्रत्यक्षसाधारणम्"—इत्यन्तमुक्तम्। "व्याप्तिज्ञानस्य"—इत्यादि * पष्ठ्यन्तचतुष्टयस्य करणत्वादित्यनेनान्वयः।

प्रत्यक्षप्रमां लक्षयित्वा अनुमितिं लक्षयति—"परामर्श"—इति। व्याप्तिविशिष्टपक्षधर्मताज्ञानम्परामर्शः। तादृशपरामर्शजन्यं ज्ञानमनुमितिः। भवति हि "वह्निव्याप्यधूमवानयम्पर्वतः" इत्याकारकं ज्ञानं व्याप्तिविशिष्टधर्मताज्ञानरूपम्, स एव परामर्श इत्युच्यते, तज्जन्यम् "पर्वतो वह्निमान्" इत्याकारकं यज्ज्ञानं तदेवानुमितिरिति लक्षणसमन्वयः। अर्थात् उक्तपरामर्शरूपव्यापारद्वारा यस्य ज्ञानस्य व्याप्तिज्ञानञ्जनकम्, तादृशं यज्ज्ञानम् "पर्वतो वह्निमान्" इत्याद्याकारकं तदेवानुमितिरिति। एतच्च विस्तृतमग्रेऽनुमानखण्डे स्फुटीभविष्यति।

अनुमितिलक्षणेऽतिव्याप्तिं शङ्कते—"यद्यपि"—इति। "परामर्शप्रत्यक्षादिकम्"—इति। आदिना परामर्शध्वंसोऽपि। अयमर्थः—विषयविधया † परामर्शप्रत्यक्षम्परामर्शजन्यमेव। तथा—प्रतियोगिविधया च परामर्शध्वंसोऽपि परामर्शजन्यः स्वध्वंसम्प्रति स्वस्य कारणत्वात्। एवम्परामर्शजन्ये परामर्शप्रत्यक्षे परामर्शध्वंसे च भवत्येव दर्शितानुमितिलक्षणस्याऽतिव्याप्तिः।

समाधत्ते—"तथापि"—इति। "हेत्वविषयकम्"—इति। अयमर्थः—हेतुं यन्न विषयीकरोति तादृशं यद् "पर्वतो वह्निमान्" इत्याकारकं ज्ञानं तदेवानुमितिः। "वह्निव्याप्यधूमवानयम्पर्वत" इत्याकारके परामर्शज्ञाने धूमात्मको हेतुरपि भासते=विषयीभवति। तादृशज्ञानविषयके अनुव्यवसायात्मके परामर्शप्रत्यक्षेऽपि हेतुभानमावश्यकम्। ज्ञानेन यद् यद् विषयीक्रियते, ज्ञानज्ञानेनापि तदवश्यं विषयीक्रियत इति नियमसत्त्वात्। तथाच—विवक्षितप्रकारेण परामर्शप्रत्यक्षे नाऽनुमितिलक्षणस्याऽतिव्याप्तिः। "पर्वतो वह्निमान्" इत्याकारकज्ञानस्य हेत्वविषयकत्वात्परामर्शजन्यत्वाच्च।

ननु—"धूमवान् पर्वतो वह्निमान्" इत्याकारके कदाचिज्जायमानेऽनुमितिज्ञाने धूमहेतुरपि ‡ पक्षतावच्छेदकविधया भासते। तदेतज्ज्ञानमनुमितिरूपमपि हेत्वविषयकं नास्ति, किन्तु धूमात्मकहेतुविषयकमेवेत्यत्राऽव्याप्तिरेवोक्तलक्षणस्य § इत्यारेकाखण्डनाय "नच" इत्यारभ्य "विवक्षितत्वात्" इत्यन्तो ग्रन्थः।

---

* पष्ठ्यन्तचतुष्टयं व्याप्तिज्ञानस्य, सादृश्यज्ञानस्य, पदज्ञानस्य, अनुभवस्येति पदचतुष्टयम्।

† "वह्निव्याप्यधूमवन्तम्पर्वतम्पश्यामि" इति तत्प्रत्यक्षम्।

‡ पक्षनिष्ठविशेषणत्वेन रूपेण।

§ आरेका=आशङ्का।

"तादृशज्ञानवृत्ति"--इति । समाधानग्रन्थस्याऽयमर्थः । अत्र —तादृशज्ञानपदेन "व्याप्तिविशिष्टपक्षधर्मताज्ञानजन्यज्ञान"रूपोऽर्थो बोध्यः । तथाच—व्याप्तिविशिष्टपक्षधर्मताज्ञानजन्यं यदनुमित्यात्मकं ज्ञानम्, तस्मिन् वृत्तिर्वर्त्तनं यस्याः सा चासौ अनुभवत्वस्य व्याप्या जातिः । अर्थादनुमितित्वं तादृशजातिमत्त्वमेव प्रकृते "परामर्शजन्ये"त्यादिलक्षणवाक्येन विवक्षितम् । तेन "धूमवान् पर्वतो वह्निमान्" इत्याकारायामनुमितौ "हेत्वविषयकत्व"रूपलक्षणांशस्याभावेऽपि अनुमितित्वजातिरूपविवक्षितधर्मसत्त्वान्न क्षतिः=नाऽव्याप्तिरित्यर्थः ।

(मुक्ता०) अथवा व्याप्तिज्ञानकरणकं ज्ञानमनुमितिः । एवं सादृश्यज्ञानकरणकं ज्ञानमुपमितिः । पदज्ञानकरणकं ज्ञानं शाब्दबोधः । (वस्तुतस्तु—यां काञ्चिदनुमितिव्यक्तिमादाय तद्व्यक्तिवृत्तिप्रत्यक्षावृत्तिजातिमत्त्वमनुमितित्वम् । एवं यत्किञ्चित्प्रत्यक्षादिकमादाय तद्व्यक्तिवृत्त्यनुमित्यवृत्तिजातिमत्त्वम्प्रत्यक्षादिकं वाच्यमिति)। जन्यप्रत्यक्षं विभजते—घ्राणजादीति । घ्राणजं रासनञ्चाक्षुषं स्पार्शनं श्रौत्रम्मानसमिति षड्विधम्प्रत्यक्षम् । नचेश्वरप्रत्यक्षस्याविभजनान्न्यूनत्वम्, जन्यप्रत्यक्षस्यैव निरूपणीयत्वादुक्तसूत्रानुसारात् ॥ ५२ ॥

(प्रभा०) शरीरकृतं लाघवमभिसन्धाय लक्षणान्तरं वक्तुमाह--"अथवा"—इति । "व्याप्तिज्ञानकरणकम्"—इति । व्याप्तिज्ञानम्=अनुमानखण्डे वक्ष्यमाणम् । हेतुमन्निष्ठात्यन्ताभावाप्रतियोगिसाध्यसामानाधिकरण्यरूपाया व्याप्तेः प्रत्यक्षात्मकञ्ज्ञानम् "यत्र यत्र धूमस्तत्र तत्र वह्निः" इत्याकारकं साध्यहेत्वोः साहचर्यरूपं यदस्ति तत् ज्ञानं करणम्=व्यापारवदसाधारणं कारणं यस्य ज्ञानस्य तज्ज्ञानमनुमितिरित्यर्थः । "एवम्"—इति । सादृश्यज्ञानं करणं यस्य तज्ज्ञानमुपमितिः, पदज्ञानं करणं यस्य तज्ज्ञानं शाब्दबोध इति लक्षणकरणे कुत्रापि न दोषः । एतच्चाग्रे तत्र तत्र स्फुटीभविष्यति ।

ननु—अनुमित्यादिकम्प्रत्यपि न व्याप्तिज्ञानत्वादिना करणत्वम्, किन्तु मनस्त्वेनैव रूपेण कारणत्वमास्ताम्, अनुमित्यादिफलवैलक्षण्यञ्च सामग्रीभेदादेव भविष्यति । यथा प्रत्यक्षम्प्रति मनस्त्वेन करणत्वेऽपि चाक्षुषादिप्रमाभेदः चक्षुरादिसामग्रीनिबन्धनः । तथाच—दर्शितलक्षणानामसम्भवो दोष इत्यतः सिद्धान्तलक्षणमाह—"वस्तुतस्तु"—इति । "यां काञ्चित्"—इति । "पर्वतो वह्निमान्" इत्याद्यनुमितिव्यक्तिमात्रं गृहीत्वेत्यर्थः । तस्यां व्यक्तौ वृत्तिर्यस्याः, प्रत्यक्षे च अवृत्तिः=न वृत्तिर्यस्या एवम्भूता या जातिः, अर्थात् अनुमितित्वमेव तादृशजातिमत्त्वमेव अनुमितिलक्षणम् । "एवम्"--इति । एवमेव प्रत्यक्षादिष्वपि लक्षणं घटनीयम् । "प्रत्यक्षत्वादिकम्"—इति । यत्किञ्चिदुपमितिव्यक्तिवृत्तिप्रत्यक्षासमवेतजातिमत्त्वमुपमितित्वम् ।

यत् किञ्चिच्छाब्दबोधव्यक्तिमादाय तद्व्यक्तिवृत्तिप्रत्यक्षासमवेतजातिमत्त्वं शाब्दबोधत्वं निर्वाच्यमित्यर्थ । स्पष्टमन्यत् ।

ननु--ईश्वरप्रत्यक्षमपि सप्तमं कुतो नोक्तम् । तथाच--न्यूनता ग्रन्थस्येत्यत आह--'नच''—इत्यादिपूर्वपक्षोत्तरपक्षग्रन्थम् । "उक्तसूत्र"—इति । "इन्द्रियार्थ-सन्निकर्षोत्पन्नम्''—इत्यादिदर्शितसूत्रानुसारादित्यर्थः ॥ ५२ ॥

(का०) घ्राणस्य गोचरो गन्धो गन्धत्वादिरपि स्मृतः ।
तथा रसो रसज्ञायास्तथा शब्दोऽपि च श्रुतेः ॥५३॥

(मुक्ता०) गोचर इति ग्राह्य इत्यर्थः । गन्धत्वादिरिति । आदि-पदात् सुरभित्वादिपरिग्रहः । गन्धस्य प्रत्यक्षत्वात् तद्वृत्तिजातिरपि प्रत्यक्षा । गन्धाश्रयग्रहणे तु घ्राणस्य न सामर्थ्यमिति बोध्यम् । तथा रस इति । रसत्वादिसहित इत्यर्थः । तथा शब्दोऽपि शब्दत्वादिसहितः । गन्धो रसश्च उद्भूतो बोध्यः ॥ ५३ ॥

(प्रभा०) सम्प्रति येषामिन्द्रियाणां यस्य विषयस्य ग्रहणे शक्तिः तत् पृथक पृथक् दर्शयति परममूले—"घ्राणस्य"—इति । मूले—"गोचर"—इति । गोचरो ग्राह्यो विषय इत्यनर्थान्तरमित्यर्थः । "सुरभित्वादि०"—इति । आदिना गन्धत्व-व्याप्ये सुरभित्वासुरभित्वे ग्राह्ये । एवं गन्धाभावोऽपि घ्राणेन्द्रियग्राह्यः । "येनेन्द्रियेण यद्गृह्यते तेनेन्द्रियेण तद्गुणस्तन्निष्ठा जातिस्तदभावश्च गृह्यते" इति नियमात् "गन्धाश्रये"—इति । गन्धाश्रयः पृथिवी तस्या ग्रहणे साक्षात्कारे घ्राणेन्द्रियस्य न शक्तिरित्यर्थः । द्रव्यसाक्षात्कारे चक्षुषस्त्वचश्च सामर्थ्यं नत्वितरेषामिन्द्रियाणाम् तेषां योग्यविषयावभासकत्वनियमात । रसज्ञायाः=रसनेन्द्रियस्य रसत्वादिसहितो रसोऽपि गोचरः । अर्थात् रसो, रसत्वं जातिः, रसाभावश्चेति रसनेन्द्रियविषयाः । एवं श्रुतेः=श्रोत्रेन्द्रियस्य शब्दः, शब्दत्वं जातिः शब्दाभावश्चेति विषया ज्ञेयाः । "उद्भूत"—इति । तथाच—अनुद्भूतस्य गन्धस्य रसस्य च नैव प्रत्यक्षं जायते इति भावः ।

(का०) उद्भूतरूपं नयनस्य गोचरो
द्रव्याणि तद्वन्ति पृथक्त्वसङ्ख्ये ।
विभागसंयोगपरापरत्व—
स्नेहद्रवत्वम्परिमाणयुक्तम् ॥५४॥

(मुक्ता०) ग्रीष्मोष्मादावनुद्भूतरूपमिति न तत्प्रत्यक्षम् । तद्वन्ति उद्भूतरूपवन्ति ॥ ५४ ॥

(का०) * क्रिया जातिर्योग्यवृत्तिः समवायश्च तादृशः ।
गृह्णाति चक्षुः संयोगादालोकोद्भूतरूपयोः ॥५५॥

(मुक्ता०) योग्येति । पृथक्त्वादिकमपि योग्यवृत्तितया बोध्यम् तादृशः योग्यव्यक्तिवृत्तिरित्यर्थः । चक्षुर्योग्यत्वमेव कथम् ? तदाह—गृह्णातीति । आलोकसंयोग उद्भूतरूपञ्च चाक्षुषप्रत्यक्षे कारणम् । तत्र द्रव्यचाक्षुषम्प्रति तयोः समवायसम्बन्धेन कारणत्वम् । द्रव्यसमवेतरूपादिप्रत्यक्षे स्वाश्रयसमवायसम्बन्धेन द्रव्यसमवेतसमवेतस्य रूपत्वादेः प्रत्यक्षे स्वाश्रयसमवेतसमवायसम्बन्धेनेति ॥ ५५ ॥

(प्रभा०) "ग्रीष्मोष्मादौ"—इत्यादिना चूर्णप्रविष्टतेजःपरिग्रहः । "उद्भूतरूपवन्ति"—इति । नयनस्य गोचरा इति विभक्तिव्यत्ययेनान्वयः । गोचरशब्दोऽजहल्लिङ्गः । "योग्यवृत्तितया"—इति । प्रत्यक्षयोग्यव्यक्तिवृत्तितयेत्यर्थः । तेन परमाण्वादिगतपृथक्त्वसङ्ख्यादीनां न चाक्षुषं प्रत्यक्षम् । उद्भूतरूपवद्द्रव्यम्, पृथक्त्वम्, सङ्ख्या, विभागः, संयोगः, परत्वम्, अपरत्वम्, स्नेहः, द्रवत्वम्, परिमाणम्, प्रत्यक्षयोग्या क्रिया, जातिः तथा समवायश्चेति सर्वे चक्षुषो विषयाः । एतेषां चाक्षुषं प्रत्यक्षमित्यर्थः । "आलोकसंयोग"—इति । सौराद्यालोकस्य संयोगः=सन्निकर्षः, उद्भूतरूपञ्च एतद्द्वयं चाक्षुषप्रत्यक्षम्प्रति कारणं=हेतुः एतदभावे द्रव्यप्रत्यक्षानुपपत्तेः । एतयोः कारणतावच्छेदकसम्बन्धं दर्शयति—"तत्र"—इत्यादिना । "द्रव्यचाक्षुषम्प्रति"—इति । घटपटादिद्रव्यीयचाक्षुषसाक्षात्कारम्प्रति । "समवायसम्बन्धेन"—इति । तथाचात्र तयोः=आलोकसंयोगोद्भूतरूपयोः कारणतावच्छेदकसम्बन्धः समवायः, यतो घटालोकयोः संयोग उभयवृत्तिः, गुणगुणिनोश्च समवाय इति नियमः । एवम्—उद्भूतरूपमपि घटपटादिद्रव्ये समवायसम्बन्धेन वर्त्तते, विषयनिष्ठसाक्षात्कारम्प्रति समवायेनैव तयोर्हेतुतेति युक्तमुक्तम् "द्रव्यचाक्षुषम्प्रति"—इत्यादि । "द्रव्यसमवेतसमवेत"—इति । द्रव्ये=घटादौ समवेतं रूपम्, तत्र रूपत्वस्य समवायः, अतो द्रव्यसमवेतसमवेतं रूपत्वादि, तस्य रूपत्वादेः प्रत्यक्षे । "स्वाश्रयसमवेत"—इति । अत्र "स्व"पदेन आलोकसंयोगः उद्भूतरूपञ्च गृह्यते, तयोराश्रयः=अधिकरणं यद् घटादिद्रव्यम्, तत्र समवेतं रूपादिकम्, तत्र रूपत्वादेः समवायो वर्त्तते, जातिव्यक्त्योः समवायाभ्युपगमात् । एवंविधपरम्परासम्बन्धेन रूपत्वादिप्रत्यक्षे आलोकसंयोगोद्भूतरूपयोः कारणभावो ज्ञेयः ।

* क्वचित्क्वचित् "क्रियाजातिम्" इत्यादि द्वितीयान्तः पाठः । स न युक्तो भाति । तथासति "नयनस्य गोचर" इत्यनेनान्वयो नार्हति भवितुमिति । ननु—प्रथमान्तपाठेऽपि "गृह्णाति"पदेनान्वयो दुर्घट ? सत्यम् तत्र "एतान् पदार्थान्" इति पदद्वयाध्याहारे निराकाङ्क्षप्रतिपत्तिरस्त्येव ।

यद्यालोकसंयोगः कारणं न स्यात्, तदान्धकारेऽपि घटादीनाञ्चाक्षुषप्रत्यक्षं स्यात्, उद्भूतरूपञ्चेत् कारणं न स्यात् तदा पिशाचादीनामपि प्रत्यक्षापत्तिरनिवार्या स्यादित्युभयमावश्यकमिति भावः ॥ ५४, ५५ ॥

(का०) उद्भूतस्पर्शवद्द्रव्यं गोचरः सोऽपि च त्वचः।
रूपान्यच्चक्षुषो योग्यं रूपमत्रापि कारणम् ॥५६॥
द्रव्याध्यक्षे—

(मुक्ता०) उद्भूतस्पर्शवद्द्रव्यं त्वचो गोचरः। सोऽपि उद्भूतस्पर्शोऽपि स्पर्शत्वादिसहितः। रूपान्यदिति। रूपभिन्नं रूपत्वादिभिन्नं यच्चक्षुषो योग्यं तत् त्वगिन्द्रियस्यापि ग्राह्यम्। तथाच पृथक्त्वसङ्ख्यादयो ये चक्षुर्ग्राह्या गुणा उक्ताः, एवं क्रियाजातयो योग्यवृत्तयश्च ते त्वचा ग्राह्या इत्यर्थः। अत्रापि त्वगिन्द्रियजन्येऽपि रूपं द्रव्यप्रत्यक्षे कारणम्। तथाच बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षे रूपं कारणम्।

(प्रभा०) चाक्षुषप्रत्यक्षं निरूप्य त्वाचं निरूपयति—"उद्भूतस्पर्शवत्"—इति। "स्पर्शत्वादिसहित"—इति। उद्भूतस्पर्शः, स्पर्शत्वजातिः, स्पर्शाद्यभावश्च त्वगिन्द्रियस्य गोचर इत्यर्थः। "रूपभिन्नम्"—इति। रूपभिन्नं रूपत्वभिन्नं रूपाभावभिन्नं रूपत्वाभावभिन्नञ्चेत्यर्थः। यच्चक्षुषो योग्यं तत्। "तत्"—इति। तत्सर्वं पूर्वकारिकोक्तं त्वगिन्द्रियस्यापि विषयः। तदेव स्पष्टयति—"तथाच"—इति। अत्रापि=त्वाचे प्रत्यक्षेऽपि रूपं कारणम्। तदेव सङ्कलय्य दर्शयति—"तथाच"—इति। "बहिरिन्द्रियजन्य"—इति। बहिरिन्द्रियजन्ययावन्मूर्तद्रव्यप्रत्यक्षत्वावच्छिन्नम्प्रति रूपं कारणम्। तथाचास्मिन्मते वायुगतस्पर्शस्य त्वाचप्रत्यक्षे सत्यपि वायुर्न प्रत्यक्षः, किन्त्वनुमेय * एवेति भावः।

(मुक्ता०) नवीनास्तु—बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षे न रूपं कारणम्प्रमाणाभावात्। किन्तु चाक्षुषप्रत्यक्षे रूपम्, स्पार्शनप्रत्यक्षे स्पर्शः, कारणमन्वयव्यतिरेकात्। बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षमात्रे किं कारणमिति चेन्न किञ्चित्। आत्मावृत्तिशब्दभिन्नविशेषगुणवत्त्वं वा प्रयोजकमस्तु। रूपस्य कारणत्वे लाघवमिति चेन्न, वायोस्त्वगिन्द्रियेणाग्रहणप्रसङ्गात्। इष्टापत्तिरिति चेत्? उद्भूतस्पर्श एव लाघवात्कारणमस्तु। प्रभाया अप्रत्यक्षे त्विष्टापत्तिरेव किं नेष्यते। तस्मात् प्रभाम्पश्यामीतिवत् वायुं स्पृशामीति प्रत्ययस्य सम्भवाद्वायोरपि प्रत्यक्षं सम्भवत्येव।

* इत्थञ्च—"ज्ञेयः स्पर्शादिलिङ्गकः" इति, ""वायुर्हि स्पर्शशब्दधृतिकम्पैरनुमीयते" इति च ग्रन्थ एतन्मतानुरोधी ज्ञेयः।

बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षमात्रे न रूपस्य न वा स्पर्शस्य हेतुत्वम् । वायुप्रभयोरेकत्वं गृह्यत एव, क्वचिद् द्वित्वादिकमपि; क्वचित्सङ्ख्यापरिमाणाद्यग्रहो दोषादित्याहुः ॥ ५६ ॥

(प्रभा०) वायोः प्रत्यक्षत्ववादिनाम्मतमुपन्यस्यति—"नवीनास्तु"—इति । गङ्गेशोपाध्यायप्रभृतयो नव्या न्यायाचार्याः । अस्य "आहुः" इत्यनेनाग्रिमेण सम्बन्धः । "बहिरिन्द्रियजन्य"—इत्यादि । प्रमाणाभावात्=वायौ उद्भूतरूपाभावे अपि प्रत्यक्षोत्पत्त्या अन्वयव्यतिरेकसहकृतप्रत्यक्षप्रमाणाभावादित्यर्थः ।

* एषामयमाशयः—बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षज्ञानम्प्रति रूपमेव कारणमित्यत्र नैव किञ्चित्प्रमाणमुपलभामहे । किन्तु—रूपसत्त्वे चाक्षुषम्प्रत्यक्षं तदभावे तदभावः=चाक्षुषप्रत्यक्षाभावः । स्पर्शसत्त्वे त्वाचम्प्रत्यक्षम्, तदभावे तदभावः=स्पार्शनप्रत्यक्षाभावः इत्यन्वयव्यतिरेकबलेन चाक्षुषप्रत्यक्षम्प्रति रूपम्, त्वाचम्प्रति स्पर्शः कारणमस्तु । तेन च वायोरपि त्वाचम्प्रत्यक्षम्भवत्येवेति न वायुरनुमेयः ।

जरन्नैयायिकः शङ्कते—"बहिरिन्द्रिय"—इति । "प्रत्यक्षमात्र"—इति । प्रत्यक्षसामान्य इत्यर्थः । "किं कारणम्"—इति । किमनुगतं कारणमित्यर्थः । नव्यः समाधातुमाह—"न"—इति । न किमप्यनुगतं कारणम्, किन्तु—विशिष्यैव कार्यकारणभावः । यथाचोपरि दर्शितम् । कल्पान्तरमाह—"आत्मावृत्ति"—इति । अस्यायमर्थः—आत्मनि न वृत्तिर्यस्य तादृशो यः शब्दभिन्नो विशेषगुणः । अर्थात् पृथिव्यादिचतुष्टयवृत्तिः रूपादिरेव, तादृशगुणवत्त्वमेव=रूपादिविशेषगुण एव बहिरिन्द्रियजन्यप्रत्यक्षसामान्यम्प्रति हेतुरस्तु । अत्र आत्मनो बहिरिन्द्रियप्रत्यक्षवारणाय "आत्मावृत्ति"—इति । आकाशस्य बहिरिन्द्रियप्रत्यक्षवारणाय "शब्दभिन्न"—इति । कालादेस्तद्वारणाय "विशेष"—इति ।

† जरठः शङ्कते—"रूपस्य"—इति । ‡ लाघवम्=शरीरकृतलाघवमित्यर्थः । नवीनः समाधत्ते—"न"—इति । तत्र हेतुमाह—"वायोस्त्वगिन्द्रियेण"—इति । अग्रहणप्रसङ्गात्=त्वाचप्रत्यक्षाभावप्रसङ्गादित्यर्थः । अर्थात् यदि बाह्यद्रव्यप्रत्यक्षसामान्यम्प्रति रूपं कारणं तदा वायोस्त्वाचम्प्रत्यक्षं न भविष्यति । विशिष्य कार्यकारणभावकल्पने तु नैव दोषः । प्राचीन इष्टापत्त्या दोषाभावं स्वीकरोति—"इष्टापत्तिः"—इति । अस्मन्मते स्पर्शेन=लिङ्गेन वायुरनुमेय एव न प्रत्यक्ष इति भावः ।

---

* एषाम्=नवीनानाम् ।

† प्राचीनो नैयायिक इत्यर्थः ।

‡ "लाघवम्"—इति । चाक्षुषप्रत्यक्षम्प्रत्युद्भूतरूपत्वेन, स्पार्शनम्प्रत्युद्भूतस्पर्शत्वेन कारणत्वकल्पने तादृशान्यतरावच्छिन्नम्प्रति उद्भूतरूपत्वादिघटितान्यतरावच्छिन्नत्वस्य प्रयोजकत्वकल्पने च गौरवात्, तादृशान्यतरत्वावच्छिन्नम्प्रति उद्भूतरूपत्वेन कारणतायां लाघवमित्यर्थः ।

नवीनो विनिगमनाविरहम्मन्वानः प्रकारान्तरेण समाधत्ते—"उद्भूत-स्पर्श"—इति । बहिर्द्रव्यमात्रप्रत्यक्षत्वाऽवच्छिन्नम्प्रति उद्भूतस्पर्श एव कारणमस्तु, अर्थात् यथा भवान् लाघवबललोभेन रूपं कारणम्मन्यते, तथैव समानयुक्त्या तत्र उद्भूतस्पर्श एव कारणम्मन्यतां को दोषः ?

ननु—एवं सति प्रभायाः प्रत्यक्षं न भविष्यति, तत्रोद्भूतस्पर्शाभावात् अत आह—"प्रभाया"—इति । अप्रत्यक्षत्वे=प्रत्यक्षाभावे । यथा—वायोरप्रत्यक्षत्वे इष्टापत्तिः, तथा प्रभाया अप्रत्यक्षत्वे एवेष्टापत्तिरभ्युपगम्यतां विनिगमनाभावात् ।

नवीन उपसंहरति—"तस्मात्"—इति । उक्तबाधकसत्त्वादित्यर्थः । "किं नेष्यत"—इति । तथाच प्रभायाः प्रत्यक्षत्वस्य उभयाऽनुमतत्वेन अप्रत्यक्षत्वस्योभयोरप्यनिष्टत्वेन अनिष्टप्रसञ्जनात्मकतर्कसत्त्वाद्वायोरप्रत्यक्षत्वं नाङ्गीकार्यमिति भावः । "प्रभाम्पश्यामि" इति प्रभाविषयकचाक्षुषप्रत्यक्षवत् "वायुं स्पृशामि" इति वायुविषयकत्वाचप्रत्यक्षमपि स्वीक्रियतां समानप्रतीतिबलादिति नव्यनैयायिकस्य हृदयम् । एतदेव स्वयं स्फुटीकरणं वदति—"बहिरिन्द्रियजन्य"—इति । पृथक् पृथगेव कार्यकारणभाव इत्यर्थः । नव्यः स्वपक्षे युक्त्यन्तरमाह—"वायुप्रभयोः"—इति । "अयमेकः पौरस्त्यो वायुः" "इमौ द्वौ दक्षिणोत्तरानिलौ" इति वायुगतसङ्ख्यायाः यथा त्वगिगिन्द्रियेण ग्रहः, तथैव वायोरपि ग्रहः । यथा "इयमेका सौरी प्रभा" "इमे द्वे प्रभे" इति प्रभागतसङ्ख्यायाश्चक्षुषा ग्रहो भवति तद्वदित्यर्थः । तथाच—द्वयोरेव भिन्नम्भिन्नम्प्रत्यक्षमिति परः सारः । "क्वचित्"—इति । प्रभयोर्वायोश्च विलक्षणसंयोगाभावस्थले इत्यर्थः । आदिना परिमाणग्रहः । "द्वितीयोऽयम्महान् वायुः" इति प्रत्ययादिति भावः । "सङ्ख्यापरिमाणाद्यग्रह"—इति । सजातीयसंवलनादिरूपदोषादित्यर्थः । "आहुः" इत्यनेनास्वरसः सूचितः, तद्वीजन्तु वायोः प्रत्यक्षतासन्देहेन लाघवान्मूर्त्तद्रव्यप्रत्यक्षत्वावच्छिन्नम्प्रति = यावन्मूर्त्तद्रव्यप्रत्यक्षम्प्रति रूपत्वावच्छिन्नं कारणमित्येवं कार्यकारणभावो युक्तः । अधिकं दिनकर्यादौ द्रष्टव्यम् ।

अत्रेदमाभाति—द्रव्यचाक्षुषमात्रम्प्रति महत्त्वोद्भूतरूपवत्त्वम्, द्रव्यस्पार्शनमात्रम्प्रति महत्त्वोद्भूतस्पर्शवत्त्वञ्च हेतुरिति पर्यवसितम् । तथापि बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षत्वावच्छिन्नम्प्रति किं नियामकमिति भवत्येवाकाङ्क्षा ।

ननु—महत्त्वोद्भूतस्पर्शवत्त्वमेवास्तु नियामकमिति चेत् ? प्रभायाः प्रत्यक्षं न भविष्यति । इष्टापत्तिरिति चेत् ? प्रभायास्तेजोरूपत्वात् "प्रभाम्पश्यामि" इति प्रतीतेश्च अनिष्टापत्तिरेव सा । अथ इयम्प्रतीती "रूपम्पश्यामि" इति वत् (प्रभायाः) द्रव्यत्वाभावेऽप्युपपन्नेति चेत् ? "प्रभा चलति" "प्रभा शुक्ला" इति प्रत्ययः कथम् ? भ्रान्तिरूपोऽयम्प्रत्यय इति चेत् ? बाधकम्ब्रूहि, बाधकप्रत्ययं विना पूर्वप्रत्ययस्य भ्रमत्वायोगात् । अस्तु तर्हि उद्भूतरूपवत्त्वमेव बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षमात्रम्प्रति हेतुः ?

एवं सति वायोः ऊष्मादेश्च स्पार्शनम्प्रत्यक्षं न भविष्यति । नैव भवतीति स्वीकुर्मं इति चेत् ? शरीरपवनसंयोगानन्तरम् "शीतो वायुः" "अनुष्णो वायुः" इत्यादिकज्ञायमानं स्पार्शनम्प्रत्यक्षं वारयतु भवान् ।

ननु—स्पर्शमात्रगोचरं एवाऽयम्प्रत्ययो नतु द्रव्यगोचर इति चेत् ? "वायुं स्पृशामि" इत्याकारकानुव्यवसायापलापः कथम् ? कथन्तराञ्च वायुविशेष्यकत्वभानम् । अपिच—महत्त्वोद्भूतस्पर्शवत्त्वस्यैव बाह्यद्रव्यप्रत्यक्षमात्रम्प्रति कारणत्वमुच्यतां प्रभायाः प्रत्यक्षत्वाभावश्चेष्टम्मन्यताम् ?। "प्रभाम्पश्यामि" इति प्रत्यक्षे बलवान् महदुद्भूतरूपवत्त्वस्य कारणभाव इति चेत् । "वायुं स्पृशामि" इत्यत्र प्रत्ययेऽपि दृष्टिपातो विधीयताम् ।

ननु—एवं कश्चिदेव सिद्धान्तो न निर्गत इति चेत् ? बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षत्वावच्छिन्नम्प्रति न तादृशं रूपं नवा तादृशः स्पर्शः कारणम् । किन्तु—तत्र विभुवृत्तिभिन्नविशेषगुणवत्त्वमेव तन्त्रमस्तु । तथाच—द्वयोरपि प्रत्यक्षत्वे न किञ्चिद्बाधकमित्येष एव न्यायसिद्धान्तमञ्जर्यादिसारसारः * ॥ ५६ ॥

(का०) त्वचो योगो मनसा ज्ञानकारणम् ।

(मुक्ता०) त्वङ्मनःसंयोगो ज्ञानसामान्ये कारणमित्यर्थः । किन्तत्र प्रमाणम्, सुषुप्तिकाले त्वचं त्यक्त्वा पुरीतति वर्त्तमानेन मनसा ज्ञानाऽजननमिति ।

(प्रभा०) जन्यज्ञानमात्रस्य साधारणकारणमाह—"त्वचोयोग"—इति । "ज्ञानसामान्य"—इति । जन्यज्ञानमात्र इत्यर्थः । अत्र प्रमाणम्पृच्छति—"किं तत्र"—इति । उत्तरयति—"सुषुप्तिकाल"—इति । "ज्ञानाजननम्" इत्यत्र प्रमाणमित्यनुषज्यते । निद्रानाड्यवच्छिन्नात्ममनोयोगः † सुषुप्तिः । इयमेव—गाढा निद्रा इत्युच्यते । निद्रानाडी पुरीतत् । अत्र श्रुतिः—"हिता नाम नाड्यो द्वासप्ततिसहस्राणि

---

* इत्थञ्च—"ज्ञेयः स्पर्शादिलिङ्गकः"—इत्यादिर्वायोरनुमेयोक्तिः प्राचाम्मतमनुरुध्यैव । विश्वनाथस्य स्वकम्मतमपीदमेवाभाति अत्र—"आहु"रित्यस्वरसोद्भावनादिति विभावयामः ।

† सुषुप्तेरुत्पत्तिक्रममित्थमाचक्षते नव्याः । तथाहि—प्रथमं सुषुप्त्यनुकूलमनःक्रियया मनसाऽऽत्मनो विभागः, तत आत्ममनःसंयोगनाशः, ततः पुरीतदात्मकोत्तरदेशेन मनसः संयोग उत्पद्यते सैव सुषुप्तिः ।

अत्रेदम्बोध्यम्—साङ्ख्यमते सुषुप्तिर्द्विधा अर्धलय-समग्रलयभेदात् । अर्धलये विषयाकारा वृत्तिर्न भवति, किन्तु स्वगतसुखदुःखमोहाकारैव बुद्धिवृत्तिर्जायते । समग्रलये तु बुद्धेर्वृत्तिसामान्याभावो मरणादाविव भवति । एतच्च—"सुषुप्त्याद्यसाक्षित्वम्" (सां० अ० १ । सू० १४८) इत्यत्र भिक्षुणा व्याख्यातम् । मायावादिमते तु—समग्रलये तु जीवः परमात्मनैक्यमाप्नोति ।

हृदयात्पुरीततमभिप्रतिष्ठन्ते ताभिः प्रत्यवसृप्य पुरीतति शेते" (बृहदा० ५।१।२१) इति। यदि त्वङ्मनःसंयोगो ज्ञानसामान्यम्प्रति कारणं न भवेत् तदा सुषुप्त्यवस्थायामपि ज्ञानेन भाव्यम्, परं तदा किमपि ज्ञानं न भवति, तस्मात् तत्र ज्ञानानुत्पत्तिरेवात्र * प्रमाणमित्यर्थः।

(मुक्ता०) ननु—सुषुप्तिकाले किं ज्ञानम्भविष्यति, अनुभवरूपं स्मरणरूपं वा ?। नाद्यः अनुभवसामग्र्यभावात्। तथाहि—प्रत्यक्षे चक्षुरादिना मनःसंयोगस्य हेतुत्वात्तदभावादेव न चाक्षुषादिप्रत्यक्षम्। ज्ञानादेरभावादेव न मानसम्प्रत्यक्षम्। ज्ञानाद्यभावे चात्मनोऽपि न प्रत्यक्षमिति। एवं व्याप्तिज्ञानाभावादेव नानुमितिः। सादृश्यज्ञानाभावान्नोपमितिः। पदज्ञानाभावान्न शाब्दबोधः इत्यनुभवसामग्र्यभावान्नाऽनुभवः। उद्बोधकाभावाच्च न स्मरणम्। मैवम्। सुषुप्तिप्राक्कालोत्पन्नेच्छादिव्यक्तेस्तत्सम्बन्धेनात्मनश्च प्रत्यक्षत्वप्रसङ्गात्। तदतीन्द्रियत्वे मानाभावात्। सुषुप्तिप्राक्काले निर्विकल्पकमेव नियमेन जायत इत्यत्राऽपि प्रमाणाभावात्।

(प्रभा०) सुषुप्तौ त्वङ्मनःसंयोगसत्त्वेऽपि ज्ञानसम्भावनैव नेति मन्वानः शङ्कते—"ननु"—इति। विकल्पयति—"अनुभवरूपम्"—इत्यादिना। प्रथमपक्षं निराकरोति—"नाद्य"—इति। अनुभवसामग्र्या अभावं दर्शयति—"तथाहि"—इति। "प्रत्यक्ष"—इति। चतुर्विधेष्वनुभवेषु आद्योऽनुभवः प्रत्यक्षन्नाम, तत्र चाक्षुषप्रत्यक्षम्प्रति चक्षुर्मनःसंयोगः कारणम्, त्वाचम्प्रति त्वङ्मनःसंयोगो रासनम्प्रति रसनेन्द्रियमनोयोग इत्यादि स्वयमूह्यम्। किन्तु—सुषुप्तौ तत्तदिन्द्रियसंयोगात्मकसामग्र्या अभावादेव न बाह्यः प्रत्यक्षात्मकोऽनुभव इत्यर्थः।

ननु—बाह्यम्प्रत्यक्षम्माभूत् मानसन्तु स्याद् अत आह—"ज्ञानादेरभावादेव"—इति। अस्यायमाशयः—द्विविधो मानसोऽनुभवः, आत्मगतज्ञानादिगुणविषयकः आत्मविषयकश्च। तत्र—ज्ञानादेर्विशेषगुणस्याभावान्नाद्यः। ज्ञानादियोग्यगुणसम्बन्धेनैव आत्मनोऽपि मानसम्प्रत्यक्षं नान्यथेति कृत्वा योग्यविशेषगुणात्मकप्रत्यक्षसामग्र्यन्तर्गतस्य ज्ञानादेरभावादेव द्वितीयोऽपि नेति ग्रन्थकार्थः।

"व्याप्तिज्ञानाभावादेव"—इति। व्याप्तिज्ञानं साहचर्यनियमात्मकं वक्ष्य-

---

एतच्च—"स्वाप्ययात्" (ब्र० सू० १।१।९) इत्यत्र "यत्रैतत्पुरुषः स्वपिति नाम"—(छां० ६।८।१) इति श्रुतिमूलकं विपरीतम्भगवच्छङ्करपादैः। मध्वमते—"स यथा प्रियया स्त्रिया सम्परिष्वक्तः" (बृहदा० ६।३।१) इति श्रुत्या जीवः सुषुप्त्यवस्थायाम्परमात्मनः आलिङ्गनमात्रम्प्राप्नोति। तस्मात्परमात्मालिङ्गनावस्थैव सुषुप्तिः। प्रपञ्चस्त्वन्यतो ज्ञेयः।

* अत्र=जन्यज्ञानसामान्ये।

माणम् "यत्र धूमस्तत्र वह्निः" इत्यादिरूपम् । "नानुमितिः"—इति । अनुमितिम्प्रति तस्य करणत्वादिति भावः । "सादृश्यज्ञानाभावात्"—इति । अनुयोगितासम्बन्धेन तद्गतभूयोधर्मवत्त्वं यत् सादृश्यं तस्य ज्ञानम् । यथा "घटसदृशः पटः" यथा वा—"गोसदृशो गवय" इत्याद्याकारकं तदभावादेव । "नोपमितिः"—इति । उपमितेः सादृश्यज्ञानजन्यत्वादित्यर्थः । "पदज्ञानाभावात्"—इति । "शक्तम्पदम्" इति वक्ष्यमाणलक्षणकम्पदम्, तस्य ज्ञानम् । यथा—"घटो घटपदवाच्य" इत्याकारकम्, अर्थात् पदीयशक्तिज्ञानम्, तस्याभावादित्यर्थः । "न शाब्दबोधः"—इति । वाक्यार्थबोधो नेत्यर्थः । शाब्दबोधम्प्रति पदज्ञानस्य करणत्वात् । "इत्यनुभव"—इति । अनया रीत्या अनुभवात्मकज्ञानसामग्री सुषुप्तौ नास्ति, अत एवाऽनुभवात्मकं ज्ञानमपि तत्र नास्तीति भावः ।

ननु—अस्तु तत्र स्मरणात्मकं ज्ञानम् ? अत आह—"उद्बोधकाभावात्"—इति । स्मृतिप्रयोजकाभावादित्यर्थः । संस्कारजन्यञ्ज्ञानं स्मृतिः । संस्काराश्च * सादृश्यादिज्ञानद्वारा उद्बुद्धाः सन्त एव स्मृतिञ्जनयन्ति नानुद्बुद्धाः, सुषुप्तौ च संस्कारोद्बोधकं किमपि कारणं नास्ति, अतस्तत्र स्मृतिरपि नेत्याशयः । तस्मात्सुषुप्तौ त्वङ्मनोयोगे सत्यपि तत्तज्ज्ञानसामग्र्यभावान्न ज्ञानसम्भावना, तत्कथं सुषुप्तौ ज्ञानाऽजननं ज्ञानसामान्यम्प्रति त्वङ्मनोयोगस्य कारणभावाय गमकं स्यादित्याक्षेप्तुराशयः ।

तदेतत् खण्डयितुमाह—"नैवम्"—इत्यादि । "सुषुप्तिप्राक्काल"—इति । सुषुप्तिप्राक्काले=यंस्मिन् क्षणे सुषुप्तिस्तदव्यवहिते पूर्वस्मिन् क्षणे, उत्पन्ना या इच्छादिव्यक्तिः=इच्छाया आदिरिति व्युत्पत्त्या ज्ञानव्यक्तिः="अयङ्घटः, अयम्पटः" इत्याकारकं यत् किमपि ज्ञानमित्यर्थः, तत्सम्बन्धेन=† संयुक्तसमवायसम्बन्धेन "अहं सुखी, अहं ज्ञानवान्" इत्याकारकं यदात्मनः प्रत्यक्षं तस्य प्रसङ्गोऽवश्यम्भावी, यदि त्वङ्मनःसंयोगो ज्ञानसामान्यम्प्रति कारणम्मन्येत । मम तु तदा त्वङ्मनःसंयोगाभावादेव सुषुप्तेः पूर्वक्षणे विद्यमानायामपि यस्यां कस्याञ्चिज्ज्ञानव्यक्तौ नैवात्मनः प्रत्यक्षमिति सिद्धान्तग्रन्थार्थः । नन्वास्तां तदतीन्द्रियमेवेत्यत आह—"तदतीन्द्रियत्व"—इति । ज्ञानातीन्द्रियत्व इत्यर्थः । मानाभावात्=प्रत्यक्षादिप्रमाणाभावात् ।

ननु—निर्विकल्पकत्वात् सुषुप्तिप्राक्कालीनं ज्ञानमतीन्द्रियमित्यत आह—"सुषुप्तिप्राक्काल"—इति । नहि प्रकारताविशेष्यतासंसर्गतानवगाहिज्ञानं नियमेन सुषुप्तिपूर्वक्षणे उत्पद्यत इति भावः ।

(मुक्ता०) अथ ज्ञानमात्रे त्वङ्मनःसंयोगस्य यदि कारणत्वन्तदा

---

* आदिना प्रणिधानादीनां सङ्ग्रहः । एते च—स्मृतिहेतवः "प्रणिधाननिबन्धाभ्यासलिङ्गलक्षणसादृश्य"—(न्या० ३ । २ । ४) इति सूत्रोक्ता वेदितव्याः ।

† मनःसंयुक्त आत्मा, तस्मिन् समवायः इच्छादिव्यक्तेः=दर्शिताकारस्य ज्ञानस्येत्यर्थः ।

रासनचाक्षुषादिप्रत्यक्षकाले त्वाचप्रत्यक्षं स्यात्। विषयत्वक्संयोगस्य त्वङ्मनःसंयोगस्य च सत्त्वात्। परस्परप्रतिबन्धादेकमपि वा न स्यादिति। अत्र केचित्—पूर्वोक्तयुक्त्या त्वङ्मनोयोगस्य ज्ञानहेतुत्वे सिद्धे चाक्षुषादिसामग्र्याः स्पार्शनादिप्रतिबन्धकत्वमनुभवानुरोधात्कल्प्यते इति। अन्ये तु—सुषुप्त्यनुरोधाच्चर्ममनःसंयोगस्य ज्ञानहेतुत्वं कल्प्यते। चाक्षुषादिप्रत्यक्षकाले त्वङ्मनःसंयोगाभावान्न स्पार्शनप्रत्यक्षमिति वदन्ति।

(प्रभा०) त्वङ्मनःसंयोगस्य ज्ञानसामान्यम्प्रति कारणभावमसहमानः शङ्कते—"अथ"—इति। रासनचाक्षुषादिप्रत्यक्षादिकाले=आम्रादिरसानां रसनेन्द्रियजन्यप्रत्यक्षकाले आम्ररूपादिगतचक्षुरिन्द्रियजन्यप्रत्यक्षकाले वा त्वाचप्रत्यक्षम्=त्वगिन्द्रियजन्यं स्पर्शादिप्रत्यक्षमपि स्यात्। अत्र हेतुमाह—"विषयत्वक्संयोगस्य"—इति। विषयः=आम्रादिरेव। त्वक्संयोगस्य ज्ञानमात्रम्प्रति कारणत्वात् तेन सह त्वङ्मनःसंयोगस्य च सत्त्वात्।

ननु—चाक्षुषादिसामग्र्याः इन्द्रियसन्निकर्षरूपायाः स्पार्शनादिप्रतिबन्धकत्वं कल्पयिष्यते इत्यत आह—"परस्पर"—इति। रासनसामग्र्याः चाक्षुषप्रतिबन्धकत्वात् चाक्षुषसामग्र्या रासनप्रतिबन्धकत्वात् परस्परप्रतिबन्धकत्वम्। एकमपि=*किमपि रासनं वा चाक्षुषं वा ज्ञानं न स्यादित्यर्थः।

ज्ञानसामग्रीषु परस्परम्प्रतिबन्धकप्रतिबध्यभावस्य कल्पनायान्तु विषयेन्द्रियसंयोगस्य इन्द्रियमनःसंयोगस्य च सर्वत्र सत्त्वात् किमपि ज्ञानं न जायेत। संयोगरूपायास्तस्याः परस्परप्रतिबन्धकत्वादिति भावः।

ज्ञानसामान्यम्प्रति त्वङ्मनःसंयोगस्य कारणवादी समाधत्ते—"अत्र केचित्"—इति। पूर्वोक्तयुक्त्या=सुषुप्तिकाले त्वचं त्यक्त्वा पुरीतति वर्त्तमानेन मनसा ज्ञानाजननमित्याकारिकया युक्त्या इत्यर्थः। त्वङ्मनोयोगस्य ज्ञानहेतुत्वे=ज्ञानकारणत्वे सिद्धे=प्रमाणसम्पन्ने। चाक्षुषादिसामग्र्याः=चक्षुःसंयोगादिरूपायाः स्पार्शनादिप्रतिबन्धकत्वम्=त्वाचादिप्रत्यक्षप्रतिबन्धकत्वम्=त्वाचादिप्रत्यक्षविघटकत्वम्।

अस्याऽयमर्थः—चाक्षुषादिप्रत्यक्षसामग्री स्पार्शनप्रत्यक्षप्रतिबन्धिका तेन चाक्षुषादिज्ञानकाले त्वङ्मन संयोगसत्त्वेऽपि न स्पार्शनम्प्रत्यक्षमिति†। एतदेव कुत इत्यत आह—"अनुभवानुरोधात्"—इति। अनुभवबलादित्यर्थः। कल्प्यते=अनुमीयते। तथाचायम्प्रयोगः—घटचक्षुरिन्द्रियसन्निकर्षः स्पार्शनप्रत्यक्षप्रतिबन्धकः "रूपी घटः‡" इत्याकारकज्ञानजनकत्वात् यन्नैवं तन्नैवमिति।

* किमपि=किञ्चिदपीत्यर्थः।

† एकम्फलबलेनान्यत्रापि घटनीयम्।

‡ रूपविशिष्टघटविषयकज्ञानजनकत्वादित्यर्थः।

अत्रैव पक्षधरमिश्रमतमाह—"अन्ये तु"—इति । सुषुप्त्यनुरोधेन=सुषुप्तौ ज्ञानानुत्पादानुरोधेन । चर्ममनःसंयोगस्य=त्वगिन्द्रियगोलकस्थानेन सह मनः-संयोगस्य । ज्ञानहेतुत्वम्=ज्ञानसामान्यम्प्रति कारणत्वम् । कल्प्यते=अनुमीयते । एतेन कल्पेन चाक्षुषादिप्रत्यक्षकाले उक्तस्पार्शनापत्तिरूपो दोषो नास्ति, तदा मनसः त्वगिन्द्रियेण साकं सन्निकर्षाभावात्, नापि च प्रतिबध्यप्रतिबन्धकभावकल्पनागौरव-मित्यभिसन्धाय आह—"त्वङ्मनःसंयोगाभावात्"—इत्यादि । अत्र बहु वक्तव्यं ग्रन्थगौरवभयान्नोक्तम् ।

(का०) मनोग्राह्यं सुखं दुःखमिच्छा द्वेषो मतिः कृतिः ॥५७॥

(मुक्ता०) मनोग्राह्यमिति । मनोजन्यप्रत्यक्षविषयमित्यर्थः । मति-र्ज्ञानम् । कृतिः प्रयत्नः । एवं * सुखत्वादिकमपि मनोग्राह्यम् । एव-मात्मापि मनोग्राह्यः । किन्तु मनोमात्रस्य गोचर इत्यनेन पूर्वमुक्तत्वा-दत्र नोक्तः ॥ ५७ ॥

(प्रभा०) मनसोऽसाधारणविषयानाह परममूले—"मनोग्राह्यम्"—इति । मनोग्राह्यत्वस्य सार्वत्रिकत्वादाह—"मनोजन्य"—इति । मनोमात्रजन्येत्यर्थः । न्यूनताम्परिहरति—"एवम्"—इति । आत्माऽपि मनोग्राह्य इति चेत् कुतस्तर्हि कारिकायां तथा नोक्त इति शङ्कां वारयति—"किन्तु"—इति ।

(का०) ज्ञानं यन्निर्विकल्पाख्यं तदतीन्द्रियमिष्यते ।
महत्त्वं षड्विधे हेतुरिन्द्रियं करणं मतम् ॥५८॥

(मुक्ता०) चक्षुःसंयोगाद्यनन्तरं घट इत्याकारकं घटत्वादिविशिष्टं ज्ञानं न सम्भवति पूर्वं विशेषणस्य घटत्वादेर्ज्ञानाभावात् । विशिष्टबुद्धौ विशेषणज्ञानस्य कारणत्वात् । तथाच प्रथमतो घटघटत्वयोर्वैशिष्ट्या-नवगाह्येव ज्ञानञ्जायते । तदेव निर्विकल्पम् । तच्च न प्रत्यक्षम् ।

(प्रभा०) एवमिन्द्रियगोचरम्प्रत्यक्षमुक्त्वा इन्द्रियगोचरो यत् तदाह परममूले—"ज्ञानं यत्"—इति । निर्गतो विकल्पः प्रकारतादिकृतो विशेषो यस्मात् तत् निर्विकल्पम् । निर्विकल्पमाख्या यस्य तन्निर्विकल्पाख्यम्, तथाभूतं यज्ज्ञानं तदिन्द्रिया-ण्यतिक्रम्य वर्त्तत इति । अतीन्द्रियम्=इन्द्रियागोचर इत्यर्थः । इष्यते=नैयायिकै-रिति शेषः । उक्तञ्च तार्किकरक्षायाम्—

नामादिभिर्विशिष्टार्थविषयं सविकल्पकम् ।
अविशिष्टार्थविषयम्प्रत्यक्षं निर्विकल्पकम् ॥ इति ।

* क्वचित्—सुखत्वदुःखत्वादिकमिति पाठः । तत्र—आदिपदात् ज्ञानत्वेच्छात्वादेः परिग्रह इत्येवं व्याख्येयम् ।

नामादिविशेषणवैधुर्येण स्वलक्षणमात्रविषयं निर्विकल्पकम्। विशेष्यविशेषण-सम्बन्धैतत्त्रितयातिरिक्तविषयतानिरूप्यमित्यर्थः।

अयम्भावः--निर्विकल्पके चतुर्थी विषयता स्वीक्रियते, नतु त्रिविधविषयता-मध्ये कापि तत्रास्ति विषयता। अत एव यथा "इदं किञ्चित्" इति तदुदाहरन्ति। भट्टपादोऽपि--

अस्ति ह्यालोचनं ज्ञानम्प्रथमं निर्विकल्पकम्।
बालमूकादिविज्ञानसदृशं शुद्धवस्तुजम्॥ इति।

शुद्धवस्तुजम्=विशेषणविशेष्यभावानुल्लेखीत्यर्थः। एतत्सर्वं हृदि कृत्वा विवृणोति मुक्तावलीकारः--"चक्षुःसंयोगाद्यनन्तरम्"-इति। तस्याऽयमर्थः--घटचक्षुः-संयोगानन्तरञ्जायमानम् "अयङ्घट' इत्याकारकं ज्ञानं घटत्वादिप्रकारकघटत्ववद्विशेष्यक-स्वरूपं यद्विशिष्टं ज्ञानम्, तादृशं न सम्भवति=नोत्पद्यते, न भवितुमर्हतीत्यर्थः। अत्र हेतुमाह--"पूर्वम्"--इति। पूर्वम्=घट इति ज्ञानाऽव्यवहितप्राक्क्षण इत्यर्थः। विशेषणस्य="घट" इति ज्ञाननिरूपितविशेषणताश्रयस्य घटत्वादेर्ज्ञानाभावात्=घटत्वादि-निष्ठविशेषणताविषयिण्या बुद्धेरभावादित्यर्थः।

ननु--घटत्वज्ञानाभावे "घट" इति ज्ञानाभावः कुतो हेतोरित्यत आह--"विशिष्टबुद्धौ"--इति। विशिष्टबुद्धौ=विशिष्टज्ञाने विशेषणज्ञानस्य=धर्मज्ञानस्य कारणत्वात्। "नागृहीतविशेषणा बुद्धिर्विशिष्ट उपजायते" इति नियमादिति भावः। एतदेव पिण्डीकृत्य दर्शयति--"तथाच"--इति। घटघटत्वयोः=विशेष्यविशेषणयोः धर्मिधर्मयोरित्यर्थः। वैशिष्ट्यानवगाहि-एव=विशेष्यत्व प्रकारत्व-संसर्गत्वाऽविषयक-मेव ज्ञानञ्जायते। तदेव=उक्ताकारं वैशिष्ट्यनिष्ठसांसर्गिकविषयतानिरूपितविषयिता-शून्यमेव निर्विकल्पकम्भवतीति शेषः। तच्च=निर्विकल्पकं न प्रत्यक्षम्=इन्द्रियार्थ-सन्निकर्षजन्यं नेत्यर्थः। लौकिकविषयताशून्यमित्यत्र तात्पर्यमाभाति। तथाच--"अयङ्घट इति विशिष्टबुद्धिर्विशेषणज्ञानजन्या विशिष्टबुद्धित्वात् दण्डी पुरुष इति विशिष्टबुद्धिवत्" इति निर्विकल्पेऽनुमानम्मानम्फलितम्।

अत्राऽयम्बालहितः सरलसारःपन्थाः--"अयङ्घट" इत्याकारकञ्ज्ञानं विशिष्ट-ञ्ज्ञानम्। यतोऽस्मिन् ज्ञाने घटघटत्वे तयोः सम्बन्धश्च भासते। तत्र घटत्वं विशेषणम्, घटो विशेष्यः, तयोः जातिव्यक्तिरूपयोः परस्परं यः समवायः सः सम्बन्धः। एतत्त्रितयमेव चोक्ताकारेण ज्ञानेन विषयीक्रियते। विशिष्टज्ञानञ्च विशेषणज्ञानपूर्वक-मेवेत्यस्ति नियमः। ततश्च यत्पूर्वं घटघटत्वयोर्विशकलितम्=पृथक् पृथक् ज्ञानमासीत्, तदेव वैशिष्ट्यानवगाहि "इमे घटघटत्वे" इत्याकारकं निर्विकल्पकमित्युच्यते। तच्च न प्रत्यक्षम् (किन्तु दर्शितरीत्याऽनुमेयम्)।

(मुक्ता०) तथाहि--वैशिष्ट्यानवगाहिज्ञानस्य प्रत्यक्षं न भवति,

घटमहञ्जानामीति प्रत्ययात् । तत्रात्मनि ज्ञानम्प्रकारीभूय भासते । ज्ञाने घटस्तत्र घटत्वम्, यः प्रकारः स एव विशेषणमित्युच्यते । विशेषणे यद्विशेषणं तद्विशेषणतावच्छेदकमित्युच्यते । विशेषणतावच्छेदकप्रकारकं ज्ञानं विशिष्टवैशिष्ट्यज्ञाने कारणम् । निर्विकल्पके च घटत्वादिकं न प्रकारस्तेन घटत्वादिविशिष्टघटादिवैशिष्ट्यभानं ज्ञाने न सम्भवति । घटत्वाद्यप्रकारकञ्च घटादिविशिष्टज्ञानं न सम्भवति, जात्यखण्डोपाध्यतिरिक्तपदार्थज्ञानस्य किञ्चिद्धर्मप्रकारकत्वनियमात् ।

(प्रभा०) यथेत्थं तथोपपादयति--"तथाहि"--इत्यादिना । वैशिष्ट्यानवगाहिज्ञानस्य=विशेष्यताविशेषणतासंसर्गताऽविषयकस्य ज्ञानस्य प्रत्यक्षं न भवति, अर्थात् उक्तज्ञानमनुव्यवसाये न भासते, किन्तु विशिष्टमेव भासते । अत्रोपपत्तिमाह--"घटमहञ्जानामि"--इति । अयमर्थः--ज्ञानस्य ज्ञानमनुव्यवसाय इत्युच्यते । तस्यायमाकारः "घटमहञ्जानामि" इति । तत्र=अस्याम्प्रतीतौ आत्मनि ज्ञानम्प्रकारीभूय=विशेषणीभूय विशेषणतारूपेण भासते=प्रतीयते । "घटज्ञानवानहम्" इतिज्ञाने=एतस्मिन्ननुव्यवसायात्मके ज्ञाने तु घटः=घटो विशेषणतारूपेण भाति, तादृशे विशेषणताभावमापन्ने घटे च घटत्वम्=जातिरूपो धर्मः "प्रकारीभूय भासते" इति पूर्वेणान्वयः । प्रकारविशेषणयोः पर्यायताम्बोधयति—"यः प्रकार"--इति । प्रकारो विशेषणमित्यनर्थान्तरमित्यर्थः । "विशेषणे"--इति । विशेषणे=ज्ञानविशेषणीभूते घटे यत् घटत्वं विशेषणं तदेव "विशेषणतावच्छेदकम्" इति शास्त्रसङ्केतः । "विशेषणतावच्छेदकप्रकारकम्"--इति । विशेषणतावच्छेदकम्=घटत्वम्प्रकारो यस्य तादृशं यज्ज्ञानम् "अयङ्घट" इत्याकारकं विशिष्टज्ञानं तदेव विशिष्टवैशिष्ट्यज्ञाने= "घटमहञ्जानामि" इत्याकारके अनुव्यवसायात्मके ज्ञाने कारणम्=हेतुरित्यर्थः । इत्थञ्च— प्रथमं विशकलितरूपेण जायमानं घटत्वादिविशेषणज्ञानं वैशिष्ट्यानवगाह्येव स्वीकर्त्तुमुचितम् । अन्यथा--"अयङ्घट" इति विशिष्टज्ञानमेव नोत्पद्येत, तदभावे च "घटमहञ्जानामि" इति विशिष्टवैशिष्ट्याद्यवगाहि ज्ञानमपि न स्यात् ।

एतत्समर्थयति--"निर्विकल्पक"--इति । "न प्रकार"--इति । अर्थात् घटत्वादिधर्माणाम्प्रकारतारूपेण नैव भानं निर्विकल्पके, तेन हेतुना घटत्वादिविशिष्टा ये घटाद्याः तेषां वैशिष्ट्यभानम्=विशेषणतावगाहि ज्ञानम्, ज्ञाने=निर्विकल्पकाख्ये नैव जायत इत्यर्थः । "घटत्वाद्यप्रकारकम्"--इति । घटत्वादिः न प्रकारो विशेषणं यस्मिन् तादृशं यज्ज्ञानम् । अर्थात् घटादिरेव यत्र * प्रकारः तज्ज्ञानं विशिष्टमेव न सम्भवति ।

* यत्र घटादिरेव केवलम्प्रकारत्वेन भासते, नतु घटत्वादि तज्ज्ञानं विशिष्टमेव न भवतीत्यर्थः ।

**अयमत्राशयः**—यदि प्रथमं निर्विकल्पकज्ञानं न स्वीक्रियेत तदा "अयङ्घट" इति घटघटत्वादिविशिष्टं सविकल्पकञ्ज्ञानमपि न स्वीकर्त्तव्यं स्यात् तत्तु न, "घटमहञ्जानामि" इत्यबाधितानुव्यवसायप्रतीतिबलात्तस्य स्वीकर्त्तव्यत्वात्। तस्मात्सविकल्पकज्ञानात्पूर्वं घटघटत्वयोर्यत् पृथक् पृथक् प्रकारतादिशून्यञ्ज्ञानं तदवश्यं निर्विकल्पकमेव। तथाच प्रयोगः--"अयङ्घट" इति विशिष्टज्ञानं विशेषणज्ञानजन्यं विशिष्टज्ञानत्वात् "दण्डी पुरुष" इति विशिष्टज्ञानवदिति।

ननु—विशेषणज्ञानमपि ज्ञानत्वात्सविकल्पकं किं न स्यादिति चेत्? न, तस्यापि सविकल्पकत्वे अनवस्थाप्रसङ्गान्निर्विकल्पकसिद्धिरिति तत्साधूक्तम्--"अतीन्द्रियम्"--इति। * अत्रैव हेतुमाह--"जात्यखण्डोपाध्यतिरिक्त"--इति। जातिर्घटत्वादिः। अखण्डोपाधिः=प्रतियोगित्वादिः। तथाच--घटत्वादिजातिभ्यः प्रतियोगित्वानुयोगित्वाद्यनिर्वचनीयधर्मेभ्योऽखण्डोपाधिपदवाच्येभ्योऽतिरिक्तानां भिन्नानाम्पदार्थानां यज्ज्ञानम्, तस्य † किञ्चिद्धर्मप्रकारकत्वनियमः। किञ्चिद्धर्मः प्रकारो यस्मिन् तादृशो नियमः।

**अयं सारः**--जात्यादिधर्माणां निरवच्छिन्नञ्ज्ञानम्, तद्भिन्नानाञ्जातिमदादिपदार्थानाञ्ज्ञानन्तु केनचिद्विशेषणेनावच्छिन्नमेव भवतीति नियमः। तस्मादवश्यमादौ घटत्वादिविशेषणानां निर्विकल्पकज्ञानस्वीकारः।

**प्राभाकरास्तु**—निर्विकल्पकं नाङ्गीकुर्वन्ति। एषां विशेषणज्ञानस्य विशिष्टज्ञानम्प्रति कारणतैव न भवति, द्रव्यविशिष्टप्रत्यक्षे प्रतिसन्धानविशिष्टोऽपि हेतुः।

यदाहुः--

विशेषणं विशेष्यञ्च सम्बन्धं लौकिकीं स्थितिम्।
गृहीत्वा सङ्कलय्यैतत् तथा प्रत्येति नान्यथा॥

इति पदार्थरत्नमालाकारः।

**तदयमत्र सारसारः**--नामजात्यादियोजनारहितं निष्प्रकारकम्=विशेषणमात्रज्ञानं वस्तुस्वरूपमात्रग्रहणस्वभावं निर्विकल्पकमिति **नैयायिकाः**। यथा—"किञ्चिदिदम्" इति। अथवा--दूरात् "अस्ति किञ्चित्" इति। अलौकिक आलोचनात्मको ज्ञानविशेषस्तदिति **साङ्ख्याः**। ज्ञातृज्ञेयादिविभागशून्यब्रह्मात्मैक्यविषयमखण्डाकारकं विशेष्यविशेषणसम्बन्धरहितञ्ज्ञानं तदिति **अद्वैतवादिनः**।

**(मुक्ता०) महत्त्वमिति। द्रव्यप्रत्यक्षे महत्त्वं समवायसम्बन्धेन कारणम्। द्रव्यसमवेतानां गुणकर्मसामान्यानाम्प्रत्यक्षे स्वाश्रयसमवाय-**

---

* विशेषणज्ञानस्य निर्विकल्पकत्व एव।

† अयमाशयः—घटस्य जात्यखण्डोपाध्यतिरिक्तत्वेन तत्र घटत्वरूपः किञ्चिद्धर्मः प्रकारो वाच्यः। तस्माद् घटत्वाद्यप्रकारकञ्च घटादिविशिष्टज्ञानं न सम्भवतीति सुष्ठूक्तम्।

सम्बन्धेन कारणम् । द्रव्यसमवेतसमवेतानां गुणत्वकर्मत्वादीनाम्प्रत्यक्षे स्वाश्रयसमवेतसमवायसम्बन्धेन कारणमिति ।

(प्रभा०) परममूले--'षड्विध"--इति । उक्तरूपे षड्विधे प्रत्यक्षे अर्थात् चाक्षुषे रासने, घ्राणजे, श्रोत्रजे, त्वाचे, मानसे च महत्त्वं कारणम् । लौकिकविषयतासम्बन्धेन जन्यप्रत्यक्षसामान्यम्प्रति महत्त्वं नियतपूर्ववृत्तीत्यर्थः । तन्महत्त्वं केन केन सम्बन्धेन कुत्र कुत्र कारणमिति विवरीतुमाह--"द्रव्यप्रत्यक्ष"--इत्यादि । द्रव्यवृत्तिलौकिकविषयतासम्बन्धेन चाक्षुषम्प्रति स्पार्शनम्प्रतीत्यर्थः । "समवायसम्बन्धेन"--इति । महत्त्वस्य गुणत्वात् द्रव्यत्वस्य च गुणित्वाद् गुणगुणिनोः समवायाङ्गीकारात् । यत्र द्रव्ये महत्त्वं समवेतं तस्यैव प्रत्यक्षं नान्यस्येत्यर्थः । "स्वाश्रय"--इति । 'स्व"पदेन महत्परिमाणग्रहः तदाश्रयो द्रव्यम्, तत्र गुणकर्मसामान्यानि समवेतानि यतः । अर्थात् गुणादीनां समवायो महत्परिमाणस्याश्रयभूते द्रव्ये वर्त्तते । अतो हेतोः उक्तसम्बन्धेन गुणादीनाम्प्रत्यक्षम्, महत्त्वस्य च तत्र हेतुभावः । "द्रव्यसमवेतसमवेतानाम्"--इति । द्रव्ये घटादौ समवेताः गुणाद्याः, तत्र समवेताः गुणत्वाद्याः, तेषामित्यर्थः । स्वाश्रयसमवेतेत्यत्रापि "स्व"पदेन महत्त्वं गृह्यते, तदाश्रयो द्रव्यम्, तत्र समवेताः गुणाद्याः, तेषु समवेता गुणत्वाद्या इत्यर्थः ।

(मुक्ता०) इन्द्रियमिति । अत्रापि षड्विध इत्यनुषज्यते । इन्द्रियत्वं तु न जातिः पृथिवीत्वादिना साङ्कर्यप्रसङ्गात् । शब्देतरोद्भूतविशेषगुणानाश्रयत्वे सति ज्ञानकारणमनःसंयोगाश्रयत्वमिन्द्रियत्वम् । आत्मादिवारणाय सत्यन्तम् । उद्भूतविशेषगुणस्य शब्दस्य श्रोत्रे सत्त्वाच्छब्देतरेति । विशेषगुणस्य रूपादेश्चक्षुरादावपि सत्त्वादुद्भूतेति ।

(प्रभा०) परममूले--"इन्द्रियं करणम्"--इति । एतस्यार्थं योजयितुमाह मूले--"अत्राऽपि"--इति । "अनुषज्यत"--इति । "महत्त्वं षड्विधे हेतुः"--इति कारिकायां स्थितं षड्विधमिति पदमनुषज्यते सम्बध्यत इत्यर्थः । तथाच---चाक्षुषत्वादिप्रत्येकधर्मावच्छिन्ननिरूपितव्यापारसम्बन्धावच्छिन्नकारणताश्रयीभूतं यत्, तत् इन्द्रियविभाजकचक्षुष्ट्वादिप्रत्येकधर्मावच्छिन्नमित्यर्थः । तादृशकारणतावच्छेदकाः चक्षुष्ट्वादिप्रत्येकधर्मा इति भावः । एवम्--षड्विधे प्रत्यक्षे इन्द्रियं करणमित्युक्तम् । करणलक्षणमनुपदं वक्ष्यते । इन्द्रियाणि नाना, इन्द्रियत्वञ्चैको धर्मः सकलेन्द्रियवृत्ति, * तस्मादिन्द्रियत्वञ्जातिरूपो धर्मः, ततश्च तेनैव जातिरूपेण इन्द्रियत्वेन धर्मेणैव हेतुतास्तु, निरुक्तरीत्या कार्यकारणभावषट्कापेक्षया लाघवञ्च स्यादिति शङ्कां वारयितुमाह--"इन्द्रियत्वम्"--इति । न जातिः=किन्तु सखण्डोपाधिः । जातित्वाभावे सङ्करम्बाधकमाह--"पृथिवीत्वादिना"--इति । अयमर्थः--पृथिवीत्वं विहाय

* नित्यत्वे सत्यनेकसमवेतत्वाद् घटत्वादिवदित्यर्थः ।

इन्द्रियत्वं धर्मश्चक्षुरादिषु वर्त्तते। इन्द्रियत्वं धर्मं विहाय पृथिवीत्वं धर्मो घटादिषु वर्त्तते उभयोरनयोरेकत्र घ्राणेन्द्रिये समावेशरूपः सङ्करः।

तस्मान्नेन्द्रियत्वञ्जातिः। अस्य सखण्डोपाधित्वं समर्थयितुमिन्द्रियं निर्वक्ति—"शब्देतरोद्भूत"—इति। अस्यायमर्थः—शब्दादितरे भिन्ना ये रूपादयः सुखादयश्च उद्भूताः=प्रत्यक्षयोग्याः विशेषगुणाः, तेषामनाश्रयत्वे सति, अर्थात् शब्दं विहाय अन्ये यावन्तो रूपसुखाद्या अनुद्भूतविशेषगुणाः तेषां यदाश्रयः, अथच—ज्ञानस्य कारणीभूतो नाम साधारणकारणं यो मनःसंयोगः, तस्य चाश्रयः तत्त्वमेवेन्द्रियत्वमिति निर्वचनार्हत्वादिन्द्रियत्वं सखण्डोपाधिर्नतु जातिरित्यर्थः।

लक्षणस्य पदकृत्यं दर्शयति—"आत्मादि"—इति। यदि सत्यन्तं नोच्येत तदा "ज्ञानकारणमनःसंयोगाश्रय"पदेन आत्माऽपि ग्रहीतुं शक्यत इति तत्रेन्द्रियलक्षणातिव्याप्तिः, तस्यापि ज्ञानकारणीभूतस्य मनःसंयोगस्याश्रयत्वात्। अतः सत्यन्तो ग्रन्थ उक्तः। तादृशसंयोगाश्रयोऽप्यात्मा शब्दादन्ये ये उद्भूतविशेषगुणाः ज्ञानसुखाद्याः तेषामाश्रय एव नाऽनाश्रयः। तस्मान्नातिव्याप्तिरित्यर्थः। यदि लक्षणे "शब्देतरे"ति पदं न दीयेत, तदा श्रोत्रेन्द्रिये लक्षणाव्याप्तिः स्यात्, नहि श्रोत्रं विशेषगुणानाश्रयः, अपित्वाकाशात्मकत्वात् शब्दात्मकविशेषगुणाश्रय एवेति श्रोत्रे अव्याप्तिवारकं "शब्देतरे"ति पदम्बोध्यम्। अथ "उद्भूत"पदं विहाय शिष्टं लक्षणमुच्येत, अर्थात् "शब्देतरविशेषगुणानाश्रत्वे सति ज्ञानकारणमनःसंयोगाश्रयत्वम्" इत्येतावन्मात्रमुच्येत, तदा चक्षुरादिकं विशेषगुणस्य रूपादेराश्रय एव नाऽनाश्रय इति तेष्वव्याप्तिः स्यात्, अतस्तद्वारणाय "उद्भूत"पदनिवेशः। यद्यपि—चक्षुरादीन्द्रियं रूपादिविशेषगुणस्याश्रयोऽस्ति, तथापि नोद्भूतविशेषगुणाश्रयः, किन्त्वनुद्भूतरूपादिगुणाश्रय इति न तेष्वव्याप्तिगन्धोऽस्ति।

(मुक्ता०) उद्भूतत्वं न जातिः शुक्लत्वादिना साङ्कर्यात्। नच शुक्लत्वादिव्याप्यं नानैवोद्भूतत्वमिति वाच्यम्, उद्भूतरूपवत्त्वादिना चाक्षुषादौ जनकतानुपपत्तेः। किन्तु शुक्लत्वादिव्याप्यं नानैवानुद्भूतत्वं तदभावकूटश्चोद्भूतत्वम्। तच्च संयोगादावप्यस्ति, तथाच शब्देतरोद्भूतगुणः संयोगादिश्चक्षुरादेरप्यस्त्यतो विशेषेति। कालादिवारणाय विशेष्यदलम्। इन्द्रियावयवविषयसंयोगस्यापि प्राचाम्मते प्रत्यक्षजनकत्वादिन्द्रियावयववारणाय, नवीनमते कालादौ रूपाभावप्रत्यक्षे सन्निकर्षघटकतया कारणीभूतचक्षुःसंयोगाश्रयस्य कालादेश्च वारणाय मनःपदम्। ज्ञानकारणमित्यपि तद्वारणाय करणमिति। असाधारणं कारणं करणम्। असाधारणत्वं व्यापारवत्त्वम्॥ ५८॥

(प्रभा०) "विशेष"पदस्य प्रयोजनं वक्तुम्भूमिकाम् (प्रयोजनसम्पादिकां युक्तिम्)

आह—"उद्भूतत्वम्"—इति। "साङ्कर्यात्"—इति। उद्भूतत्वजातिरूपो धर्मो नास्ति किन्तूपाधिः। तत्र साङ्कर्यस्य जातिबाधकत्वादिति भावः। तथाच शुक्लत्वं धर्मं विहाय उद्भूतत्वम्=उद्भूतगन्धे वर्त्तते, एवमुद्भूतत्वं धर्मं विहाय शुक्लत्वं धर्मः अनुद्भूतशुक्ले वर्त्तते, उद्भूतशुक्ले तु द्वयोरेव धर्मयोः समावेशरूपः सङ्करः, तस्मादुद्भूतत्वं न जातिः, किन्तु—उपाधिरेव।

नानोद्भूतत्ववादिनः पक्षमुत्थाप्य प्रतिक्षिपति—"नच"—इत्यादिना। "शुक्लत्वादिव्याप्यम्"—इति। आदिना नीलत्वादिपरिग्रहः। शुक्लत्वादिनिष्ठा या व्यापकता, तादृशव्यापकतानिरूपिता या व्याप्यता, अर्थात् "यत्र यत्र उद्भूतत्वं तत्र तत्र शुक्लत्वम्" इति व्याप्तिरेव। तदाश्रय * उद्भूतत्वमिति नानैव तद्रूपरसादिष्विति पूर्वपक्षः।

"उद्भूतरूपवत्त्वादिना"—इति। उद्भूतरूपत्वेनेत्यर्थः। चाक्षुषादौ=चाक्षुषादिप्रत्यक्षे इत्यर्थः। जनकत्वाऽनुपपत्तेः=हेतुत्वाऽसिद्धेः। अयमर्थः—यदि उद्भूतत्वं नाना तर्हि तस्य चाक्षुषादिप्रत्यक्षम्प्रति कार्यकारणभावो न स्यात्, प्रत्येकमुद्भूतरूपत्वादिव्यक्तेः कारणतास्वीकारे एकस्याः व्यक्तेर्विद्यमानतायामपि उद्भूतत्वव्यक्त्यन्तरस्याऽभावेन कार्यकारणभावव्यभिचारः स्यात्, सकलान्येवोद्भूतत्वादीनि एकस्यां घटपटादिव्यक्तौ वर्त्तन्त इत्यत्र तु नैव किमपि मानम्पश्यामः, नापि च सम्भवः, एवमुद्भूतनानात्ववादिनये उद्भूतत्वं न कारणतावच्छेदकमन्यूनाऽनतिरिक्तदेशवृत्तित्वाभावादिति सिद्धान्तपक्षः।

कथं तर्ह्युद्भूतत्वं निरुच्येत ? अत आह—"किन्तु"—इति। शुक्लत्वादिव्याप्यम्=शुक्लत्वादिनिष्ठव्यापकतानिरूपितव्याप्यताश्रयः, अनुद्भूतत्वं नानैवेति योजना, तदभावकूटः=अनुद्भूतत्वाभावसमुदाय एव उद्भूतत्वमित्यर्थः। "शुक्लत्वादिव्याप्यनानाऽनुद्भूतत्वाभावसमुदाय एवोद्भूतत्वम्" इति बोध्यम्। स्यादेवम्प्रकृते किमायातमित्यत आह—"तच्च"—इति। तच्च=तादृशमुद्भूतत्वञ्च संयोगादावप्यस्ति संयोगादिरप्युद्भूतगुणश्चक्षुरादेरिति तेष्वेवाव्याप्तिः स्यात् अतस्तद्वारणाय "विशेष"पदोपादानम्। नहि संयोगादिर्विशेषगुण इति भावः।

ननु—"शब्देतरोद्भूतविशेषगुणानाश्रयत्वमात्रं लक्षणम्" स्याद् ज्ञानकारणेत्यादि न वक्तव्यमत आह—"कालादौ"—इति। कालादावतिव्याप्तिवारणाय तदित्यर्थः। कालादिर्न कस्यापि विशेषगुणस्याश्रयः, ततश्च तत्र स्यादेवातिव्याप्तिः। "ज्ञानकारण" इत्यादिपदोपादाने तु नोक्तदोषः, कालादेर्ज्ञानकारणीभूतमनःसंयोगा-

* प्रत्यक्षत्वप्रयोजको धर्मविशेष इत्यर्थः। प्रत्यक्षयोग्यरूपरसगन्धस्पर्शसंयोगाद्यन्यतमत्वं वा। उद्भूतत्वजातिः तदभावोऽनुद्भूतत्वमिति जरन्नैयायिकाः। नच शुक्लत्वादिना साङ्कर्यम्। गुणसाङ्कर्यं न बाधकमिति केचित्। अनुद्भूतत्वजातिस्तदभाव उद्भूतत्वमिति गङ्गेशोपाध्यायः।

श्रयत्वाभावात् । आदिपदेन दिग्ग्रहः । "मनः"पदनिवेशस्य फलमाह—"इन्द्रियावयव"—इत्यादि । चक्षुरादीन्द्रियाणां येऽवयवाः, घटाद्याश्च ये विषयाः तेषां यः परस्परं संयोगः, सोऽपि प्रत्यक्षम्प्रति कारणमिति प्राञ्चः ।

तथाचोक्तं तर्कभाषायाम्—चतुष्टयसन्निकर्षो यथा—इन्द्रियावयवैरर्थावयविनाम्, इन्द्रियावयविनामर्थावयवानाम्, इन्द्रियावयवैरर्थावयवानाम्, अर्थावयविनामिन्द्रियावयवानां सन्निकर्ष" इति । एवम्—इन्द्रियावयवोऽपि ज्ञानकारणसंयोगाश्रयः शब्देतरोद्भूतविशेषगुणानाश्रयश्च, तेन प्राचाम्मते तत्र=इन्द्रियावयवे इन्द्रियलक्षणातिव्याप्तिः स्यात्, तद्वारणाय लक्षणे "मनः" इति पदं दत्तम् ।

नव्यास्तु—"काले रूपं नास्ति" इत्याकारकस्य रूपात्यन्ताभावस्य चाक्षुषप्रत्यक्षम्, तादृशचाक्षुषप्रत्यक्षकारणीभूतो यश्चक्षुःसंयोगः तस्याश्रयः कालादिरपि, ततश्च कालादावप्यतिव्याप्तिर्नवीनमते स्यादतोऽपि "मनः"पदमुपात्तम् । यदि तु—"ज्ञानकारणम्" इति पदमदत्वा लक्षणं क्रियेत, तदा सर्वस्य लक्षणस्य कालादावतिव्याप्तिः, सा माभूदित्यर्थं 'ज्ञानकारण"—इति पदमित्यभिप्रायेणाह—"ज्ञानकारणम्"—इति । इत्यपि तद्वारणाय=कालादावतिव्याप्तिवारणायेत्यर्थः । इन्द्रियस्य * ऋजुलक्षणन्तु—"शरीरसंयुक्तत्वे सति ज्ञानकारणमतीन्द्रियमिन्द्रियम्' इति ध्येयम् । परममूले—"करणम्" इत्युक्तम् । करणस्य किं लक्षणमित्याकाङ्क्षां शमयितुं तस्य लक्षणमाह—"असाधारणम्'—इत्यादि । न साधारणमसाधारणम् । तत्त्वञ्च—तदितरावृत्तित्वे सति सकलतद्वृत्तित्वम् । भवति हि सास्नादिमत्त्वस्य गवितराऽवृत्तित्वे सति सकलगोवृत्तित्वम् । कारणेऽसाधारणत्वञ्च—कार्यत्वानवच्छिन्नकार्यतानिरूपितकारणताश्रयत्वम् । असाधारणत्वमेव किमत आह—"असाधारणत्वम्"—इति । तथाच व्यापारे व्यापारवत्त्वाभावान्नातिव्याप्तिरिति भावः ।

व्यापारश्च तज्जन्यत्वे सति तज्जन्यजनकः । यथा—कुठारजन्यत्वे सति कुठारजन्यायाः छिदायाः जनकः कुठारदारुसंयोगः । तादृशसंयोगात्मकव्यापारवत्त्वात् छिदाया असाधारणं कारणं कुठार एव छिदाकरणमुच्यते । एतदेव—"साधकतमं करणम्" (१।४।४२) इति † पाणिनिशासनमित्याभाति । एवम्प्रकृतेऽपि विषयेन्द्रियसन्निकर्षरूपव्यापारवत्त्वात् कारणत्वाच्च इन्द्रियञ्चाक्षुषादिप्रत्यक्षप्रमारूपफलम्प्रति करणमिति भावः ।

"फलयोगाव्यवच्छिन्नं कारणं करणम्" इति तु प्राञ्चः । अर्थात् यत्सत्त्वेऽव्यवहितोत्तरक्षणेऽवश्यं कार्यञ्जायते, तदेव करणमिति प्राचां नैयायिकानां मतम् ।

---

* साम्प्रतिकानामतिसुकुमारमतीनां हितं मत्वा तर्कभाषाकारादिमतमनुरुध्याह—"ऋजुलक्षणन्तु"—इति ।

† जैनेन्द्रव्याकरणे तु—"साधकतमं करणः" इत्येव सूत्रम्पाठितम् ।

एवं नव्यानां यो व्यापारः प्राचां मते तत्कारणम् । यच्च नव्यमते करणं प्राचां मते तत्कारणसञ्ज्ञमिति बोध्यम् ।

किञ्च—यत्र श्रोत्रेण शब्दसाक्षात्कारः तत्र नव्यनयानुसारं समवाय एव व्यापारः स्यात्, परन्तत्र ※ तज्जन्यजनकत्वलक्षणं न घटते, समवायस्य नित्यत्वेन श्रोत्रेणाऽजन्यत्वात् । तस्मात्—सर्वत्र षड्विधप्रत्यक्षे इन्द्रियमनःसंयोगस्यैव व्यापारत्वम्बोध्यमिति नव्यमतेऽसङ्गतिः । प्राचां लक्षणादरणे तु नैव दोषः ॥ ५७ ॥

(का०) विषयेन्द्रियसम्बन्धो व्यापारः सोऽपि षड्विधः ।
द्रव्यग्रहस्तु संयोगात्, संयुक्तसमवायतः ॥५९॥
द्रव्येषु समवेतानां, तथा तत्समवायतः ।
तत्रापि समवेतानां, शब्दस्य समवायतः ॥६०॥
तद्वृत्तीनां समवेतसमवायेन तु ग्रहः ।
प्रत्यक्षं समवायस्य विशेषणतया भवेत् ॥६१॥
विशेषणतया तद्वदभावानां ग्रहो भवेत् ।
यदि स्यादुपलभ्येतेत्येवं यत्र प्रसज्यते ॥६२॥

(मुक्ता०) व्यापारः सन्निकर्षः । षड्विधं सन्निकर्षमुदाहरणद्वारा दर्शयति । द्रव्यग्रह इति । द्रव्यप्रत्यक्षमिन्द्रियसंयोगजन्यम् । द्रव्यसमवेतप्रत्यक्षमिन्द्रियसंयुक्तसमवायजन्यम् । एवमग्रेऽपि । वस्तुतस्तु—द्रव्यचाक्षुषम्प्रति चक्षुःसंयोगः कारणम्, द्रव्यसमवेतचाक्षुषम्प्रति चक्षुःसंयुक्तसमवायः कारणम्, द्रव्यसमवेतसमवेतचाक्षुषम्प्रति चक्षुःसंयुक्तसमवेतसमवायः। एवमन्यत्रापि विशिष्यैव कार्यकारणभावः। परन्तु—पृथिवीपरमाणुनीले नीलत्वम्पृथिवीत्वञ्च चक्षुषा कथं न गृह्यते, तत्र परम्परयोद्भूतरूपसम्बन्धस्य महत्त्वसम्बन्धस्य च सत्त्वात् । तथाहि—नीलत्वञ्जातिरेकैव घटनीले परमाणुनीले च वर्त्तते । तथाच महत्त्वसम्बन्धो घटनीलमादाय वर्त्तते । उद्भूतरूपसम्बन्धस्तूभयमादायैव, एवम्पृथिवीपरमाणौ पृथिवीत्वेऽपि घटादिकमादाय महत्त्वसम्बन्धो बोध्यः । एवं वायौ तदीयस्पर्शादौ च सत्तायाश्चाक्षुषप्रत्यक्षं स्यात् । तस्माद् उद्भूतरूपावच्छिन्नमहत्त्वावच्छिन्नचक्षुःसंयुक्तसमवायस्य द्रव्य-

---

※ तज्जन्यत्वे सति तज्जन्यजनको व्यापार इति व्यापारलक्षणं न घटते इत्यर्थः । तत्र हेतुमाह—"समवायस्य"—इति ।

समवेतचाक्षुषप्रत्यक्षे; तादृशचक्षुःसंयुक्तसमवेतसमवायस्य द्रव्यसमवेतसमवेतचाक्षुषे (प्रत्यक्षे) कारणत्वं वाच्यम्।

(प्रभा०) करणलक्षणस्य व्यापारघटितत्वसङ्गमनाय करणमुक्त्वा तद्व्यापारमाह परममूले—"विषयेन्द्रियसम्बन्ध"—इति। एतदेव व्याख्यातुमाह मूले—"व्यापार"—इति।

"द्रव्यप्रत्यक्षम्"—इति। घटादिद्रव्यवृत्तिलौकिकविषयतासम्बन्धेन प्रत्यक्षञ्चक्षुरादीन्द्रियसंयोगजन्यम्, अर्थात् इन्द्रियसंयोगस्तत्र व्यापारः। "द्रव्यसमवेत"—इति। द्रव्यसमवेतानां रूपादीनाम्प्रत्यक्षम्, इन्द्रियसंयुक्तसमवायतः प्रत्यक्षम्। द्रव्यसमवेतवृत्तिलौकिकविषयतासम्बन्धेन रूपादिप्रत्यक्षे संयुक्तसमवायो व्यापार इत्यर्थः।

"एवमग्रेऽपि"—इति। द्रव्यसमवेतसमवेतवृत्तिलौकिकविषयतासम्बन्धेन रूपत्वादीनाम्प्रत्यक्षम्, इन्द्रियसंयुक्तसमवेतसमवायजन्यमित्यर्थः। तत्र इन्द्रियसंयुक्तो घटादिः, तत्र समवेतं रूपादिकम्, तेषु रूपत्वादीनां समवायात्।

ननु—द्रव्यप्रत्यक्षे इन्द्रियसन्निकर्षस्य कारणत्वञ्चेत्? तदा त्वक्प्रभासंयोगादपि प्रभायाश्चाक्षुषं स्यात्, एवमन्धकारेऽपि घटचक्षुःसंयोगात्स्पार्शनापत्तिश्च, प्रत्यक्षहेतोर्द्रव्येन्द्रियसंयोगस्य विद्यमानत्वादित्यस्वरसात् सामान्यतः कार्यकारणभावं विहाय विशिष्य कार्यकारणभावं वक्तुमाह—"वस्तुतस्तु"—इति। "द्रव्यचाक्षुषम्प्रति"—इति। घटपटादिद्रव्यीयलौकिकसाक्षात्कारम्प्रतीत्यर्थः। "द्रव्यसमवेत"—इति। घटादिद्रव्ये समवायसम्बन्धेन वर्त्तमानस्य रूपादेरुक्तसाक्षात्कारम्प्रति। चक्षुःसंयुक्तसमवायः=चक्षुःसंयुक्तो घटादिः, रूपादेस्तत्र समवायः तस्मादित्यर्थः। "द्रव्यसमवेतसमवेत"—इति। घटादिद्रव्यसमवेतं रूपादिकम्, तत्र समवेतं रूपत्वादिकम्, तस्य च चाक्षुषप्रत्यक्षम्प्रति चक्षुःसंयुक्तसमवेतसमवायः सन्निकर्षः कारणमित्यर्थः। "एवमन्यत्राऽपि"—इति। एवमेव त्वाचादिप्रत्यक्षम्प्रत्यपि उक्तसन्निकर्षस्य विशिष्य कार्यकारणभावो बोध्यः *।

शङ्कते—"परन्तु"—इति। "पृथिवीपरमाणुनील"—इति। पृथिवीनीलपरमाणुषु नीलत्वम्, पृथिवीपरमाणुषु पृथिवीत्वमित्यर्थः। अस्यायमाशयः—परमाणुनीलनिष्ठा या नीलत्वजातिः, तथा पृथिवीपरमाणुनिष्ठा या पृथिवीत्वजातिः, तस्या अपि चाक्षुषः साक्षात्कारः स्यात्? कुत इति चेत्? स्वाश्रयसमवेतसमवेतत्वादिसम्बन्धेन। तथाहि—उद्भूतरूपम्महत्त्वञ्च चाक्षुषप्रत्यक्षम्प्रति हेतुरित्यस्ति नियमः। तेन यथा रूपत्वादिजातिसाक्षात्कारे चक्षुःसंयुक्तसमवेतसमवायः परम्परासम्बन्धः

* अर्थात् द्रव्यस्पार्शनम्प्रति त्वक्संयोगःकारणम्। द्रव्यसमवेतस्पार्शनम्प्रति त्वक्संयुक्तसमवायः कारणम्। द्रव्यसमवेतसमवेतत्वाचम्प्रति त्वक्संयुक्तसमवेतसमवायः कारणमिति ज्ञेयम्।

कल्पितः, तथाऽत्रापि उद्भूतरूपस्य महत्त्वस्य च * स्वाश्रयसमवेतसमवेतत्वादि-परम्परासम्बन्धेन पृथिवीपरमाणुनीलनिष्ठनीलत्वम्प्रति पृथिवीपरमाणुवृत्तिपृथिवीत्व-म्प्रत्यपिच कारणभाव उन्नेतुं शक्यते । अत्र—"स्व"पदेन उद्भूतरूपस्य महत्परि-माणस्य च ग्रहः, तस्याश्रयः त्रसरेणुः, सच द्व्यणुके समवेत इति स्वाश्रयसमवेतं द्व्यणुकम्, तच्च परमाणौ समवेतमित्येवं स्वाश्रयसमवेतसमवेताख्यपरम्परासम्बन्धेन महत्त्वमुद्भूतरूपञ्च परमाणुषु वर्त्तते इति भवेत्परमाणुग्रहे तद्वृत्तिनीलादिपरिग्रहोऽपि।

इदमेव आक्षेप्ता स्वयं विवृणोति—"**तथाहि**"—इत्यादिना । "**नीलत्व-जातिरेकैव**"—इत्यादि । ग्रन्थस्तु उपरिदर्शितव्याख्यानेनैव गतार्थः । किन्तु "उभय"-मित्यस्य घटनीलम्परमाणुनीलञ्चोभयमित्यर्थो बोध्यः ।

"**एवम्पृथिवीपरमाणौ**"—इति । पृथिवीपरमाणुघटितचक्षुःसंयुक्तसमवाये सतीत्यर्थः । घटादिकमादाय=चक्षुःसंयुक्तघटादिकं द्वारीकृत्य । महत्त्वसम्बन्धः=महत्परि-माणसम्बन्धः । घटादिघटितस्वसमवायिसमवायसम्बन्धेनेति तु परमार्थः ।

**इदमुपलक्षणम्**—घटादिकमादाय परमाणुमादाय चोद्भूतरूपसम्बन्धोऽपि बोध्यः । महत्त्वाभावाधिकरणघटितचक्षुःसन्निकर्षाच्चाक्षुषमापाद्य उद्भूतरूपानधिकरण-

* अत्रेदम्बोध्यम्—स्वम्=महत्त्वमुद्भूतरूपञ्च, तदाश्रयो घटः, तत्र समवेतं नीलम्, तत्र समवेतं नीलत्वम् । तथाच—स्वाश्रयसमवेतसमवेतत्वसम्बन्धेन स्वपदोपात्ते महत्त्वोद्भूतरूपे नीलत्वे वर्त्तेते । एवम्—स्वमुद्भूतरूपम्महत्त्वञ्च तदाश्रयो घटः, तत्र समवेता सत्ता जातिः, साच वायौ वर्त्तते । तथाच—समवायेन वायुवृत्तिसत्ताजातेश्चाक्षुषप्रत्यक्षं स्यात्, तत्रोद्भूतरूपसम्बन्धस्य महत्त्वसम्बन्धस्य च पूर्वोक्तरीत्या सत्त्वात् । अथच—वायुस्पर्शेऽपि सत्तायाश्चाक्षुषप्रत्यक्षं स्यात् तत्र स्वाश्रयसमवेतसमवायेन घटनीलवृत्तिसत्ताजातेः, वायुस्पर्शवृत्तिसत्ताजातेश्चैक्यात्, स्वाश्रय-समवेतसमवायेन तत्र उद्भूतरूपस्यापि सत्त्वात् । महत्त्वसम्बन्धस्तु वायुमहत्त्वमादायैव वायुस्पर्शे योध्यः । परमाणुनीलवृत्तिनीलत्वे घटस्य महत्त्वोद्भूतरूपयोः सम्बन्धः स्वाश्रयसमवेतसमवायरूपो बोध्यः नीलत्वजातेश्चैक्यात् । एवम्—पृथिवीपरमाणौ पृथिवीत्वप्रत्यक्षं स्यात् तत्र महत्त्वसम्बन्धस्तु घटमादाय वर्त्तते, सच स्वाश्रयसमवायरूपः । उद्भूतरूपसम्बन्धस्तु घटपरमाणूभयमादाय वर्त्तते, पृथिवीत्वजातिरेकैव परमाणौ घटे च वर्त्तते इत्याक्षेपग्रन्थस्याशयः ।

एतादृशाक्षेपवारणाय चक्षुःसंयुक्ते महत्त्वावच्छिन्नत्वम्, उद्भूतरूपावच्छिन्नत्वञ्च विव-क्षितम् । नतु चक्षुःसंयुक्तसमवेते, चक्षुःसंयुक्तसमवेतसमवेते वा, येन परमाणुनीलनीलत्वे पृथिवी-परमाणुपृथिवीत्वे वा तयोः स्वाश्रयसमवायेन स्वाश्रयसमवेतसमवायेन वा घटस्य महत्त्वोद्भूतरूपे परमाणुनीलवृत्तिनीलत्वे परमाणुपृथिवीवृत्तिपृथिवीत्वे वा सत्त्वात् प्रत्यक्षत्वप्रसक्तिः स्यात् । उभयत्र परमाणौ चक्षुःसंयोगस्य महत्त्वावच्छिन्नत्वाभावात् न परमाणुनीलवृत्तिनीलत्वस्य परमाणुवृत्ति-पृथिवीत्वस्य वा प्रत्यक्षत्वमिति भावः । नवा—वायुस्पर्शवृत्तिसत्ताया वायुवृत्तिसत्ताया वा चाक्षुषत्वं तत्र वायुचक्षुःसंयोगस्य उद्भूतरूपत्वावच्छिन्नत्वाभावादित्यवधेयम् ।

घटितचक्षुःसन्निकर्षादपि तदापादयति—"एवं वायौ"—इति। वायुघटितचक्षुःसंयुक्त-समवाये सतीत्यर्थः। "तदीयस्पर्शादौ"—इति। वायवीयस्पर्शादिघटितचक्षुःसंयुक्त-समवेतसमवाये सतीत्यर्थः। आदिना तत्समवेतपरिमाणादेः परिग्रहः।

एतद्दोषपरिजिहीर्षया उत्तरपक्षत्वेनाह—"तस्मात्"—इति। उक्ताऽऽपत्ति-वारणायेति फलितार्थः। "उद्भूतरूपावच्छिन्न"—इति। उद्भूतरूपावच्छिन्न-महत्त्वावच्छिन्नं * यच्चक्षुःसंयुक्तम्, तत्समवायः रूपादिगुणसाक्षात्कारे हेतुः। उद्भूत-रूपावच्छिन्नमहत्त्वावच्छिन्नचक्षुःसंयुक्तसमवेतसमवायश्च रूपत्वादिजातिसाक्षात्कारे हेतु-र्वक्तव्य इति तु परमार्थः।

(मुक्ता०) इत्थञ्च परमाणुर्नीलादौ न नीलत्वादिग्रहः। परमाणौ चक्षुःसंयोगस्य महत्त्वावच्छिन्नत्वाभावात्। एवं वाय्वादौ न सत्तादि-चाक्षुषम्, तत्र चक्षुःसंयोगस्य रूपावच्छिन्नत्वाभावात्। एवं यत्र घटस्य मध्यावच्छेदेनालोकसंयोगः चक्षुःसंयोगस्तु बाह्यावच्छेदेन तत्र घटप्रत्यक्षा-भावादालोकसंयोगावच्छिन्नत्वञ्चक्षुःसंयोगे विशेषणं देयम्। एवं द्रव्य-स्पार्शनप्रत्यक्षे त्वक्संयोगः कारणम्, द्रव्यसमवेतस्पार्शनप्रत्यक्षे त्वक्-संयुक्तसमवायः, द्रव्यसमवेतसमवेतस्पार्शनप्रत्यक्षे त्वक्संयुक्तसमवेतसम-वायः कारणम्। अत्रापि महत्त्वावच्छिन्नत्वमुद्भूतस्पर्शावच्छिन्नत्वञ्च पूर्ववदेव बोध्यम्। एवं गन्धप्रत्यक्षे घ्राणसंयुक्तसमवायः। गन्धसमवेतस्य घ्राणजन्यप्रत्यक्षे घ्राणसंयुक्तसमवेतसमवायः कारणम्।

(प्रभा०) उक्तसम्बन्धस्वरूपविवक्षायाः फलमाह—"इत्थञ्च"—इति। महत्त्वोद्भूतरूपादिघटितरूपेण चक्षुःसन्निकर्षस्य हेतुत्वे चेत्यर्थः। "परमाणु-नीलादौ"—इति। परमाणुवृत्तिनीलादावित्यर्थः। आदिना पीतादिपरिग्रहः परमाणु-नीलादिघटितचक्षुःसन्निकर्षे सतीति तु परमार्थः। "न"—इति। नैव नीलत्वादिग्रहः= नीलत्वादिजातिप्रत्यक्षमित्यर्थः। एतदेव हेतूक्त्योपपादयति—"परमाणु"—इति। "महत्त्वावच्छिन्नत्वाभावात्"—इति। स्वाश्रयसमवेतसमवेताख्यपरम्परासम्बन्धे विद्यमानेऽपि स सम्बन्ध उद्भूतरूपावच्छिन्नमहत्त्वावच्छिन्नो नास्ति। अर्थात् उक्त-सम्बन्धे उद्भूतरूपम्महत्त्वञ्च विशेषणं न वर्त्तते, तद्विशिष्ट एवचोक्तसम्बन्धः, तथा साक्षात्कारहेतुर्नतु केवलः। एतत्स्वयं स्पष्टीकृतं ग्रन्थकर्त्रा—"परमाणौ चक्षुः-संयोगस्य"—इत्यादिना। "एवं वाय्वादौ"—इति। अत्रादिपदेन भर्जनकपालस्थ-वह्न्यादेः वाय्वादिसमवेतस्पर्शादेश्च ग्रहणम्। तत्र वाय्वादिवृत्तिचक्षुःसंयोगस्य रूपावच्छिन्नत्वाभावात्=उद्भूतरूपाऽनवच्छिन्नत्वादित्यर्थः। स्थलान्तरे महत्त्वो-

---

* "महत्त्वावच्छिन्ना"—इति। तादृशसम्बन्धेन महत्त्वविशिष्टेत्यर्थः। एतस्य चक्षुः-संयुक्तपदार्थैकदेशे चक्षुःसंयोगेऽन्वय इति प्राचीनप्रभायाम्प्राचीनो नृसिंहः।

द्भूतरूपयोरव्याप्तिं वारयितुं प्रत्यक्षस्य वा पुष्कलां सामग्रीं वक्तुमग्रिमं ग्रन्थं रचयति—"एवं यत्र"—इत्यादि । घटस्य बाह्यावच्छेदेन=बाह्यदेशे । मध्याऽवच्छेदेन=मध्यदेशे ।

अस्याऽयं स्पष्टोऽर्थः—यदा घटस्य मध्यभागे दीपः स्थाप्येत, घटचक्षुःसंयोगस्तु घटस्य बाह्यदेशे भवेत्, तदा महत्त्वोद्भूतरूपयोः सतोरपि घटस्य प्रत्यक्षं न भवति, तेनोभयोरन्वयव्यभिचारः । अस्य वारणम्—चक्षुःसंयोगे आलोकावच्छिन्नत्वविशेषणदानेन भवति । तथाच आलोकसंयोगावच्छिन्नोद्भूतरूपावच्छिन्नमहत्त्वावच्छिन्नचक्षुःसंयोगः घटादिद्रव्यप्रत्यक्षम्प्रति हेतुरिति * विशिष्य कार्यकारणभावः ।

प्रकृते महत्त्वोद्भूतरूपयोः चक्षुःसंयोगविशेषणयोः सतोरपि आलोकसंयोगरूपविशेषणाभावात् तादृशघटस्य न प्रत्यक्षम् । एवमेवायं सम्बन्धो रूपादिसाक्षात्कारप्रत्यप्युन्नेयः ।

सर्वसारस्तु—चक्षुरादीन्द्रियं करणम्, चक्षुरादीन्द्रियसन्निकर्षः=संयोगादिव्यापारः, महत्त्वम्, उद्भूतरूपम्, आलोकसंयोगश्चेतित्रयं सहकारिकारणम् । सर्वमिदम्मिलित्वा प्रत्यक्षस्य पुष्कला सामग्री । यत्रैकमपि न स्यात्, तत्र तस्य प्रत्यक्षं न भवति । तथाच पारमर्षं सूत्रम्—"महत्त्वानेकद्रव्यवत्त्वाद्रूपाच्चोपलब्धिः" (वै० ४।१।७) इति । उक्तश्चाक्षुषसन्निकर्षः सम्प्रति स्पार्शनादिप्रत्यक्षेऽपि तं दर्शयति—"एवम्"—इत्यादिना । † स्पष्टम् ।

(मुक्ता०) **एवं रसप्रत्यक्षे रसनासंयुक्तसमवायः । रससमवेतरासनप्रत्यक्षे रसनासंयुक्तसमवेतसमवायः कारणम् । शब्दप्रत्यक्षे श्रोत्रावच्छिन्नसमवायः कारणम् । शब्दसमवेतश्रावणप्रत्यक्षे श्रोत्रावच्छिन्नसमवेतसमवायः कारणम् । अत्र सर्वम्प्रत्यक्षं लौकिकम्बोध्यम् । वक्ष्यमाणमलौकिकम्प्रत्यक्षमिन्द्रियसंयोगादिकं विनापि भवति । एवमात्मनः प्रत्यक्षे मनःसंयोगः, आत्मसमवेतमानसप्रत्यक्षे मनःसंयुक्तसमवायः, आत्मसमवेतसमवेतमानसप्रत्यक्षे मनःसंयुक्तसमवेतसमवायः कारणम् ।**

(प्रभा०) "एवम्"—इति । रासनप्रत्यक्षं न संयोगजन्यम्, किन्तु संयुक्तसमवायादिजन्यमिति संयोगं सन्निकर्षं विहायान्यदुक्तम् । अत्र हेतुस्तु चक्षुस्त्वङ्मनांसि त्रीण्येवेन्द्रियाणि द्रव्यग्राहकाणि । "शब्दप्रत्यक्ष"—इति । श्रोत्रस्य आकाशरूपत्वात् शब्दस्य गुणत्वाच्च श्रोत्रावच्छिन्नसमवायः । "शब्दसमवेत"—इति । शब्दत्वं शब्दसमवेता जातिः तत्प्रत्यक्षे इत्यर्थः ।

---

* विशिष्य=चक्षुःसंयोगे आलोकसंयोगावच्छिन्नत्वरूपविशेषणान्तरदाने कृत्वेत्यत्र तात्पर्यम् ।

† व्याख्याप्रकारस्य पूर्ववदवगन्तुं शक्यत्वात् स्पष्टमित्युक्तम् ।

इदन्तु बोध्यम्—द्विविधं तावत् प्रत्यक्षं लौकिकमलौकिकञ्चेति। तत्रालौकिकं वक्ष्यति। लौकिकम्प्रदर्शयितुमाह—"अत्र सर्वम्"—इति। अत्र=उक्तकार्यकारणभावस्थले। सर्वम्=चाक्षुषादिभेदेन नानाविधम्। लौकिकम्=लौकिकविषयतासम्बन्धेन जन्यम्बोध्यमित्यर्थः। वक्ष्यमाणमलौकिकम्=सामान्यलक्षणाद्यलौकिकसन्निकर्षजन्यम्। इन्द्रियसंयोगादिकं विना=चक्षुरादीन्द्रियेण सह संयोगादिसन्निकर्षं विनेत्यर्थः। आत्मप्रत्यक्षे=आत्मवृत्तिलौकिकविषयतासम्बन्धेन प्रत्यक्षे। मनःसंयोगः=केवलमनःसंयोगः। "आत्मसमवेत"—इति। आत्मसमवेताः ज्ञानाद्याः। आत्मसमवेतसमवेताः ज्ञानत्वाद्याः। शिष्टं स्पष्टम्।

(मुक्ता०) अभावप्रत्यक्षे समवायप्रत्यक्षे चेन्द्रियसम्बद्धविशेषणता हेतुः। वैशेषिकमते तु समवायो न प्रत्यक्षः। अत्र यद्यपि विशेषणता नानाविधा। तथाहि—भूतलादौ घटाद्यभावः * संयुक्तविशेषणतया गृह्यते। सङ्ख्यादौ रूपाद्यभावः † संयुक्तसमवेतविशेषणतया। सङ्ख्यात्वादौ रूपाद्यभावः संयुक्तसमवेतसमवेतविशेषणतया। शब्दाभावः केवलश्रोत्रावच्छिन्नविशेषणतया। कादौ खत्वाद्यभावः श्रोत्रावच्छिन्नसमवेतविशेषणतया। एवं कत्वाद्यवच्छिन्नाभावे गत्वाभावादिकं श्रोत्रावच्छिन्नविशेषणविशेषणतया। एवं घटाभावादौ पटाभावः चक्षुःसंयुक्तविशेषणविशेषणतया। एवमन्यदप्यूह्यम्। तथापि विशेषणतात्वरूपेणैकैव सा गण्यते। अन्यथा षोढा सन्निकर्ष इति प्राचाम्प्रवादो व्याहन्येतेति।

(प्रभा०) समवायं विना भावात्मकपदार्थप्रत्यक्षे सन्निकर्षं निरूप्य सम्प्रति अभावसमवाययोः प्रत्यक्षे सन्निकर्षं निरूपयितुमाह—"अभावप्रत्यक्ष"—इति। "इन्द्रियसम्बद्ध"—इति। चक्षुरादीन्द्रियसम्बद्धो भूतलादिः, अर्थात् अभावाधिकरणम्, तत्र घटाद्यभावो विशेषणीभूतः विशेषणतारूपा विषयता घटाद्यभावनिष्ठा यथा "घटाभाववद् भूतलम्" इत्याकारायाम्प्रतीतौ तथा भासते, एवमिन्द्रियसम्बद्धो रूपादिरपि समवेतः, तत्र समवायो विशेषणीभूतः। यथा—"रूपी=रूपसमवायवान् घट" इत्यत्र विशेषणतारूपा विषयता समवायनिष्ठा। सोऽयमिन्द्रियसम्बद्धविशेषणताख्यः सम्बन्धः "विशेषणविशेष्यभावः सन्निकर्ष" इत्यप्युच्यते।

अस्याऽयमर्थः—इन्द्रियसम्बद्धविशेष्यत्वम्, इन्द्रियसम्बद्धविशेषणत्वमिति

* चक्षुःसंयुक्तम्भूतलं घटाद्यभावस्य तत्र विशेषणत्वात्।

† चक्षुःसंयुक्तो घटादिः, तत्र समवेतं सङ्ख्यादि; तत्र सङ्ख्यादौ विशेषणता रूपाद्यभावस्य। अत्र "सङ्ख्यादौ रूपादिकं नास्ति" इति प्रतीयते "एवं संख्यात्वादौ रूपाद्यभाव" इति। चक्षुःसंयुक्तो घटादिः; तत्र समवेतः सङ्ख्यादिः, तस्मिन् समवेतं सङ्ख्यात्वादिकम्, तत्र विशेषणता रूपाद्यभावस्य। एवमेव सर्वत्र योजनीयम्।

यावत् । यदा "घटाभावद् भूतलम्" इति प्रत्ययः तदा इन्द्रियसम्बद्धविशेषणत्वं सन्निकर्षः । इन्द्रियसम्बद्धम्भूतलं तत्र घटाभावस्य विशेषणत्वात् । यदा तु—"इह भूतले घटो नास्ति" इति प्रत्ययः तदा अभावप्रत्यक्षे इन्द्रियसम्बद्धविशेष्यता नाम सन्निकर्षः । तत्र—इन्द्रियसम्बद्धोऽभावः, भूतलस्य विशेषणत्वात् "सप्तम्यन्तं विशेषणम्" इति नियमात् ।

एवं समवायस्यापि प्रत्यक्षम्बोध्यम् । परन्तु गौतममते समवायः प्रत्यक्षो नतु वैशेषिकमत इत्यत आह—"वैशेषिकमत"—इति । यदि समवायः प्रत्यक्षः स्यात्तर्हि रूपादिसमवायवताम्परमाण्वादीनामपि प्रत्यक्षापत्तिः । किंवा समवायस्यैकतया एकदा भाविभूतसकलसमवायाश्रयव्यक्तीनाम्प्रत्यक्षं स्यात्, सम्बन्धप्रत्यक्षे यावदाश्रयप्रत्यक्षस्य हेतुत्वं यत इति काणादानामभिप्रायः ।

गौतमास्तु—सम्बन्धप्रत्यक्षत्वं न कार्यतावच्छेदकम्; अर्थात् यावदाश्रयप्रत्यक्षं तस्य कारणं नास्ति, सम्बन्धस्य निर्वक्तुमशक्यत्वात् । किन्तु—संयोगप्रत्यक्षत्वमेव कार्यतावच्छेदको धर्मः । समवायस्तु न संयोगः, तस्मादसौ प्रत्यक्षः । धर्मिणोः प्रत्यक्षं संयोगाख्यसम्बन्धविशेषप्रत्यक्षम्प्रत्येव कारणं न तत्सम्बन्धसामान्यप्रत्यक्षताप्रयोजकमित्याहुः ।

ननु—विशेषणतासन्निकर्षस्तु नानाविध इति कथं षड्विधः सन्निकर्ष इत्युक्तमिति शङ्कासमाधानाय "अत्र हि" इत्यारभ्य "एकैव सा गण्यत" इत्यन्तो ग्रन्थो निगदव्याख्यातः । "विशेषणतात्वेन"—इति । तथाच विशेषणतात्वमेकं रूपमादाय षड्विधत्वकथनं नासङ्गतमिति भावः । नन्वेवं संयुक्तसमवायादीनामप्यनुगमः कुतो न कृत इति चेन्न, स्वतन्त्रेच्छुर्मुनिर्नियोगपर्यनुयोगानर्होऽस्ति यतः ।

(मुक्ता०) यदि स्यादुपलभ्येतेति । अत्राभावप्रत्यक्षे योग्यानुपलब्धिः कारणम् । तथाहि—भूतलादौ घटादिज्ञाने जाते घटाभावादिकं न ज्ञायते । तेनाभावोपलम्भे प्रतियोग्युपलम्भाभावः कारणम् । तत्र योग्यताप्यपेक्षिता । सा च प्रतियोगिसत्त्वप्रसञ्जनप्रसञ्जितप्रतियोगिकत्वरूपा । तदर्थश्च प्रतियोगिनो घटादेः सत्त्वप्रसक्त्या प्रसञ्जित आपादि उपलम्भरूपः प्रतियोगी यस्य सोऽभावप्रत्यक्षे हेतुः । तथाहि—यत्राऽऽलोकसंयोगादिकं वर्त्तते, तत्र यद्यत्र घटः स्यात्तर्हि * उपलभ्येतेत्यापादयितुं शक्यते । तेन घटाभावादेरन्धकारे न चाक्षुषप्रत्यक्षम्, स्पार्शनप्रत्यक्षन्तु भवत्येव, आलोकसंयोगं विनापि स्पार्शनप्रत्यक्षस्यापादयितुं शक्यत्वात् । गुरुत्वादिकं यदयोग्यन्तदभावस्तु न प्रत्यक्षस्तत्र गुरुत्वादिप्रत्यक्षस्याऽपादयितुमशक्यत्वात् । वायौ रूपाभावः । पाषाणे सौरभाभावः । गुडे

* इत्याकारायाः प्रतीतेरभिलापः कर्तुं शक्यते इत्यर्थः ।

तिक्ताभावः। श्रोत्रे शब्दाभावः। आत्मनि सुखाभावः। एवमादयस्तत्तदिन्द्रियैर्गृह्यन्ते, तत्तत्प्रत्यक्षस्यापादयितुं शक्यत्वात्। * संसर्गाभावप्रत्यक्षे प्रतियोगिनो योग्यता। अन्योन्याभावप्रत्यक्षे त्वधिकरणयोग्यताऽपेक्षिता। अतः स्तम्भादौ पिशाचादिभेदोऽपि चक्षुषा गृह्यत एव ॥ ५९—६२ ॥

(प्रभा०) अभावप्रत्यक्षे सहकारिणं वक्तुमाह परममूले—'यदि स्यात्"—इति। एतद्विवृणोति मुक्तावल्याम्—"अत्राभावप्रत्यक्ष"—इति। "योग्याऽनुपलब्धेः"—इति। योग्यानुपलब्धिः=योग्यस्य प्रत्यक्षयोग्यतावतो घटादेः अनुपलब्धिः=उपलम्भाभावः प्रतीत्यभाव इति यावत्। कारणम्=कारणमेव नतु करणमित्यर्थः। उपलम्भः उपलब्धिः प्रतीतिर्ज्ञानमित्यनर्थान्तरम्। अनुपलम्भः अनुपलब्धिः प्रतीत्यभावः इति चानर्थान्तरम्। उक्तमर्थमुपपादयति—"तथाहि"—इत्यादिना। घटादि-

---

* मुक्तावलीकृता यदुक्तम्—संसर्गाभावप्रत्यक्षे प्रतियोगिनो योग्यता, अन्योन्याभाव प्रत्यक्षे त्वधिकरणयोग्यताऽपेक्षिता, अतःस्तम्भादौ पिशाचादिभेदोऽपि चक्षुषा गृह्यते एवेति तत्तस्याऽनवधानतामूलमिति मे प्रतिभाति। तथाहि—ग्रन्थकर्तुरयमाशयः। यदि योग्यस्याऽनुपलब्धिर्योग्याऽनुपलब्धिरिति षष्ठीतत्पुरुषसमासः। षष्ठ्यर्थश्च प्रतियोगित्वम्, तदा योग्यप्रतियोगिकाऽनुपलब्धिरित्यर्थः। तथासति—"स्तम्भः पिशाचो न" इति स्तम्भे पिशाचभेदस्य प्रत्यक्षत्वं न स्यात्, पिशाचरूपप्रतियोगिनः प्रत्यक्षयोग्यत्वाभावात्। यदि च पिशाचभेदस्य प्रत्यक्षत्वसम्पादनाय योग्येऽनुपलब्धिर्योग्याऽनुपलब्धिरिति सप्तमीसमासाश्रयणं तदा योग्याऽधिकरणकाऽनुपलब्धिरित्यर्थः पर्यवस्यते। यद्यपि प्रत्यक्षयोग्येऽधिकरणे स्तम्भे प्रतियोगिनः पिशाचस्याऽनुपलब्धिसम्भवात् पिशाचभेदप्रत्यक्षोपपत्तिः, तथापि "स्तम्भे पिशाचो नास्ति" इति पिशाचात्यन्ताभावस्यापि प्रत्यक्षत्वापत्तिः स्यात्। तत्र—प्रत्यक्षयोग्ये अधिकरणे स्तम्भे प्रतियोगिनः पिशाचस्यानुपलब्धिसम्भवात्। अतो ग्रन्थकारेण संसर्गाभावप्रत्यक्षे प्रतियोगिनो योग्यता। भेदप्रत्यक्षेऽधिकरणयोग्यताऽपेक्षितेति पृथक् पृथगेवोक्तम्। तथापि पिशाचात्यन्ताभावप्रत्यक्षे प्रतियोगिनो योग्यत्वाभावान्न तत्प्रत्यक्षत्वापत्तिः। पिशाचभेदप्रत्यक्षेऽधिकरणयोग्यतासत्त्वात् तत्प्रत्यक्षोपपत्तिः। परमेवम्—पृथक्पृथग्भेदात्यन्ताभावयोः प्रत्यक्षत्वाऽप्रत्यक्षत्वार्थमधिकरणप्रतियोगिनोर्योग्यत्वविवक्षणेऽपि अधिकरणवायोः प्रत्यक्षत्वपक्षे "वायुर्गुरुत्ववान्न वा" इति भेदप्रत्यक्षापत्तिः, अधिकरणवायोश्चाऽप्रत्यक्षत्वपक्षे "वायू रूपवान्न" इति रूपवद्भेदोऽपि प्रत्यक्षो न स्यात्।

अत्यन्ताभावप्रत्यक्षे प्रतियोगिनो योग्यत्वस्यविवक्षणे च जलपरमाणौ पृथिवीत्वात्यन्ताभावप्रत्यक्षापत्तिः स्यात्। पृथिवीत्वस्य प्रतियोगिनो घटादिषु प्रत्यक्षयोग्यत्वात्। तथाचोभयत्र दोषाद् ग्रन्थकृता भ्रमादेवोक्तं संसर्गाभावप्रत्यक्षे प्रतियोगिनो योग्यता, अन्योन्याभावप्रत्यक्षे-चाधिकरणयोग्यतेति। तस्मादत्र "योग्याचासावनुपलब्धिश्च योग्याऽनुपलब्धिः" इति कर्मधारयसमासाश्रयणमेव वरं कर्तव्यम्। अनुपलब्धौ योग्यत्वञ्च मूलकृदुक्तमेव प्रशस्तम्। विस्तरस्त्वन्यतोऽनुसन्धेयः।

ज्ञाने=तत्तदिन्द्रियजन्यसंयोगादिसम्बन्धावच्छिन्नघटत्वाद्यवच्छिन्नप्रकारताशाल्यनाहार्यनिश्चये जाते सति । **घटाभावादिकम्**=घटादिप्रतियोगिकाभाव इत्यर्थः । **न ज्ञायते**=नैव विषयीक्रियते । तेन=तादृशज्ञानत्वावच्छिन्नम्प्रति तादृशनिश्चयत्वावच्छिन्नस्य प्रतिबन्धकत्वेन ।

**अयमाशयः**– "यद्यत्र घटादिः स्यात् तर्हि तस्योपलम्भोऽपि स्यात्" इत्याकारा यत्र यदा प्रसक्तिः, तत्रैव उक्तविशेषणतासन्निकर्षेण अभावस्य प्रत्यक्षं नान्यत्र नान्यदेति च । तदेतत्स्पष्टीकरोति—"**भूतलादौ**"—इति ।

**सरलतरात्तरार्थस्तु**—भूतलादौ अभावाधिकरण इत्यर्थः । **घटादिज्ञाने**="अयङ्घट" इत्याकारके साक्षात्कारे । **जाते**=सति । **घटाभावादिकम्**=स्वप्रतियोग्यभाव इत्यर्थः । **न ज्ञायते**=नैव विषयीक्रियते प्रत्यक्षेण इन्द्रियेण प्रमाणेन इति शेषः । **तेन**=प्रतियोगिसत्त्वदशायामभावज्ञानाभावेन । **अभावोपलम्भे**=अभावप्रत्यक्षे । **प्रतियोग्युपलम्भाभावः**=प्रतियोगिनो घटादेः प्रतीत्यभावः । **कारणम्**=हेतुः; नतु करणमित्यर्थः । परन्तु तत्र प्रतियोग्युपलम्भावे **योग्यता**=वक्ष्यमाणा **अप्यपेक्षिता**=अवश्यमिष्टा । अन्यथा प्रत्यक्षायोग्येष्वपि जलपरमाण्वादौ पृथिवीत्वाभावादेः प्रत्यक्षं स्यादिति भावः ।

**ननु**—कीदृशी सा योग्यतेति जिज्ञासायां न्यायचिन्तामणिकारगङ्गेशोपाध्यायमतेन तां निर्वक्ति—"**साच**"—इति । निरुक्तग्रन्थस्यार्थं स्वयमेव दर्शयति—"**तदर्थश्च**"—इति । तात्पर्यार्थस्तु—यस्मिन्नधिकरणे प्रतियोग्युपलम्भ आपादयितुं शक्यते, तत्रैव तत्प्रतियोगिकाभावप्रत्यक्षञ्जायते नान्यत्र । यथा—भूतलाद्यधिकरणे "यदि भूतले घटः स्यात् तर्हि चक्षुषा (भूतलवत्) उपलभ्येत" इति रीत्या घटात्मकस्य प्रतियोगिन उपलम्भः=प्रतीतिः आपादयितुम्=आरोपयितुं शक्यते । तस्मादत्र भूतलादौ * घटप्रतियोगिकाभावप्रत्यक्षम्भवितुमर्हति । यत्र तु नैवमापादयितुं शक्यते, तत्र नाभावः प्रत्यक्षः । यथा—"जलीयपरमाणुषु यदि पृथिवीत्वं स्यात् तर्ह्युपलभ्येत" अनया रीत्या पृथिवीत्वारोपेण जलीयपरमाणुषु पृथिवीत्वोपलम्भस्याप्यारोपः कर्तुं न शक्यते, पृथिवीत्वाभावस्य प्रत्यक्षयोग्यत्वेऽपि जलीयपरमाणुषु प्रत्यक्षयोग्यताया अभावात् । योग्यप्रतियोग्युपलम्भाभावोऽभावप्रत्यक्षे हेतुरिति निष्कर्षः ।

**अयम्भावः**—आश्रयप्रत्यक्षमेव जातिप्रत्यक्षप्रयोजकमित्यस्ति नियमः । तंन जलपरमाणुषु यथा जलत्वस्य न प्रत्यक्षम्, तथैव तत्र आरोपितपृथिवीत्वोपलम्भारोपोऽपि न शक्यसम्भवः ।

एतदेव दर्शयति—"**तथाहि**"—इत्यादिना । **यत्र**=भूतलादौ (अभावाधिकरणम्) । अत्र—यदेत्यपि पूरणीयम् । तेन "यत्र यदा" इति पठित्वाऽर्थविवक्षा ।

---

* घटः प्रतियोगी यस्य तादृशो योऽभावः तस्य प्रत्यक्षमित्यर्थः ।

"आलोकसंयोगादिकम्"—इति। आलोकसंयोगावच्छिन्नोद्भूतरूपावच्छिन्नमहत्त्वावच्छिन्नचक्षुःसंयोगो यत्र यदा वर्त्तत इति पिण्डीभूतोऽर्थः। "तत्र"—इति। तदेत्युपलक्षणेन ज्ञेयम्। सुगममन्यत्।

"स्पार्शनप्रत्यक्षन्तु"—इति। त्वाचप्रत्यक्षमित्यर्थः। आलोकसंयोगं विनापि त्वाचप्रत्यक्षस्य सत्त्वात्। "यद्यत्र घटः स्यात्तर्हि त्वचा उपलभ्येत" इत्यापादयितुं शक्यत एव। अर्थात् "अन्धकारे घटाभावस्य स्पार्शनप्रत्यक्षं नतु चाक्षुषम्" इत्युक्तनियमात्। "न चाक्षुषप्रत्यक्षम्"—इति। अनुपलम्भे विद्यमानेऽपि निरुक्तयोग्यताविशिष्टस्य तस्य तत्राऽभावादिति भावः। "गुरुत्वादिकम्"—इति। आदिपदेन धर्माधर्मादिपरिग्रहः। "गुरुत्वादिप्रत्यक्षस्य"—इति। "यदि घटे गुरुत्वं तर्ह्युपलभ्येत" इत्याकारमापादानं नार्हति भवितुम्, गुरुत्वस्य सर्वथा प्रत्यक्षायोग्यत्वात्। किन्तु तत् तुलयानुमीयते। एवं धर्मोऽपि न प्रत्यक्षयोग्यतावान्। नहि "यदि मयि धर्मः स्यात् तर्ह्युपलभ्येत" इति भवत्यापादानम्। किन्तु सुखादिलिङ्गेनानुमेयः * वस्तुतस्तु चोदनालक्षणः। एतेन अधर्मोऽपि व्याख्यातः।

यत्र तूक्तप्रकारेणापादानं सुशकं तत्राभावः प्रत्यक्ष इत्युक्तमेव। "यथा वायौ"—इत्याद्युदाहरति। "वायौ यदि रूपं स्यात्तर्हि चक्षुषोपलभ्येत" इत्यापादयितुं शक्यते। तत्र कारणन्तु महत्त्वविशिष्टोद्भूतरूपञ्चाक्षुषप्रत्यक्षहेतुरित्यवोचाम। प्रकृते वायौ महत्त्वस्य † सत्त्वेऽपि उद्भूतरूपं नास्ति, तेन वायावुद्भूतरूपाभावस्य चाक्षुषप्रत्यक्षम्।

एवमेव यथाक्रमम् "पाषाणे यदि सौरभं स्यात्तर्हि घ्राणेनोपलभ्येत, यदि गुडे तिक्तरसः स्यात्तर्हि रसनयोपलभ्येत, यद्यग्नावनुष्णः स्पर्शः स्यात्तर्हि त्वचोपलभ्येत, यदि श्रोत्रे शब्दः स्यात्तर्हि तेनैवोपलभ्येत, यद्यात्मनि सुखं स्यात्तर्हि मनसोपलभ्येत" इत्याद्यापादानं कर्त्तुं शक्यते। अतस्तत्र तत्र तत्तदभावस्य घ्राणजादिप्रत्यक्षम्भवत्येव इत्याशयेनाह —"एवमादय"—इति। आदिना प्रभायामुद्भूतस्पर्शाभावपरिग्रहः। तत्र—"प्रभायामुद्भूतस्पर्शः स्यात्तर्हि त्वचोपलभ्येत" इत्यापादयितुं सुशकत्वादिति भावः।

सम्प्रति संसर्गाभावप्रत्यक्षे अन्योन्याभावप्रत्यक्षे च योग्यताभेदं दर्शयति—"संसर्गाभावप्रत्यक्ष"—इति। त्रिविधः संसर्गाभावः प्रागभावादिभेदेन पूर्वमुक्तः, तस्य प्रत्यक्षे प्रतियोगिनो घटादेः योग्यता प्रत्यक्षयोग्यता अवश्यमपेक्ष्यते। अर्थात् येन केनापीन्द्रियेण यः प्रतियोगी प्रत्यक्षयोग्यः, तस्यैव प्रागभावस्य, ध्वंसाभावस्य, अत्यन्ताभावस्य वा प्रत्यक्षम्भवति। यस्तु प्रतियोगी सर्वथा इन्द्रियगोचरः, तदीय-

* मीमांसकमतमनुरुध्याह—"वस्तुतस्तु"—इति।

† अत एव वायोः स्पार्शनप्रत्यक्षमित्यैकीयमतेन पूर्वमुक्तम्।

संसर्गाभावस्य कदापि न प्रत्यक्षम् । "अन्योन्याभावप्रत्यक्षे तु"—इति । संसर्गाभावभिन्नाभावप्रत्यक्षे तु **अधिकरणयोग्यता**=अभावाधिकरणस्यैव प्रत्यक्षयोग्यता **अपेक्षिता**=आवश्यकी । अर्थात् यद्यधिकरणं प्रत्यक्षयोग्यं स्यात्, प्रतियोगी प्रत्यक्षयोग्यो भवेन्नवा भवेत्, तदा अन्योन्याभावस्य प्रत्यक्षम्भवत्येव । एतस्य फलमाह—"अत"—इति । "स्तम्भः पिशाचो न" इति प्रतीत्या स्तम्भरूपाधिकरणे प्रत्यक्षाऽयोग्यस्याऽपि पिशाचस्य भेदः=अन्योन्याभावः चक्षुषा प्रत्यक्षः । स्तम्भस्य (चाक्षुष)-प्रत्यक्षयोग्यतावत्त्वादिति भावः ।

**(मुक्ता०) एवम्प्रत्यक्षं लौकिकालौकिकभेदेन द्विविधम् । तत्र लौकिकप्रत्यक्षे षोढा सन्निकर्षो वर्णितः । अलौकिकसन्निकर्षस्त्विदानीमुच्यते—**

**(का०) अलौकिकस्तु व्यापारस्त्रिविधः परिकीर्त्तितः ।**
**सामान्यलक्षणो ज्ञानलक्षणो योगजस्तथा ॥६३॥**

**(मुक्ता०) व्यापारः सन्निकर्षः । सामान्यलक्षण इति । सामान्यं लक्षणं यस्येत्यर्थः । तत्र लक्षणपदेन यदि स्वरूपमुच्यते, तदा सामान्यस्वरूपा प्रत्यासत्तिरित्यर्थो लभ्यते । तच्चेन्द्रियसम्बद्धविशेष्यकज्ञाने प्रकारीभूतम्बोध्यम् । तथाहि—**

(प्रभा०) अलौकिकसन्निकर्षनिरूपणाय पातनिकामाह—"एवम्"—इति । कारिकां निर्वक्तुमाह—"व्यापार"—इति । धूमत्वादिलक्षणाया इन्द्रियजन्यत्वाभावात् व्यापारस्य च तज्जन्यत्वे सति तज्जन्यजनकत्वरूपत्वात् व्यापारत्वकथनमयुक्तमित्यतो "व्यापार"पदं व्याख्याति—"सन्निकर्ष"—इति ।

"सामान्यम्"—इति समानानाम्भावोऽनागन्तुको नित्यो धर्मः सामान्यम् । पूर्वोक्तं द्रव्यगुणकर्मैतत्त्रितयवृत्तिः । उक्तञ्च वात्स्यायनेन—"या समानाम्बुद्धिम्प्रसूते भिन्नेष्वधिकरणेषु, यया बहूनीतरेतरतो व्यावर्त्तन्ते, योऽर्थोऽनेकत्र प्रत्ययानुवृत्तिनिमित्तं तत्सामान्यम्" (न्या० भा० २।२।७१) इति । यथा घटत्वादि जातिः । "लक्षण"-शब्दस्य * स्वरूपमप्यर्थः । लक्ष्यते व्यवच्छिद्यत इति लक्षणं स्वरूपमेव असाधारणधर्म इति यावत् । असाधारणधर्मेण हि धर्मी धर्म्यन्तरेभ्यो व्यावर्त्यते यतः । एवं सामान्यं लक्षणं स्वरूपं यस्येति बहुव्रीहिसमासाश्रयणे सामान्यस्वरूपा प्रत्यासत्तिरिति प्रथमस्याऽलौकिकसन्निकर्षस्यार्थः पर्यवसितो भवति । प्रत्यासत्तिश्च सम्बन्धः । "तच्च"—इति । सामान्यस्वरूपञ्चेत्यर्थः ।

---

* लक्षणपदस्य स्वरूपविषयभेदेनार्थद्वयमपि वर्त्तते, तत्सन्देहवारणायाऽऽह—"स्वरूप"—इति ।

"इन्द्रियसम्बद्ध"—इति। इन्द्रियसम्बद्धं विशेष्यं यस्य तदिन्द्रियसम्बद्धविशेष्यकं तादृशं यज्ज्ञानं तत्र प्रकारीभूतं यत् सामान्यं धूमत्वादि तत्सामान्यस्वरूपमेव प्रत्यासत्तिः। अर्थात् तादृशं सामान्यम् "घटे घटत्वं धूमे धूमत्वम्" इत्यादि बोध्यम्। एतदुक्तम्भवति—यथा घटादौ चक्षुःसन्निकर्षानन्तरम् "अयङ्घटः अयन्धूमः" इत्याकारकम्प्रत्यक्षञ्जातम्, तस्य कारणं घटादिना सह चक्षुषः संयोगः सन्निकर्षः। लौकिकः=प्रागुक्तः, तादृशसन्निकर्षजन्यज्ज्ञानं घटघटत्वे धूमधूमत्वे चेत्युभयमपि विषयीकरोति। तत्र घटं धूमञ्च विशेष्यविधया, घटत्वं धूमत्वञ्च प्रकारविधया विषयीकरोतीत्येतावान्विशेषः। एतदेव स्वयं विशदीकर्त्तुमाह—"तथाहि"—इत्यादि।

अस्यायमाशयः—"अयं धूमः" इत्याकारके लौकिकसन्निकर्षजन्ये इन्द्रियसम्बद्धविशेष्यके ज्ञाने धूमत्वादिः प्रकारः। धूमादिनिष्ठविशेष्यतानिरूपिता प्रकारता धूमत्वादिनिष्ठा। तादृशज्ञानोत्तरं धूमत्वेन सन्निकर्षेण "सर्वे धूमाः" इत्यलौकिकप्रत्यक्षज्ञानमुत्पद्यते, तच्च स्वजन्यज्ञानप्रकारीभूतधूमत्ववत्तासम्बन्धेन सकलधूमविषयकमेव।

एवञ्च—धूमत्वरूपसामान्यलक्षणाया नित्यत्वेन सर्वदा विद्यमानतया सर्वदा सकलधूमविषयकप्रत्यक्षापत्तिरिति यद्यपि जायेत शङ्का, तथापि केवलसामान्यस्य प्रत्यासत्तित्वाभावात्। दर्शितरीत्या ईदृशप्रकारताविशिष्टसामान्यस्यैव प्रत्यासत्तित्वान्नोक्तदोषसम्भावनाऽपीति बोध्यम्।

(मुक्ता०) यत्रेन्द्रियसंयुक्तो धूमादिस्तद्विशेष्यकं धूम इति ज्ञानं यत्र जातं तत्र ज्ञाने धूमत्वम्प्रकारः। तत्र धूमत्वेन सन्निकर्षेण धूमा इत्येवंरूपं सकलधूमविषयकञ्ज्ञानञ्जायते। अत्र यदीन्द्रियसम्बद्धमित्येवोच्यते तदा धूलीपटले धूमत्वभ्रमानन्तरं सकलधूमविषयकञ्ज्ञानं न स्यात्, तत्र धूमत्वेन सहेन्द्रियसम्बन्धाभावात्। मन्मते तु इन्द्रियसम्बद्धं धूलीपटलम्, तद्विशेष्यकं धूम इति ज्ञानम्, तत्र प्रकारीभूतं धूमत्वम्प्रत्यासत्तिः। इन्द्रियसम्बन्धश्च लौकिको ग्राह्यः। इदञ्च बहिरिन्द्रियस्थले। मानसस्थले तु "ज्ञानप्रकारीभूतं सामान्यमात्रम्प्रत्यासत्तिः"। अतः शब्दादिना यत्किञ्चित्पिशाचाद्युपस्थितौ मानसः सकलपिशाचादिबोध उपपद्यते॥ ६३॥

(प्रभा०) ईदृशसामान्यस्य प्रत्यासत्तिस्वीकारे नोक्तदोष इत्याह—"यत्र"—इति। यदा इत्यर्थः। इन्द्रियसंयुक्तः=इन्द्रियसम्बद्धः। धूमादिः=आदिना घटादिर्ज्ञेयः। "तद्विशेष्यकम्"—इति। स धूमादिर्विशेष्यो यस्य ज्ञानस्य तत्तद्विशेष्यकम्। "धूम" इति ज्ञानञ्जातमिति शेषः। तत्र=ज्ञाने। "धूमत्वम्प्रकार"—इति। धूमत्वस्य प्रकारविधया भासमानत्वादिति भावः। धूमत्वमेव अलौकिकः सन्निकर्षः,

इन्द्रियसम्बद्धं धूमादिरेव।

येन सकलधूमानाम्=अतीतानागतानां दूरविप्रकृष्टानामिन्द्रियासम्बद्धानामपि धूमत्वाश्रयाणाम्=सर्वेषां धूमानाञ्ज्ञानञ्जायते, धूमत्वस्य सकलधूमव्यक्तिष्वनुगतत्वात् । अर्थात् एकस्मिन् धूमे इन्द्रियसम्प्रयुक्ते सति यत् "धूमाः" इति सकलधूमव्यक्तीनाम्भानम्भवति, तत्र "स्वजन्यज्ञानप्रकारीभूतधूमत्ववत्ता" नाम अलौकिकः सन्निकर्षो हेतुः । ※ प्रथमक्षणे पुरोवर्त्तिधूमस्य लौकिकञ्ज्ञानम्, ततो द्वितीयक्षणे उक्तसम्बन्धेन सकलधूमभानञ्चाक्षुषमेव । अत्र "स्व"पदेन चक्षुरादीन्द्रियग्रहणम्, तज्जन्यञ्ज्ञानम् "अयं धूमः" इत्याकारकं लौकिकसन्निकर्षजन्यम्, तत्र प्रकारीभूतं दर्शितरीत्या धूमत्वमेव, तद्वत्ता † धूमत्वधर्मसम्बन्धः सकलधूमेषु विद्यत एवेति उक्तालौकिकसम्बन्धो निर्वाहितो भवति । धूमत्वम्=इन्द्रियसम्बद्धधूमादिविशेष्यकधूमत्वप्रकारकज्ञाननिरूपितप्रकारताविशिष्टं यदा भवति तदा धूमत्वेन=निरुक्तप्रकारताविशिष्टधूमत्वेन सकलधूमविषयकमलौकिकम्प्रत्यक्षम् । तथाच—धूमत्वस्य नित्यसम्बन्धत्वेऽपि न सर्वदा सकलधूमविषयकप्रत्यक्षापत्तिरिति भावः ।

ननु—इन्द्रियसम्बद्धेत्यादि गुरुभूतं लक्षणं विहाय "प्रकारत्वेनेन्द्रियसम्बद्धम्" इत्येव प्रत्यासत्तिः स्वीक्रियताम् । भवति हि धूमचक्षुःसंयोगानन्तरम्प्रकारत्वेन धूमत्वमिन्द्रियसम्बद्धमिति, अत आह—"यदि"—इति । अस्यायमाशयः—यदा पुरोवर्त्तिनि धूलिपटले "अयं धूम" इत्याकारकम्भ्रमात्मकञ्ज्ञानञ्जातम्, तदा "सकलधूमविषयकम्"—इति । "धूमा" इत्याकारकमित्यर्थः । ज्ञानं न स्यात्=नैव भवेत् । तत्र हेतुमाह—"धूमत्वेन"—इति । तत्र=तदा धूमत्वेन=धूमवृत्तिसामान्येन सहेति शेषः । इन्द्रियसम्बन्धाभावात्=चक्षुःसंयुक्तसमवायसन्निकर्षाभावादित्यर्थः । वस्तुत इन्द्रियसम्बन्धो धूलीपटलेनैवेति परमार्थः । "मन्मते तु"—इति । मम मते तु नायं दोषः । किन्तु—तत्रापि सकलधूमविषयकञ्ज्ञानम्भवितुमर्हत्येवेति । अर्थात् इन्द्रियसम्बद्धविशेष्यकज्ञाने प्रकारीभूतसामान्यम्प्रत्यासत्तिरिति मते तु धूलीपटले धूमभ्रमोत्तरं सकलधूमविषयकज्ञानाऽनुपपत्तिरूपो दोषो नेत्यर्थः । धूलीपटलेऽपि=इन्द्रियसम्बद्धविशेष्यकधूलिपटलविशेष्यकधूमत्वप्रकारकत्वसत्त्वादित्यर्थः । सुबोधमन्यत् । "‡इदञ्च"—इन्द्रियसम्बद्धविशेष्यकज्ञानप्रकारीभूतसामान्यस्य प्रत्यासत्तित्वकथनम् ।

पुरोवर्त्तिपदार्थे इन्द्रियसम्बन्धो लौकिको ग्राह्य इत्याह—"इन्द्रियसम्बन्ध-

---

※ सकलधूमज्ञानक्रमं दर्शयितुमाह—"प्रथमक्षणे"—इति ।

† धूमनिष्ठाधिकरणतानिरूपिता धूमत्वनिष्ठाधेयतेति गूढाभिसन्धिः ।

‡ केचित्तु—"ननु गुरुत्वत्वेन यत्किञ्चिद्गुरुत्वोपस्थित्यनन्तरं सकलगुरुत्वविषयकमानसप्रत्यक्षाऽनुपपत्तिः, गुरुत्वेन सह मनसः लौकिकसन्निकर्षस्य, गुरुत्वे लौकिकविशेष्यतायाश्चाऽभावात् तादृशलौकिकविशेष्यताशालिमानसप्रकारताविशिष्टगुरुत्वत्वरूपसामान्यस्याऽप्रसिद्धत्वादित्यत आह—"इदञ्च"—इति ।

श्च"—इति । परन्तु इन्द्रियसम्बद्धविशेष्यकज्ञानप्रकारीभूतं सामान्यम्प्रत्यासत्ति-रित्याकारको यः सम्बन्धो दर्शितः, तस्योपयोगः बहिरिन्द्रियस्थल एव । मानसालौकिकप्रत्यक्षविषये तु ज्ञानप्रकारीभूतं सामान्यमात्रम्प्रत्यासत्तिरिति विभागं करोति—"मानसस्थले तु"—इति । ज्ञाने प्रकारीभूतं विशेषणीभूतं सामान्यम्प्रत्यासत्तिः । अस्य विभागस्य फलमाह—"अत"—इति । अस्य ग्रन्थस्यायमाशयः—यत्र प्रत्यक्षायोग्यस्यापि पिशाचादेः "अत्र वटे पिशाच" इति शाब्दज्ञानञ्जातम्, तत उत्तरस्मिन् क्षणे "सर्वे पिशाचाः पिशाचत्ववन्तः" इत्याकारको मानसो बोधः=ज्ञानम्, सकलपिशाचविषयकः । उपपद्यते=जायत एवेत्यर्थः । एवञ्च—तत्रेन्द्रियसम्बन्धाभावात् नोक्तविभागं विना निर्वाह इति भावः ।

विभागकरणे तु "ज्ञान"पदेन शाब्दज्ञानमपि धर्तुं शक्यते, तत्र प्रकारीभूतम्पिशाचत्वम्, तदेव—"मनोजन्यज्ञानप्रकारीभूतपिशाचत्ववत्ता"सम्बन्धेन सकलपिशाचविषयकालौकिकसाक्षात्कारहेतुरिति तु परः सारः ॥ ६३ ॥

(मुक्ता०) परन्तु समानानाम्भावः सामान्यम् । तच्च क्वचिन्नित्यं धूमत्वादिः, क्वचिच्चानित्यं घटादि । यत्रैको घटः संयोगेन भूतले समवायेन कपाले ज्ञातस्तदनन्तरं सर्वेषामेव तद्घटवताम्भूतलादीनां कपालादीनां वा ज्ञानम्भवति तत्रेदम्बोध्यम् । परन्तु सामान्यं येन सम्बन्धेन ज्ञायते, तेन सम्बन्धेनाधिकरणानाम्प्रत्यासत्तिः । किन्तु—यत्र तद्घटनाशानन्तरं तद्घटवतः स्मरणञ्जातम्, तत्र सामान्यलक्षणया सर्वेषां तद्घटवताम्भानं न स्यात् । सामान्यस्य तदानीमभावात् । किञ्चेन्द्रियसम्बद्धविशेष्यकं घट इति ज्ञानं यत्र जातम्, तत्र परदिने इन्द्रियसम्बन्धं विनापि तादृशज्ञानप्रकारीभूतसामान्यस्य सत्त्वात्तादृशज्ञानं कुतो न जायते, तस्मात्सामान्यविषयकञ्ज्ञानम्प्रत्यासत्तिर्नतु सामान्यमित्याह—

(का०) आसत्तिराश्रयाणान्तु सामान्यज्ञानमिष्यते ।

(मुक्ता०) आसत्तिः प्रत्यासत्तिरित्यर्थः । तथाच सामान्यलक्षणमित्यत्र लक्षणशब्दस्य विषयोऽर्थः । तेन सामान्यविषयकञ्ज्ञानम्प्रत्यासत्तिरित्यर्थो लभ्यते ।

(प्रभा०) आसत्तिराश्रयणान्त्विति (सिद्धान्तलक्षणविधया) मूलमवतारयितुभूमिकामाह—"परन्तु"—इति । * समानानां तुल्यानामित्यर्थः । विवक्षितं सामान्यं विभजते—"तच्च"—इति । अनित्यं सामान्यमभिनीय दर्शयितुमाह—"यत्र"—इति । भूतले संयोगेन ज्ञातः, कपाले स्वावयवे समवायेन ज्ञात इति

* प्रकृते—सामान्यपदं यौगिकमेव नतु पारिभाषिकमिति भावः ।

विभज्यान्वयः । "तदनन्तरम्"—इति । "भूतलं संयोगेन घटवत्, कपालः समवायेन घटवान्" इत्याकारकलौकिकसाक्षात्कारद्वितीयक्षणे "सर्वाणि भूतलानि संयोगेन घटवन्ति, सर्वे कपालाः समवायेन घटवन्तः' इत्याकारकमलौकिकञ्ज्ञानं जायते । तत्रेदम्बोध्यम्=अर्थात् एतादृशस्थले ज्ञायमानमनित्यं सामान्यमेव प्रत्यासत्तिरिति बोध्यम् । सर्वेषामेव तद्घटवताम् । "भूतलादीनाम्"—इति । अत्रादिना संयोगेन तद्घटाधिकरणद्रव्यान्तरपरिग्रहः । अत्रापि यो विशेषस्तमाह—"परन्तु"—इति । "येन सम्बन्धेन"—इति । इन्द्रियसम्बद्धविशेष्यकज्ञानीययत्सम्बन्धावच्छिन्नप्रकारता विशिष्टम्भवति ।

अयमाशयः—स्वाधिकरणे येन सम्बन्धेन सामान्यञ्ज्ञातम्भवति, तेनैव सम्बन्धेन तत्सदृशेष्वधिकरणेषु अलौकिकप्रत्यक्षहेतुः । अन्यथा समवायसम्बन्धेन ज्ञानप्रकारीभूतघटत्वादिसामान्यमपि कालाकाशादिपदार्थानामलौकिकसाक्षात्कारहेतुः स्यात् । दर्शितरीत्या तु घटत्वादिसामान्यं घटाद्यधिकरण एव समवायसम्बन्धेन ज्ञातं सत् तेषामेवालौकिकसाक्षात्कारञ्जनयितुं समर्थं नान्यस्येति भावः । "किन्तु"—इति । एवञ्चेत्यर्थः । उक्तेन प्रबन्धेन प्राचीनमतरीत्या ज्ञायमानसामान्यस्य प्रत्यासत्तित्वमुपपादितं सम्प्रति—"आसत्तिराश्रयाणाम्"—इत्यादिमूलाभिहितं नवीनमतरीत्या सिद्धं सामान्यज्ञानस्य प्रत्यासत्तित्वं सिद्धान्तयितुं नवीनमतं दूषयितुमुपक्रमते—"किन्तु"—इति । "यत्र"—इति । तद्घटनाशानन्तरम्=भूतलाद्यधिकरणकघटध्वंसोत्तरम् । तद्घटवतः स्मरणम्="तद्भूतलं घटवदासीत्" इत्याकारकं स्मरणञ्जातम् । तत्र=तदा सामान्यस्य=समानरूपेण प्रतीयमानस्य घटस्य तदानीमभावात्, तस्यैव च तत्तदधिकरणेषु ज्ञानसम्बन्धरूपत्वात् तदभावे तद्घत्तासम्बन्धेन सर्वेषां तद्घटवताम्भानम्=घटीयसकलाधिकरणज्ञानमलौकिकं न स्यादित्यर्थः । दूषणान्तरमप्याह—"किञ्च"—इति । यत्र "अयङ्घट" इति इन्द्रियसम्बद्धविशेष्यकं घटज्ञानञ्जातम्=पूर्वस्मिन्दिवसेऽभूदित्यर्थः । तत्र परदिने द्वितीयस्मिन् दिवसे इन्द्रियसम्बन्धं विनापि=चक्षुःसंयुक्तसमवायसन्निकर्षं विनापीत्यर्थः । "तादृशज्ञानम्"—इति । "सर्वे घटा घटत्ववन्तः" इत्याकारकञ्ज्ञानम्परदिने कुतो न स्यादित्यर्थः । ज्ञानसामग्रीसत्त्वे ज्ञानस्यावश्यम्भावित्वादिति भावः । "तस्मात्"—इति । उक्तदोषद्वयसत्त्वादित्यर्थः । सामान्यविषयकञ्ज्ञानम्प्रत्यासत्तिः=अर्थात् सामान्यमात्रं न प्रत्यासत्तिः=अलौकिकः सन्निकर्षो न मन्तव्यः, किन्तु सामान्यं विषयीकुर्वदेव यज्ज्ञानं तदेव प्रत्यासत्तिः । आद्योऽलौकिकः सन्निकर्ष इत्याशयेन दर्शितदोषोद्धाराय "आसत्तिराश्रयाणान्तु"—इति कारिकां व्याख्याति—"आसत्तिः"—इति । आश्रयाणां यज्जातीयेषु इन्द्रियसन्निकर्षः तेषामिन्द्रियाऽसन्निकृष्टानामपि आसत्तिः=सन्निकर्ष इति यावत् । एतदेव स्पष्टयति—"तथाच"—इत्यादिना । सामान्यं लक्षणं विषयो यस्य तत्सामान्यविषयकमित्यर्थोऽ-

वसेयः । तेन=लक्षणपदस्य विषयरूपार्थकरणेन । "इन्द्रियसम्बद्धविशेष्यकं सामान्यविषयकञ्ज्ञानम्प्रत्यासत्तिः" इति सिद्धान्तलक्षणमित्यर्थः । एवञ्च—निर्विकल्पकसाधारणं स्मरणसाधारणञ्च प्रत्यासत्तिः । तथाच घटत्वप्रकारकप्रत्यक्षत्वं कार्यतावच्छेदकम्, घटत्वज्ञानञ्च कारणतावच्छेदकम् । स्वप्रकारीभूतघटत्वाश्रयत्वञ्च कार्यतावच्छेदकसम्बन्धः, स्वविषयकघटत्वाश्रयत्वञ्च कारणतावच्छेदकसम्बन्धः ।

यत्रैकं घटमवलोक्य सकलघटानाञ्ज्ञानञ्जातं तत्र घटत्वसामान्यज्ञानसन्निकर्षेण सर्वेषां घटत्ववताम् (घटानाम्) भानञ्जायते सामान्यसन्निकर्षेण । सोऽयं सन्निकर्ष अतीतानागतानामिन्द्रियासन्निकृष्टानां सामान्याश्रयाणां सर्वासां व्यक्तीनामलौकिकप्रत्यक्षञ्जनयतीति सिद्धान्तः । यत्तु—दीधित्यामुक्तं यत्रेन्द्रियसंयुक्तो धूमादिस्तद्विशेष्यकं धूम इति ज्ञानञ्जातम्, तत्र ज्ञाने धूमत्वम्प्रकारः तत्र धूमत्वेन सन्निकर्षेण "धूमाः" इत्येवंरूपं सकलधूमविषयकञ्ज्ञानञ्जायते. तत्पूर्वीयसिद्धान्ताभिप्रायेणेति बोध्यमित्याशयः ।

(का०) तदिन्द्रियजतद्धर्मबोधसामग्र्यपेक्ष्यते ॥६४॥

(मुक्ता०) ननु—चक्षुःसंयोगादिकं विनापि सामान्यज्ञानं यत्र वर्त्तते तत्र सकलघटादीनाञ्चाक्षुषादिप्रत्यक्षं स्यादत आह—अस्यार्थः—यदा बहिरिन्द्रियेण सामान्यलक्षणया ज्ञानञ्जननीयं तदा यत्किञ्चिद्धर्मिणि तत्सामान्यस्य तदिन्द्रियजन्यज्ञानस्य सामग्री अपेक्षिता । साच सामग्री चक्षुःसंयोगालोकसंयोगादिकम् । तेनाऽन्धकारादौ चक्षुरादिना तादृशं ज्ञानं न जायते ॥ ६४ ॥

(प्रभा०) अलौकिकस्वभावत्वात्सामान्यज्ञानसन्निकर्षस्य इन्द्रियसम्बन्धं विनापि सकलव्यक्तिसाक्षात्कारः स्यादित्याक्षेपवारणाय "ननु"—इत्यादि ग्रथ्नाति । परममूले—"तदिन्द्रियज"—इति । तत्तदिन्द्रियजन्यः यस्तद्धर्मबोधः अर्थात् सामान्यज्ञानमेव तस्य सामग्री चक्षुरालोकसंयोगादिका साप्यत्र प्रत्यक्षे अपेक्षिता । घटोत्पत्तौ दण्डचक्रादिरिव आलोकसंयोगादिकमपि अलौकिकप्रत्यक्षे सहकारिकारणमित्यर्थः । बहिरिन्द्रियेण=मनस्त्वान्यैन्द्रियत्वावभाजकोपाधिविशिष्टेनेन्द्रियेण सामान्यलक्षणया निरुक्तया ज्ञानञ्जननीयं तदा यत्किञ्चिद्धर्मिणि=घटत्वादिधर्मिणि, तत्सामान्यस्य=घटत्वादेः, तदिन्द्रियजन्यज्ञानस्य सामग्री=आलोकसंयोगादिरूपा । एतत्स्वयं विवृणोति—"साच"—इति । अस्या अपेक्षायाः फलं दर्शयति—"तेन"—इति । "तादृशज्ज्ञानम्"—इति । अलौकिकः सकलघटादिसाक्षात्कारश्चाक्षुषः । त्वाचस्तु स्यादेव तत्रालोकसंयोगस्यानपेक्षणात् ॥ ६४ ॥

(का०) विषयी यस्य तस्यैव व्यापारो ज्ञानलक्षणः ।

(मुक्ता०) ननु—ज्ञानलक्षणा प्रत्यासत्तिर्यदि ज्ञानरूपा सामान्यलक्षणापि ज्ञानरूपा तदा तयोर्भेदो न स्यादत आह—सामान्यलक्षणा प्रत्यासत्तिर्हि तदाश्रयस्य ज्ञानञ्जनयति । ज्ञानलक्षणा प्रत्यासत्तिस्तु यद्विषयकञ्ज्ञानं तस्यैव प्रत्यासत्तिरिति । अत्रायमर्थः—प्रत्यक्षे सन्निकर्षं विना भानं न सम्भवति । तथाच सामान्यलक्षणां विना धूमत्वेन सकलधूमानां वह्नित्वेन सकलवह्नीनाञ्च भानं कथम्भवेत्तदर्थं सामान्यलक्षणा स्वीक्रियते । नच सकलवह्निधूमभानाभावे का क्षतिरिति वाच्यम्, प्रत्यक्षधूमे वह्निसम्बन्धस्य गृहीतत्वादन्यधूमस्य चानुपस्थितत्वाद् "धूमो वह्निव्याप्यो नवा" इति संशयानुपपत्तेः ।

(प्रभा०) ज्ञानलक्षणासन्निकर्षं लक्षयन् सामान्यलक्षणाज्ञानलक्षणयोरभेदशङ्कां वारयितुं शङ्कते—"ननु"—इति । परममूले—"विषयी यस्य"—इति । यस्य= सौरभादेः विषयी=ज्ञानं तस्यैव सौरभादेर्व्यापारः=सन्निकर्षः ज्ञानलक्षणः ज्ञानलक्षणा प्रत्यासत्तिर्द्वितीयोऽलौकिकः सन्निकर्ष इत्यर्थः ।

अयमाशयः—यत्र पूर्वस्मिन्दिवसे कश्चित् पुरुषः कुत्रचिद् हट्टे किञ्चिचन्दनखण्डनं घ्रात्वा "सुरभि चन्दनम्" इति निश्चितवान्, स एव परदिने तत्र गतः, केनचित् क्रेत्रा "चन्दनखण्डमिदं सुरभि नवा" इति पृष्टोऽघ्रात्वैव "सुरभि चन्दनम्" इति यद्वदति तदा तस्य प्रतिपत्तुः दर्शिताकारञ्ज्ञानं सौरभञ्चन्दनञ्चन्दनत्वञ्चैतत्त्रितयमेव विषयीकरोति । तत्र यथाक्रमं संयोगसन्निकर्षेण चन्दनज्ञानम्, चक्षुःसंयुक्तसमवायसम्बन्धेन चन्दनत्वज्ञानं यदस्ति तल्लौकिकप्रत्यक्षमेव लौकिकसन्निकर्षजन्यत्वात् । यत्तु—घ्राणेन्द्रियसम्बन्धमन्तरापि चन्दनखण्डे तस्य सौरभभानञ्जातं तत्तु "चक्षुःसंयुक्तमनःसंयुक्तात्मसमवेतज्ञानरूपेण" "चक्षुःसंयुक्तमनःसंयुक्तात्मसमवेतसंस्काररूपेण" वा ज्ञानलक्षणाख्येन सन्निकर्षेण जनितमलौकिकमेव । एवंरूपा या सौरभसाक्षात्कारहेतुः प्रत्यासत्तिः सा "ज्ञानलक्षणा" प्रत्यासत्तिरित्युच्यते ।

अयम्भावः—"एकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकम्" इत्यस्ति नियमः, तेन पूर्वं घ्राणेन सौरभसाक्षात्कारवतः प्रमातुः पुनर्यद् चन्दनखण्डस्य चक्षुषा दर्शनं ततः सौरभस्मृतिः, सौरभस्मृतिहेतवः उद्बुद्धाः संस्कारा वा "सुरभि चन्दनम्" इत्याकारकं सौरभविषयकञ्चाक्षुषम्प्रत्यक्षञ्जनयन्ति । यद्यपि सौरभप्रत्यक्षकरणे चक्षुषः स्वसामर्थ्यं नास्ति, तथापि उक्तेनालौकिकेन सम्बन्धेन चक्षुषाऽपि सौरभभानं यत्, तदेव द्वितीयमलौकिकम्प्रत्यक्षमित्याशयवान् उभयोः प्रत्यासत्त्योर्भेदं स्पष्टीकरोति—"सामान्यलक्षणाप्रत्यासत्तिः"—इत्यादिग्रन्थेन ।

उक्तः सिद्धान्तः । अक्षराण्येवं योजयितव्यानि—सामान्यलक्षणाज्ञानलक्षणाप्रत्यासत्त्योरेष भेदः यत् सामान्यलक्षणा आद्या प्रत्यासत्तिः, तदाश्रयस्य=

धूमत्वादिधर्मविशिष्टस्य धर्मिणः धूमादेर्लौकिकसाक्षात्कारोत्तरं तस्यैव धूमत्वादेराश्रयभूतस्य देशान्तरीयकालान्तरीयस्यापि धर्मिणः ज्ञानम्=साक्षात्कारञ्जनयति । ज्ञानलक्षणा द्वितीया प्रत्यासत्तिस्तु यद्विषयकञ्ज्ञानम्=यस्य सौरभादेरलौकिकम्भानञ्जातं तस्यैव प्रत्यासत्तिः सम्बन्धः, नतु देशान्तरकालान्तरवर्त्तिनोऽपि सौरभादेः । एवं ज्ञानत्वेन रूपेण उभयोः प्रत्यासत्योः साम्येऽपि विभिन्नफलजनकत्वेन प्रकारेण परस्परम्भेद एवेति भावः । एनमर्थं स्पष्टीकर्त्तुमाह—"अत्रायमर्थ"—इति । अत्र=सामान्यलक्षणाज्ञानलक्षणयोर्मध्ये । अयमर्थः=अयम्भाव इत्यर्थः । "प्रत्यक्षे"—इति । तथाच—सन्निकर्षप्रत्यक्षनिरूपितविषयत्वव्यापकत्वेन व्यापकीभूतसन्निकर्षाभावे व्याप्यभूतविषयस्याप्यभावप्रसङ्गादित्याशयमनुरुध्यैव दिनकरभट्टेनापि प्रत्यक्षविषयताया सन्निकर्षाश्रयत्वव्याप्यत्वादित्युक्तम् । "धूमत्वेन सकलधूमानाम्"—इति । अर्थात्सामान्यलक्षणाया अस्वीकारे सकलधूमवह्निपु सन्निकर्षाभावे "सर्वे धूमाः" "सर्वे वह्नयः" इत्याकारकं सकलधूमविषयकं सकलवह्निविषयकञ्च प्रत्यक्षम्, सकलधूमादिषु तद्विषयत्वञ्चाऽनुभवसिद्धं कथम्भवेत्=केन प्रकारेण निर्वहेदित्यर्थः । तदर्थम्=धूमत्वेन सकलधूमानां वह्नित्वेन सकलवह्नीनाम्भानार्थं सामान्यलक्षणा स्वीक्रियते ।

अत्राशङ्क्य समाधत्ते—"नच"—इत्यादिना । "सकलवह्निधूमभानाभाव"—इति । यदि देशान्तरकालान्तरवृत्त्योः वह्निधूमयोर्ज्ञानं न स्यात् तदा को दोष इति शङ्काग्रन्थार्थः ।

प्रत्यक्षधूमे=इन्द्रियसन्निकृष्टधूमे महानसवृत्तिधूमे इत्यर्थः । वह्निसम्बन्धस्य=यत्र धूमस्तत्र वह्निरित्याकारस्य व्याप्तिरूपस्य सम्बन्धस्य गृहीतत्वात्=चक्षुषा प्रत्यक्षीकृतत्वात् अन्यधूमस्य=देशान्तरीयकालान्तरीयस्य (पर्वतादिवृत्तेः) धूमस्य अनुपस्थितत्वात्=चक्षुषाऽसन्निकृष्टत्वात् धूमो वह्निव्याप्यो नवा=धूमो वह्निनिरूपितव्याप्यताश्रयोऽस्ति नवा इत्याकारः संशयः=पक्षतापादकः सन्देहः न स्यात्=नैव भवेत्, तदभावे च पर्वतादौ वह्न्यादेरनुमानमेव नोदीयादिति समाधानग्रन्थार्थः ।

(मुक्ता०) मन्मते तु—सामान्यलक्षणया सकलधूमोपस्थितौ कालान्तरीयदेशान्तरीयधूमे वह्निव्याप्यत्वसन्देहः सम्भवति । नच सामान्यलक्षणास्वीकारे प्रमेयत्वेन सकलप्रमेयज्ञाने जाते सार्वज्ञ्यापत्तिरिति वाच्यम्, प्रमेयत्वेन सकलप्रमेयज्ञाने जातेऽपि विशिष्य सकलपदार्थानामज्ञातत्वेन सार्वज्ञ्याभावात् । एवं ज्ञानलक्षणाया अस्वीकारे सुरभि चन्दनमिति ज्ञाने सौरभस्य भानं कथं स्यात् । यद्यपि सामान्यलक्षणयाऽपि सौरभभानं सम्भवति, तथापि सौरभत्वस्य भानञ्ज्ञानलक्षणया । एवं यत्र धूमत्वेन धूलीपटलञ्ज्ञातन्तत्र धूलीपटलस्यानुव्यवसाये भानञ्ज्ञानलक्षणया ।

(प्रभा०) मन्मते=सामान्यलक्षणाप्रत्यासत्तिवादिनो मम सिद्धान्तिनो मते सामान्यलक्षणया=सामान्यविषयकज्ञानरूपेण आद्येन अलौकिकेन सम्बन्धेन सकलधूमोपस्थितौ=धूमत्वेन सकलधूमसाक्षात्कारे कालान्तरीयदेशान्तरीयधूमेऽपि अन्यपर्वतादिदेशवृत्तिधूमे अतीतानागतादिधूमेऽपि च वह्निव्याप्यत्वसन्देहः=अयं वह्निनिरूपितव्याप्त्याश्रयो नवा इत्याकारकः संशयः सम्भवति=भवितुमर्हति जायत एवेत्यर्थः। तस्मात्सामान्यलक्षणास्वीकारो न निरर्थ इति सिद्धान्तः।

अत्राशङ्क्य समाधत्ते—"नच"—इत्यादिना। अक्षराणि प्रायः स्पष्टार्थानि। अत्र प्रमेयत्वेन=महाव्यापकेन धर्मेण कार्यकारणभावो नाङ्गीकृतः, किन्तु प्रमेयत्वव्याप्यैः धूमत्वादिभिर्धर्मैरेव विशिष्य कार्यकारणभाव इति तात्पर्यम्। तथाच प्रमेयत्वेन सकलपदार्थज्ञाने सत्यपि तत्तद्विशेषरूपत्वेन ज्ञानाभावान्नैव सार्वज्ञ्यापत्तिरिति तु परः सारः।

सम्प्रति ज्ञानलक्षणास्वीकारे बीजमाह—"*एवम्"—इत्यादिना। स्पष्टम्। "सुरभि चन्दनम्" इत्याकारके भाने सौरभभानं कथं स्यात्=सौरभस्य चाक्षुषविषयनिरूपितत्वं कथमपि न स्यादित्यर्थः। सौरभत्वप्रकारकलौकिकप्रत्यक्षसाहाय्येन सौरभत्वावच्छिन्नप्रकारकलौकिकप्रत्यक्षसाहाय्येन वा सामान्यलक्षणाप्रत्यासत्तिरेव हेतुरिति प्रकृते द्वितीयसामग्र्याः सहकारिण्याः सत्त्वात्किञ्ज्ञानलक्षणाङ्गीकारे प्रयोजनमित्याह—"यद्यपि"—इत्यादि। "सौरभभानम्"—इति। चाक्षुषे सौरभत्वप्रकारेण सकलसौरभस्य विषयत्वं सम्भवतीत्यर्थः। तथाच—ज्ञानलक्षणा न स्वीकार्येति भावः। "तथापि"—इति। सौरभत्वभानम्="सुरभि चन्दनम्" इति चाक्षुषे स्वरूपेण सौरभत्वधर्मप्रतीतिस्तु ज्ञानलक्षणया=ज्ञानलक्षणाप्रत्यासत्त्यैव। तदानीं सौरभत्वांशे नैव किमपि धर्मान्तरं गृहीतं येन सामान्यलक्षणयैव निर्वाहः स्यात्, तस्मात्तद्ग्रहे सामान्यलक्षणया न सौरभत्वभाननिर्वाह इति भावः।

ज्ञानलक्षणाया अङ्गीकारे हेत्वन्तरमप्याह—"†एवम्"—इति। धूमत्वेन=धूमत्वधर्मपुरस्कारविधया धूलीपटलञ्ज्ञातम्=धूलीपटलस्यापि धूमत्वेन ज्ञानञ्जातम्। यत्र धूलीपटले "अयं धूम" इति ज्ञानम्भ्रमात्मकञ्जातम्, तत उत्तरं "धूममहञ्जानामि" इत्याकारकमनुव्यवसायज्ञानमभूत्, तत्र=अनुव्यवसाये ज्ञानविषयकज्ञाने अर्थात् धूलीपटलस्य भानम्=ज्ञानम्, ज्ञानलक्षणया=ज्ञानलक्षणयैव। नहि धूलीपटलेन सह मनसो लौकिकः सन्निकर्षः, येन स्वविषयधूमत्ववत्तासम्बन्धेन सामान्यलक्षणयैव निर्वाहे

* एतावता सामान्यलक्षणायाः कारणत्वानङ्गीकारे दोष उक्तः सम्प्रति ज्ञानलक्षणाया अनङ्गीकारे दोषमाहेत्यर्थः।

† एतावता स्थलविशेषे जातेः स्वरूपतो भाननिर्वाहार्थं ज्ञानलक्षणाया आवश्यकत्वमुपपाद्य इदानीं स्थलविशेषे जात्यतिरिक्तपदार्थस्य किञ्चिद्रूपेण भाननिर्वाहार्थमपि ज्ञानलक्षणाया आवश्यकत्वमुपपादयति—"एवम्" इत्यादिनेति प्राचीनः श्रीनृसिंहः।

ज्ञानलक्षणा त्यज्यैतैव, किन्तु ज्ञानलक्षणयैव धूमत्वेन धूलीपटलविषयकज्ञानप्रकारकधूमज्ञानवानहमित्याकारकप्रत्यक्षनिरूपितविषयत्वमिति भावः ।

इदमत्राकूतकम्—ज्ञानविषयकज्ञानमनुव्यवसाय इत्यवोचाम । परमिदमनुव्यवसायात्मकञ्ज्ञानं "स्वसंयुक्तात्मसमवेतत्वाख्येन" मानसेन लौकिकेन सम्बन्धेन स्वविषयीभूतञ्ज्ञानं तद्विषयं घटादिञ्च विषयीकुर्वदेव जायते । अत्र "स्व"शब्देन मनोग्रहणं तत्संयुक्त आत्मा तस्मिन् ज्ञानस्य समवेतत्वात् । अस्यानुव्यवसायाख्यस्य "अहङ्घटञ्जानामि" इत्याकारकस्य बाह्यैर्घटादिभिः साकं नैव कश्चिल्लौकिकः सम्बन्धः । सम्बन्धं विना च ज्ञानं कथञ्जायेत विषयञ्च प्रकाशयेत, तस्मात् अनुव्यवसायद्वारा घटादिविषयभानाय "स्वसंयुक्तात्मसमवेतज्ञानविषयत्वाख्य" एवालौकिकः सम्बन्धो ज्ञानलक्षणात्मकः स्वीकर्त्तव्यो भवति । अत्रापि यद्यपि घटादिविषयभानाय सामान्यलक्षणैव प्रभ्वी, तथापि (अनुव्यवसाये) घटत्वादिधर्मभाननिर्वाहस्तु ज्ञानलक्षणयैवेति बोध्यम् ।

एवमेव धूलीपटलादिभ्रान्तिस्थलेऽपि (धूमत्वाभाववति धूलीपटलादौ धूमत्वप्रकारकज्ञानस्य भ्रमरूपत्वात्) धूमधूमत्वयोरुभयोरपि भानञ्ज्ञानलक्षणया=स्वसंयुक्तात्मसमवेतज्ञानविषयत्वरूपयेति बोध्यम् । वस्तुतो धूलीपटलादौ धूमत्वादिधर्माभावात् "आसत्तिराश्रयाणान्तु" इत्यादिसामान्यलक्षणालक्षणस्य योजयितुमशक्यत्वादिति दिक् ।

(का०) योगजो द्विविधः प्रोक्तो युक्तयुञ्जानभेदतः ॥६५॥

(मुक्ता०) योगाभ्यासजनितो धर्मविशेषः श्रुतिपुराणादिप्रतिपाद्य इत्यर्थः । युक्तयुञ्जानभेदत इति । युक्तयुञ्जानरूपयोगिद्वैविध्याद्धर्मस्यापि द्वैविध्यमिति भावः ॥ ६५ ॥

(का०) युक्तस्य सर्वदा भानश्चिन्तासहकृतोऽपरः ।

(मुक्ता०) युक्तस्य तावद्योगजधर्मसहायेन मनसा आकाशपरमाण्वादिनिखिलपदार्थगोचरञ्ज्ञानं सर्वदैव भवितुमर्हति । द्वितीयस्य चिन्ताविशेषोऽपि सहकारीति ।

इति श्रीविश्वनाथपञ्चाननभट्टाचार्य्यविरचितायां
सिद्धान्तमुक्तावल्याम्प्रत्यक्षखण्डम् ।

---

(प्रभा०) तृतीयमलौकिकं सन्निकर्षं विभजते परममूले—"योगज"—इति । "योगाज्जातो योगज" इति व्युत्पत्तिलभ्यमर्थमाह—"योगाभ्यासजनितो धर्मविशेषः"—इति । योगस्तु—चित्तवृत्तिनिरोधः । तथाच पारमर्षं सूत्रम्—"योगश्चित्तवृत्तिनिरोधः" (१ । १) इति । सच समाधिरेव । "युज् समाधौ" इत्यस्माद्

व्युत्पन्नः समाध्यर्थो नतु "युजिर् योगे" इत्यस्मात्संयोगार्थ इत्यर्थ इति वाचस्पत्यकाराः। "श्रुतिपुराणादिप्रतिपाद्य"—इति। "युञ्जते मन उत युञ्जते धियः" (श्वे० २.४) "ततस्तु तम्पश्यति निष्कलं ध्यायमानः" इत्याद्या श्रुतिः। "यत्समत्वं द्वयोरत्र जीवात्म-परमात्मनोः। स नष्टसर्वसङ्कल्पः समाधिरभिधीयते ॥" इत्यादि पुराणञ्च द्रष्टव्यम्। आदिपदेन स्मृत्यादिपरिग्रहः।

अस्य द्वैविध्यं दर्शयति—"युक्तयुञ्जान"—इति। अतिरोहितार्थमन्यत्। अव्याहतगतित्वेन सर्वविषयम्भानं युक्तस्य योगिनः युक्तयोगजसन्निकर्षेण। अपरो युञ्जानः योगसाधनपरस्तु चिन्तासहकृतः चिन्तारूपं सहकारिणमपेक्षते। समाधिस्थ एव युञ्जाननामकयोगजसन्निकर्षेण सर्वम्पश्यति नतु समाधिरहितोऽपि। अतिरोहितार्थ-मन्यत्। सर्वस्यास्य ग्रन्थस्य मूलन्तु—"आर्षं सिद्धदर्शनञ्च धर्मेभ्यः" (वै १०।२ १३) इत्यादिसूत्रन्तत्तदनुपङ्क्ति प्रशस्तञ्च निरीक्ष्यम्। बालानामनुपयोगाद् ग्रन्थगौरवभयाच्च न बहु प्रपञ्चितम्।

इति श्रीमहाकविभगवद्दत्तश्रीन्यायाम्भोनिधि-उष्णाकरायशिष्येण श्रीपण्डितदेवीदास-तनुजनुषा सतीविष्णुदेवीगर्भजेन श्रीजैनन्यायविशारदकवितार्किकदर्शनाचार्य्य-नृसिंहदेवशास्त्रिणा विरचितायां सिद्धान्तमुक्तावल्याः प्रभाख्यायां व्याख्यायाम्प्रथमम्प्रत्यक्षखण्डम्।

समाप्ता च प्रत्यक्षस्वरूपनाम्नी तुरीया मुक्ता।



ॐ

# अनुमानखण्डम् ।

(का०) व्यापारस्तु परामर्शः करणं व्याप्तिधीर्भवेत् ॥६६॥

अनुमायाम्—

(प्रभा०) नत्वा शङ्करचरणं शरणम्भरणं स्वभक्तहितकरणम् ।
सम्प्रति सुटीकयामि स्वगुरोः कृपयाऽनुमानमतिकठिनम् ॥१॥
* अनुमानखण्डमेतं मम रचितां रीतिमाश्रित्य ।
सत्यं नैव भयं स्यात्पठतोऽवच्छेदकादिपरिभाषाम् ॥२॥

"† अनुमितिम्"—इति । प्रत्यक्षनिरूपणानन्तरमनुमितिनिरूपणे उपजीव्योपजीवकभाव(कार्यकारणभाव)रूपा सङ्गतिर्बोध्या । ‡ सङ्गतिसामान्यलक्षणन्तु—"एकवाक्यतापन्नत्वे सति अनन्तराभिधानप्रयोजकजिज्ञासाजनकज्ञानविषयत्वम्" इति । प्रत्यक्षाभिधानानन्तरं तत्प्रयोजिका जिज्ञासा "प्रत्यक्षकार्यम्भवतु" इत्याकारा तज्जनकं ज्ञानम् "प्रत्यक्षज्ञानकार्यमिष्टसाधनम्" इत्याकारकम्, तद्विषयः "प्रत्यक्षकार्यत्वम्" इति लक्षणसमन्वयः । एवमन्यत्रापि ।

परे तु—प्रत्यक्षनिरूपणानन्तरमनुमाननिरूपणेऽवसरसङ्गतिमाहुः । तेषामयमाशयः । "प्रत्यक्षमनुमितिस्तथो"—इत्यादिविभागवाक्यात् प्रथमतः प्रत्यक्षस्योपस्थिति-

---

* मम रचितां रीतिमाश्रित्य=अवलम्ब्य एनमनुमानखण्डम्पठतः अवच्छेदकादिभाषाम्पठतो भयं नैव स्यादिति सत्यम् । एवञ्च--पठत इत्येकस्यैव पदस्य तन्त्रेणोभयत्रान्वयो बोध्यः । "खण्डोऽर्ध ऐक्षवे मणिदोषे च" इति हैमः । "खण्डोऽस्त्री शकले नेक्षुविकारमणिदोषयोः । खण्डः पानान्तरे भेदे" इति कोशान्तरम् ।

† अनुमितित्वञ्च—अनुमिनोमीत्यनुभवसिद्धो जातिविशेषः । केचित्तु—"जन्यज्ञानजन्यत्वाव्यभिचारि" इति लक्षणमाहुः । तस्यायमर्थः—जन्यज्ञानम्=व्याप्तिज्ञानं तज्जन्यत्वमनुमितौ तदव्यभिचारित्वमनुमितित्वधर्मे बोध्यम् ।

‡ सप्रसङ्ग उपोद्घातो हेतुतावसरस्तथा ।
निर्वाहकैककार्यत्वे षोढा सङ्गतिरिष्यते ॥ इति ।

उपोद्घातादिभिन्नः स्मरणप्रयोजकसम्बन्धः **प्रसङ्गः** । प्रकृतोपपादकत्वमुपोद्घातः । **हेतुता** उपजीव्योपजीवकभावः । **अवसरो**ऽनन्तरवक्तव्यत्वम् । **निर्वाहकैक्य**मेकप्रयोजकप्रयोज्यत्वम् । **कार्यैक्य**मेककार्यानुकूलत्वमित्याद्यन्यत्र विस्तरः ।

रेवावश्यकी, तत्रैव च—अनुमितिनिरूपणप्रतिबन्धिका "किम्प्रत्यक्षम्" इत्याकारिका शिष्यजिज्ञासा जायते, ततः प्रत्यक्षनिरूपणेन तादृशजिज्ञासानिवृत्तौ अनन्तरोपस्थिताऽनुमितेरेव वक्तव्यतया अवसरसङ्गतेरेव लाभान्नोपजीव्योपजीवकभावरूपा प्रत्यक्षाऽनुमानयोः सङ्गतिः, अनुमितौ प्रत्यक्षोपजीवकत्वस्येव प्रत्यक्षेऽनुमित्युपजीवकत्वस्यापि सत्त्वेन प्रकृते तस्याऽनन्तर्याभिधानकत्वनियमासम्भवात् । एतद्विषयकविस्तरस्तु मथुरानाथीयचिन्तामणिटिप्पण्यामनुसन्धेयम् ।

परममूले अनुमितिं निरूपयति—"व्यापारस्तु"—इति । अयमाशयः—"पर्वते वह्निज्ञानं मे जायताम्" इत्याकारायामनुमित्सायाञ्जातायाम्पर्वते पक्षे तल्लिङ्गं धूममालोक्य "यत्र धूमस्तत्राग्निः" इति वह्निधूमयोरनेकवारं साहचर्यानुभवलक्षणां व्याप्तिं स्मृत्वा "वह्निव्याप्यधूमवानयम्पर्वत" इति परामर्शोत्तरं यद् "वह्निमानयम्" इति ज्ञानञ्जायते तदेवानुमितिः । * अत्र करणादि दर्शयितुमाह—"व्यापार"—इति । अनुमायाम्=अनुमितौ परामर्शो=वक्ष्यमाणलक्षणो ज्ञानविशेषः व्यापारः । तज्जन्यत्वे सति तज्जन्यजनकत्वरूपः करणलक्षणघटक इत्यर्थः । व्याप्तिधीः=व्याप्तिज्ञानं वक्ष्यमाणलक्षणं करणम्=असाधारणं कारणम्भवेदित्यर्थः ।

(मुक्ता०) अनुमितिं व्युत्पादयति—व्यापारस्त्विति । अनुमायामनुमितौ व्याप्तिज्ञानं करणम् । परामर्शो व्यापारः । तथाहि—येन पुरुषेण महानसादौ धूमे वह्नेर्व्याप्तिर्गृहीता पश्चात्स एव पुरुषः क्वचित्पर्वतादावविच्छिन्नमूलां धूमलेखाम्पश्यति । तदनन्तरम् "धूमो वह्निव्याप्य" इत्येवंरूपं व्याप्तिस्मरणं † भवति । पश्चाच्च "वह्निव्याप्यधूमवानयम्" इति ज्ञानम्भवति, स एव "परामर्श" इत्युच्यते । तदनन्तरम् "पर्वतो वह्निमान्" इति ज्ञानम्, तदेवानुमितिः ॥६६॥

(प्रभा०) एतदेव स्पष्टीकरोति मुक्तावल्याम् "अनुमायाम्" इत्यादिग्रन्थेन । "व्याप्तिज्ञानं करणम्"—इति । स्वीयपरामर्शरूपव्यापारद्वारा "व्यापारवदसाधारणं कारणं करणम्" इति लक्षणलक्षितत्वेन अनुमितिकरणत्वात्करणम् । "परामर्शो व्यापार"—इति । व्याप्तिज्ञानजन्यत्वे सति व्याप्तिज्ञानजन्यानुमितिजनकतया व्यापारः । यथा च परामर्शस्य व्यापारत्वं न व्यभिचरति तथा दर्शयति—"तथाहि"—इत्यादिना ।

---

* अत्र=अनुमितौ ।

† "तस्य भवति" इति युक्तः पाठः । तस्यैव भवतीत्यर्थः । अनुभवस्मरणयोः सामानाधिकरण्येन कार्यकारणभावादिति भावः ।

* चक्षुःसंयोगादावतिव्याप्तिवारणाय व्यापारवत्त्वनिवेशः । आत्ममनःसंयोगद्वारा कारणीभूतात्मादौ अतिव्याप्तिवारणाय असाधारणेति ।

"महानसादौ"—इत्यादिना गोष्ठचत्वरादीनां सङ्ग्रहः । "वह्नेर्व्याप्तिः"—इति । "यत्र धूमस्तत्र वह्निः" इति साहचर्यरूपा व्याप्तिरित्यर्थः । "अविच्छिन्नमूलाम्"—इति । ‡ धूमेनाव्यभिचरितामित्यर्थः । तदनन्तरम्=धूमदर्शनानन्तरमित्यर्थः । अर्थात् धूमदर्शनं व्याप्तिस्मरणे उद्बोधकतया कारणम्, यतः "एकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकम्" इत्यस्ति नियमः । ततश्च यादृशविशेषणविशिष्टस्य धूमस्य व्याप्तिसम्बन्धितया भानं तादृशधूमदर्शनमेव व्याप्तिस्मृतावुद्बोधकमित्यभिप्रायेण "अविच्छिन्नमूलाम्" इत्युक्तम् । वह्निव्याप्यः=वह्निनिरूपितव्याप्त्याश्रयः ।

(का०) ज्ञायमानं लिङ्गन्तु करणं नहि ।

(प्रभा०) अत्रत्यम्प्राचीनमतं निरस्यति—"ज्ञायमानम्"—इति । ज्ञानगोचरो वर्त्तमानकालीनज्ञानविषयीभूतं वेत्यर्थः । धूमादिकं लिङ्गं नहि=नैव करणम् ।

(मुक्ता०) अत्र प्राचीनास्तु व्याप्यत्वेन ज्ञायमानं लिङ्गमनुमितिकरणमिति वदन्ति, तद्दूषयति ज्ञायमानमिति ।

(प्रभा०) "व्याप्यत्वेन"—इति । साध्यनिरूपितव्याप्त्याश्रयत्वेन । "ज्ञायमानम्"—इति । ज्ञातं सदित्यर्थः ।

(का०) अनागतादिलिङ्गेन न स्यादनुमितिस्तदा ॥६७॥

(मुक्ता०) लिङ्गस्यानुमित्यकरणत्वे युक्तिमाह—अनागतादीति । यदि अनुमितौ ❀ लिङ्गं करणं स्यात्तदाऽनागतेन विनष्टेन वा लिङ्गेन अनुमितिर्न स्यादनुमितिकरणस्य लिङ्गस्य तदानीमभावात् ॥६७॥

---

‡ पर्वताऽसम्बद्धधूमलेखाया वह्निसामानाधिकरण्याभावेन वह्निव्याप्यत्वाभावत्वात् तज्ज्ञानस्य व्याप्तिज्ञानसम्बन्धत्वाभावेन उद्बोधकत्वासम्भवात् अविच्छिन्नमूलामित्युक्तम् । पर्वतसम्बद्धाम्, अन्तराऽवच्छेदरहितामिति तु परमार्थः ।

❀ अत्रेदम्बोध्यम्—अनुमितौ परामर्शमात्रं न हेतुरपितु लिङ्गपरामर्शः । तथाच—विशिष्टस्य कारणताग्रहे विशेषणस्यापि कारणताग्रहात् परामृश्यमानलिङ्गस्य लिङ्गपरामर्शस्य वा हेतुतेत्यत्र विनिगमनाविरहादुभयोर्हेतुतासिद्धौ तत्र च व्यापाराभावान्न परामर्शस्य कारणता, किन्तु लिङ्गस्यैवेति प्राचामाशय इति दिनकरी । अत्र प्रकाशकारस्यायमाशयः—"असति बाधके विशिष्टस्य कारणताग्राहकप्रमाणेन विशेषणांशेऽपि कारणताग्रहः" इति । युक्तञ्चैतत्, अन्यथा अरुणाधिकरणन्यायोपि न घटेत । अयं न्यायः पूर्वमीमांसायास्तृतीयेऽध्याये प्रथमे पादे षष्ठेऽधिकरणे प्रदर्शितः । यस्यैष सारः—"अरुणया पिङ्गाक्ष्यैकहायन्या गवा सोमं क्रीणाति" इति श्रूयते । अत्रारुणाशब्दो गुणिविषयतया प्रयुज्यमानोऽपि अरुणं गुणमाचष्टे "नागृहीतविशेषणा बुद्धिर्विशिष्टे उपजायत" इति न्यायात् । अन्वयव्यतिरेकाभ्यां तत्रैव व्युत्पत्तेश्च, तृतीयया श्रुत्या आरुण्यस्य क्रयसाधनत्वं प्रतीयते, परन्तु न युज्यते अमूर्त्तस्यारुण्यस्य वासोहिरण्यादिवत् क्रयसाधनत्वासम्भवात् । उक्तञ्च—

(प्रभा०) अत्रैव हेतुमाह परममूले—"अनागतादिलिङ्गेन"—इति । अनागतेन=भविष्यता, आदिपदात् भूतेन=अतीतेन, लिङ्गेन=व्याप्येन धूमादिना तदा= अनुमितिकरणकाले अनुमितिः="अयं वह्निमान्" इत्याद्याकारकं साध्यविशिष्टज्ञानं न स्यात्=नैव भवेदित्यर्थः ज्ञायमानलिङ्गाभावात् धूमादिदर्शनाभावादिति सान्वयः कारिकार्थः । मूले—"युक्तिमाह"—इति । अस्यायमर्थः—"इयं यज्ञशाला वह्निमती भविष्यति भाविधूमात्" "इयञ्च वह्निमत्यभूत् भूतधूमात्" इति यथाक्रममनागतेन भूतेन च लिङ्गेन वह्नेरनुमानं न स्यात्, यदि ज्ञायमानं लिङ्गं करणं स्यात् । नहि भूतभविष्यतोः कालयोर्धूमलिङ्गञ्ज्ञायमानं वर्त्तते । लिङ्गज्ञानस्य अनुमितिकरणत्वे तु नानुमित्यसम्भवो दोषः, तदा * ज्ञानलक्षणया प्रत्यासत्त्या † यज्ञशालादौ (पक्षे) लिङ्गज्ञानस्य सत्त्वादिति युक्तिरित्यर्थः । अतएव रामरुद्रयामुक्तम्—"विषयितासम्बन्धेन तद्विशिष्टज्ञानमेव अनुमितिहेतुर्बोध्य" इत्युक्तम् । एवञ्च लिङ्गज्ञानम्=व्याप्तिज्ञानमेव करणमिति सिद्धान्तः ॥६७॥

(का०) व्याप्यस्य पक्षवृत्तित्वधीः परामर्श उच्यते ।

(मुक्ता०) व्याप्यस्येति । व्याप्तिविशिष्टस्य पक्षेण सह वैशिष्ट्यावगाहिज्ञानमनुमितिजनकम् । तच्च व्याप्यः पक्ष इति ज्ञानम्पक्षो व्याप्य-

---

अमूर्त्तत्वाद् गुणो नैव क्रियां साधयितुं क्षमः ।
तस्मात् क्रीणातिना नास्य सम्भवत्येकवाक्यता ॥ इति ।

अतश्च तृतीया श्रुतिरविनियोजिका जाता, तेन ज्योतिष्टोमप्रकरणगतग्रहचमसादीन् करणत्वेनोपदिष्टाननूद्यारुण्यगुणो विधीयताम् । ततश्च "अरुणया" इति भिन्नं वाक्यम्, पिङ्गाक्ष्येति च भिन्नम् । तत्राद्यस्य "येन केनापि द्रव्येण यत् किञ्चित् क्रियते तेनारुण्येनैव कर्त्तव्यम्" इति वाक्यार्थः । अतः प्राकरणिकद्रव्यमात्रे आरुण्यगुणनिवेश इति पूर्वपक्षः । **सिद्धान्तस्तु**—द्रव्यगुणयोरेकक्रियान्वयित्वरूपार्थैकत्वे सम्भवति तयोः परिच्छेद्यपरिच्छेदकभावनियमः एकार्थप्रतिपादकत्वरूपैकवाक्यत्वात् । एवञ्च तृतीयया श्रुत्या यथा पिङ्गाक्ष्यादेः करणत्वं तथा तद्विशेषणीभूतारुण्यगुणस्यापि, खलेकपोतन्यायेन सर्वकारकाणां साक्षात् क्रियान्वयित्वनियमात् । उक्तञ्च वार्त्तिके—

कारकं ह्युच्यतेऽकुर्वन्न क्रियां तत्करोति च ।
तस्मान्न द्रव्यसम्बन्धः कारकस्यास्ति कस्यचित् ॥ इति ।

विस्तरस्त्वन्यतोऽनुसन्धेयः । एवं यथा मीमांसकसिद्धान्ते गोविशेषणीभूतानामारुण्यादीनामपि सोमक्रयणसाधनता प्रतीयते, तद्वत् परामर्शविशेषणस्यापि लिङ्गस्य कारणतायां न बाधकमिति प्राचामभिप्रायः ।

* स्वसंयुक्तमनःसंयुक्तात्मसमवेतस्मृतिज्ञानविषयत्वाख्येनालौकिकेन सन्निकर्षेण ।

† "यज्ञशालादौ लिङ्गज्ञानस्य सत्त्वात्" इत्यत्र विषयतासम्बन्धेनेति शेषः ।

वानिति ज्ञानं वा । अनुमितिस्तु पक्षे व्याप्य इति ज्ञानात्पक्षे साध्यमित्याकारिका । पक्षो व्याप्यवानिति ज्ञानात्पक्षः साध्यवानित्याकारिका । द्विविधादपि परामर्शात्पक्षः साध्यवानित्येवानुमितिरित्यन्ये ।

(प्रभा०) सम्प्रति अनुमितौ व्यापारभूतम्परामर्शं लक्षयति परममूले—"व्याप्यस्य"—इति । "व्याप्तिविशिष्टपक्षधर्मताज्ञानम्परामर्श" इति फलितम् । तदेतद् विवृणोति—"व्याप्यस्येति"—इति । "व्याप्तिविशिष्टस्य"—इति । अयमत्र ग्रन्थयोजनाप्रकारः—व्याप्यस्येति षष्ठ्यर्थो * विषयित्वम् । पक्षे पर्वतादौ वर्त्तमानत्वमाधेयतावत्त्वमिति यावत् । पक्षवृत्तित्वस्य धी पक्षवृत्तित्वधीरिति षष्ठीतत्पुरुषः । अत्रापि विषयित्वमेव षष्ठ्यर्थः । 'पक्षे" इति सप्तम्यर्थश्च निरूपितत्वम्, तथाच व्याप्तिविशिष्टनिष्ठविषयतानिरूपकं सत् पक्षनिरूपितवृत्तित्वनिष्ठविषयतानिरूपकं यज् ज्ञानम् " वह्निव्याप्यो धूमः पर्वते " इति " वह्निव्याप्यधूमवान् पर्वत " इति वा अस्तिस एव "परामर्श" उच्यते । एनमर्थं हृदि कृत्वैव "व्याप्तिविशिष्टस्य"—इत्यादि ग्रन्थ उक्तः ।

यद्वा एवं लापनीयम्—व्याप्तिविशिष्टस्य=साध्यनिरूपितव्याप्तिविशिष्टस्य पक्षेण=पर्वतादिना सह वैशिष्ट्यावगाहिज्ञानम्=व्याप्त्यवच्छिन्नविषयतानिरूपितपक्षतावच्छेदकावच्छिन्नविषयताशालिनिश्चयस्वरूपं यत् तत् परामर्शः=पारिभाषिकपरामर्शपदवाच्यः । तथाच—"वह्निव्याप्यधूमः पर्वते" अथवा "वह्निव्याप्यधूमवान् पर्वत" इत्याकारकं ज्ज्ञानं व्याप्त्यवच्छिन्नधूमादिनिष्ठविषयतानिरूपितपर्वतत्वाद्यवच्छिन्नविषयताशालीति लक्षणसङ्गतिः ।

अस्यैव परामर्शज्ञानस्य विशेषणविशेष्यभावव्यत्यासेन स्वरूपद्वयं दर्शयति—"तच्च"—इत्यादिना । तत्राद्यम्पक्षप्रकारकं व्याप्तिविशिष्टविशेष्यकम् "व्याप्यः=धूमादिः पक्षे=पर्वतादौ" इत्याकारकम् । द्वितीयन्तु व्याप्तिविशिष्टप्रकारकम्पक्षविशेष्यकम् "पक्षः=पर्वतादिः व्याप्यवान्=धूमादिमान्" इत्याकारकम् ।

"अनुमितिस्तु"—इति । प्रथमपरामर्शेन "पक्षे व्याप्य" इत्याकारेण "पक्षे साध्यम्" अर्थात् पक्षप्रकारकं साध्यविशेष्यकम्=पर्वतादौ वह्न्यादि इत्याकारकमनुमितिज्ञानञ्जायते । द्वितीयेन तु "पक्षो व्याप्यवान्" इत्याकारकेण अर्थात् "पक्षः साध्यवान्" साध्यप्रकारकम्पक्षविशेष्यकम्=पर्वतादिर्वह्न्यादिमान् इत्याकाराऽनुमितिर्भवति । अत्रैव नव्यमतमाह—"द्विविधादपि"—इति । पक्षविशेष्यकव्याप्यविशेष्यकोभयविधपरामर्शादपीत्यर्थः । वस्तुतस्तु—अनुभवानुरोधात् पक्षविशेष्यकपरामर्श एव हेतुः ।

* विषयित्वञ्च विषयतानिरूपकत्वम् । विषयता च प्रकारता-विशेष्यतासंसर्गतेतित्रितयानुगता बोध्या ।

अत एव "वह्निव्याप्यधूमवांश्चायम्" इत्याकारकः पक्षविशेष्यक एव उपनयः सर्वसम्मत इति ध्येयमिति दिनकरी ।

**(मुक्ता०) ननु—वह्निव्याप्यधूमवान्पर्वत इति ज्ञानं विनापि यत्र पर्वतो धूमवानिति प्रत्यक्षम्, ततो धूमो वह्निव्याप्य इति स्मरणम्, तत्र ज्ञानद्वयादेवानुमितिदर्शनात् † व्याप्तिविशिष्टवैशिष्ट्यावगाहिज्ञानं न सर्वत्र कारणम्, किन्तु—व्याप्यतावच्छेदकप्रकारकपक्षधर्मताज्ञानत्वेनैव कारणत्वस्यावश्यकत्वात्, तत्र विशिष्टवैशिष्ट्यज्ञानकल्पने गौरवाच्चेति चेन्न, व्याप्यतावच्छेदकज्ञानेपि वह्निव्याप्यवानिति ज्ञानादनुमित्युत्पत्तेर्लाघवाच्च व्याप्तिप्रकारकपक्षधर्मताज्ञानत्वेनैव हेतुत्वम् ।**

(प्रभा०) मीमांसकः शङ्कते—"ननु"—इति । "वह्निव्याप्यधूमवान्"—इत्याद्यारभ्य शङ्काग्रन्थस्यायमाशयः—यत्र कुत्रचित् पर्वते "पर्वतो धूमवान्" इत्याकारकं प्रत्यक्षञ्जातम्, ततो "धूमो वह्निव्याप्यः"=वह्निनिरूपितव्याप्त्याश्रयः इत्याकारा स्मृतिर्जाता, तत्र=तस्मिन्नात्मनि ज्ञानद्वयादेव=प्रत्यक्षस्मृतिरूपज्ञानद्वयादपि "पर्वतो वह्निमान्" इत्याकाराऽनुमितिर्जायते, तस्माद् "वह्निव्याप्यधूमवान् पर्वत" इत्याकारकम्परामर्शज्ञानं सर्वत्र=अनुमितित्वावच्छिन्नम्प्रति न कारणम्=अनुगतं कारणं नेत्यर्थः । * किन्तु व्याप्यतावच्छेदकप्रकारकपक्षधर्मताज्ञानत्वेन=व्याप्यतावच्छेदकं यद् धूमत्वं तत् प्रकारकं यत् पर्वतो "पर्वतो धूमवान्" इत्याकारकम्पक्षधर्मताज्ञानम्=धूमविशिष्टपर्वतज्ञानम्, पर्वतवृत्तिधूमज्ञानं वा तादृशज्ञानत्वेन कारणता सर्वमतसिद्धा, अनुमितिरूपकार्याव्यवहितपूर्वक्षणे उक्तज्ञानस्य=व्याप्यतावच्छेदकपक्षधर्मताज्ञानस्य विद्यमानत्वात् । इत्थञ्च सर्वत्राऽनुमितिषु "पर्वतो धूमवान्" इत्यादि प्रत्यक्षम् "धूमो वह्निव्याप्य" इत्यादि व्याप्तेः स्मरणात्मकं ज्ञानद्वयमेवावश्यकम्, मध्ये तृतीयस्य परामर्शात्मकज्ञानस्य गौरवयुता कल्पना वृथैवास्ति नैयायिकानाम् । गौरवञ्च प्रकृते उपस्थितिकृतं बोध्यम् ।

---

† व्याप्तिः "यत्र धूमस्तत्र वह्नि" इत्याकारा साहचर्यनियमस्वरूपा, तद्विशिष्टो धूमः, तस्य विशिष्टस्य धूमस्य वैशिष्ट्यम् "वह्निव्याप्यधूम" इत्याकारकं तदवगाहिज्ञानम् "वह्निव्याप्यधूमवान् पर्वत" इत्याकारकम्परामर्शज्ञानमिति निर्गलितोऽर्थः ।

अत्रेदमवश्यं सुधीभिर्ध्येयम्—प्रथमं "पर्वतो वह्निमान्" इति पक्षधर्मताज्ञानम्भवति, ततः—"यत्र धूमस्तत्राग्निः" इति अर्थात् "वह्निव्याप्यो धूम" इति व्याप्तिस्मरणम्, उभाभ्यामाभ्यां विशेषणात्मकज्ञानाभ्याम् "वह्निव्याप्यधूमवान् पर्वत" इत्याकारम्परामर्शज्ञानम्, ततः "पर्वतो वह्निमान्" इत्येवमनुमितिः इत्येवंरूपः, व्याप्तिस्मृतिपरमर्शाऽनुमितीनामुत्पत्तिक्रमः अर्थात् हेतुहेतुमद्भावोऽस्तीति ।

* स्वमतसिद्धरूपेण अनुमितौ कारणतोपपादनार्थमाह—"किन्तु"—इति ।

उक्तम्मीमांसकमतं नैयायिकः खण्डयति—"इति चेन्न"—इत्यादिग्रन्थेन । "व्याप्यतावच्छेदकाऽज्ञानेपि"—इति । व्याप्यतावच्छेदकनिर्णयाऽभावेपीत्यर्थः । अस्यायमाशयः—यदा कस्मिंश्चित् पर्वते "अयमालोको धूमो वा" इत्याकारकः सन्देहः समजनि । तत्र व्याप्यतावच्छेदकम्प्रकारः=विशेषणं यद् धूमत्वम्, तत्प्रकारको निर्णयस्तु नैव जातः, अर्थात् निश्चयात्मकञ्ज्ञानं नाभूत्, तथापि तादृशस्थले वह्नि-व्याप्यवान्=वह्न्यभाववदवृत्तिमान् "अयमालोको धूमो वा" इत्याकारकसंशयात्मकादपि ज्ञानात् "पर्वतो वह्निमान्" इत्यनुमितिर्दृश्यते । तस्मादेतादृशस्थले व्याप्यतावच्छेदक-प्रकारकपक्षधर्मताज्ञानं व्यभिचारि सत् सर्वत्र नानुमितिम्प्रति कारणम् । अथ तत्रा-नुमितिरूपं कार्यम्=फलं दृष्ट्वा तादृशं हेतुभूतञ्ज्ञानं कल्पयिष्यामः कारणं विना फलानुत्पत्तेरित्युच्येत मीमांसकेन, तत्रोच्यते—"लाघवाच्च"—इति । व्याप्यता-वच्छेदकप्रकारकत्वापेक्षया व्याप्तिप्रकारकत्वस्य लघुत्वादित्यर्थः । व्याप्तिप्रकारकज्ञानत्वरूपं कारणतावच्छेदकप्रयुक्तं लाघवं मम नैयायिकस्य मत इत्याशयः ।

अत्र सिद्धान्तिनोऽयमभिप्रायः—व्याप्यतावच्छेदकप्रकारकव्याप्तिज्ञानत्वेन, व्याप्यतावच्छेदकप्रकारकपक्षधर्मताज्ञानत्वेन चैतदुभयरूपेण कारणत्वापेक्षया "व्याप्ति-प्रकारकपक्षधर्मताज्ञानत्वेन" रूपेण कारणतायामवच्छेदकधर्मस्योपस्थितिकृतं लाघव-मिति लाघवतर्कसहकृतैव कारणता स्वीकर्त्तव्या । मीमांसकमते तु दर्शितरीत्या कारणता-वच्छेदकधर्मोपस्थितिकृतम्परं गौरवमिति सर्वथा तन्मतं नादेयम् ।

ननु—परामर्शकारणवादिनस्तवापि मते "वह्निव्याप्यो धूम" इति व्याप्यता-वच्छेदकप्रकारकं व्याप्तिज्ञानम्=स्मृतिरूपम् "पर्वतो धूमवान्" इत्याकारकं व्याप्यता-वच्छेदकप्रकारकम्पक्षधर्मताज्ञानम्प्रत्यक्षरूपमितिद्वयमपि परामर्शम्प्रति कारणमस्ति । तथाच—परामर्शजनकत्वेन ज्ञानद्वयस्यानुमितिम्प्रति हेतुत्वमवश्यं वाच्यमिति कथ-मुच्यते गौरवम् ? अत्र ब्रूमः—अन्यम्प्रति पूर्ववृत्तित्वं गृहीत्वैव यस्यान्यम्प्रति पूर्ववृत्तित्वं गृह्यते, तत्तृतीयमन्यथासिद्धमित्युक्तम्प्राक् । यथा घटादिकम्प्रत्याकाशस्य । एवम्प्रकृतेपि उक्तज्ञानद्वयस्य परामर्शम्प्रति कारणत्वं गृहीत्वैव अनुमितिम्प्रति कारणत्वं ग्राह्यमिति तदन्यथासिद्धमेव भविष्यति । तेन दर्शितरीत्या व्याप्तिप्रकारकपक्षधर्मताज्ञानत्वेन कारणतायां तादृशदीर्घावच्छेदकोपस्थित्यभावप्रयुक्तं लाघवमेवास्माकम्मन्यताम् ।

अत्राह मीमांसकः—स्यादेतत् अवच्छेदकस्य भवन्मते लाघवम्, परन्तु धूमप्रत्यक्षम्, व्याप्तिस्मरणम्, परामर्शश्चेति ज्ञानत्रयस्य कारणताकल्पनायां तवैव गौरवम् । अस्माकन्तु ज्ञानद्वयकारणतास्वीकारे परं लाघवमिति । तदेतत् परिहर्त्तुम् "*किञ्च"—इत्यादि ग्रथ्नाति ।

---

* यदि च निर्धर्मितावच्छेदकव्यभिचारज्ञानस्य विरोधित्वाभावात् निरुक्ताव्यभिचरित-सामानाधिकरण्यविशिष्टधूमत्वादेरेव व्याप्तत्वात् परामर्शे नियमतो धूमत्वस्य तादृशविषयत्वं

(मुक्ता०) किञ्च—"धूमवान् पर्वत" इति ज्ञानादनुमित्यापत्तिः, व्याप्यतावच्छेदकीभूतधूमत्वप्रकारकपक्षधर्मताज्ञानस्य सत्त्वात् । नच तदानीं गृह्यमाणव्याप्यतावच्छेदकप्रकारकपक्षधर्मताज्ञानस्य हेतुत्वमिति वाच्यम्, चैत्रस्य व्याप्तिग्रहे मैत्रस्य पक्षधर्मताज्ञानादनुमितिः स्यात् ।

(प्रभा०) अस्यायमर्थः—व्याप्यतावच्छेदकानवगाहि यद् "धूमवान् पर्वत" इत्याकारकञ्ज्ञानम्, अर्थात् कालान्तरीयदेशान्तरीययादृशतादृशधूमज्ञानम्, तस्मात् अनुमित्यापत्तिः=पर्वतो वह्निमान् इत्यनुमितिरापद्येत, यतो भवन्मन्तव्यानुसारमुक्ताकारं ज्ञानमपि व्याप्यतावच्छेदकीभूतधूमत्वप्रकारकपक्षधर्मतास्वरूपमस्त्येव । परतरलाघवकामेन भवता व्याप्तिस्मृतिरूपं द्वितीयञ्ज्ञानमपि न मन्तव्यमित्याशयो नैयायिकस्य ।

आशङ्क्य समाधत्ते—"नच" इत्यारभ्य "इति" इत्यन्तेन । "गृह्यमाण"—इति । तदानीं गृह्यमाणम्=अनुमित्यव्यवहितप्राक्काले प्रत्यक्षज्ञानविषयीभूतचक्षुरादीन्द्रियजन्यग्रहविषयीभूतं यद्व्याप्यतावच्छेदकम्=धूमत्वादि, तत्प्रकारकम्=स प्रकारो विशेषणं यस्मिन् तादृशं यत् पक्षधर्मताज्ञानम्=धूमादिलिङ्गस्य पर्वतादिवृत्तित्वज्ञानं तस्य तादृशव्याप्यतावच्छेदकप्रकारकपक्षधर्मताज्ञानस्य हेतुत्वम्=अनुमितिम्प्रति कारणता "अस्तु" इति शेष इति वाच्यमिति नतु यादृशतादृशधूमज्ञानमिति मीमांसकशङ्काग्रन्थाऽर्थः ।

यद्येवं तदा चैत्रस्य (महानसादिस्थले) व्याप्तिग्रहे=व्याप्तिज्ञाने अर्थात् "धूमो वह्निव्याप्यः" इत्याकारके ज्ञाने सति तत्पार्श्ववर्त्तिनो मैत्रस्यापि पक्षधर्मताज्ञानात्="पर्वतो धूमवान्" इत्याकारकव्याप्यतावच्छेदकप्रकारकपक्षधर्मताज्ञानबलादनुमितिः स्यादिति="पर्वतो वह्निमान्" इत्याकारानुमितिरापद्येत इति नैयायिकस्य समाधानग्रन्थार्थः । व्याप्तिप्रकारकनिश्चयस्य पक्षधर्मताविषयकनिश्चयस्य च सत्त्वादिति निगूढोऽभिप्रायो नैयायिकस्य ।

(मुक्ता०) यदि तु तत्पुरुषीय*गृह्यमाणव्याप्यतावच्छेदकप्रकारकं

---

स्वीक्रियते, तदापि गृह्यमाणव्याप्यतावच्छेदकप्रकारकपक्षधर्मताज्ञानत्वेन, पक्षधर्मताप्रकारीभवद्व्याप्तिज्ञानत्वेन वेति विनिगमनाविरहोऽपि बोध्यः । नच तत्रापि व्याप्तिप्रकारकपक्षधर्मताज्ञानत्वेन पक्षधर्मताविषयकज्ञानत्वेन वा परामर्शस्य हेतुत्वमिति विनिगमनाविरह इति वाच्यम्, व्याप्तिप्रकारकपक्षधर्मताज्ञानपर्याप्तविशिष्टवैशिष्ट्यविषयतायाः एव कारणतावच्छेदकत्वादित्याद्यन्यत्र विस्तरः ।

गृह्यमाणव्याप्त्यवच्छेदकधर्मप्रकारकपक्षधर्मताज्ञानत्वेन, पक्षधर्मताविषयकव्याप्यतावच्छेदकप्रकारकज्ञानत्वेन वा हेतुत्वम् । एवम्पक्षधर्मताज्ञानप्रकारीभवद्व्याप्तिज्ञानत्वेन, व्याप्तिप्रकारकज्ञानविषयीभवत्पक्षधर्मताज्ञानत्वेन वा हेतुत्वमिति तत्र कार्यकारणभावचतुष्टयं बोध्यमिति न्यायसिद्धान्तमञ्जरीसारः ।

* ज्ञानचा ग्रहस्य वर्तमानतायाः अनभिधानान्न कालान्तरीयतादृशज्ञानमादाय दोषः ।

तत्पुरुषीयपक्षधर्मताज्ञानं तत्पुरुषीयानुमितौ हेतुरित्युच्यते, तदाऽनन्तकार्यकारणभावः । मन्मते तु समवायसम्बन्धेन व्याप्तिप्रकारकपक्षधर्मताज्ञानं समवायसम्बन्धेनानुमितिञ्जनयतीति नानन्तकार्यकारणभावः ।

(प्रभा०) स्वयं मीमांसकाशयमुद्घाट्य खण्डयति—"यदि तु"—इत्यादिना । मीमांसकीयपूर्वपक्षग्रन्थस्यायमाशयः—न वयमन्यदीयव्याप्तिज्ञाने सति अन्यदीयपक्षधर्मताज्ञानस्य अनुमितिम्प्रति हेतुभावम्ब्रूमः । किन्तु यस्य पुरुषस्य चैत्रस्य मैत्रस्य वा व्याप्तिज्ञानमभूत् तस्यैव तदानीं गृह्यमाणव्याप्यतावच्छेदकप्रकारकञ्ज्ञानं तदीयपक्षधर्मताज्ञानञ्चेतदुभयमेव तदीयानुमितौ हेतुरस्तीति वदामः ।

नैयायिकोत्तरग्रन्थस्यायमर्थः—यद्येवं तदा अनन्तकार्यकारणभावः=कार्यकारणभावानन्त्यमायातम्भवति, चैत्रादीनाम्पुरुषाणामानन्त्यात्, अर्थात्प्रतिपुरुषं तादृशज्ञानकल्पनया कार्यकारणभावानन्त्ये सति तव मते महद्गौरवमिति वृश्चिकभीतस्य सर्पमुखेऽङ्गुलीदानन्यायमनुहरति । चैत्रादिपुरुषाणामानन्त्यात् कार्यकारणभावस्य अनन्तता ज्ञेयेति तात्पर्यम् ।

ननु—तवापि मते पुरुषानन्त्यात्कार्यकारणभावानन्त्यदोषः समान एवेति मीमांसकशङ्कां परिहर्तुमाह—"मन्मते तु"—इति ।

यत्र=चैत्रे मैत्रे वा समवायसम्बन्धावच्छिन्नम् "वह्निव्याप्यधूमवानयम्" इति व्याप्तिप्रकारकपक्षधर्मताज्ञानञ्जातम्, तत्रैव समवायसम्बन्धावच्छिन्नानुमितिम्प्रति हेतुरिति कार्यकारणभावानन्त्यस्य गन्धोऽपि नास्ति ।

अत्र "मन्मते तु" इत्यस्याग्रे "यत्र" "यस्य" वेति पदमध्याहृत्य ग्रन्थो योज्यः । एवमग्रेऽपि "तत्र" "तस्य" वेति योजनीयम् ।

(मुक्ता०) यदि तु व्याप्तिप्रकारकञ्ज्ञानम्पक्षधर्मताज्ञानञ्च स्वतन्त्रं कारणमित्युच्यते, तदा कार्यकारणभावद्वयम् । "वह्निव्याप्यो धूम आलोकवान् पर्वत" इति ज्ञानादप्यनुमित्यापत्तिः स्यात् । इत्थञ्च यत्र ज्ञानद्वयं तत्रापि विशिष्टज्ञानं कल्पनीयम्फलमुखगौरवस्यादोषत्वात् ।

(प्रभा०) पुनरपि मीमांसकमतमुत्थाप्य प्रतिक्षिपति—"यदि तु"—इत्यादिना । व्याप्तिप्रकारकम्="*धूमो वह्निव्याप्यः' इत्याकारकं यद्व्याप्तिप्रकारकं ज्ञानम्, पक्षधर्मताज्ञानम्='धूमवान् पर्वत" इत्याकारकं यत् पक्षधर्मताज्ञानञ्च तदेतदुभयं स्वतन्त्रम्=पृथक् पृथगेव कारणम्=अनुमितिम्प्रति हेतुरित्युच्यते त्वया मीमांसकेनेति शेषः । अर्थात् एवमुभयज्ञानस्य स्वतन्त्रकारणतायां मन्मते तत्तत्पुरुषीयत्वनिवेशक्लेशो नास्ति, नापिच चैत्रीयव्याप्तिज्ञानकाले मैत्रस्यानुमितिप्रसङ्गरूपो दोष इति मीमांसकहृदयं यत् तत् खण्डयति सिद्धान्ती—"तदा"—इत्यग्रिमग्रन्थेन ।

* वह्निनिष्ठव्यापकतानिरूपितव्याप्त्याश्रयः ।

हे ! मीमांसक ! यद्येवमुभयविधं ज्ञानं स्वीकरोषि अर्थात् "वह्निव्याप्यः" इत्याकारकं व्याप्तिप्रकारकम्, "धूमवान् पर्वतः" इत्यात्मकं पक्षधर्मताज्ञानमित्येवं रीत्या स्वतन्त्रं स्वतन्त्रमेव ज्ञानद्वयमनुमितिम्प्रति कारणं स्वीकरोषि, येन तत्तत्पुरुषीयत्व-निवेशक्लेशोऽपि नास्ति, नापि च चैत्रीयव्याप्तिज्ञानकाले मैत्रीयात्मन्यनुमित्यापत्ति-रूपदोष इति ब्रूषे, तदा तव मते **कार्यकारणभावद्वयम्**=व्याप्तिप्रकारकपक्षधर्मता-ज्ञानत्वेन कारणता, पक्षधर्मताविषयकव्याप्तिकारकज्ञानत्वेन वा कारणतेति विशेषण-विशेष्यभावव्यत्यासेन कार्यकारणभावद्वयापत्तिरनिवार्या । एवञ्च प्रकारान्तरेण परामर्श-स्यापि कारणता स्वीकृतेति सूक्ष्मेक्षिकया बोध्यम् ।

नैयायिको मीमांसकमते दोषान्तरमाह—"वह्निव्याप्य"—इति । अस्याऽ-**यमाशयः**—उक्तज्ञानद्वयस्य स्वतन्त्रकारणतावादिनस्तव मते "धूमो वह्निव्याप्य" इति व्याप्तिप्रकारकञ्ज्ञानम्, "आलोकवान् पर्वत" इति पक्षधर्मताज्ञानञ्च स्वतन्त्र-मेवास्तीति उक्ताकारज्ञानद्वयेनापि "पर्वतो वह्निमान्" इत्यनुमितिस्तव मते स्यात् ।

**ननु**—तवापि मते "धूमो वह्निव्याप्यः" "धूमवान् पर्वत" इति ज्ञानद्वयं स्वीकृतम् । एवं विनिगमनाविरहेण कार्यकारणभावद्वयापत्तिः समानैवेति मीमांसक-शङ्काम्परिहरन् स्वीयसिद्धान्ते दोषाभावं दर्शयति—"इत्थञ्च"—इत्यादिना । लाघव-बलेन विशिष्टज्ञानस्य हेतुतायां सिद्धायामित्यर्थः ।

अयमत्र सिद्धान्त्याशयः—*व्याप्तिप्रकारतानिरूपिता या हेतुप्रकारता, तन्नि-रूपिता या पक्षनिष्ठा विशेष्यता, तच्छालि यज्ज्ञानम् "वह्निव्याप्यधूमवान् पर्वत" इत्याकारकम्, तत्त्वेनाऽनुमितिम्प्रति कारणता विवक्षिता । तेन "वह्निव्याप्यो धूमः" "आलोकवान् पर्वत" इत्याकारकज्ञानद्वयाद्, अथवा—"धूमो वह्निव्याप्यः" "धूमवान् पर्वत" इत्याकारकाद्वा ज्ञानान्नानुमितिः । उभयत्रापि व्याप्तिप्रकारतानिरूपितधूमनिष्ठ-विशेष्यतायाः पर्वतात्मकपक्षनिष्ठविशेष्यतानिरूपितप्रकारतारूपत्वाभावात् । अर्थात्—'वह्निव्याप्यो धूम' इत्यत्र व्याप्तिप्रकारतानिरूपिता धूमनिष्ठा विशेष्यता । "आलोक-वान् पर्वत" इत्यत्र आलोकनिष्ठप्रकारतानिरूपिता पर्वतनिष्ठा विशेष्यता प्रतीयते, नतु दर्शितरीत्या व्याप्तिप्रकारतानिरूपितहेतुप्रकारतानिरूपितपक्षनिष्ठविशेष्यताशालि-ज्ञानत्वमस्ति, येन मम मते उक्तज्ञानद्वयादनुमित्यापत्तिरूपो दोषः समुद्भवेत् ।

एवं यत्रापि ज्ञानद्वयं तत्रापि परामर्शात्मकविशिष्टज्ञानं कल्पनीयम् । नच गौरवं सर्वत्र दूषणं **फलमुखगौरवस्य**=फलं कार्यकारणभावग्रहः तन्मुखं तदधीनं यद्गौरवं तस्य अदोषत्वात्=दोषाभावरूपत्वात्, प्रतिबन्धकत्वासम्भवादिति प्रघट्टकार्थः ।

**अयमभिसन्धिः**—अनुमितित्वावच्छिन्नम्प्रति परामर्शात्मकविशिष्टज्ञानत्वाऽ-

---

* व्याप्तिप्रकारतानिरूपितहेतुप्रकारतानिरूपितपक्षनिष्ठविशेष्यताशालिज्ञानत्वेनानुमितिम्प्रति हेतुत्वं विवक्षितम् ।

वच्छिन्नं कारणमिति ज्ञाने सत्येव विशिष्टज्ञाननिष्ठो गौरवनिश्चयो विरोधी वाच्यः। तद्गौरवञ्च तादृशानुमित्यव्यवहितपूर्ववर्ति यत्परामर्शज्ञानम्, तदाश्रयकमेवेति तादृशगौरवनिश्चयो विशिष्टज्ञानत्वेन कारणतानिश्चयाधीनः, अर्थात् विशिष्टज्ञाने कारणतानिश्चये सत्येव तत्र गौरवं निर्श्चायेत, परं यावद् विशिष्टज्ञानमनुमित्यव्यवहितपूर्ववृत्ति सदनुमितिं नोत्पादयेत् तावत्तत्र गौरवनिश्चयोऽप्यसिद्धः स्यादिति कार्यकारणभावनिर्णयात्पूर्वं गौरवनिर्णयाभावात् न तादृशगौरवं दोषः।

इदन्तु बोध्यम्—व्याप्तिप्रकारतानिरूपितहेतुप्रकारतानिरूपितपक्षविशेष्यताशालिज्ञानत्वेन विशिष्टज्ञानस्यानुमितिम्प्रति हेतुभावो विवक्षित इत्युक्तम्, तदेतत् एकनिष्ठप्रकारताविशेष्यतयोरभेदवादिमताभिप्रायेण। भट्टाचार्यमते तु * व्याप्तिप्रकारता निरूपिता या हेतुनिष्ठा विशेष्यता, तदवच्छिन्नप्रकारतानिरूपिता या पक्षनिष्ठा विशेष्यता, तच्छालिज्ञानत्वेन कारणता बोध्या, एकनिष्ठप्रकारताविशेष्यतयोरवच्छेद्यावच्छेदकभावस्वीकारात्। विशेष्यताप्रकारतयोरभेदस्वीकारे तु "रक्तदण्डवान् पुरुष" इति बुद्धौ रक्तरूपविशेष्यकदण्डाभावनिश्चयप्रतिबध्यत्वापत्तेः। दण्डप्रकारतानिरूपितरक्तरूपनिष्ठविशेष्यताशालित्वात् तादृशबुद्धेरिति रामरुद्री।

अत्रायमाशयः—"रक्तदण्डवान् पुरुष" इत्यत्र रक्तनिष्ठा प्रकारता, दण्डनिष्ठा विशेष्यता, अर्थात् रक्तनिष्ठप्रकारतानिरूपिता दण्डनिष्ठा विशेष्यता। दण्डनिष्ठप्रकारतानिरूपिता पुरुषनिष्ठा विशेष्यता वर्त्तते। तद्यदि दण्डनिष्ठप्रकारताविशेष्यतयोरभेदः, एवञ्च—रक्तनिष्ठप्रकारताया अपि दण्डनिष्ठविशेष्यतया सहाभेद इति दण्डनिष्ठप्रकारतास्वीकारे तन्निरूपिता रक्तनिष्ठा विशेष्यता अपि स्यात्, तथाच दण्डप्रकारतानिरूपितरक्तरूपनिष्ठविशेष्यतावगाहित्वात् उक्ताकारा बुद्धिः "रक्तोऽदण्डवान्" इत्याकारकरक्तरूपविशेष्यकदण्डाभावनिश्चयेन प्रतिबध्या स्यात्, नच तथेष्यते। तस्मादेकनिष्ठप्रकारताविशेष्यतयोरभेदवादिना अवच्छेद्यावच्छेदकभावोऽवश्यं स्वीकार्य इति गदाधरभट्टाचार्याणामाशयः।

अमुमर्थं स्पष्टीकुर्वन्ति—एकनिष्ठविषयतयोरवच्छेद्यावच्छेदकभाव एव स्वीकार्यः। तयोरभेदस्वीकारे तु रक्तदण्डवानिति बुद्धेः रक्तोऽदण्डवानिति रक्तरूपविशेष्यकदण्डाभावप्रकारकज्ञानप्रतिबध्यत्वापत्तिः स्यात्। रक्तत्वनिष्ठप्रकारतानिरूपितरक्तनिष्ठविशेष्यता, दण्डनिष्ठविशेष्यतानिरूपितरक्तनिष्ठप्रकारता। एवं पुरुषनिष्ठविशेष्यतानिरूपितदण्डनिष्ठप्रकारता, रक्तनिष्ठप्रकारतानिरूपितदण्डनिष्ठविशेष्यता, तथाच—रक्तनिष्ठविशेष्यता-

---

* यथा—"वह्निव्याप्यधूमवानयम्पर्वतः" इत्यत्र वह्निव्याप्तिप्रकारता निरूपिता या धूमहेतुनिष्ठा विशेष्यता, तदवच्छिन्नप्रकारतानिरूपिता=धूमहेतुनिष्ठविशेष्यतावच्छिन्नप्रकारतानिरूपिता पर्वतपक्षनिष्ठा विशेष्यता, तच्छालिज्ञानत्वेन (दर्शिताकारेण) कारणता="पर्वतो वह्निमान्" इत्याकारानुमितिम्प्रति हेतुभाव इत्यर्थः। अस्मिन्नर्थे गमकं दर्शयति—"एकनिष्ठ"—इति।

प्रकारत्वयोः दण्डनिष्ठविशेष्यताप्रकारत्वयोश्चाभेदस्वीकारेण यथा दण्डनिष्ठविशेष्यतानिरूपितरक्तनिष्ठप्रकारता तथा दण्डनिष्ठविशेष्यत्वाभिन्नदण्डनिष्ठप्रकारतानिरूपिता रक्तनिष्ठप्रकारत्वाभिन्नरक्तनिष्ठविशेष्यता, तच्छालित्वाद्रक्तदण्डवानिति बुद्धेरिति प्रतिबध्यत्वापत्तिः।

अवच्छेद्यावच्छेदकभावस्वीकारे तु अवच्छेद्यावच्छेदकभावस्य भेदनियतत्वात् दण्डनिष्ठविशेष्यत्वावच्छिन्नदण्डनिष्ठप्रकारतानिरूपितपुरुषनिष्ठैव विशेष्यता नतु रक्तनिष्ठविशेष्यतेति * श्रीविश्वेश्वराश्रमदण्डिनः।

एवं दर्शितरीत्या तृतीयलिङ्गपरामर्शस्य अनुमितिहेतुता सिद्धा मीमांसकमतञ्च नादेयम्।

---

* अत्र दण्डिनामयमाशय आभाति—एकनिष्ठविषयतयोरवच्छेद्यावच्छेदकभावः स्वीकार्यो नतु तयोरभेदः। अयमभिसन्धिः—"अरक्तदण्डवान्" इति बुद्धिनिष्ठप्रतिबन्धकतानिरूपिता "रक्तदण्डवान्" इति बुद्धिनिष्ठा प्रतिबध्यता। एवं "रक्तोऽदण्डवान्" इति बुद्धिनिष्ठप्रतिबन्धकतानिरूपिता "रक्तः दण्डवान्" इति बुद्धिनिष्ठा प्रतिबध्यता। तथाच—"रक्तदण्डवान्" इति रक्तत्वावच्छिन्नाऽभेदसम्बन्धावच्छिन्नप्रकारतानिरूपितदण्डत्वावच्छिन्नविशेष्यत्वाऽभिन्नप्रकारतानिरूपितपुरुषनिष्ठविशेष्यताशालिबुद्धित्वावच्छिन्नम्प्रति "अरक्तदण्डवान्" इति प्रतियोगित्वसम्बन्धावच्छिन्नरक्तत्वाऽवच्छिन्नप्रकारतानिरूपितभेदवत्त्वाऽवच्छिन्नप्रकारतानिरूपितदण्डत्वावच्छिन्नविशेष्यत्वाऽभिन्नप्रकारतानिरूपितपुरुषत्वाऽवच्छिन्नविशेष्यताशालिनिश्चयः प्रतिबन्धकः। इत्येकः प्रतिबध्यप्रतिबन्धकभावः।

अथ द्वितीयः प्रतिबध्यप्रतिबन्धकभावः। रक्तो दण्डवानिति—अभेदसम्बन्धावच्छिन्नदण्डवत्त्वाऽवच्छिन्नप्रकारतानिरूपितरक्तपुरुषत्वावच्छिन्नविशेष्यताशालिबुद्धित्वावच्छिन्नम्प्रति "रक्तोऽदण्डवान्" इति दण्डाभाववत्त्वावच्छिन्नप्रकारतानिरूपितरक्तत्वाऽवच्छिन्नविशेष्यताशालिनिश्चयः प्रतिबन्धकः। एवं सति यदि चैकनिष्ठविषयतयोरभेदः स्वीक्रियेत तर्हि "रक्तदण्डवान्" इति बुद्धौ "रक्तोऽदण्डवान्" इति रक्तविशेष्यकदण्डाऽभावप्रकारकज्ञानप्रतिबध्यत्वापत्तिः। रक्तत्वनिष्ठप्रकारतानिरूपितरक्तनिष्ठविशेष्यता, दण्डनिष्ठविशेष्यतानिरूपितरक्तनिष्ठप्रकारता, एवं पुरुषनिष्ठविशेष्यतानिरूपितदण्डनिष्ठप्रकारता, रक्तनिष्ठप्रकारतानिरूपितदण्डनिष्ठविशेष्यता। तथाच—रक्तनिष्ठविशेष्यताप्रकारत्वयोः दण्डनिष्ठविशेष्यताप्रकारत्वयोश्चाऽभेदस्वीकारेण यथा दण्डनिष्ठविशेष्यतानिरूपितरक्तनिष्ठप्रकारता तथा दण्डनिष्ठविशेष्यत्वाऽभिन्नदण्डनिष्ठप्रकारतानिरूपिता रक्तनिष्ठप्रकारत्वाऽभिन्नरक्तनिष्ठविशेष्यता, तच्छालित्वात् रक्तदण्डवानिति बुद्धेरिति।

अवच्छेद्यावच्छेदकभावस्वीकारे तु—अवच्छेद्यावच्छेदकभावस्य भेदनियतत्वात् दण्डनिष्ठविशेष्यत्वाऽवच्छिन्नदण्डनिष्ठप्रकारतानिरूपितपुरुषनिष्ठैव विशेष्यता नतु रक्तनिष्ठविशेष्यतेति न रक्तविशेष्यकदण्डवत्त्वप्रकारकरक्तदण्डवानिति बुद्धौ रक्तोऽदण्डवान् इति दण्डाभाववत्त्वप्रकारकरक्तविशेष्यकनिश्चयनिष्ठप्रतिबन्धकतानिरूपितप्रतिबध्यत्वापत्तिरिति ध्येयम्—

ननु—कथमिदं ज्ञानं तृतीयमिति चेद् ? उच्यते—प्रथमं दृष्टान्ते धूमज्ञानम्, ततो व्याप्तिज्ञानम्, ततः तद्विशिष्टपक्षधर्मताज्ञानमित्येवं रूपेण गृह्यताम् । परमिदं परामर्शस्य तृतीयज्ञानत्वम्प्रायिकम्बोध्यम्, यत्रादौ धूमदर्शनसमय एव "धूमो वह्निव्याप्य" इति ज्ञानम्, ततो "वह्निव्याप्यधूमवान्" इति परामर्शः, ततो "वह्निमान्" इत्यनुमितिः, तत्र तृतीयज्ञानत्वेन रूपेण व्यभिचारात्, परामर्शत्वेन रूपेण तूक्तज्ञानस्य न व्यभिचार इति न्यायसिद्धान्तमञ्जर्यादीनामाशयः ।

(का०) व्याप्तिः साध्यवदन्यस्मिन्नसम्बन्ध उदाहृतः ॥६८॥

(प्रभा०) परममूले व्याप्तिं लक्षयति—"व्याप्तिः"—इति । साध्यं तदस्यास्मिन्वास्तीति साध्यवान्, साध्यवतोऽन्यः साध्यवदन्यः, तस्मिन् असम्बन्धोऽवृत्तित्वं वृत्तित्वाभावो यद्धेतोः सैव ( साध्यस्य हेतुशिरसि ) व्याप्तिः । तथाच—साध्यवदन्यनिरूपितवृत्तित्वाभावो व्याप्तिरिति फलितम् ।

(मुक्ता०) व्याप्यो नाम व्याप्त्याश्रयः, तत्र का व्याप्तिरित्यत आह—व्याप्तिरिति । साध्यवदन्येति । वह्निमान् धूमादित्यादौ साध्यो वह्निः साध्यवान्महानसादिः, तदन्यो जलह्रदादिः, तदवृत्तित्वं धूमस्येति लक्षणसमन्वयः । धूमवान् वह्नेरित्यादौ साध्यवदन्यस्मिंस्तप्तायःपिण्डादौ वह्नेः सत्त्वान्नातिव्याप्तिः ।

(प्रभा०) परामर्शलक्षणानन्तरं व्याप्तिनिरूपणे उपोद्घातसङ्गतिं निरूपयन्नाह—"व्याप्यो नाम"—इति । अर्थात् "नासङ्गतम्प्रयुञ्जीत" इति प्रामाणिक-

---

अयमत्र प्रकारान्तरेण द्वयोर्मतयोः सरलो विशेषो ज्ञेयः । समानाधिकरणयोरेकज्ञानीययोः विशेष्यताप्रकारतयोः समनैयत्यादभेद इत्येकीयं मतम् । तादृशयोरेव विशेष्यताप्रकारतयोः समनैयत्यादवच्छेद्याऽवच्छेदकभाव इत्यपरम्मतम् ।

तथाहि—आद्ये मते "घटवद्भूतलम्" इति ज्ञाने घटो भूतलांशे विशेषणम, घटत्वांशे च विशेष्यम् । अत्र–घटनिष्ठायाः भूतलनिष्ठविशेष्यतानिरूपिताप्रकारतायाः घटत्वनिष्ठप्रकारतानिरूपितविशेष्यतायाश्च अभेदस्य स्वीकारेण घटत्वनिष्ठप्रकारतानिरूपिता या घटनिष्ठा प्रकारता; तन्निरूपिता या भूतलनिष्ठा विशेष्यता तच्छाली बोधो भवति । द्वितीये मते तु—"घटवद्भूतलम्" इत्यत्र घटत्वनिष्ठप्रकारतानिरूपिता या घटनिष्ठा विशेष्यता, तदवच्छिन्ना या घटनिष्ठा प्रकारता, तन्निरूपिता या भूतलनिष्ठा विशेष्यता, तच्छाली बोध इत्यङ्गीकारः । आद्ये मते तादृशविशेष्यताप्रकारतयोरभेदाङ्गीकारेऽपि तयोः प्रकारतारूपतैव नतु विशेष्यतारूपता । अत एतन्मते—घटत्वनिष्ठप्रकारतानिरूपिता या घटनिष्ठा विशेष्यता, तन्निरूपिता या भूतलनिष्ठा विशेष्यता इत्याकारको बोधो न भवति, किन्तु घटत्वनिष्ठप्रकारताऽभिन्नघटनिष्ठप्रकारतानिरूपिता या भूतलनिष्ठा विशेष्यता तच्छाली बोध इति सुधीभिरनुभावनीयम् ।

वचनाऽनुरोधेन व्याप्तिनिरूपणमारभते—"व्याप्य"—इति । प्रकृतिसिद्ध्यनुकूलचिन्ताविषयत्वमुपोद्घातत्वम् । प्रकृतञ्चात्र व्याप्तिलक्षणम् । "तत्र"—इति । घटकत्वं सप्तम्यर्थः । तथाच व्याप्तिज्ञानघटकीभूता का व्याप्तिरित्यर्थः । परममूलोक्तं लक्षणं घटयितुमाह—"**वह्निमान्**"—इत्यादि । असद्धेतुस्थले लक्षणस्यातिव्याप्तिशङ्कामुद्धरति—"**धूमवान् वह्नेः**"—इति ।

**इदमत्रावधार्यम्**—अन्वयव्यतिरेकभेदात् व्याप्तिर्द्विविधा । व्यतिरेकव्याप्तिरग्रे त्रिचत्वारिंशदधिकैकशततमकारिकाया व्याख्याने स्फुटीभविष्यति । अन्वयव्याप्तिरिहोच्यते । तत्र—"अत्यन्ताभावस्य प्रतियोगितावच्छेदकावच्छिन्नाधिकरणतया सह विरोध" इति नियमात् "साध्याभाववदवृत्तित्वम्" इति व्याप्तिलक्षणम् । अथ च "अन्योन्याभावस्य प्रतियोगितावच्छेदकेन साकं विरोध" इति नियमेन "साध्यवदन्यावृत्तित्वम्' इति लक्षणम्बोध्यम् । एतस्या व्याप्तेर्लक्ष्यास्तु सद्धेतव एव यद्वचनायां पक्षसाध्यहेतुदृष्टान्तानां सत्त्वमावश्यकम्, अथ च हेतुनिष्ठं स्वव्यापकसाध्यकत्वमप्यपेक्षितम् । यथा—"पर्वतः संयोगेन वह्निमान्, संयोगेन धूमात् महानसवत्" इत्यत्र पर्वतः पक्षः, वह्निः संयोगेन साध्यः, धूमः संयोगेन हेतुः, महानसो दृष्टान्तः । अथ च धूमव्यापकवह्निसाध्यकत्वमप्यस्ति धूमे ।

"पर्वतो धूमवान् वह्नेर्महानसवत्" इत्यत्र पक्षादिचतुष्टयसत्त्वेऽपि वह्निव्यापकधूमसाध्यकत्वं नास्ति, तेन धूमसाधनाय * उपन्यस्तो वह्निहेतुरसद्धेतुरेव ।

अथात्यन्ताभावघटितोक्तलक्षणस्य समासादिप्रदर्शनपूर्वकः समन्वयप्रकारः प्रदर्श्यते—

साध्यस्याभावः साध्याभावः । साध्याभावोऽस्यास्तीति साध्याभाववान् । साध्याभाववति न विद्यते वृत्तिर्यस्य स साध्याभाववदवृत्तिः, तस्य भावः साध्याभाववदवृत्तित्वम् ।

अत्र च निपातातिरिक्तनामार्थयोर्भेदेनान्वयस्याऽव्युत्पन्नत्वात् तत्पुरुषसमासे पूर्वपदस्य लक्षणेति निरूढलक्षणया साध्यपदस्य साध्यप्रतियोगिकोऽर्थः, तस्य चाऽभेदेनाभावेऽन्वयः, अभावस्य च स्वरूपेण मतुबर्थेऽधिकरणेऽन्वयः, अधिकरणस्य च निरूपितत्वसम्बन्धेन वृत्तित्वे, तस्य च प्रतियोगित्वेनाऽभावेऽन्वय इति । तथाच—"साध्यप्रतियोगिकाभावाधिकरणनिरूपितवृत्तित्वाभावो व्याप्तिः" इति लक्षणम्पर्यवसन्नम् ।

**विश्वेश्वराश्रमदण्डिनस्तु**—साध्यस्याऽभावः साध्याभावः । साध्यस्येत्यत्र प्रतियोगित्वं षष्ठ्यर्थः । तत्र साध्यपदार्थस्य निरूपितत्वसम्बन्धेनान्वयः । षष्ठ्यर्थप्रतियोगित्वस्य च निरूपकत्वसम्बन्धेनाऽभावेऽन्वयः । अभावस्य च मतुबर्थेऽधिकरणेऽन्वयः । अधिकरणत्वस्य च निरूपितत्वसम्बन्धेन वृत्तित्वघटकवृत्तित्वेऽन्वयः ।

---

* "दत्त" इति पाठान्तरम् ।

तस्य च प्रतियोगित्वसम्बन्धेन नञर्थेऽभावेऽन्वय इति प्रकारतावादिमताऽभिप्रायेणोक्तमित्याहुः।

"पर्वतो वह्निमान् धूमात्" इत्यत्र * साध्यो वह्निः, तत्प्रतियोगिकोऽभावो वह्न्यभावः, तदधिकरणं ह्रदादिः, तन्निरूपितवृत्तित्वं मीनादीनाम्, अवृत्तित्वम्=वृत्तित्वाभावो धूमस्येति लक्षणसमन्वयः।

"धूमवान् वह्नेः" इत्यत्राऽलक्ष्ये (असद्धेतौ) साध्यो धूमः, तत्प्रतियोगिकाभावो धूमाभावः, तदधिकरणमयोगोलकम्, तन्निरूपितवृत्तित्वमेव वह्नौ, वृत्तित्वाभावो नास्तीति नातिव्याप्तिः।

वृत्तित्वाभावस्तु—वृत्तित्वसामान्याभाव † एव धर्त्तव्यः। एतस्य फलन्तु—धूमाभावाधिकरणं ह्रदोऽपि, तन्निरूपितवृत्तित्वाभावस्य वह्निहेतौ सत्त्वेपि नातिव्याप्तिः।

अन्योन्याभावघटितलक्षणसमन्वयप्रकारो यथा—"तत्र अन्योन्याभावस्य प्रतियोगितावच्छेदकेन सह विरोध" इति नियमात् "साध्यवदन्यावृत्तित्वम्" इत्यपरं व्याप्तिलक्षणम्। एतदेव मूलकारेण चिन्तामणिग्रन्थादुद्धृत्य प्रथमं विवेचितम्पश्चात्सिद्धान्तलक्षणं निरूपितम्। अत्रापि - साध्यवत्पदस्य पूर्वदर्शितरीत्या निरूढलक्षणया साध्यवत्प्रतियोगिकोऽर्थः, तस्य चाऽभेदेन अन्यपदार्थैकदेशे भेदेऽन्वयः एकदेशान्वयमङ्गीकृत्यैव एतल्लक्षणप्रणयनात्, भेदस्य च स्वरूपेण अधिकरणेऽन्वयः, अधिकरणस्य च निरूपितत्वसम्बन्धेन वृत्तित्वे, वृत्तित्वस्य च प्रतियोगितयाऽभावेऽन्वय इति। तथा च—"साध्यवत्प्रतियोगिकभेदाऽधिकरणनिरूपितवृत्तित्वाऽभावो व्याप्तिः" इति लक्षणपर्यवसन्नम्।

"पर्वतो वह्निमान् धूमात्" इत्यत्र साध्यवत्प्रतियोगिको भेदो वह्निमद्भेदः, तदधिकरणं ह्रदादिः, तन्निरूपितवृत्तित्वं मीनादीनां वृत्तित्वाऽभावो धूमस्येति लक्षणसमन्वयः।

---

* लक्ष्ये लक्षणसमन्वयोऽलक्ष्याऽव्यावृत्तिरिति लक्षणस्य साधुता, तां दर्शयति—"साध्योवह्निः"—इति।

† यस्याभावस्य प्रतियोगितावच्छेदकं प्रतियोगितासमानाधिकरणकं भवति स सामान्याभावः। यथा—"भूतले घटो नास्ति" इति प्रतीतिः घटसामान्याभावमवगाहते नतु घटविशेषाभावम्, अर्थात्—"घटो नास्ति" इति प्रत्यये घटाभावीया प्रतियोगिता यावद्घटनिष्ठा, प्रतियोगितावच्छेदकं घटत्वमपि सकलघटनिष्ठम्, अतः प्रतियोगितावच्छेदकस्य प्रतियोगितासमानदेशवृत्तित्वादयं सामान्याभावः। तथाच—"स्वाऽन्यूनानतिरिक्तवृत्तित्व-स्वनिष्ठाऽवच्छेदकतानिरूपितत्वोभयसम्बन्धेन सामान्यधर्मविशिष्टप्रतियोगिताकाभावत्वं सामान्याभावत्वम्" इति निष्कर्षः। प्रतियोगितावैशिष्ट्यञ्च धर्मे स्वाऽन्यूनानतिरिक्तवृत्तित्व-स्वनिष्ठाऽवच्छेद्यतानिरूपितावच्छेदकतावत्त्वोभयसम्बन्धेन। अभावे तादृशधर्मवत्त्वञ्च स्वाऽवच्छिन्नप्रतियोगितानिरूपकत्वसम्बन्धेन।

"धूमवान् वह्नेः" इत्यत्राऽसद्धेतौ साध्यो धूमः, साध्यवान् पर्वतादिः, तत्प्रतियोगिको भेदो धूमवद्भेदः, तदधिकरणं यथा ह्रदादिः तथाऽयोगोलकमपि तत्राऽयोगोलकनिरूपितवृत्तित्वमेव वह्निहेतोः वृत्तित्वाभावो नास्तीति नातिव्याप्तिः । अत्रापि पूर्ववद् वृत्तित्वसामान्याभाव एव धर्त्तव्यः। एतत्सर्वमभिप्रेत्य स्वयं ग्रन्थकारः "साध्यवदन्येति" इत्यादिना निरूपयति तत्तत्र तत्र यथाग्रन्थं व्याख्यास्यामः ।

(मुक्ता०) अत्र * येन सम्बन्धेन साध्यं तेनैव सम्बन्धेन साध्यवान् बोध्यः। अन्यथा समवायसम्बन्धेन वह्निमान्वह्नेरवयवस्तदन्यो महानसादिस्तत्र धूमस्य विद्यमानत्वादव्याप्तिप्रसङ्गात् ।

(प्रभा०) उक्तेऽन्योन्याभावघटितव्याप्तिलक्षणे साध्यतावच्छेदकसम्बन्धं विवक्षन्नाह—"अत्र"—इत्यादि ।

अस्यायमाशयः—अत्र लक्षणे येन सम्बन्धेन साध्यं विवक्षितं भवेत्, तेनैव सम्बन्धेन साध्यवानपि विवक्षणीयः । अन्यथा=यद्येवं न स्वीक्रियेत तदा "वह्निमान् धूमात्" इत्यत्रैवोक्तव्याप्तिलक्षणस्य अव्याप्तिः । कथमितिचेत् ? इत्थम्—अत्र समवायसम्बन्धेन वह्नेरवयवोऽपि वह्निमान्, अवयवावयविनो समवायात् । तदन्यो नाम तद्भिन्नो महानसादिः, तत्र धूमहेतोरवृत्तित्वं नास्ति; किन्तु वृत्तित्वमेव, इष्टञ्च अवृत्तित्वम्, तेन अत्राऽव्याप्तिर्लक्षणदोषः । साध्यतावच्छेदकसम्बन्धविवक्षायान्तु प्रकृते साध्यतावच्छेदकसम्बन्धः संयोगः, स एव च साध्यवतोऽपीति नोक्तदोषगन्धोऽपि, नहि संयोगसम्बन्धेन वह्नेरवयवो वह्निमान् । साध्यसाध्यवतोरेकसम्बन्धविवक्षायां नाव्याप्तिर्भवतीति सारः । अनया रीत्या लक्षणस्यायमाकारः सम्पद्यते—"साध्यताऽवच्छेदकसम्बन्धावच्छिन्नसाध्यवत्प्रतियोगिकभेदाऽधिकरणनिरूपितवृत्तित्वाऽभावो" व्याप्तिः ।

(मुक्ता०) साध्यवदन्यश्च साध्यवत्त्वावच्छिन्नप्रतियोगिताकभेदवान् बोध्यः । तेन यत्किञ्चिद्वह्निमतो महानसादेर्भिन्ने पर्वतादौ धूमस्य सत्त्वेऽपि न क्षतिः ।

(प्रभा०) साध्यवदन्यपदेन विवक्षितमर्थं सप्रयोजनमाह—"साध्यवदन्यश्च" इति । अस्य ग्रन्थस्यायमर्थः—लक्षणे "साध्यवदन्य"पदेन यावत्सु साध्यवत्सु स्थितो यः साध्यवत्त्वरूपो धर्मः, तद्धर्मावच्छिन्नप्रतियोगिताको यो भेदः, तादृशभेदवान् ग्राह्यः । यद्येवं विवक्षा न क्रियेत, तदा "वह्निमान् धूमात्" इत्यत्र पुनरप्यव्याप्तिः प्राप्ता । कथमिति चेत् ? शृणु—अत्र साध्यो वह्निः, साध्यवान् पुरोवर्त्ती पर्वतः, तादृशसाध्याधिकरणादन्यः=अर्थात् तत्प्रतियोगिकभेदाधिकरणं द्वितीयः पर्वतः,

---

* अत्र साध्यपदस्य भावप्रधाननिर्देशात् यत्सम्बन्धावच्छिन्नसाध्यतेत्यर्थः । साध्यतावच्छेदको यः सम्बन्ध इति यावत् । तेनैव सम्बन्धेन=साध्यतावच्छेदकसम्बन्धेन इति प्राचीनः कश्चित् ।

महानसं गोष्ठादिर्वा अपि ग्रहीतुं शक्यते। तन्निरूपितधूमरूपहेतोरवृत्तित्वं नास्ति, किन्तु वृत्तित्वमेवेति पुनरप्यव्याप्तिरायाता।

यदि तु—"साध्यवदन्य"पदेन "साध्यवत्त्वधर्मावच्छिन्नप्रतियोगिताकभेदवान्" इत्यर्थः स्वीक्रियेत तदा साध्यवत्त्वधर्मावच्छिन्नानां पुरोवर्त्यपुरोवर्तिसकलपर्वतानां महानसगोष्ठादीनाञ्च ग्रहणे सति तन्निरूपितभेदाधिकरणं जलह्रदाद्येव भविष्यति, नतु यत् किञ्चिद्वह्निरूपसाध्याधिकरणीभूतमहानसाद्यपि, अर्थात् द्वितीयपर्वतादिकं गोष्ठादिकञ्चत्वरादिकं वा साध्यवद्भिन्नपदेन न ग्रहीष्यामः, किन्तु जलह्रदादिकमेव, * तन्निरूपितवृत्तित्वं मीनादीनां वृत्तित्वाभावो धूमात्मकहेतौ वर्त्तत इति न क्षतिः=नाव्याप्तिरित्यर्थः। तथाच लक्षणस्याकारः—"साध्यतावच्छेदकसम्बन्धावच्छिन्न-साध्यवत्त्वावच्छिन्नप्रतियोगिताकभेदाऽधिकरणनिरूपितवृत्तित्वाऽभावो" (हेतुशिरसि साध्यस्य) व्याप्तिः।

(मुक्ता०) येन सम्बन्धेन हेतुता तेनैव सम्बन्धेन साध्यवदन्याऽवृत्तित्वम्बोध्यम्। तेन साध्यवदन्यस्मिन्धूमावयवे धूमस्य समवायसम्बन्धेन सत्त्वेऽपि न क्षतिः।

(प्रभा०) हेतुतावच्छेदकसम्बन्धविवक्षया साध्यवदन्यस्मिन् वृत्तित्वं विवक्षित्वा अवृत्तित्वे इष्टापत्तिं निरूपयति—"येन"—इति। अयमाशयः—येन सम्बन्धेन हेतुर्विवक्षितस्तेनैव सम्बन्धेन साध्यवद्भिन्नाधिकरणे वृत्तित्वं मत्वाऽवृत्तित्वं नेतव्यम्। यदि हेतुतावच्छेदकसम्बन्धेन साध्यवद्भिन्नाधिकरणे वृत्तित्वं न मन्येत तदा प्रकृते भूयोऽप्यव्याप्तिर्दोषः। तथाहि—साध्यो वह्निः, साध्यवान् पर्वतादिः, साध्यवत्त्वं यावत् साध्यवद्वृत्तिर्धर्मः, तदवच्छिन्ना प्रतियोगिता यस्य तादृशो यो भेदो नाम अन्योन्याभावः, तदधिकरणं यथा जलह्रदादिः तथा धूमहेतोरवयवोऽपि साध्यवत्प्रतियोगिभेदाऽधिकरणतया धर्तुं शक्यते, तत्र धूमावयवे धूमहेतोरवृत्तित्वं नास्ति, किन्तु समवायेन वृत्तित्वमेव, अवयविपदार्थस्यावयवे समवायसम्बन्धेन वृत्तितायाः स्वीकारात्, तस्मात्तदवस्थोऽव्याप्तिदोषः।

यदि तु साध्यवद्भेदाधिकरणनिरूपितवृत्तितायां हेतुतावच्छेदकसम्बन्धो गृह्येत तदा प्रकृते हेतुर्धूमः, हेतुता धूमनिष्ठा हेतुतावच्छेदकसम्बन्धः संयोगः, तेनैव पर्वतादौ धूमहेतोर्वृत्तित्वात् "द्रव्ययोरेव संयोग" इति नियमात्। एवं यथा हेतुतावच्छेदकसंयोगसम्बन्धेन धूमावयवे धूमहेतोरवृत्तित्वन्तथा जलह्रदादिष्वपि तस्यावृत्तित्वमेव, किन्तु स्वसाध्यवह्निसमानाधिकरण एव धूमहेतुः पर्वतादाविति न क्षतिः=नाव्याप्तिरित्यर्थः।

लक्षणस्याकारस्तु—साध्यताऽवच्छेदकसम्बन्धावऽच्छिन्नसाध्यवत्त्वावच्छिन्नप्रति-

* जलह्रदनिष्ठाधिकरणतानिरूपिताधेयतावत्त्वम्।

योगिताकभेदाधिकरणनिरूपिता या हेतुतावच्छेदकसम्बन्धावच्छिन्ना वृत्तिता, तादृश-वृत्तित्वाभावो व्याप्तिः" इति पर्यवसन्नः ।

**(मुक्ता०) साध्यवदन्यावृत्तित्वञ्च साध्यवदन्यवृत्तित्वत्वावच्छिन्न-प्रतियोगिताकाभावः। तेन धूमवान् वह्नेरित्यत्र साध्यवदन्यजलह्रदादि-वृत्तित्वाभावेऽपि नातिव्याप्तिः ।**

( प्रभा० ) साध्यवतोऽन्यस्मिन्=भिन्नेऽधिकरणे अवृत्तित्वम्=वृत्तित्वाभावः कीदृशो विवक्षित इति दर्शयितुमाह—"साध्यवदन्यावृत्तित्वञ्च"--इति । साध्य-वतोऽन्यः साध्यवदन्यः । साध्यवत्प्रतियोगिकभेदाधिकरणमित्यर्थः ।

अयमर्थः—साध्यवान् पर्वतादिः ततोऽन्यो जलह्रदादिः साध्यवद्भेदाधिकरणं यत्, तन्निरूपिता वृत्तित्वावच्छिन्ना प्रतियोगिता यस्य तादृशो योऽभावः असौ साध्यवदन्यावृत्तित्वपदेन विवक्षितः । अर्थात् यावन्ति यानि साध्यवद्भेदाधिकरणानि तावत्सु सर्वेष्वेव * अवच्छिन्नप्रतियोगिताकोऽभावो ग्रहीतव्यः, नतु यत्किञ्चित्साध्य-वद्भेदाधिकरणनिरूपितवृत्तित्वाभावः ।

अस्या विवक्षायाः फलं दर्शयति--"तेन"—इति । अयमत्राभिप्रायः—यदि साध्यवद्भेदाधिकरणानि यावन्ति न ग्रहीष्यन्ते तदा "धूमवान् वह्नेः" इत्यत्रा-सद्धेतावतिव्याप्तिः स्यात् । कथमिति चेत् ? इत्थम्—साध्यवद्भेदाधिकरणत्वावच्छिन्ना-धिकरणस्याग्रहणे प्रकृते साध्यो धूमः, साध्यवान् पर्वतादिः, तदन्यो जलह्रदादिः, तत्र वृत्तित्वं मीनादीनाम्, अवृत्तित्वं वह्निरूपहेतोरस्तीति कथं नातिव्याप्तिः ।

यदि तु साध्यवद्भेदाधिकरणत्वावच्छिन्ननिरूपितवृत्तित्वाभावो हेतोर्विवक्षितः, तदा तु प्रकृते साध्यवद्भेदाधिकरणम् ( पर्वतप्रतियोगिकभेदाधिकरणम् ) यथा जलह्रदः, तथा तप्तायःपिण्डोऽपि, तत्र वह्निरूपहेतोर्वृत्तित्वमेव नावृत्तित्वमिति उक्तविवक्षायां नातिव्याप्तिः । एवञ्च लक्षणस्यायमाकारः—"साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्य-वत्त्वावच्छिन्नप्रतियोगिताकभेदाधिकरणत्वावच्छिन्नभेदाऽधिकरणनिरूपितहेतुतावच्छेदक-सम्बन्धावच्छिन्नवृत्तित्वाभावो (हेतुशिरसि साध्यस्य) व्याप्तिः ।

**(मुक्ता०) अत्र यद्यपि द्रव्यं गुणकर्मान्यत्वविशिष्टसत्त्वादित्यादौ विशिष्टसत्तायाः शुद्धसत्तायाश्चैक्यात्साध्यवदन्यस्मिन् गुणादावनृत्तित्वं नास्ति । तथापि हेतुतावच्छेदकरूपेणावृत्तित्वं वाच्यम् । हेतुतावच्छेदकं तादृशवृत्तितानवच्छेदकमिति फलितोऽर्थः ॥ ६८ ॥**

(प्रभा०) स्थलान्तरेऽव्याप्तिपरिहाराय साध्यवद्भेदाधिकरणे हेतोर्हेतुतावच्छेदक-रूपेणावृत्तित्वं विवक्षन् ग्रन्थान्तरमवतारयति—"अत्र"—इत्यादि ।

अयमत्राशयः—हेतौ हेतुतावच्छेदकधर्मोपि साध्यवद्भेदाधिकरणनिरूपिताया

* यावत्साध्यवद्भेदाधिकरणनिरूपितवृत्तित्वाभाव इत्यर्थः ।

वृत्तिताया अनवच्छेदको ग्राह्यः । यद्येवं न स्यात्तर्हि "इदम्=द्रव्यं द्रव्यत्ववत् गुणकर्मान्यत्वविशिष्टसत्त्वात्" इत्यत्रैवाव्याप्तिः स्यात् । तथाहि—अत्र द्रव्यं पक्षः, द्रव्यत्वं साध्यम्, गुणकर्मान्यत्वविशिष्टसत्त्वादिति हेतुः । अन्यत्वं भेदोऽन्यताऽन्योन्याभाव इत्यनर्थान्तरम् । गुणकर्मभेदविशिष्टसत्ता केवलं द्रव्ये वर्त्तते, शुद्धसत्ता तु द्रव्यगुणकर्मसु त्रिष्वेव तिष्ठति । परमस्ति चैको न्यायनियमो यद् "विशिष्टं शुद्धान्नातिरिच्यत" इति । अनेन नियमेन गुणकर्मभेदविशिष्टसत्ताया शुद्धसत्तायायाश्च भेदो वक्तुं न शक्यते । तथाच साध्यवद् द्रव्यम्, तत्प्रतियोगिकभेदाधिकरणं गुणकर्मादि, तत्रोक्तनियमेन उक्तविशिष्टसत्ताया वृत्तित्वमेवास्ति वृत्तित्वाभावो नास्ति. इष्यते च वृत्तित्वाभावः, एवमयमत्राव्याप्तिर्दोषः ।

यदि तु हेतुताऽवच्छेदकधर्मे साध्यवद्भेदाऽधिकरणनिरूपितवृत्तिताया अनवच्छेदकत्वं गृह्येत तदा नाव्याप्तिः । अर्थात् प्रकृते हेतुतावच्छेदकधर्मः गुणकर्मान्यत्वविशिष्टसत्तात्वरूपः, सच साध्यवद्भेदाऽधिकरणीभूतगुणकर्मनिरूपितवृत्तिताया अनवच्छेदकः प्रदर्शितरीत्यैव भवितुमर्हति । यद्यपि विशिष्टसत्तायाः शुद्धसत्तायाश्च परस्परमभेदः, तथापि गुणकर्मभेदविशिष्टसत्तात्वं शुद्धसत्तात्वञ्च धर्मः परस्परं भिन्न एव । नहि गुणकर्मान्यत्वविशिष्टसत्तात्वेन रूपेण विशिष्टसत्ता गुणेषु कर्मसु च वर्त्तते, किन्तु द्रव्य एव तिष्ठति । एवं साध्यं द्रव्यत्वम्, साध्यवद् द्रव्यम्, * साध्यवद्भेदाधिकरणं गुणा वा कर्माणि वा (स्वस्मिन् स्वभेदाभावात्) तेषु वृत्तिता=आधेयता गुणत्वस्य कर्मत्वस्य वाऽस्ति † वृत्तितावच्छेदकञ्च गुणत्वत्वकर्मत्वत्वरूपो धर्मः, अनवच्छेदकञ्च गुणकर्मान्यत्वविशिष्टसत्तात्वरूपो धर्मः, तस्य गुणादिष्ववृत्तित्वमेवास्तीति नाव्याप्तिलेशोऽपि । लक्षणस्वरूपन्तु—'साध्यताऽवच्छेदकसम्बन्धाऽवच्छिन्नसाध्यवत्त्वाऽवच्छिन्नप्रतियोगिताकभेदाधिकरणत्वावच्छिन्नभेदाधिकरणनिरूपिता या हेतुतावच्छेदकसम्बन्धावच्छिन्ना वृत्तिता, तादृशवृत्तिताऽनवच्छेदकहेतुताऽवच्छेदकधर्मवत्त्वमेव (हेतुशिरसि साध्यस्य) व्याप्तिः ।

(मुक्ता०) ननु—केवलान्वयिनि ज्ञेयत्वादौ साध्ये साध्यवदन्यस्याऽप्रसिद्धत्वादव्याप्तिः । किञ्च सत्तावान् जातेरित्यादौ साध्यवदन्यस्मिन् सामान्यादौ हेतुताऽवच्छेदकसम्बन्धेन समवायेन वृत्तेरप्रसिद्धत्वादव्याप्तिश्चात आह—

(प्रभा०) उपरि प्रदर्शितं लक्षणद्वयमपि अन्वयव्यतिरेकिणि केवलव्यतिरेकिणि वा घटते, नतु केवलान्वयिन्यपीति । तथाहि—"इदं वाच्यं वाच्यत्ववत् ज्ञेयत्वात्" अत्रोक्तलक्षणस्याव्याप्तिरेव । अर्थात् "अस्माच्छब्दादयमर्थो बोद्धव्यः" इत्याकारके-

* द्रव्यत्वावच्छिन्नद्रव्यप्रतियोगिकभेदाधिकरणमित्यर्थः ।

† आधेयताया अवच्छेदकमित्यर्थः ।

श्वरीयेच्छाविषयीभूतपदार्थमात्रं वाच्यम्भवति, एवमीश्वरीयज्ञानविषयीभूतम्पदार्थमात्रमेव च ज्ञेयमिति साधर्म्यनिरूपणे प्रत्यक्षखण्डेऽवोचाम ※। तथाच पदार्थमात्रनिष्ठा वाच्यत्वज्ञेयत्वादयो धर्माः केवलान्वयिन उच्यन्ते । † अत्यन्ताभावाप्रतियोगित्वं केवलान्वयित्वमिति तल्लक्षणात् । अनया रीत्या पदार्थमात्रस्य वाच्यत्वधर्मावच्छिन्नतया

※ अर्थात् ज्ञेयत्ववाच्यत्वादीनां केवलान्वयित्वं न्यरूपयाम ।

† ननु—एवं गगनाभावस्य केवलान्वयित्वं न सम्भवति गगनाभावस्य गगनात्मकात्यन्ताभावप्रतियोगित्वात् । यदि च गगनाभावाभावत्वं गगनस्य न स्वीक्रियते प्रतियोगित्वस्य स्वरूपसम्बन्धात्मकतया गगने तद्विरोधेऽपि गगनाभावप्रतियोगित्वासम्भवात् । अस्तु वा अत्यन्ताभावस्य तदात्मता, गगनञ्च न संसर्गाभावः (तस्य) भावत्वात् । अथैवं घटाभावादेरपि केवलान्वयित्वा(ना)पत्तिः । तस्य घटात्मकाऽभावप्रतियोगित्वेऽपि घटस्य भावत्वेन न संसर्गाभावात्मकत्वमिति चेत् तर्हि अत्यन्ताऽभावो वृत्तिमत्वेन विशेषणीय इति विभाव्यते, तदा कपिसंयोगाभावादेः केवलान्वयित्वं न स्यात्, कपिसंयोगाद्यात्मकवृत्तिमदत्यन्ताभावप्रतियोगित्वात्, तथाप्यत्यन्ताभावस्य प्रतियोगिव्यधिकरणत्वेन विशेषणीयतया नाऽनुपपत्तिरिति **रामरुद्रः** ।

**अयमभिसन्धिः**—अत्यन्ताभावाप्रतियोगित्वं केवलान्वयित्वञ्चेत् ? तदा (कपि)संयोगाभावे कालाभावे चाऽव्याप्तिः । अतस्तद्वारणाय "स्ववृत्तिविरोधिवृत्तिमदत्यन्ताभावाऽप्रतियोगित्वं केवलान्वयित्वम्" इत्येव लक्षणं कर्त्तव्यम् । "स्व"शब्देन घटाभावः तस्य विरोधी वृत्तिमदत्यन्ताभावो घटाभावाभावः, तत्प्रतियोगित्वं घटाभावे, अप्रतियोगित्वञ्च प्रमेयत्वादाविति लक्षणसमन्वयः । अर्थात् वृत्तिशब्देनाधेयता ग्राह्या । तथाच—प्रमेयत्वादिवृत्तिविरोधिवृत्तिमत्प्रमेयत्वाद्यत्यन्ताभावाऽप्रसिद्ध्या "स्व"शब्देन घटादयो ग्राह्याः, तेषामाधेयताविरोधिवृत्तिमदत्यन्ताभावो घटादिशून्यदेशे घटाद्यत्यन्ताभावः, तत्प्रतियोगित्वं घटादौ, अप्रतियोगित्वंप्रमेयत्वादाविति लक्षणसमन्वयः ।

"वृत्तिमदत्यन्ताभावाऽप्रतियोगित्वं केवलान्वयित्वम्" इत्युक्ते कपिसंयोगाद्यत्यन्ताऽभावादीनामपि केवलान्वयित्वस्याभीष्टतया लक्ष्यत्वात् कपिसंयोगाभावादिष्वव्याप्तिः स्यात् । वृत्तिमदत्यन्ताभावः कपिसंयोगात्यन्ताभावाद्यभावः तत्प्रतियोगित्वस्य कपिसंयोगाभावादौ सत्त्वात् तद्वारणाय "स्वविरोधिवृत्ति" इत्युक्तम् । तथाच—स्वविरोधिवृत्तिमदत्यन्ताभावः कपिसंयोगात्यन्ताभावाद्यभावो नास्ति, कपिसंयोगात्यन्ताभावाद्यभावरूपकपिसंयोगाद्यधिकरणवृक्षादौ मूलाद्यवच्छेदेन कपिसंयोगाद्यत्यन्ताभावस्य सत्वात्, किन्तु स्ववृत्तिविरोधिवृत्तिमदत्यन्ताभावो घटात्यन्ताभावस्तत्प्रतियोगित्वं घटादावप्रतियोगित्वं कपिसंयोगात्यन्ताभावादाविति कपिसंयोगात्यन्ताभावादौ केवलान्वयित्वं संरक्षितमेव । गगनात्यन्ताभावादावव्याप्तिवारणाय "वृत्तिमद्" इत्युक्तम् । तथाच—गगनाऽत्यन्ताऽभावाद्यभावस्य गगनादिरूपत्वेन वृत्तिमत्त्वाऽभावेन तद्ग्रहणाऽसम्भवेन नाव्याप्तिरिति बोध्यम् ।

**अयमत्र सारसारः**—"स्वरूपसम्बन्धेन=एकजातीयसम्बन्धेन सर्वत्र वर्त्तमानत्वं केवलान्वयित्वम्" इति । तत्र—वाच्यत्व-प्रमेयत्व-ज्ञेयत्व-गगनाभाव-कपिसंयोगाभाव-व्यधिकरणसम्बन्धा-

वाच्यत्ववद्भेदाधिकरणस्याप्रसिद्ध्या तन्निरूपितवृत्तिताया अप्यप्रसिद्धिरेव । अथच — हेतुनिष्ठमवृत्तित्वमपि सुतरामप्रसिद्धम्, प्रतियोगिज्ञानाधीनज्ञानविषयत्वादभावज्ञानस्येति सर्वमभिप्रेत्य सिद्धान्तलक्षणमवतारयितुं शङ्कते—"ननु"—इति ।

केवलान्वयिनि=अत्यन्ताभावाऽप्रतियोगिनि । "ज्ञेयत्वादौ"—इत्यादिना प्रमेयत्वादेर्ग्रहः । साध्यवदन्यस्य=साध्यवद्भेदाधिकरणस्य । "अप्रसिद्धत्वात्"—इति । प्रसिद्ध्यभावात् अप्रमितत्वादित्यर्थः । अव्याप्तिः=पदार्थमात्रस्यैव अभिधेयत्वात् ज्ञेयत्वाद्याऽव्याप्तिरेव लक्षणस्येत्यर्थः ।

ननु—केवलान्वयित्वज्ञानकाले "इदं वाच्यत्ववन्नवा" इत्याकारः पक्षताघटकः संशयोऽपि नास्त्येव तदभावात्कथमनुमितिः, केवलान्वयिज्ञानाभावकाले तु भ्रमात्मकव्याप्तिज्ञानादनुमितिर्भविष्यत्येवेति कथमुच्यतेऽत्राव्याप्तिरित्यस्वरसमनुसन्धाय आह—"किञ्च"—इति । "सत्तावान्"—इति । अयमर्थः—"घटः सत्तावान् जातेः" इत्यत्र साध्यं सत्ता, साध्यवद् द्रव्यगुणकर्मेति त्रितयम्, त्रिष्वेव सत्तायाः समवायात् । साध्यवद्भेदाधिकरणं सामान्यविशेषसमवायादि, तेषु हेतुतावच्छेदकसमवायसम्बन्धेन यदि कस्यचिद् वृत्तित्वम्=आधेयता प्रसिद्धम्=प्रसिद्धा स्यात्, स्यात् तदा समवायसम्बन्धावच्छिन्नवृत्तित्वाऽभावोऽपि जातिरूपहेतौ, परन्तु समवायसम्बन्धाऽवच्छिन्ना वृत्तिता तेषु अप्रसिद्धैवेत्यत्राऽव्याप्तिस्तु न निवारयितुं शक्यत इत्यतः सिद्धान्तलक्षणं दर्शयति परममूले—

(का०) अथवा हेतुमन्निष्ठविरहाप्रतियोगिना ।
साध्येन हेतोरैकाधिकरण्यं व्याप्तिरुच्यते ॥६९॥

(प्रभा०) "अथवा"—इति । हेतुमति=साधनाधिकरणे पक्षे निष्ठा=स्थितिर्यस्य तादृशो यो विरहोऽत्यन्ताभावः तस्य अप्रतियोगि=अविरोधि यत्साध्यं तेन साध्येन सह हेतोः ऐकाधिकरण्यम्=सामानाधिकरण्यं यत्सा व्याप्तिरुच्यते सिद्धान्तरूपेणेति शेषः । तथाच—"हेत्वधिकरणवृत्त्यत्यन्ताभावाप्रतियोगिसाध्यसामानाधिकरण्यं व्याप्तिरिति" फलितम्भवति । इत्थञ्च "घटो वाच्यत्ववत् ज्ञेयत्वात्" इत्यत्रापि न दोषः। प्रकृते हेतुर्ज्ञेयत्वम्, तदधिकरणं वाच्यभूतो घटादिः, तद्वृत्तिरभावः वाच्यत्वाभावस्तु न धर्तुं शक्यते । तत्र तस्य विद्यमानत्वात्, किन्तु शक्यते वदितुं पटाभावो दण्डाभावो

---

वच्छिन्नप्रतियोगिताकाभाव-व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावप्रभृतयः केवलान्वयिपदार्थाः । ईश्वरेच्छाविषयत्वमिच्छाविषयत्वं वा वाच्यत्वम् । ईश्वरीयप्रमातिविषयत्वं प्रमाविषयत्वं वा प्रमेयत्वम् । ईश्वरीयज्ञानविषयत्वं ज्ञानविषयत्वं वा ज्ञेयत्वम् । संयोगसम्बन्धेन गुणाभावादिः व्यधिकरणसम्बन्धावच्छिन्नप्रतियोगिताकाभावः । घटत्वेन पटाभावादिर्व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभाव इत्याद्यन्यत्र विस्तरः ।

वा, तत्प्रतियोगिता तत्तन्निष्ठा, अप्रतियोगि साध्यं वाच्यत्वं तेन सह ज्ञेयत्वहेतोः सामानाधिकरण्यमस्तीति लक्षणसमन्वयः।

(मुक्ता०) हेतुमति निष्ठा वृत्तिर्यस्य स तथा विरहोऽभावः, तथाच हेत्वधिकरणवृत्तिर्योऽभावः तदप्रतियोगिना साध्येन सह हेतोः सामानाधिकरण्यं व्याप्तिरुच्यते। अत्र यद्यपि वह्निमान् धूमादित्यादौ हेत्वधिकरणपर्वतादिवृत्त्यभावप्रतियोगित्वं तत्तद्वह्न्यादेरस्तीत्यव्याप्तिः, न च समानाधिकरणवह्निधूमयोरेव व्याप्तिरिति वाच्यम्, तत्तद्वह्न्यादेरप्युभयाभावसत्त्वादेकसत्त्वेऽपि द्वयं नास्तीति प्रतीतेः। गुणवान् द्रव्यत्वादित्यादावव्याप्तिश्च, तथापि प्रतियोगितानवच्छेदकं यत्साध्यतावच्छेदकं तदवच्छिन्नसामानाधिकरण्यं व्याप्तिरिति बोध्यम्।

(प्रभा०) स्वोक्तां कारिकां स्वयं विवृणोति—"हेतुमति"—इत्यादिना। व्याख्यातप्रायम्। एवञ्च सति "सत्तावान् जातेः" इत्यत्र नाव्याप्तिः। तथाहि—हेतुरत्र जातिः, तदधिकरणं द्रव्यगुणकर्म (प्रकृते च पक्षत्वेनाऽभिमतो घटो द्रव्यमेव हेत्वधिकरणम्) तद्वृत्त्यभावः सत्ताभावस्तु धर्तुं न शक्यते तस्यास्तत्र विद्यमानत्वात्। किन्तु अन्य एव कश्चित् दण्डाभावः पटाभावो वा (हेत्वधिकरणं पक्षभूते घटे) ग्रहीतुं शक्यते, तस्याभावस्य प्रतियोगी दण्डः पटो वा, अप्रतियोगी साध्यं सत्ता, तादृशसाध्येन सह "जाति"रूपहेतोः सामानाधिकरण्यम्=एकाश्रयवृत्तित्वं वर्त्तत एवेति कृत्वा लक्षणसमन्वयः। ततश्च नाव्याप्तिः।

* "पर्वतो वह्निमान् धूमात्" इत्यत्र प्रसिद्धानुमाने हेतुर्धूमः, तदधिकरणम् (पक्षः) पर्वतः, तद्वृत्त्यभावो वह्न्यभावस्तु धर्तुं न शक्यते, तत्र तस्य विद्यमानत्वात्। अत्यन्ताभावस्य प्रतियोगिना सह विरोधात्, तस्मात्तादृशाभावप्रतियोगी वह्निर्न भवति, तेन ध्रियते तत्रान्यः कश्चन अभावः घटाभावो वा पटाभावो वेति, तत्प्रतियोगी घटः पटो वा, अप्रतियोगी साध्यो वह्निः, तेन वह्निना सह धूमस्य हेतोः सामानाधिकरण्यमस्त्येवेति लक्ष्ये लक्षणसमन्वयः।

"धूमवान् वह्नेः" इत्यत्र असद्धेतुस्थले तु हेतुर्वह्निः, तदधिकरणं यद्यपि पर्वतः, तथापि तप्तायःपिण्डोऽपि ग्रहीतुं शक्यते, तद्वृत्त्यभावो धूमात्यन्ताभावः, तत्प्रतियोग्येव साध्यं धूमो नाप्रतियोगि। इष्यते तु अप्रतियोगि साध्यम्, तस्मात्तादृशाप्रतियोगिसाध्याभावादुक्तलक्षणस्य नातिव्याप्तिः।

उक्तलक्षणस्यैव प्रसिद्धाऽनुमानेऽव्याप्तिमाशङ्क्य निवेशान्तरेण तत्परिहारं दर्शयितुं ग्रन्थान्तरमवतारयति—"अत्र"—इत्यारभ्य "व्याप्तिरिति वाच्यम्"—

---

* लक्ष्ये लक्षणसमन्वयोऽलक्ष्याद्व्यावृत्तिरिति लक्षणसाधुतां दर्शयति—"पर्वतो वह्निमान्"—इति।

इत्यन्तम् । "अत्र"—इत्यारभ्य "द्रव्यत्वादित्यादावव्याप्तिश्च"—इत्यन्तः पूर्वपक्षग्रन्थः । "तथापि"—इत्यारभ्य "वाच्यम्"—इत्यन्तः उत्तरपक्षग्रन्थः ।

"अत्र"—इति । यद्यपि अत्र "पर्वतो वह्निमान् धूमात्" इत्यादौ । "हेत्वधिकरण"—इति । धूमादिहेत्वधिकरणं यत् पर्वतादिः तद्वृत्त्यभावप्रतियोगित्वम्=नाम धूमादिहेत्वधिकरणवृत्तितत्तद्वह्न्यभावप्रतियोगित्वं तत्तद्वह्न्यादेः=महानसीयवह्न्यादेरिति योजना । "अव्याप्तिः" इति । चालनीन्यायेनेति शेषः । अर्थात् "पर्वतो वह्निमान् धूमात्" इत्यादौ हेत्वधिकरणे पर्वतादौ यथा घटाभावः पटाभावो वास्ति तथा तत्तद्वह्न्यादेः=महानसीयवह्नेरप्यभावः, महानसे च चत्वरीयवह्नेरभावः, चत्वरे च गोष्ठीयवह्नेरभावः । एवञ्च तस्याभावस्य प्रतियोग्येव वह्निर्नाप्रतियोगि साध्यमतोऽव्याप्तिरेवास्य लक्षणस्य ।

ननु—पर्वतीयवह्न्यादेः पर्वतीयधूमादिनैव व्याप्तिरास्तामिति शङ्कते-"नच"-इति । अर्थात्—यदि सिद्धान्ती कथयेत् "समानाधिकरणवह्निधूमयोरेव व्याप्तिः" इति । अर्थात् "हेत्वधिकरणवृत्त्यन्ताभावाप्रतियोगिसाध्यसामानाधिकरण्यम्" इति लक्षणकरणे ममायमभिप्रायो यत् पर्वतीयधूमेन सह पर्वतीयवह्नेर्व्याप्तिः, महानसीयधूमेन सह महानसीयवह्नेर्व्याप्तिः, एवञ्चत्वरीयधूमेन सह चत्वरीयवह्नेर्व्याप्तिरित्याद्यूह्यम् । तथाच हेत्वधिकरणे पर्वतीयधूमाधिकरणे पर्वतादौ महानसीयवह्नेरभावे गृहीतेऽपि तत्प्रतियोगी महानसीयवह्निः, अप्रतियोगी साध्यः पर्वतीयवह्निः, तादृशेन वह्निना सह धूमहेतोः सामानाधिकरण्यमिति कुतोऽव्याप्तिरिति ? तत्रोच्यते—"तत्तद् वह्न्यादेः"—इति । यद्यप्येवं तवाशयः तथाऽप्यव्याप्तिर्नापयाति प्रकारान्तरेणापि तस्याः सत्त्वात् । तथाहि—"पर्वतो वह्निमान् धूमात्" इत्यत्र "एकसत्त्वेऽपि द्वयं नास्ति" इति नियमेन पर्वते पर्वतीयवह्निसत्त्वेऽपि "वह्निघटद्वयं नास्ति" इति प्रतीतिर्जायत एव । यथा घटस्थले "घटपटौ न स्त" इति प्रतीतिर्भवति तद्वत् । तथाच तादृशोभयाभावस्य यथा घटः प्रतियोगी तथा वह्निरपीत्यप्रतियोगिनः साध्यस्याभावस्तदवस्थः, तस्मात्सुतरामव्याप्तिः ।

अथ सिद्धान्ती इत्थं ब्रूयात् यत् हेत्वधिकरणवृत्त्यभावीया प्रतियोगिता व्यासज्यवृत्तिधर्मानवच्छिन्ना विवक्षिता, अर्थात् उभयवृत्तिधर्मो "*व्यासज्यवृत्तिः" इत्युच्यते । प्रकृते च हेत्वधिकरणे पर्वते "वह्निघटद्वयं नास्ति" इत्याकाराभावीया वह्निनिष्ठा या प्रतियोगिता त्वयोद्भाविता सा व्यासज्यवृत्तिधर्मानवच्छिन्ना नास्ति । किन्तु वह्निघटोभयस्मिन् वर्त्तमानो यो वह्निघटोभयत्वरूपो धर्मः सच व्यासज्यवृत्तिः, तदवच्छिन्नैव च प्रकृते वह्निनिष्ठा प्रतियोगिता । तस्माद् वह्निघटोभयाभावमादाय दूषणदानमाक्षेप्तुरसमञ्जसमेव । एवञ्च शुद्धघटाभावमादायैव लक्षणं समन्वयनीयम् ।

---

* एकत्वावच्छिन्नप्रतियोगिताकपर्याप्तिकान्यत्वं व्यासज्यवृत्तित्वम् ।

लक्षणाकारश्चायम्—"हेत्वधिकरणवृत्तिव्यासज्यवृत्तिधर्मानवच्छिन्नाप्रतियोगि-ताकात्यन्ताभावाप्रतियोगिना साध्येन सह हेतोः सामानाऽधिकरण्यं व्याप्तिः" इति बोध्य इति।

एवमुक्ते सति पूर्वपक्षिणा अव्याप्तेः स्थलान्तरं प्रदर्श्यते—"गुणवान्"—इति। अयमर्थः—"घटो गुणवान् द्रव्यत्वात्" इत्यत्र द्रव्यत्वहेतोरधिकरणं रक्तो घटः, तत्र पीतगुणस्याभावः, पीतघटश्चेत्पक्षः तदा तत्र श्यामगुणस्याभावः, श्यामघटश्चेत् तदा श्वेतगुणस्याभाव इत्येवं तत्तद्गुणाभावस्य प्रतियोग्येव गुणरूपं साध्यं नाप्रतियोगीत्यत्र अव्याप्तिर्दुरुद्धरैव।

एवं विस्तृते पूर्वपक्षे सिद्धान्ती उत्तरयति—"तथापि"—इति। यद्यप्येवं तव शङ्कास्ति, तथापि सा न युक्तेत्यर्थः। कुत इति चेदित्याह—"प्रतियोगिता-नवच्छेदकम्"—इति। अभावीयप्रतियोगिताया अनवच्छेदकं यत्साध्यतावच्छेदकं तदवच्छिन्नेन (साध्येन) हेतोः सामानाधिकरण्यम्=एकाधिकरणवृत्तित्वमेव व्याप्ति-रित्यर्थः।

अयमभिसन्धिः—"हेत्वधिकरणवृत्त्यभावाप्रतियोगि साध्यम्" इत्येतावन्-मात्रमेव न ब्रूमः, किन्तु "हेत्वधिकरण"—इत्यादिलक्षणे साध्यतावच्छेदको धर्मः हेत्वधिकरणवृत्त्यभावीयप्रतियोगिनवच्छेदको ग्रहीतव्य इत्यभिप्रेमः। तथासति "गुणवान् द्रव्यत्वात्" इत्यत्र नाव्याप्तिः। कथमिति चेत्? शृणु—अत्र साध्यं गुणः। साध्यतावच्छेदको धर्मो गुणत्वरूपः। स च हेतोर्द्रव्यत्वस्याधिकरणे घटात्मके पक्षे वृत्तिमान् योऽभावः तदभावीयप्रतियोगिताया अनवच्छेदक एवंरूपेण नेतव्यो यद् द्रव्यत्वाधिकरणे "गुणत्वेन गुणो नास्ति" इत्येवं रीत्या अभावो न ग्रहीतुं शक्यते, घटस्य द्रव्यत्वात्, द्रव्ये च यस्य कस्यापि गुणस्यावश्यम्भावित्वात्। तस्माद् घटे गुणसामान्याभावो न धर्त्तव्यः किन्तु द्रव्यत्वहेत्वधिकरणम्पीतघटः, तद्वृत्त्यभावो नीलगुणाभावः रक्तगुणाभावो वा, तदभावीया प्रतियोगिता नीलगुणनिष्ठा पीतगुण-निष्ठा वा, तदवच्छेदकं नीलगुणत्वम्पीतगुणत्वं वा, अनवच्छेदकं साध्यतावच्छेदकं शुद्धगुणत्वम्, तदवच्छिन्नं साध्यं गुणः, तादृशेन साध्येन सह द्रव्यत्वहेतोः सामाना-धिकरण्यमिति विवक्षायां कथमव्याप्तिगन्धोऽपि। लक्षणन्तु—"हेत्वधिकरणवृत्त्य-भावीयप्रतियोगितानवच्छेदकं यत्साध्यताऽवच्छेदकं तदवच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिः" इति बोध्यम्।

(मुक्ता०) ननु—रूपत्वव्याप्यजातिमत्वान् पृथिवीत्वादित्यादौ साध्यतावच्छेदिका रूपत्वव्याप्यजातयस्तासाञ्च शुक्लत्वादिजातीनां नील-घटादिवृत्त्यभावप्रतियोगिताऽवच्छेदकत्वमस्तीत्यव्याप्तिरिति चेन्न, तत्र परम्परया रूपत्वव्याप्यजातित्वस्यैव साध्यतावच्छेदकत्वात्। नहि तादृश-

धर्मावच्छिन्नाभावः क्वापि पृथिव्यामस्ति। रूपत्वव्याप्यजातिमान्नास्तीति बुद्ध्यापत्तेः। एवं दण्ड्यादिसाध्ये परम्परासम्बद्धं दण्डत्वादिकमेव साध्यतावच्छेदकं तच्च प्रतियोगितानवच्छेदकमिति।

(प्रभा०) "हेत्वधिकरणवृत्त्यभावीयप्रतियोगितानवच्छेदकं यत्साध्यतावच्छेदकम्" इत्यंशं हृदि कृत्वाऽव्याप्तिमाशङ्कते—"ननु"—इति। अस्य ग्रन्थस्य लापनप्रकार इत्थं ज्ञेयः—"घटो रूपत्वव्याप्यजातिमत्वान् * पृथिवीत्वात्" इत्यत्र उक्तलक्षणस्याऽव्याप्तिः। तथाहि—अत्र पक्षभूते घटे, रूपत्वव्याप्या या जातयो नीलत्वपीतत्वाद्याः, तादृशजातिमन्तो ये गुणा नीलपीताद्याः, ते एव च साध्यभूताः सन्ति। नीलपीतादिगुणेषु वर्त्तमाना या नीलत्वपीतत्वादिजायतस्ताः साध्यतावच्छेदिकाः सन्ति। तथाच—पृथिवीत्वरूपहेत्वधिकरणं भूते श्वेतादिगुणयुक्ते घटादौ सप्तविधरूपमध्ये यस्य कस्यापि रूपस्य अभावोऽपि सम्भवति तादृशाभावीयप्रतियोगितावच्छेदिका एव नीलत्वपीतत्वाद्या जातयः नत्वनवच्छेदिकाः, तस्मादत्र प्रतियोगितानवच्छेदिकसाध्यतावच्छेदकाप्रसिद्ध्या अव्याप्तिरेव लक्षणस्येति।

तदेतत्समाधत्ते—"न"—इति। तत्र=एतादृशस्थले। परम्परया=स्वाश्रयाश्रयत्वसमवायेन। "रूपत्वव्याप्यजातित्वस्य"—इति। समाधानग्रन्थस्यायमर्थः—तत्र=एतादृशस्थले परम्परया=स्वाश्रयसमवायेन, रूपत्वव्याप्यजातित्वस्यैव=रूपत्वव्याप्यासु नीलत्वपीतत्वादिजातिषु स्थितस्य जातित्वधर्मस्यैव साध्यतावच्छेदकत्वात्=नतु नीलत्वपीतत्वव्याप्यजातीनां साध्यतावच्छेदकत्वस्वीकारः येन यत्किञ्चिन्नीलादिगुणाभावीयप्रतियोगितावच्छेदकत्वमादाय तासामव्याप्तिकथनं सङ्गच्छेत।

अयमभिसन्धिः—एतादृशस्थले स्वाश्रयसमवायाऽऽत्मकपरम्परासम्बन्धेन साध्यतावच्छेदकत्वं जातत्वधर्मस्य, नतु नीलत्वादिजातीनाम्। 'स्व"शब्देन रूपत्वव्याप्यजातित्वग्रहः तदाश्रयाः, रूपत्वव्याप्यनीलत्वपीतत्वादयः, तासां नीलपीतादिगुणेषु समवायः। ते च गुणाः पक्षभूतेषु घटादिषु समवायसम्बन्धेन साध्याः, रूपत्वव्याप्यजातित्वं तु स्वाश्रयसमवायसम्बन्धेन नीलपीतादिगुणेषु स्थितं सत् साध्यतावच्छेदकम्। एवञ्च हेत्वधिकरणरक्तघटवृत्त्यभावः नीलत्वजातिमदभावः (नीलाभावः) तादृशाभावीयप्रतियोगिता नीलगुणे, प्रतियोगितायाः अवच्छेदको नीलत्वधर्मः, स एव रूपत्वव्याप्यजातित्वपदेनाभिहितः, तासु सर्वासु स्थितो यो रूपत्वव्याप्यजातित्वरूपो धर्मः स एव साध्यतावच्छेदकः तादृशाभावीयप्रतियोगितायाः अनवच्छेदकोऽप्यस्ति

---

* ननु—"शैषिकान्मतुवर्थीयाच्छैषिको मतुबर्थिकः। सरूपः प्रत्ययो नेष्ट"—इति नियमात् "रूपत्वव्याप्यजातिमत्त्वान्" इत्याद्यसिद्धिरितिचेन्न तस्य भिन्नार्थः समानाकारो नेत्यर्थात्। "दण्डिमती" इत्यत्र षष्ठीसप्तम्यर्थान्यतरवृत्तेः। "सप्तमीपञ्चम्यन्यतरार्थे प्रत्ययेऽर्थतः शब्दतश्च सरूपत्वाभानान्न दोष" इति मतुप्सूत्रे आकरे स्पष्टम्।

इत्याशयेनैवाह—"नहि"—इति । रूपत्वव्याप्यजातित्वावच्छिन्नवदभावः कस्याञ्चिदपि पृथिव्यां नैव वर्त्तते, तत्र यस्य कस्यचिद् रूपस्यान्ततः सत्त्वादित्यर्थः । अर्थात् यदि नीरूपा पृथिवी स्यात् तदा यत्र कुत्रचिद् घटादौ "रूपत्वव्याप्यजातिमान् नास्ति" इत्याकारः प्रत्यय उदयेत । पृथिव्यान्तु सप्तविधरूपमध्ये यस्य कस्यापि रूपस्य वृत्तिरस्त्येवेति प्रकृते हेत्वधिकरणवृत्त्यभावीयप्रतियोगितानवच्छेदकत्वं रूपत्वव्याप्य-जातित्वरूपधर्मस्याऽस्ति, तस्यैव च परम्परासम्बन्धेन साध्यताऽवच्छेदकत्वमपीति कुतोऽव्याप्तिः ।

स्थलान्तरेऽपि परम्परासम्बन्धेनाऽव्याप्तिं वारयितुं ग्रन्थान्तरमवतारयति—"एवं दण्ड्यादिसाध्य"—इति । अस्यायमर्थः—यत्र "मठो दण्डिमान् दण्डि-संयोगात्" इत्यादावनुमाने पूर्वोक्तरीत्याऽव्याप्तिरापतेत् तत्रापि परम्परासम्बन्धाश्रयेणैव तद्वारणं कर्त्तव्यम् । तथाहि—अत्र दण्डिसंयोगरूपहेतोरधिकरणं मठोऽनुयोगिता-सम्बन्धेनास्ति "यस्मिन्सम्बन्धो भवति स सम्बन्धस्यानुयोगी" इति नियमात् । तत्रैव च "वृद्धदण्डी नास्ति, युवदण्डी नास्ति" इत्याकारकः संयोगाभावोऽपि धर्त्तुं शक्यते, तदभावीया प्रतियोगिता तत्तद्दण्डिनिष्ठा, प्रतियोगितावच्छेदको धर्मो दण्डः, स एव च साध्यतावच्छेदकोपीत्यायातैवाव्याप्तिः ।

यदि स्वसमवायिसंयोगरूपपरम्परासम्बन्धस्वीकारे दण्डत्वधर्मः साध्यताऽ-वच्छेदकः स्वीक्रियेत तदा नास्त्येव दोषः । "स्व"पदेन दण्डत्वधर्मग्रहः, तस्य समवायी अनुयोगितासम्बन्धेन दण्डः, तस्य संयोगः पुरुषे, एतादृशसम्बन्धेन दण्डत्वधर्मः साध्यतावच्छेदकः सन्नपि अभावीयप्रतियोगितायाः ( वृद्धयुवदण्डिनिष्ठायाः प्रति-योगितायाः ) अनवच्छेदकोऽप्यस्तीति न कश्चिद्दोषः ।

**(मुक्ता०) साध्यादिभेदेन व्याप्तेर्भेदात्तादृशस्थले साध्यतावच्छेदकता-वच्छेदकं प्रतियोगिताऽवच्छेदकताऽनवच्छेदकमित्येव लक्षणघटक-मित्यपि वदन्ति ।**

(प्रभा०) परम्परासम्बन्धानङ्गीकर्तॄणां मतमाह—"**साध्यादिभेदेन**"—इति । साध्यतावच्छेदकविशिष्टस्य साधनतावच्छेदकविशिष्टस्य भेदेनेत्यर्थः । **व्याप्तेर्भेदात्**= व्याप्तिज्ञानस्य कारणताभेदादित्यर्थः ।

**एतेषायममाशयः**—दर्शितदिशा परम्परासम्बन्धो न कल्पनीयः, किन्तु साध्य-साधनभेदं कल्पयित्वा, व्याप्तेर्भिन्नं भिन्नञ्च लक्षणं कृत्वा समन्वयोऽवसेयः । तथाच—"हेत्वधिकरणवृत्त्यभावीयप्रतियोगितावच्छेदकतानवच्छेदकं यत्साध्यतावच्छेदकतावच्छेदकं तदवच्छिन्नावच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिः" इति लक्षणं कर्त्तव्यम् । "घटो रूपत्वव्याप्यजातिमत्वान् पृथिवीत्वात्" इत्यत्र पृथिवीत्वहेत्वधिकरणं घटः, तद्वृत्त्य-भावः रूपत्वव्याप्यजातिमत्त्वनीलपीतादिरूपाभावः, तादृशाभावीयप्रतियोगिता तत्त-

द्रूपेषु वर्त्तते, तादृशप्रतियोगिताया अवच्छेदिका रूपत्वव्याप्यनीलत्वपीतत्वजातयः, अभावीयप्रतियोगिताऽवच्छेदकताया अनवच्छेदकं साध्यताऽवच्छेदकताऽवच्छेदकञ्च रूपत्वव्याप्यजातित्वम्, तदवच्छिन्ना रूपत्वव्याप्यजातयः, तदवच्छिन्ना नीलपीतादिगुणाः, त एव च समवायेन साध्याः, तादृशसाध्येन सह पृथिवीत्वहेतोरेकस्मिन् घटे=पक्षे सामानाधिकरण्यम्=एकाश्रयवृत्तित्वमस्तीति दर्शितलक्षणसङ्गतिः सुसम्पन्ना ।

एवम् "मठो दण्डिमान्"-इत्यत्रापि हेतुर्दण्डसंयोगः, हेत्वधिकरणं मठः=पक्षः, हेत्वधिकरणवृत्त्यभावीया प्रतियोगिता तत्तद्दण्डिनिष्ठा, प्रतियोगितावच्छेदको धर्मो दण्डः, तादृशाऽभावीयप्रतियोगिताऽवच्छेदकताया अनवच्छेदकं साध्यताऽवच्छेदकताऽवच्छेदकं दण्डत्वम्, तदवच्छिन्नो दण्डः, तदवच्छिन्नो दण्डी संयोगेन साध्यः, तादृशसाध्येन सह दण्डिसंयोगरूपहेतोः सामानाधिकरण्यमस्त्येवेति नाव्याप्तिदोषः ।

**(मुक्ता०) हेत्वधिकरणञ्च हेतुतावच्छेदकविशिष्टाधिकरणं वाच्यम्, तेन द्रव्यं गुणकर्मान्यत्वविशिष्टसत्त्वादित्यादौ शुद्धसत्ताधिकरणगुणादिनिष्ठाभावप्रतियोगित्वेऽपि द्रव्यत्वस्य नाव्याप्तिः ।**

(प्रभा०) स्थलान्तरेऽव्याप्तेरुद्धाराय लक्षणगतहेत्वधिकरणपदेन विवक्षितमर्थं दर्शयति—"हेत्वधिकरणम्"—इति । "हेतुतावच्छेदक"—इति । हेतुतावच्छेदको यो धर्मः तद्विशिष्टस्याधिकरणम् "हेत्वधिकरण"पदेन ग्राह्यम् । अन्यथा "द्रव्यं गुणकर्मान्यत्वविशिष्टसत्त्वात्" इत्यत्रैवाव्याप्तिः स्यात् । कथमिति चेत्? शृणु—"विशिष्टं शुद्धान्नातिरिच्यते" इत्यस्ति नियमः । अनेन नियमेन विशिष्टसत्ता शुद्धसत्ता चैकैव सत्ता । तयोरेकरूपत्वेन यथा घटादिद्रव्यं गुणकर्मान्यत्वविशिष्टसत्ताधिकरणं तथा गुणकर्माण्यपि, तद्वृत्तिर्योऽभावः अर्थात् गुणकर्मवृत्तिर्योऽभावः "द्रव्यत्वं नास्ति" इत्याकारकः तादृशाभावीयप्रतियोगिता द्रव्यत्वरूपसाध्यनिष्ठा, तस्या अवच्छेदकमेव द्रव्यत्वरूपं साध्यतावच्छेदकञ्जातम्, अनवच्छेदकं नास्ति, इष्यते च लक्षणे हेत्वधिकरणवृत्त्यभावीयप्रतियोगितानवच्छेदकं साध्यतावच्छेदकमिति कथं नाव्याप्तिः ।

* यदि तु हेत्वधिकरणं हेतुतावच्छेदकविशिष्टाधिकरणं गृह्येत तदा न दोषः । तथाहि—यद्यपि गुणकर्मान्यत्वविशिष्टसत्ता शुद्धसत्तातो न भिद्यते, तथापि "गुणकर्मान्यत्वविशिष्टसत्तात्वेन" हेतुतावच्छेदकरूपेण सा भिन्नैवास्ति । तस्याः अधिकरणं केवलं घटपटादिद्रव्यमेव न गुणो न वा कर्मेति, तादृशहेतोः=हेतुतावच्छेदकविशिष्टहेतोः अधिकरणे घटादिपक्षे द्रव्यत्वसाध्यस्याभावस्तु नेतुं न शक्यते, तत्र तस्य विद्यमानत्वात्, अत्यन्ताभावस्य प्रतियोगिना सह विरोधाच्च । किन्तु घटे पक्षे पटाभावः,

---

* "यदि तु"—इति । अत्र विशिष्टशुद्धयोरैक्येऽपि शुद्धाऽधिकरणतातो विशिष्टाऽधिकरणता भिन्नैव । यथा हस्तविशिष्टं दण्डं वस्त्वैक्यमपि, हस्तविशिष्टदण्डस्याधिकरणता तु तत्रैव यत्र हस्तो धृतः, अन्यत्र तु शुद्धदण्डाधिकरणता ।

पटे पत्ते घटाभावो वा गृह्येत, यथायोगं तत्प्रतियोगिता पटादिनिष्ठा, अवच्छेदकं पटत्वादिकम्, अनवच्छेदकं साध्यतावच्छेदकं द्रव्यत्वत्वम्, * तदवच्छिन्नसाध्येन सह † गुणकर्मान्यत्वविशिष्टसत्ताऽत्वाऽवच्छिन्नहेतोः सामानाऽधिकरण्यमस्तीति समन्वये नाव्याप्तिगन्धोऽस्ति ।

(मुक्ता०) एवं हेतुतावच्छेदकसम्बन्धेन हेत्वधिकरणम्बोध्यम् । तेन समवायेन धूमाधिकरणतदवयवनिष्ठाभावप्रतियोगित्वेऽपि वह्नेर्नाव्याप्तिः ।

(प्रभा०) हेत्वधिकरणे ‡ हेतुतावच्छेदकसम्बन्धविवक्षां दर्शयति—"एवम्"—इति । तस्य फलमाह—"तेन"—इति । अस्यायमाशयः—यथा हेतुतावच्छेदकविशिष्टाधिकरणत्वेन हेत्वधिकरणमिष्टं तथैव हेतुतावच्छेदकसम्बन्धेनापि हेत्वधिकरणम्बोध्यम् । यद्येवं विवक्षा न क्रियेत तदा प्रसिद्धानुमान एवाव्याप्तिः । तथाहि—"वह्निमान् धूमात्" इत्यत्र "धूम"हेतोरधिकरणं यथा पर्वतः तथा समवायेन धूमावयवोऽपि तदधिकरणम् । तत्र "धूमावयवे वह्निर्नास्ति" इत्याकारोऽभावोऽपि प्रतीयते तादृशाभावप्रतियोगी वह्निरेव साध्यः । प्रतियोगितावच्छेदकञ्च वह्नित्वमित्यनवच्छेदकं साध्यतावच्छेदकं नास्ति, तस्मादव्याप्तिर्लक्षणदोषः । यदि तु—हेत्वधिकरणं हेतुतावच्छेदकसम्बन्धावच्छिन्नाधिकरणं विवक्षितं तदा प्रकृते हेतुर्धूमः, हेतुता धूमनिष्ठा, हेतुतावच्छेदकसम्बन्धः संयोगसम्बन्धः तेन सम्बन्धेन हेत्वधिकरणम्पर्वतः पक्षोऽस्ति, नतु धूमावयवः, स तु समवायेन धूमाधिकरणम् ( नतु संयोगेन ) समवायश्च प्रकृते न हेतुतावच्छेदकसम्बन्धः । एवं हेतुतावच्छेदकसंयोगसम्बन्धावच्छिन्नधूमाधिकरणे पर्वते वह्न्यभावो ग्रहीतुं न शक्यते तत्र तस्य सत्त्वात् । शक्यते तु ग्रहीतुं घटाभावः पटाभावो वा, तादृशाभावीया प्रतियोगिता घटपटनिष्ठा, प्रतियोगितावच्छेदकं घटत्वम्पटत्वं वा, उक्ताभावीयप्रतियोगितानवच्छेदकं यत्साध्यतावच्छेदकं वह्नित्वम्, तदवच्छिन्नसाध्येन सह धूमहेतोः सामानाधिकरण्यमस्तीति नाव्याप्तिः । लक्षणस्य स्वरूपन्तु—"हेतुताऽवच्छेदकसम्बन्धाऽवच्छिन्नहेतुताऽवच्छेदकावच्छिन्नहेत्वधिकरणवृत्त्यभावीयप्रतियोगितानवच्छेदकं यत्साध्यतावच्छेदकं तदवच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिः" इति सम्पन्नम् ।

(मुक्ता०) अभावश्च प्रतियोगिव्यधिकरणो बोध्यः । तेन कपिसंयोगी एतद्वृक्षत्वादित्यत्र मूलावच्छेदेनैव एतद्वृक्षवृत्तिकपिसंयोगाभावप्रतियोगित्वेऽपि कपिसंयोगस्य नाव्याप्तिः ।

---

* द्रव्यत्वत्वावच्छिन्नेन द्रव्यत्वेन साध्येन ।

† अर्थात् द्रव्यत्वत्वावच्छिन्नं द्रव्यत्वं यत्र तिष्ठति तत्र गुणकर्मभेदविशिष्टा सत्तापि वर्त्तेत एव ।

‡ "वह्निमान् धूमात्" इत्यत्राऽव्याप्तिमुद्धर्तुमिति शेषः ।

(प्रभा०) उक्तलक्षणे कीदृशोऽभावो विवक्षित इति स्थलान्तरेऽव्याप्तिवारणाय अभावं विशिनष्टि—"अभावश्च"—इति । प्रकृतव्याप्तिलक्षणेऽभावः=हेत्वधिकरणवृत्त्यभावः, प्रतियोगिव्यधिकरणः=प्रतियोग्यधिकरणभिन्नाधिकरणः। अर्थात् स्वप्रतियोग्यधिकरणभिन्नाधिकरणवान् बोध्यः=विवक्षित इत्यर्थः । उक्तविवक्षाफलं दर्शयति—"तेन"—इत्यादिना । मूलावच्छेदेन=मूलदेशेन ।

अयमाशयः—हेत्वधिकरणवृत्तिर्योऽभावः स प्रतियोगिव्यधिकरणः स्यात् । अर्थात् अभावः तत्प्रतियोगी चेतौ द्वावप्येकाधिकरणवृत्ती न स्याताम् । यद्येवं न स्यात् तदा—"अयं वृक्षः कपिसंयोगी एतद्वृक्षत्वात्" अत्रैवाव्याप्तिः स्यात् । कथमिति चेत् ? इत्थम्—अत्र हेतुः "एतद्वृक्षत्वात्" (पुरोवर्त्तिवृक्षत्वात्) इति । हेतुतावच्छेदकमेतद्वृक्षत्वत्वम्, तदवच्छिन्नमेतद्वृक्षत्वम्, तन्निष्ठा याऽऽधेयता, तादृशाधेयतानिरूपिताऽधिकरणता एतद्वृक्षे, अर्थात्—स्वरूपसम्बन्धावच्छिन्नैतद्वृक्षत्वावच्छिन्नैतद्वृक्षत्वस्याधिकरणं य एतद्वृक्षः तस्मिन्=एतादृशहेत्वधिकरणे एतद्वृक्षे वर्त्तमानो यो "मूलावच्छेदेन कपिसंयोगो नास्ति" इत्याकारकः कपिसंयोगाभावः, तत्प्रतियोगी कपिसंयोगः, तदभावीयप्रतियोगिता कपिसंयोगनिष्ठा, तस्याः प्रतियोगिताया अवच्छेदक एव कपिसंयोगत्वरूपो धर्मः, स एव च साध्यताऽवच्छेदकोऽस्ति । "अभावीयप्रतियोगितानवच्छेदकं यत्साध्यतावच्छेदकम्" इति लक्षणनिरीक्षितोऽनवच्छेदको नास्ति, तस्मादव्याप्तिर्लक्षणस्य ।

यदि तु हेत्वधिकरणवृत्त्यभावः प्रतियोगिव्यधिकरणो विवक्षितः स्यात् तदा नास्ति दोषः, यतो मूलावच्छेदेन वर्त्तमानः कपिसंयोगाभावो यः साध्याभावः, स नास्ति लक्षणघटकः, * स्वप्रतियोगिव्यधिकरणत्वाभावात् । किन्तु—लक्षणघटकोऽभावः घटाभावः पटाभावो वा, तत्प्रतियोगितावच्छेदकं यथायथं घटत्वम्पटत्वं वा, अनवच्छेदकं यत्साध्यतावच्छेदकं कपिसंयोगत्वम्, तदवच्छिन्नकपिसंयोगरूपसाध्येन सहैतद्वृक्षत्वरूपहेतोः सामानाधिकरण्यमस्तीति नाव्याप्तिः ।

(मुक्ता०) नच प्रतियोगिव्यधिकरणत्वं यदि प्रतियोग्यनधिकरणवृत्तित्वं तदा तथैवाव्याप्तिः । प्रतियोगिनः कपिसंयोगस्यानधिकरणे गुणादौ वर्त्तमानो योऽभावस्तस्यैव वृत्तेऽपि मूलावच्छेदेन सत्त्वात् । यदि तु प्रतियोग्यधिकरणावृत्तित्वं तदा संयोगी सत्त्वादित्यादावतिव्याप्तिः । सत्ताधिकरणे गुणादौ यः संयोगाभावस्तस्य प्रतियोग्यधिकरणद्रव्य-

---

* "स्व"पदेन कपिसंयोगाभावो गृह्यते, तस्य प्रतियोगी कपिसंयोग एव सच स्वाभावसमानाधिकरणत्वाद्व्यधिकरणो नास्ति । यद्यप्यवच्छेदकभेदेन कपिसंयोगतदभावाधिकरणता भिन्नैव तथापि पुरोवर्त्तिवृक्षत्वाधिकरणतासामानाधिकरण्येन तस्य व्यधिकरणत्वं नास्तीत्यत एव तस्य लक्षणघटकताऽपि नास्तीति कृत्वा लक्षणघटको घटाद्यभाव एव गृहीतः ।

वृत्तित्वादिति वाच्यम्, हेत्वधिकरणे प्रतियोग्यनधिकरणवृत्तित्व-विशिष्टस्य विवक्षितत्वात् । "स्वप्रतियोग्यनधिकरणीभूतहेत्वधिकरण-वृत्त्यभाव' इति निष्कर्षः ।

(प्रभा०) प्रकारान्तरेणोक्तस्थलेऽव्याप्तिमाशङ्कते--"नच"--इति । "नच"--इत्यारभ्य "वाच्यम्"--इत्यन्तः पूर्वपक्षग्रन्थः । "हेत्वधिकरणे"--इत्यारभ्य "निष्कर्षः" इत्यन्तः समाधानग्रन्थः ।

उक्तव्याप्तिलक्षणेऽभावविषये सिद्धान्तिना "कपिसंयोग्येतत्त्वात्" इत्यत्र अव्याप्ति-परिहाराय या अभावस्य प्रतियोगिव्यधिकरणत्वेन रूपेण विवक्षा कृता तां विकल्प्य दूषयति पूर्वपक्षी--"प्रतियोगिव्यधिकरणत्वम्"--इति ।

अत्रायमाशयः पूर्वपक्षिणः—"प्रतियोगिव्यधिकरण"पदेन किं स्वप्रतियोग्य-नधिकरणवृत्तित्वम् ? अथवा स्वप्रतियोग्यधिकरणाऽवृत्तित्वम् ? इत्यर्थोऽभिप्रेत इत्यस्ति विकल्पद्वयम् । यदि प्रथमः पक्षः स्वीक्रियेत, अर्थात् स्वस्य=अभावस्य यः प्रतियोगी तस्य यद् अनधिकरणम्. तदधिकरणभिन्नाधिकरणं तद्वृत्तिर्योऽभावः स इष्ट इति, तदा "वृक्षः कपिसंयोगी एतद्वृक्षत्वात्" इत्यत्र तदवस्थैवाव्याप्तिः । कुतः स्वप्रति-योग्यधिकरणभिन्नाधिकरणं प्रतियोग्यनधिकरणमित्येव त्वयोक्तम् । प्रकृते च "स्वं" कपिसंयोगाभावः, तस्य प्रतियोगी कपिसंयोगः, तस्यानधिकरणं गुणकर्मादिः, गुणे गुणानङ्गीकारात्, अर्थात् कपिसंयोगाधिकरणं यो वृक्षः, तद्भिन्नो गुणादिः, तत्र वर्त्तमानो यः कपिसंयोगाभावः, स एव मूलावच्छेदेन वृक्षेऽपि वर्त्तत इति तस्य प्रतियोगिताया अवच्छेदकमेव कपिसंयोगत्वम्, अनवच्छेदकं साध्यतावच्छेदकं नास्तीति पुनरप्यव्याप्तिः । अधिकरणभेदेनाऽभावभेदानङ्गीकारात्=अर्थादनेकेष्वधिकरणेष्वेक एवा-भावो वर्त्तत एत्येके मन्यन्ते । एवं नये गुणकर्मवृत्तिर्मूलावच्छेदेन वृक्षवृत्तिश्च यः कपि-संयोगाभावः स एक एव । तस्य प्रतियोगी कपिसंयोगः, अभावीयप्रतियोगिता-वच्छेदकत्वं कपिसंयोगत्वम्, तदेव साध्यतावच्छेदकञ्जातम्, इष्टन्त्वनवच्छेदकं साध्यता-वच्छेदकमितिरव्याप्तिरेवेत्यर्थः ।

यद्युक्ताक्षेपपरिहाराय सिद्धान्ती द्वितीयम्पक्षमाश्रयेत अर्थात् प्रतियोगिव्यधि-करणपदस्य स्वप्रतियोग्यधिकरणाऽवृत्तित्वरूपमर्थं स्वीकुर्यात् । हेत्वधिकरणवृत्त्यभावः स्वप्रतियोग्यधिकरणे न वर्त्तेत इति तदाशयः स्यात् । तदा यद्यपि "वृक्षः कपिसंयोगी एतद्वृक्षत्वात्" इत्यत्र नोक्तदोषः सम्भवेत्, यतः संयोगस्यायं स्वभावो यदयं स्वाधिकरणे द्रव्ये किञ्चिदवयवावच्छेदेन वर्त्तते, किञ्चिदवयवावच्छेदेन च न वर्त्तते । अत एवायम्—"अव्याप्यवृत्तिः" इति बाभाष्यते तीर्थकारैः । प्रकृते चाव्याप्यवृत्तिः कपिसंयोगः हेतोरेतद्वृक्षत्वरूपस्याधिकरणीभूते वृक्षे वर्त्तमानस्य कपिसंयोगाभावस्य समानाधिकरणवृत्तिरस्ति, इष्टश्चास्माकम्प्रतियोग्यधिकरणावृत्तिरभावः । कपिसंयोगा-

भावस्तु न स्वप्रतियोग्यधिकरणावृत्तिः, किन्तु स्वप्रतियोग्यधिकरणवृत्तिरेवेति नासौ लक्षणघटकः । किन्तु—हेत्वधिकरणवृत्त्यभावः प्रकृते घटाद्यभाव एव धर्त्तव्यः, तादृशाभावीयप्रतियोगितावच्छेदकं घटत्वपटत्वादिकम्, अनवच्छेदकं साध्यतावच्छेदकं कपिसंयोगत्वम्, तदवच्छिन्नकपिसंयोगात्मकसाध्यसामानाधिकरण्यमेतद्वृक्षत्वरूपहेतोरस्त्येवेति न दोषगन्धोऽपि । तथापि—"घटः संयोगवान् सत्त्वात्" इत्यत्र संयोगरूपसाध्याभाववति गुणकर्मादौ वर्त्तमानो यः सत्त्वरूपो व्यभिचारी हेतुः, तत्रासद्धेतावतिव्याप्तिरायात्येव । कथमिति चेत् ? इत्थम्—उक्तरीत्या प्रतियोगिव्यधिकरणपदेन यः प्रतियोग्यधिकरणाऽवृत्तित्वरूपोऽर्थो विवक्षितः, तेनात्र व्यभिचारस्थले गुणकर्मादौ यद्यपि संयोगरूपस्य साध्याभावस्याऽभावो नेतुं सुशकस्तथाप्यसौ न लक्षणघटकः, यतः स्वप्रतियोग्यधिकरणवृत्तिरव्याप्यवृत्तित्वात् स्वप्रतियोग्यधिकरणावृत्तिर्नास्ति । एवमत्रापि हेतोः सत्त्वस्याधिकरणे गुणकर्मादौ वर्त्तते यो घटाद्यभावः तदभावीयप्रतियोगितावच्छेदकं घटत्वादिकम्, अनवच्छेदकं साध्यतावच्छेदकं संयोगत्वम्, तदवच्छिन्नसंयोगात्मकसाध्यसामानाधिकरण्यं सत्त्वहेतोर्वर्त्तेत इत्यलक्ष्ये लक्षणगमनरूपातिव्याप्तिर्दुर्वारा ।

तदेतत्समाधत्ते—"**हेत्वधिकरण**"—इति । हेत्वधिकरणे=पक्षे । प्रतियोग्यनधिकरणवृत्तित्वविशिष्टस्य अभावस्य **विवक्षितत्वात्**=इष्टत्वादिति पदार्थः ।

अत्र समाधानकर्त्तुरयमभिप्रायः—हेत्वधिकरणवृत्त्यभावीयविशेषणीभूतप्रतियोगिव्यधिकरणपदस्य न तादृशोऽर्थो विवक्षितो यादृशो भवता विकल्पितः । किन्तु—"प्रतियोगिव्यधिकरण"पदेन प्रतियोग्यनधिकरणवृत्तित्वविशिष्टस्याभावस्य हेत्वधिकरणे विवक्षा क्रियतेऽस्माभिः । अर्थात्—हेत्वधिकरणवृत्त्यभावो यः स्वप्रतियोग्यनधिकरणीभूते हेत्वधिकरणे वर्त्तते, असावुक्तपदेन विवक्षितः । हेत्वधिकरणे वर्त्तमानो योऽभावः स एवम्भूतः स्यात् यः स्वप्रतियोगिनोऽनधिकरणीभूतं यद्धेत्वधिकरणं तत्र वर्त्तेत । तेन भवद्दर्शिते स्थलद्वयेऽपि नास्ति दोषः ।

तथाहि—"वृक्षः कपिसंयोगी एतद्वृक्षत्वात्" इत्यत्र कपिसंयोगाभावः स्वप्रतियोग्यनधिकरणीभूतः सन् हेत्वधिकरणवृत्त्यभावस्तु भवितुं नार्हति । यद्यप्यसौ हेत्वधिकरणे वृक्षे मूलावच्छेदेन वर्त्तते, तथाप्यसौ प्रतियोग्यनधिकरणीभूते हेतोरेतद्वृक्षत्वस्याधिकरणे न वर्त्तते, किन्तु प्रतियोग्यधिकरणीभूते हेत्वधिकरणे एव वर्त्तते, ततश्च घटाद्यभावमादाय लक्षणं सङ्गमय्यऽव्याप्तिम्परिहरिष्याम इति नात्र काचिच्चिन्ता ।

एवम्—"घटः संयोगवान् सत्त्वात्" इत्यत्रासद्धेतावतिव्याप्तिरपि नास्ति । अर्थात् सत्तात्मकहेतोरधिकरणे गुणकर्मादौ वर्त्तमानो यः संयोगरूपसाध्यस्याभावः तस्य प्रतियोगी संयोगः, तदनधिकरणीभूतः सत्त्वरूपहेतोरधिकरणीभूतश्च गुणः कर्म वा, तद्वृत्तिरेव संयोगाभावः, तादृशाभावीयप्रतियोगिताऽवच्छेदकं साध्यताऽवच्छेदकञ्च संयोगत्वमस्ति अनवच्छेदकं नास्तीति लक्षणाऽसङ्गतेरतिव्याप्तिर्दूरापास्ता । एतदभि-

प्रायेणैव "*स्वप्रतियोग्यनधिकरणीभूतहेत्वधिकरणवृत्त्यभाव इति निष्कर्षः" इत्युक्तम्। प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावान्तनिष्कर्ष इत्यर्थः। तथाच लक्षणाऽऽकारः—"स्वप्रतियोग्यनधिकरणीभूतं यद्धेतुताऽवच्छेदकसम्बन्धावच्छिन्नहेतुताऽवच्छेदकावच्छिन्नहेत्वधिकरणम्, तादृशहेत्वधिकरणवृत्तिर्योऽभावः, तदभावीयप्रतियोगितानवच्छेदकं यत्साध्यतावच्छेदकं तदवच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिः"।

(मुक्ता०) प्रतियोग्यनधिकरणत्वम्प्रतियोगिताऽवच्छेदकावच्छिन्नाऽनधिकरणत्वं वाच्यम्। तेन विशिष्टसत्तावान् जातेरित्यादौ जात्यधिकरणगुणादौ विशिष्टसत्ताभावप्रतियोगिसत्ताधिकरणत्वेऽपि न क्षतिः।

(प्रभा०) स्थलान्तरेऽतिव्याप्तिपरिहाराय लक्षणान्तर्गतप्रतियोग्यनधिकरणपदस्य विवक्षितमर्थं दर्शयितुमाह—"प्रतियोग्यनधिकरणत्वम्"—इति। प्रतियोग्यनधिकरणीभूते हेत्वधिकरणे प्रतियोगिताऽवच्छेदकाऽवच्छिन्नाऽनधिकरणम्=अभावीयप्रतियोगिताया अवच्छेदको यो धर्मः, तदवच्छिन्नस्यानधिकरणत्वं ज्ञेयम्। तेन=आधेतायां प्रतियोगितावच्छेदकावच्छिन्नत्वविवक्षणेन। "विशिष्टसत्तावान् जातेः" इत्यत्र न क्षतिः=नातिव्याप्तिरिति सम्बन्धः। अस्य प्रघट्टकस्यायमाशयः—यदि प्रतियोग्यनधिकरणपदेन प्रतियोगितावच्छेदकावच्छिन्नस्यानाधिकरणमित्यर्थो न गृह्येत, तदा "घटो विशिष्टसत्तावान् जातेः" इत्यत्रासद्धेतावेवातिव्याप्तिरापतेत्। तथाहि—अस्य "जातेः" इति हेतोरनैकान्तिकस्य व्यभिचारस्थले गुणो वा कर्म वा, यतः साध्यं गुणकर्मान्यत्वविशिष्टसत्ता, साध्याभावो गुणकर्मान्यत्वविशिष्टसत्ताभावः तद्वान् गुणः कर्मापीति साध्याभाववद्वृत्तित्वाज्जातिहेतुर्व्यभिचारी। परमत्र व्यभिचारस्थले जातिरूपहेत्वधिकरणे गुणे कर्मणि च विशिष्टसत्ताभावो नेतुं न शक्यते "विशिष्टं शुद्धान्नातिरिच्यते" इति न्यायात्, विशिष्टसत्ताभावस्य प्रतियोगिन्येव शुद्धसत्ता, तस्याः शुद्धसत्ताया अभावस्तु जातिरूपहेत्वधिकरणे गुणे कर्मणि वा नास्त्येव, शुद्धसत्तायाः त्रिष्वनुगतत्वेन गुणकर्मानुगतत्वात्। तस्मात्साध्याभावस्य लक्षणाऽघटकत्वात् धर्त्तव्योऽत्र घटाभावः पटाभावो वा, तस्य प्रतियोगी घटः पटो वा, प्रतियोगितावच्छेदकत्वं घटत्वपटत्वं वा, अनवच्छेदकं यत्साध्यतावच्छेदेन विशिष्टसत्तात्वम्, तादृश(तदवच्छिन्न)-साध्येन सह ( शुद्धसत्तानतिरिक्तीभूतेन ) जातिरूपहेतोर्गुणकर्मण्यपि सामानाधिकरण्यमित्यलक्ष्ये लक्षणगमनरूपातिव्याप्तिरागतैव।

यदि तु—प्रतियोग्यनधिकरणं यद्धेत्वधिकरणं तत् प्रतियोगितावच्छेदकधर्मावच्छिन्नस्याऽनधिकरणमित्युच्येत, तदा जातिरूपहेत्वधिकरणे गुणादौ विशिष्टसत्तात्वेन विशिष्टसत्ताया अभावो मिलिष्यत्येव। तादृशाभावस्य प्रतियोगिनी विशिष्टसत्ता, प्रतियोगितावच्छेदकधर्मो विशिष्टसत्तात्वम्, तदेव च साध्यतावच्छेदकम्, अनवच्छेदकं

* स्वप्रतियोगितावच्छेदकावच्छिन्नाधेयतानिरूपिताधिकरणतावच्छिन्नत्वमिति पर्यवासितोर्थः।

नास्ति, इष्टञ्चानवच्छेदकं साध्यतावच्छेदकम्, तस्मात्प्रकृतेऽनवच्छेदकसाध्यतावच्छेदकाभावादतिव्याप्तेर्गन्धोऽपि नास्ति ।

एवं सति लक्षणस्यायमाकारः—"प्रतियोगितावच्छेदकावच्छिन्नप्रतियोग्यनधिकरणीभूतं यद्धेतुतावच्छेदकसम्बन्धावच्छिन्नहेतुतावच्छेदकावच्छिन्नहेत्वधिकरणं तादृशहेत्वधिकरणवृत्तिर्योऽभावः तदभावीयप्रतियोगितानवच्छेदकं यत्साध्यतावच्छेदकं तदवच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिः" ।

**(मुक्ता०) एवं साध्यतावच्छेदकसम्बन्धेन प्रतियोग्यनधिकरणत्वम्बोध्यम् । तेन ज्ञानवान् द्रव्यत्वादित्यादौ द्रव्यत्वाधिकरणघटादेर्विषयतासम्बन्धेन ज्ञानाधिकरणत्वेऽपि न क्षतिः । इत्थञ्च वह्निमान् धूमादित्यादौ धूमाधिकरणे समवायेन वह्निविरहसत्त्वेऽपि न क्षतिः ।**

(प्रभा०) स्थलान्तरेऽतिव्याप्तिं वारयितुम्प्रतियोग्यनधिकरणत्वे साध्यतावच्छेदकसम्बन्धं विवक्षन्नाह—"एवम्"—इति । हेत्वधिकरणे यत्प्रतियोग्यनधिकरणत्वम्प्रागुक्तं तदपि साध्यतावच्छेदकसम्बन्धेन बोध्यम्, नतु येन केनचित् सम्बन्धेनेत्यर्थः । अन्यथा—"आत्मा ज्ञानवान् द्रव्यत्वात्" इत्यत्र समवायेन साध्यहेतुकस्थलेऽतिव्याप्तिः स्यात् । *अस्य फलमाह—"तेन"—इति । तेन=साध्यतावच्छेदकसम्बन्धेन प्रतियोग्यनधिकरणत्वविवक्षणेन "आत्मा ज्ञानवान् द्रव्यत्वात्" इत्यादौ न क्षतिः=नातिव्याप्तिरिति सम्बन्धः ।

अस्यायमभिप्रायः—यदि हेत्वधिकरणे यत् प्रतियोग्यनधिकरणत्वं तत्र साध्यतावच्छेदकसम्बन्धस्य विवक्षा न क्रियेत तदा "आत्मा ज्ञानवान् द्रव्यत्वात्" इत्यत्र समवायेन साध्यहेतुके व्यभिचारस्थलेऽतिव्याप्तिरापतेत्, अर्थात् द्रव्यत्वहेतोर्व्यभिचारस्थलं घटपटादिकमस्ति, यतस्तत्राप्यस्ति द्रव्यत्वं हेतुः, परं समवायसम्बन्धावच्छिन्नञ्ज्ञानरूपं साध्यं नास्तीति साध्याभाववद्वृत्तित्वादस्ति द्रव्यत्वं हेतुर्व्यभिचारी । यद्यप्येवं तथाप्यस्माभिर्ज्ञानरूपसाध्यस्याभावो न मन्यते यतो "विषयतासम्बन्धेन" घटपटादिष्वपि ज्ञानं साध्यम्, अथ च तत्र द्रव्यत्वं हेतुरपि, तस्मात्साध्याभावस्तु तत्र न लक्षणघटकः, किन्तूदासीनघटपटाद्यभावं नीत्वा लक्षणं घटयिष्यामः । अभावीयप्रतियोगितावच्छेदकञ्च घटत्वम्पटत्वं वा भविष्यति, अनवच्छेदकं साध्यतावच्छेदकं ज्ञानत्वम्, तदवच्छिन्नं साध्यञ्ज्ञानम्, तेन साध्येन सह द्रव्यत्वरूपहेतोः आत्मरूपे पक्षे (हेत्वधिकरणे) सामानाधिकरण्यमस्त्येवेति रीत्या व्यभिचारिणि लक्षणं सङ्क्रान्तमिति जातैवातिव्याप्तिः ।

यदा तु प्रतियोग्यनधिकरणतायां साध्यतावच्छेदकसम्बन्धो नीयेत तदा नोक्तदोषः । तथाहि—प्रकृते साध्यञ्ज्ञानम्, साध्यता ज्ञाननिष्ठा, साध्यतावच्छेदकसम्बन्धः

* साध्यतावच्छेदकसम्बन्धेन प्रतियोग्यनधिकरणत्वविवक्षणस्येत्यर्थः ।

समवायः, "ज्ञानस्य गुणत्वात् गुणगुणिनोश्च समवायात्" इति नियमेनात्मनि ज्ञानं समवेतम्, तेन साध्यतावच्छेदकसम्बन्धेन समवायेन ज्ञानाधिकरणमात्मैवास्ति, नतु घटपटादिकमपि। एवं द्रव्यत्वहेतोरधिकरणीभूते घटपटादौ वर्त्तमानो यः समवायसम्बन्धावच्छिन्नप्रतियोगिताकज्ञानात्मकसाध्यस्याभावः, तदभावीयप्रतियोगितावच्छेदकमेव ज्ञानत्वरूपं साध्यताऽवच्छेदकमित्यनवच्छेदकं साध्यताऽवच्छेदकं नास्ति, तत् कुतोऽतिव्याप्तिः। क्वचित्तु—"ज्ञानवान् सत्त्वात्" इति पाठः।

साध्यतावच्छेदकसम्बन्धविवक्षायाः फलान्तरमप्याह—"*इत्थञ्च"—इति। **समवायेन वह्निविरहसत्त्वे**=समवायसम्बन्धाऽवच्छिन्नवह्निप्रतियोगिताकाऽभावस्य विद्यमानत्वेऽपि **न क्षतिः**=नाव्याप्तिरित्यर्थः।

**अस्याऽयमाशयः**—प्रतियोग्यनधिकरणतायां साध्यताऽवच्छेदकसम्बन्धस्य निवेशेन "पर्वतो वह्निमान् धूमात्" इत्यत्र सद्धेतुस्थलेऽव्याप्तिरपि न। अन्यथा संयोगेन धूमरूपहेत्वधिकरणे पर्वते समवायसम्बन्धाऽवच्छिन्नप्रतियोगिताकवह्निरूपसाध्यस्याऽभावोपि धर्त्तुं शक्यते, तदभावीयप्रतियोगितावच्छेदकमेव वह्नित्वम्, तदेव च साध्यतावच्छेदकमित्यनवच्छेदकं साध्यतावच्छेदकं नास्तीत्यव्याप्तिरेव लक्षणस्य स्यात्।

यदा तु—प्रतियोग्यनधिकरणे साध्यतावच्छेदकसम्बन्धो गृह्येत, तदा प्रकृते संयोगसम्बन्धेन वह्निः साध्योऽस्तीति साध्यतावच्छेदकसम्बन्धः संयोगः, संयोगसम्बन्धेन हेत्वधिकरणे पर्वतादौ साध्याभावो नेतुम्ब्रह्मणापि न शक्यते, संयोगेन तत्र तस्य विद्यमानत्वात्। तस्माद्धेत्वधिकरणे पर्वते घटाद्यभावमादाय लक्षणं सङ्गमनीयम्, अर्थात् धूमात्मकहेत्वधिकरणे पर्वते घटाभावीयप्रतियोगितावच्छेदकं घटत्वम्, अनवच्छेदकं साध्यतावच्छेदकं वह्नित्वम्, तदवच्छिन्नेन साध्येन वह्निना सह धूमहेतोः सामानाधिकरण्यमस्त्येवेति लक्षणसङ्गतिः।

**लक्षणस्य स्वरूपन्तु**—"साध्यताऽवच्छेदकसम्बन्धाऽवच्छिन्ना या प्रतियोगिता, तादृशप्रतियोगितावच्छेदकावच्छिन्नप्रतियोग्यनधिकरणं यद्धेतुतावच्छेदकसम्बन्धावच्छिन्नहेतुताऽवच्छेदकाऽवच्छिन्नहेत्वधिकरणम्, तादृशहेत्वधिकरणवृत्त्यभावीयप्रतियोगिताऽनवच्छेदकं यत् साध्यताऽवच्छेदकं तदवच्छिन्नसाध्यसामानाऽधिकरण्यं व्याप्तिः" इति जातम्।

---

* ननु—"ज्ञानवान् द्रव्यत्वात्" इत्यत्र प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगित्वविवक्षणेऽपि नातिव्याप्तिः, हेत्वधिकरणे घटादौ प्रतियोगितावच्छेदकीभूतसमवायसम्बन्धेन ज्ञानाभावप्रतियोगिनो ज्ञानस्याऽनधिकरणत्वस्य सत्त्वादत आह—"इत्थञ्च"—इति। यदि च—अग्रिमे साध्याभावप्रतियोगित्वे साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वमिति विवक्षां कृत्वा "वह्निमान् धूमात्" इत्यत्र समवायेन वह्न्यभावमादायाऽव्याप्तिर्वार्यते तर्हि सम्बन्धस्य द्विधा निवेशप्रयुक्तं गौरवं स्यादिति भावः।

(मुक्ता०) ननु—प्रतियोगितावच्छेदकावच्छिन्नस्य यस्य कस्यचित् प्रतियोगिनोऽनधिकरणत्वं तत्सामान्यस्य वा यत्किञ्चित्प्रतियोगिताऽवच्छेदकाऽवच्छिन्नाऽनधिकरणत्वं वा विवक्षितम् । आद्ये कपिसंयोगी एतद्वृक्षत्वादित्यादौ तथैवाऽव्याप्तिः कपिसंयोगाऽभावस्य प्रतियोगितावच्छेदकावच्छिन्नो वृक्षावृत्तिकपिसंयोगोपि भवति तदनधिकरणं वृक्ष इति ।

(प्रभा०) प्रतियोगितावच्छेदकावच्छिन्नानधिकरणरूपे विवक्षितेऽर्थे शङ्कते—"ननु"—इति । प्रतियोगिताऽवच्छेदकाऽवच्छिन्नस्य=प्रतियोगिताधर्मविशिष्टस्य यस्य कस्यापि प्रतियोगिनोऽनधिकरणत्वमित्याद्यः कल्पः । तत्सामान्यस्य=प्रतियोगितावच्छेदकावच्छिन्नयावत्प्रतियोगिनोऽनधिकरणत्वमिति द्वितीयः कल्पः । अर्थात् प्रतियोगिताऽवच्छेदकीभूता यावन्तो धर्माः तदवच्छिन्नाऽऽधेयतानिरूपिताऽधिकरणतावच्छेदकूटवत्त्वं वा । यत्किञ्चिद् यः प्रतियोगितावच्छेदको धर्मः तदवच्छिन्नस्याऽनधिकरणत्वमिति तृतीयः कल्पः । अधिकरणत्वमिति पूर्वेणान्वयः । प्रतियोगितावच्छेदककिञ्चिद्धर्मावच्छिन्नाधेयतानिरूपिताधिकरणवद्भिन्नत्वमिति तृतीयविकल्पार्थः । प्रथमकल्पे दोषमाह—"आद्य"—इति । "कपिसंयोगी एतद्वृक्षत्वात्" इत्यत्र साध्यः कपिसंयोगः, साध्यताऽवच्छेदकसम्बन्धः समवायसम्बन्धः, तदवच्छिन्नप्रतियोगिताऽवच्छेदकधर्मः कपिसंयोगत्वमपि, तद्धर्मावच्छिन्नो यः कश्चित् प्रतियोगिपदेन भूतलवृत्तिरपि कपिसंयोगो धर्तुं शक्यते, तादृशभूतलवृत्तिकपिसंयोगस्यानधिकरणं यदेतद्वृक्षत्वरूपहेतोरधिकरणमेतद्वृक्षः, तद्वृत्त्यभावः "वृक्षे भूतलवृत्तिः कपिसंयोगो नास्ति" इत्याकारकः कपिसंयोगाभावः, एतादृशाभावीयप्रतियोगितावच्छेदकमेव कपिसंयोगत्वं साध्यतावच्छेदकम्, अनवच्छेदकं साध्यतावच्छेदकं नास्तीत्यव्याप्तिरेव ।

यदि प्रतियोगितावच्छेदकावच्छिन्नस्य यावतः प्रतियोगिनोऽनधिकरणत्वमुक्तपदेनेष्टं स्यात्, तदा "वृक्षः कपिसंयोग्येतद्वृक्षत्वात्" इत्यत्र यद्यपि दोषो नास्ति, कुतः ? प्रतियोगिताऽवच्छेदककपिसंयोगत्वाऽवच्छिन्नस्य यावतः कपिसंयोगस्य=कपिसंयोगमात्रस्य अनधिकरणीभूतो हेत्वधिकरणीभूत एतद्वृक्षो नास्ति, यतस्तत्र शाखाऽवच्छेदेन कपिसंयोगोऽपि वर्त्तत एव, तस्मात्प्रतियोगिताऽवच्छेदकघटत्वाऽवच्छिन्नघटमात्रस्य अनधिकरणम्, एतद्वृक्षत्वरूपहेतोरधिकरणञ्चास्त्येव पुरोवर्त्ती (पक्षभूतः) वृक्षः, तदभावीयप्रतियोगितावच्छेदकं घटत्वम्, अनवच्छेदकं साध्यतावच्छेदकं कपिसंयोगत्वम्, तदवच्छिन्नसाध्येन सहैतद्वृक्षत्वहेतोरस्त्येव सामानाधिकरण्यमिति द्वितीयपक्षाश्रयणे नाव्याप्तिगन्धोऽपि ।

(मुक्ता०) द्वितीये तु प्रतियोगिव्यधिकरणाभावाऽप्रसिद्धिः सर्वस्यैवाऽभावस्य पूर्वक्षणवृत्तित्वविशिष्टस्वाभावाऽऽत्मकप्रतियोगिसमानाऽधिकरणत्वात् ।

(प्रभा०) द्वितीयकल्पे दोषमाह—"द्वितीये तु"—इति । अस्य ग्रन्थस्याऽभिप्राय एवं वर्णनीयः—तथापि प्रतियोगितावच्छेदकावच्छिन्नस्य यावत्प्रतियोगिनोऽनधिकरणत्वमिति विवक्षायाम् "वह्निमान् धूमात्" इत्यत्र सद्धेतुस्थलेऽसम्भवो लक्षणस्य दोषः, यतः प्रतियोगिव्यधिकरणाऽभावस्याऽप्रसिद्धिः । कथमिति चेत् ? शृणु—उक्तरीत्या अत्र हेत्वधिकरणे=धूमाधिकरणे लक्षणघटनाय घटाद्यभावो गृह्येत, परमसावपि प्रतियोगिव्यधिकरणो न प्रतीयते, किन्तु स्वाभावात्मकप्रतियोगिसमानाधिकरण एव, सर्वस्यैवाऽभावस्य पूर्वक्षणवृत्तित्वविशिष्टस्वाभावाऽऽत्मकप्रतियोगिसमानाधिकरणत्वात्=पूर्वक्षणवृत्तित्वविशिष्टं यत्स्वं घटाभावादिः तस्य घटाभावादेर्योऽभावस्तदात्मको यः प्रतियोगी, तत्समानाधिकरणकत्वादभावस्येत्यर्थः । घटाभावाद्यधिकरणेऽपि पूर्वक्षणवृत्तित्वविशिष्टघटाऽभावाऽभावादेरभावस्य उत्तरक्षणाऽवच्छेदेन सत्त्वादित्यर्थः ।

तथाच—पूर्वक्षणवृत्तित्वविशिष्टघटाभावाऽभावस्य पूर्वक्षणवृत्तित्वविशिष्टघटाऽऽत्मकस्य केवलघटाभावानतिरिक्ततया केवलघटाभावीयप्रतियोगिताया अपि पूर्वक्षणवृत्तित्वविशिष्टघटाऽभावाऽभावे सत्त्वात् प्रतियोगिव्यधिकरणाऽभावाऽप्रसिद्धयाऽसम्भव इति भावः ।

ननु—पूर्वक्षणवृत्तित्वविशिष्टस्य घटाभावादेरभावः स्वाभावस्य प्रतियोगी, नतु घटाभावस्यापीति चेत् ? न, पूर्वक्षणवृत्तित्वविशिष्टस्य घटाभावादेर्योऽभावः, स पूर्वक्षणवृत्तित्वविशिष्टघटाभावादतिरिक्तो नास्ति, यतः "विशिष्टं शुद्धान्नातिरिच्यत" इति न्यायात् विशिष्टाभावप्रतियोग्यपि शुद्धघटाभावप्रतियोगी भवत्येव, तथाच प्रतियोगिव्यधिकरणाभावस्याप्रसिद्धयाऽसम्भवः ।

अयमभिसन्धिः—धूमात्मकहेत्वधिकरणे पर्वते घटाभावो यथा वर्त्तते, तथैव पूर्वक्षणवृत्तित्वविशिष्टघटाऽभावाऽभावोऽप्यस्ति । द्वौ चेतावभावौ समानरूपताम्भजेते, एवमेकरूपतामापन्नस्याऽस्याऽभावस्य द्वौ प्रतियोगिनौ स्तः, घटो घटाभावाभावश्च । यद्यप्यसौ घटात्मकप्रतियोगिसमानाधिकरणको नास्ति, तथापि स्वाभावात्मकप्रतियोगिसमानाधिकरणको भवत्येव । कथमिति चेत् ? श्रूयताम्—यस्मिन्नधिकरणे घटाभावो वर्त्तते, न तत्र घटाभावाभावो भवितुमर्हतीति "अभावविरहात्मत्वं वस्तुनः प्रतियोगिता" इति न्यायाचार्योदयनोक्तेः । तस्माद् घटाभावाभावः घटस्वरूपः, नासौ घटाभावसमानाधिकरणः । एवं प्रतियोगितदभावयोः सामानाधिकरण्याभावात् घटाभावे "पूर्वक्षणवृत्तित्वविशिष्टम्" इति पदं विशेषणीकृतम् । यद्यप्यनया रीत्या घटाभावाधिकरणे न घटस्तिष्ठति, तथापि पूर्वक्षणवृत्तित्वविशिष्टघटाभावस्याभावः उत्तरक्षणावच्छेदेन वर्त्तितुमर्हत्येव, एवम्पूर्वक्षणवृत्तित्वविशिष्टघटाभावाभावस्य योऽभावः स पूर्वक्षणवृत्तित्वविशिष्टघटाभावस्वरूप एव । "विशिष्टम्" इति न्यायेन विशिष्टघटा

भावोऽपि शुद्धघटाभावस्वरूपतां नातिशेते । तस्याभावस्य प्रतियोगी घटः स्वाभावश्चेति रीत्या प्रतियोगितावच्छेदकावच्छिन्नयावत्प्रतियोग्यन्तर्गतस्वाभावात्मकप्रतियोगिना सहास्त्येव घटाभावस्य सामानाधिकरण्यमित्यागतैव प्रतियोगिव्यधिकरणाभावाप्रसिद्धिः, तस्मादसम्भवीदं लक्षणम् । इदन्तु मया ग्रन्थाक्षरानुरोधेन न्यायगोरक्षप्रहेलिका गुरुशिक्षानुसारं विवरीता ।

यदि तु सकलस्याऽस्य द्वितीयविकल्पग्रन्थस्य वार्त्तातत्त्वं सरलसंस्कृतेन जिज्ञासितम्भवेत् तदा त्वेवं ज्ञातव्यम्—"पर्वतो वह्निमान् धूमात्" इत्यत्र हेत्वधिकरणे पर्वते धूमाग्न्योर्व्याप्तिघटनायोक्तलक्षणानुसारं घटाभावो ध्रियते, वह्न्याद्यभावस्तु तत्र धर्त्तुं न शक्यते, तस्य तत्रसत्त्वात् । परं यस्मिन् पर्वते (हेत्वधिकरणे) घटाभावो विद्यते, तत्र यद्युत्तरक्षणावच्छेदेन घट आनीयेत, तदा तत्र पूर्वक्षणवृत्तित्वविशिष्टो यो घटाभावः, तस्याभावो जातः । अर्थात् घटाभावाधिकरणे घटानयने घटाभावाभावो जातः । अनया रीत्या पूर्वक्षणवृत्तित्वविशिष्टस्य घटाभावस्याऽभावस्य योऽभावः स घटाभावस्वरूपः, विशिष्टस्य शुद्धानतिरिक्ततया विशिष्टघटाभावः शुद्धघटाभावस्वरूप इति कृत्वा तस्य प्रतियोगी घटः स्वाभावश्च भवति । यद्यप्यत्र घटात्मकप्रतियोगिना साकं न तस्य सामानाधिकरण्यम्, परन्तु द्वितीयविकल्पान्तःपातियावत्प्रतियोगिपदेन स्वाभावात्मको द्वितीयः प्रतियोगी धर्त्तुं शक्यत एव, तेन सह घटाभावस्य सामानाधिकरण्यं वर्त्तते, अतः प्रतियोगिव्यधिकरणाभावाप्रसिद्धिरित्यहो कौटिल्यकौटिल्यन्यक्कारकारी वक्रिमा नव्यनैयायिकानाम् ।

**(मुक्ता०) नच वह्निमान् धूमादित्यादौ घटाऽभावादेः पूर्वक्षणवृत्तित्वविशिष्टस्वाभावात्मकप्रतियोग्यधिकरणत्वं यद्यपि पर्वतादेस्तथापि साध्यतावच्छेदकसम्बन्धेन तत्प्रतियोग्यनधिकरणत्वमस्त्येवेति कथम्प्रतियोगिव्यधिकरणाभावाप्रसिद्धिरिति वाच्यम्, घटाभावे यो वह्न्यभावस्तस्य घटाभावात्मकतया घटाभावस्य वह्निरपि प्रतियोगी तदधिकरणञ्च पर्वतादिरित्येवं क्रमेण प्रतियोगिव्यधिकरणस्याऽप्रसिद्धत्वात् ।**

(प्रभा०) पूर्वपक्षी सिद्धान्त्याशयमुत्थाप्य प्रतिक्षिपति—"नच"—इत्यादिना । अत्रत्यग्रन्थग्रन्थ्युद्घाटनमित्थमाह सिद्धान्ती—"वह्निमान् धूमात्" इत्यत्र धूमहेत्वधिकरणे पर्वते यद्यपि दर्शितदिशा पूर्वक्षणवृत्तित्वविशिष्टस्वाभावात्मकप्रतियोगिना सह घटाभावस्य सामानाधिकरण्यमस्ति, तथापि यथा "ज्ञानवान् द्रव्यत्वात्" इत्यादौ अतिव्याप्तिनिरासाय साध्यतावच्छेदकसम्बन्धेन प्रतियोग्यधिकरणत्वं विवक्षितम्, तथा प्रकृतेऽपि साध्यतावच्छेदकसम्बन्धविवक्षयाऽसम्भवः परिहर्त्तव्यः । अर्थात् अत्र साध्यतावच्छेदकसम्बन्धः संयोगः, तेन सम्बन्धेन घटस्य स्वाभावात्मकप्रतियोगिनश्चानधिकरणं धूमहेतोरधिकरणञ्च पर्वतो वर्त्तते, तस्मात् नानया रीत्या प्रतियोगि-

व्यधिकरणाभावाप्रसिद्धिनिबन्धनो दोषः। यतः संयोगसम्बन्धावच्छिन्नप्रतियोगिताको घटाभावः प्रतियोगिव्यधिकरण एव। एवं स्थिते सिद्धान्तिनि पूर्वपक्षी प्रकारान्तरेण ( अभावाऽधिकरणकाऽभावमात्रस्य अधिकरणस्वरूपत्वमिति मतमाश्रित्य ) दोषमुद्भावयति—"घटाभाव"—इति।

शृणु भो ! सिद्धान्तिन् ! हेत्वधिकरणे पर्वते वर्त्तते यो घटाभावः, तत्र "*घटाभावे वह्निर्नास्ति" इत्याकारकप्रत्ययात् वह्न्यभावोऽप्यस्ति। अस्ति चायमेको नियमः "यदभावाधिकरणकोऽभावोऽभावस्वरूप" इति। अनेन नियमेन घटाभावाद्वह्न्यभावो न भिन्नः, तथाच ह्वह्न्यभावस्य घटाऽभावाऽऽत्मकतया घटाऽभावस्य घट इव वह्निरपि प्रतियोगी, तदधिकरणञ्च पर्वत इत्येवं दिशा प्रतियोगिसमानाधिकरण एवाऽभावो जातः, नतु प्रतियोगिव्यधिकरण इति प्रतियोगिव्यधिकरणाऽभावाऽप्रसिद्धिस्तदवस्थैव।

**(मुक्ता०) यदि च घटाभावादौ वह्न्यभावादिर्भिन्न इत्युच्यते, तथापि धूमाभाववान् वह्न्यभावादित्यादावव्याप्तिः। तत्र साध्यतावच्छेदकसम्बन्धः, स्वरूपसम्बन्धः, तेन सम्बन्धेन सर्वस्यैवाभावस्य पूर्वक्षणवृत्तित्वविशिष्टस्वाभावात्मकप्रतियोग्यधिकरणत्वं हेत्वधिकरणस्येति।**

(प्रभा०) पूर्वपक्षी अभावाधिकरणकाभावभेदवादिमतेऽपि स्थलान्तरे प्रतियोगिव्यधिकरणाभावाप्रसिद्धिनिबन्धनं दोषमुद्भावयति—"यदि"—इत्यादिना।

**अयमर्थः**—यदि च घटाभावादौ वह्न्यभावादिर्भिन्न इत्युच्यते, अर्थात् घटाभावे यो वह्न्यभावः, स न घटाभावात्मकः, किन्तु स्वतन्त्रः। अतोऽसौ नियमेन प्रतियोग्यधिकरणाभिन्नाधिकरणवृत्तिरेव स्यात्, नतु वह्निरूपप्रतियोगिसमानाधिकरणवृत्तिः, ततश्च न प्रतियोगिव्यधिकरणाभावाप्रसिद्धिनिबन्धनो दोष इति सिद्धान्तिनोच्येत, तदा "वह्निमान् धूमात्" इत्यत्र दोषाऽसत्त्वेऽपि "ह्रदो धूमाभाववान् वह्न्यभावाद्" इत्यत्राभावसाध्यकस्थलेऽव्याप्त्यात्मकदोषस्तु समागच्छत्येवेति भक्षितेऽपि लशुने न शान्तो व्याधिः।

तथाहि—अत्र साध्यताऽवच्छेदकसम्बन्धः स्वरूपसम्बन्धः। तेन स्वरूप-

---

* असद्भावनया इयं कल्पना जलताडनन्यायमनुहरति, अथवा प्रस्तरकणिकारणेन मुग्धमनोभीतिजननं नातिशेते।

घटाभावे यो वह्न्यभावः सचाऽनवस्थाभीत्या अधिकरणस्वरूपः=अधिष्ठानस्वरूपः। अभावाधिकरणकाऽभावस्याऽधिकरणस्वरूपत्वाद्भावाऽधिकरणकाऽभावस्य तु नाधिकरणस्वरूपत्वम्, जलगतगन्धाभावस्य जलस्वरूपत्वे तस्य घ्राणजप्रत्यक्षत्वाऽनुपपत्तिरतो भावाधिकरणकोऽभावोऽधिकरणादतिरिक्तः स्वीकृतः, अनुपपत्त्यभावात्। जलताडनन्यायाऽनुहरणायुक्तिस्तु ग्रन्थकर्त्तु-मींमांसापरिशीलनप्रयुक्तैवेति दण्डिस्वामिनः।

सम्बन्धेन सर्वस्यापि वस्तुनोऽभावः पूर्वलक्षणवृत्तित्वविशिष्टस्वाभावात्मकप्रतियोगिना सह वह्न्यभावात्मकहेत्वधिकरणे ह्रदादौ वर्त्तत इत्यभावसाध्यकस्थले प्रतियोगिव्यधिकरणाभावाप्रसिद्धिनिबन्धनोऽव्याप्तिदोषो दुष्परिहरः ।

अथैतद्दोषपरिजिहीर्षया "यत्किञ्चिद् यः प्रतियोगितावच्छेदको धर्मः, तदवच्छिन्नसामान्यस्य अनधिकरणत्वम्" इति तृतीयः कल्प आश्रीयेत, तदा यद्यपि उक्तेऽभावसाध्यकस्थले दोषो नास्ति, कुतः यत्किञ्चित्प्रतियोगितावच्छेदकपदेन घटत्वपटत्वादिधर्मस्यापि ग्रहणं शक्यते कर्त्तुम्, तदवच्छिन्ना घटपटाद्याः प्रतियोगिनः : तदवच्छिन्नघटादिसामान्यानधिकरणम् अथच वह्न्यभावरूपहेतोरधिकरणं जलह्रदः, तद्वृत्त्यभावीयप्रतियोगिताऽवच्छेदकं घटत्वादिकम्, अनवच्छेदकं साध्यताऽवच्छेदकं धूमाभावत्वम्, तदवच्छिन्नो धूमाभावः, तेन जलह्रदात्मकाधिकरणे वह्न्यभावरूपहेतोः सामानाधिकरण्यमिति नाव्याप्तिरिति युक्तमाभाति, तथापि लक्ष्यान्तरे सा वर्त्तत इति तां दर्शयामः । तथाहि—

**(मुक्ता०) तृतीये तु कपिसंयोगाभाववान् आत्मत्वादित्यादावव्याप्तिः । तत्रात्मवृत्तिकपिसंयोगाभावाभावः कपिसंयोगस्तस्य च गुणत्वात्तत्प्रतियोगिताऽवच्छेदकं गुणसामान्याऽभावत्वमपि तदवच्छिन्नाऽनधिकरणत्वं हेत्वधिकरणस्यात्मन इति ।**

(प्रभा०) तृतीयकल्पे दोषमासञ्जयति—"तृतीये तु"—इति । अयमस्य ग्रन्थस्यार्थाऽवबोधनप्रकारः—"आत्मा कपिसंयोगाभाववान् आत्मत्वात्" इत्यत्रात्मनि पक्षे कपिसंयोगाभावः साध्यः, आत्मत्वं व्यतिरेकी हेतुः । आत्मत्वरूपहेत्वधिकरणे आत्मनि घटाभावोऽपि वर्त्तते, घटाभावीययत्किञ्चित्प्रतियोगितावच्छेदकं घटत्वम्, तदवच्छिन्नस्य घटस्यानधिकरणम् अथचात्मत्वहेतोरधिकरणमात्मास्तीति नैव प्रतियोगिव्यधिकरणाभावाप्रसिद्धिनिबन्धनोऽव्याप्तिदोष इति यद्यपि शक्यते वक्तुम्, तथापि यत्किञ्चित्प्रतियोगितापदेन साध्यतावच्छेदकधर्मस्य व्यापकीभूतो यो धर्मः गुणसामान्याभावत्वरूपः तस्यापि ग्रहणं शक्यते कर्त्तुम्, तेन तदवस्थैवाव्याप्तिः ।

अयमस्या उद्भावनप्रकारः—अत्र हेतुः आत्मत्वम्, तदधिकरणमात्मा, तद्वृत्तिर्योऽभावः कपिसंयोगाभावाभावः, सच कपिसंयोगस्वरूपः, संयोगश्च सङ्ख्यादिदशसामान्यगुणान्तर्गतः, सच गुणसामान्याभावाभावस्वरूपः, अर्थात् गुणसामान्यरूपतया पर्यवसितः, एवञ्च साध्याभावः कपिसंयोगो गुणसामान्याभावरूपतया पर्यवसितः, तस्य=कपिसंयोगाभावाभावस्य प्रतियोगिता कपिसंयोगाभावनिष्ठा तथा गुणसामान्याभावनिष्ठापि वर्त्तते । एवमभावीयप्रतियोगितावच्छेदकं यथा कपिसंयोगाभावत्वम्, तथा तद्व्यापकीभूतगुणसामान्याभावत्वमपि, यतो हेत्वधिकरणे आत्मनि "सामान्यगुणो नास्ति" इत्याकारकाभावो न प्राप्यते । किन्तु तत्र गुणसामान्या-

भावाभाव उन्नीयते, तत्प्रतियोगिता गुणसामान्याभावनिष्ठा, प्रतियोगितावच्छेदकं गुणसामान्याभावत्वम्। एतदेव यत्किञ्चित्प्रतियोगितावच्छेदकधर्मेण गृह्येत, तदवच्छिन्नो गुणसामान्याभावः, तस्यानधिकरणं हेत्वधिकरणञ्चात्मेत्यव्याप्तिः।

तथाच—यत्किञ्चित्प्रतियोगिताऽवच्छेदकाऽवच्छिन्नाऽनधिकरणीभूतहेत्वधिकरण आत्मनि वर्त्तते यः संयोगाभावाभावः, तादृशाभावप्रतियोगितावच्छेदकमेव साध्यतावच्छेदकं कपिसंयोगाभावत्वमित्यव्याप्तिः।

इदमत्राकूतकम्—कपिसंयोगो गुणसामान्यान्तःपातीत्यविवादम्, तस्मात् कपिसंयोगाभावे कपिसंयोगाभावत्वं गुणसामान्याभावत्वञ्चेति द्वौ धर्मौ वर्त्तते। तत्र यत्किञ्चित्प्रतियोगितावच्छेदकपदेन गुणसामान्याभावत्वरूपावच्छेदकधर्मस्याऽपि ग्रहणं शक्यते कर्त्तुमिति नात्र किञ्चिद्बाधकम्पश्यामः। तदवच्छिन्नगुणसामान्याभावस्यानधिकरणमेव हेत्वधिकरणमात्मा। यद्यपि—कपिसंयोगाभावत्वेन रूपेण कपिसंयोगाऽभावाऽभावो हेत्वधिकरणे आत्मनि नास्ति, प्रत्युत कपिसंयोगाऽभावाऽभावाऽभावोऽस्ति, तथापि गुणसामान्याभावत्वेन रूपेण कपिसंयोगाभावाभावो वर्त्तत एवात्मनि। यत्किञ्चित्प्रतियोगितावच्छेदकधर्मपुरस्कारेण गृहीतं यत्साध्यं गुणसामान्याभावरूपं तस्याभाव एव हेत्वधिकरण आत्मनि प्राप्तः, तेन तत्रात्मत्वहेतोः साध्यसामानाधिकरण्यं नास्ति, किन्तु साध्याभावसामानाधिकरण्यमायातमिति साध्यसाधनाय प्रयुक्त आत्मत्वं हेतुः, तद्विरुद्धं साध्याभावसाधनाय प्रवृत्त इति साध्याभावव्याप्तत्वाद्विरुद्धो हेत्वाभासो जातः।

**(मुक्ता०) मैवम्। यादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वं हेतुमतस्तादृशप्रतियोगितानवच्छेदकत्वस्य विवक्षितत्वात्।**

(प्रभा०) एवञ्जाते विस्तृते पूर्वपक्षे सिद्धान्ती तृतीयपक्षमाश्रित्य समाधत्ते—"मैवम्"—इति। "यादृश"—इति।

अयमस्याशयः—यादृशप्रतियोगितावच्छेदकावच्छिन्नस्याऽनधिकरणं यद्धेत्वधिकरणमस्ति तादृशप्रतियोगिताया अनवच्छेदको यः साध्यतावच्छेदको धर्मः तस्यैवात्र विवक्षा कर्त्तव्या। तेन पूर्वपक्षद्वयाङ्गीकारनिमित्ता दोषप्राप्तिरपि नास्ति। प्रकृते च तृतीयपक्षमाश्रित्य "आत्मा कपिसंयोगाभाववान् आत्मत्वात्" इत्यत्रोद्भाविताऽव्याप्तिरपि परिहर्त्तुं शक्यते। कुतः—'यादृशप्रतियोगिता'पदेन गुणसामान्याभावत्वावच्छिन्नगुणसामान्याभावनिष्ठा या प्रतियोगिता तस्या एव ग्रहणं कर्त्तुमुचितम्, तेन गुणसामान्याभावनिष्ठप्रतियोगिताया अनवच्छेदकः साध्यतावच्छेदकश्च धर्मः कपिसंयोगाभावत्वमस्ति, तदवच्छिन्नं साध्यं कपिसंयोगाभावरूपम्, तेन सहात्मत्वहेतोः सामानाधिकरण्यमेवेति नाव्याप्तिशङ्कापि।

"आत्मा कपिसंयोगाभाववान् आत्मत्वात्" इत्यत्रोक्ताकारलक्षणस्य सङ्गमनप्रकारश्चायम्—आत्मा पक्षः, कपिसंयोगाभावः साध्यम्, आत्मत्वं हेतुः । साध्यतावच्छेदकं, कपिसंयोगाभावत्वम्, साध्यतावच्छेदकसम्बन्धः स्वरूपसम्बन्धः, तत्सम्बन्धावच्छिन्ना गुणसामान्याभावीया या गुणसामान्याभावत्वावच्छिन्ना गुणसामान्याभावनिष्ठा प्रतियोगिता, तादृशप्रतियोगितावच्छेदकत्वं गुणसामान्याभावत्वम्, तदवच्छिन्नो गुणसामान्याभावः तस्यानधिकरणं यो हेतुतावच्छेदकीभूतसमवायसम्बन्धावच्छिन्नात्मत्वाधिकरणमात्मा, तद्वृत्त्यभावनिरूपिता या गुणसामान्याभावत्वावच्छिन्ना गुणसामान्याभावनिष्ठा प्रतियोगिता तादृशप्रतियोगिताया अनवच्छेदकं यत्साध्यतावच्छेदकं कपिसंयोगाभावत्वं, तदवच्छिन्नः कपिसंयोगाभावः, तेन साध्यभूतेन साकमात्मत्वरूपहेतोः आत्मरूपैकाधिकरणे सामानाधिकरण्यमस्त्येवेति नानुपपत्तिर्लक्षणस्य ।

**( मु० ) ननु कालो घटवान् कालपरिमाणादित्यत्र प्रतियोगिव्यधिकरणाभावाप्रसिद्धिः, हेत्वधिकरणस्य महाकालस्य जगदाधारतया सर्वेषामभावानां साध्यतावच्छेदकसम्बन्धेन कालिकविशेषणतया प्रतियोग्यधिकरणत्वात् ।**

( प्र० टी० ) स्थलान्तरे सर्वलक्षणाव्याप्तिं शङ्कते—नन्विति । पदार्थः सुगमोऽतोऽभिप्रायो निरूप्यते—

" कालो घटवान् कालपरिमामाणात् " इत्यत्र काले पक्षे कालिकसम्बन्धेन घटः साध्यः, समवायसम्बन्धेन कालपरिमाणं हेतुः, अर्थात—साध्यतावच्छेदकसम्बन्धः कालिकसम्बन्धः, हेतुतावच्छेदकसम्बन्धः समवायसम्बन्धः कालपरिमाणरूपहेतोरधिकरणं महाकालः कालिकविशेषणतासम्बन्धेन जगन्मात्रस्याश्रयः "जन्यानां जनकः कालो जगतामाश्रयो मत" इत्युक्तेः । जगच्छब्दान्तःपाती पदार्थमात्रस्याभावोऽप्यस्ति । अनया रीत्या साध्यतावच्छेदककालिकसम्बन्धेन पदार्थ( वस्तु )मात्रस्याभावः महाकालाधिकरणे स्वप्रतियोगिसमानाधिकरण इति कृत्वा प्रतियोगिव्यधिकरणाभावाप्रसिद्धिस्तदवस्थैवेति भूयोऽप्यव्याप्तिरायाता ।

**( मु० ) अत्र केचित् । महाकालभेदविशिष्टघटाभावस्तत्र प्रतियोगिव्यधिकरणो महाकालस्य घटाधारत्वेऽपि महाकालभेदविशिष्टघटानाधारत्वात् महाकाले महाकालभेदाभावात् ।**

( प्र० टी० ) तावदेकदेशिमतेन समाधत्ते—अत्र केचिदिति । हेत्वधिकरणं यो महाकालः *तत्राभावीयविशेषणताघटितसामानाधिकरण्यसम्बन्धेन महाकालभेदविशिष्टघटाभावो गृह्येत, स एवाभावः प्रतियोगिव्यधिकरणो भविष्यति । तत्र हेतुमाह **महाकालस्येति** । यद्यपि महाकालो घटाधारः तथाप्यसौ महाकालभेदविशिष्टो यो घटः तस्य त्वनाधार एव । तत्राभावीयविशेषणतासम्बन्धेन महाकाले महाकालभेदः

* " कालोऽयं महाकालान्यत्वविशिष्टघटवान् " इत्याकारकप्रतीतेः ।

स्थातुं योग्योऽस्ति, स्वस्मिन् स्वभेदानङ्गीकारात् इत्याशयवानाह—महाकाल इति।

अयं भावः—तत्रैव विशिष्टाधिकरणता भवति, यत्र सामानाधिकरण्यघटकीभूतेन विशेष्यविशेषणभावसम्बन्धेन * विशेष्यविशेषणयोरुभयोरपि सत्त्वलाभः स्यात्, यत्र त्वन्यतरसत्ता नास्ति, तत्र तदभावप्रयुक्तो विशिष्टाभाव एव भवति। प्रकृते स्वभावीयविशेषणतासम्बन्धेन महाकाले महाकालभेदस्याभावात् महाकालभेदविशिष्टस्यापि घटस्य विशेषणाभावप्रयुक्तो विशिष्टाभावः, सच स्वप्रतियोगिव्यधिकरणतया लक्षणघटक इति ‡ नाव्याप्तिः।

यद्यपि महाकालः सकलजगदाधारः, सकलजगत्पदान्तःपातित्वात् यथाऽसौ कालिकविशेषणतासम्बन्धेन घटाधिकरणं तथा तस्यैव घटस्य योऽभावस्तदधिकरणमपीति न प्रतियोगिव्यधिकरणोऽभावः प्रकृते लभ्येत यो लक्षणघटको भवेत्, तथापि "घटो न महाकाल" इत्याकारकप्रत्ययेन महाकालभेदविशिष्टो यो घटः तस्य त्वाधारो नास्ति महाकालः, यतोऽभावीयविशेषणतासम्बन्धेन महाकाले महाकालभेदस्याऽभाव एव स्वस्मिन्स्वभेदानङ्गीकारादित्येकदेशिमतस्य परमसारः।

**(मु०) वस्तुतस्तु प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोग्यनधिकरणीभूतहेत्वधिकरणवृत्त्यभावप्रतियोगितासामान्ये यत्सम्बन्धावच्छिन्नत्वयद्धर्मावच्छिन्नत्वोभयाभाव† स्तेन सम्बन्धेन तद्धर्मावच्छिन्नस्य तद्धेतुव्यापकत्वं बोध्यम्। व्यापकसामानाधिकरण्यं च व्याप्तिः।**

(प्र० टी०) पूर्वं कालिकविशेषणतासम्बन्धेन घटस्य साध्यताविवक्षायां दोषे प्राप्ते महाकालभेदविशिष्टघटाभावः प्रतियोगिव्यधिकरणोऽस्तीत्युक्त्वा समाधानं कृतम्, परन्तु यदि महाकालमात्रवृत्तिविशेषणतासम्बन्धेन ("इदानीं घटो वर्तत" इत्याकारकेण) साध्यताया विवक्षा सम्भवेत् तदा महाकालभेदविशिष्टोऽपि घटाभावः प्रतियोगिव्यधिकरणो नार्हति भवितुम्। उक्तसम्बन्धेन महाकालान्यत्वविशिष्टघटाधिकरणस्याप्रसिद्धेरित्यरुचेः सिद्धान्तमाश्रित्य कल्पान्तरमाह—वस्तुतस्त्विति§। अय-

---

*—"विशेषणविशेष्योभयसम्बन्धाभ्यां विशेषणविशेष्योभयसत्त्वं यत्र, तत्रैव विशिष्टाधिकरणत्वम्" इति न्यायशरीरम्।

‡—दैशिकविशेषणतया महाकाले महाकालभेदाऽसत्त्वेन महाकालान्यत्वविशिष्टाधिकरणत्वं न सम्भवतीति खण्डकाले प्रसिद्धतादृशविशिष्टाधिकरणत्वस्याभावः हेत्वधिकरणे महाकाले वर्त्तते इति तादृशप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वान्नाव्याप्तिरिति भावः।

†—यस्याभावस्य प्रतियोगितावच्छेदकत्वं द्वित्वं स **उभयाभावः**। यथा "घटपटौ न स्तः" इति। अस्याभावस्य प्रतियोगिता घटपटोभयनिष्ठा तदवच्छेदकञ्च द्वित्वमतोऽयमुभयाभाव उच्यते।

§ अथवा "इदानीं महाकाल विशिष्टो घटः, कालोयं महाकालान्यत्वविशिष्टघटवान्" इत्यादिप्रतीतिबलान्महाकालेऽपि महाकालान्यत्वविशिष्टघटसत्त्वम्, अन्यथा सर्वासामेव प्रतीतीनां

मर्थः—अभावीयप्रतियोगिताया अवच्छेदको यः सम्बन्धः, तेन सम्बन्धेन प्रतियोगिनोऽनधिकरणीभूतं यद्धेतोरधिकरणम्, तद्वृत्तिर्योऽभावः, तदभावीया या प्रतियोगिता, तत्सामान्ये (अवच्छेद्यावच्छेदकतया यावत्प्रतियोगितास्वरूपे) यत्सम्बन्धावच्छिन्नत्वयद्धर्मावच्छिन्नत्वैतदुभयाभावः, तेन सम्बन्धेन तद्धर्मावच्छिन्नस्य हेतुव्यापकता ज्ञेया तादृशव्यापकसामानाधिकरण्यञ्च व्याप्तिः।

(मु०) यत्सम्बन्धः साध्यतावच्छेदकसम्बन्धः, यद्धर्मः साध्यतावच्छेदको धर्मः। तत्र यदि यद्धर्मावच्छिन्नत्वाभावमात्रमुच्यते तदा समवायेन यो वन्ह्यभावः तस्य प्रतियोगितावच्छेदकसम्बन्धः समवायः तेन प्रतियोग्यनधिकरणपर्वतादिवृत्तिः स एव, तत्प्रतियोगितावच्छेदकञ्च वह्नित्वमित्यव्याप्तिः स्यात्, यदि च यत्सम्बन्धावच्छिन्नत्वाभावमात्रमुच्यते तदा तादृशस्य संयोगेन घटाभावस्य प्रतियोगितायां संयोगसम्बन्धावच्छिन्नत्वसत्त्वादव्याप्तिः स्यादत उभयमुपात्तम्।

(प्र० टी०) यत्सम्बन्धावच्छिन्नत्वोभयाभावपदनिवेशफलं दर्शयति—यत्सम्बन्ध इति। अयमत्राशयः—यदि लक्षणे साध्यतावच्छेदकसम्बन्धग्रहणं न स्यात् किन्तु—"प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोग्यनधिकरणीभूतहेत्वधिकरणवृत्त्यभावप्रतियोगितासामान्ये यद्धर्मावच्छिन्नत्वाभावः तद्धर्मावच्छिन्नस्य तद्धेतुसामानाधिकरण्यं व्याप्तिः" इत्याकारकं लक्षणं क्रियेत तदा "वह्निमान् धूमात्" अत्रैवाव्याप्तिः स्यात्, यतो हेत्वधिकरणे पर्वते संयोगेन वह्निसत्त्वेऽपि "समवायेन वह्निर्नास्ति" इत्याकारकः समवायसम्बन्धावच्छिन्नो वन्ह्यभावः शक्यते उन्नेतुम्,। एतादृशाभावीया प्रतियोगिता वह्निनिष्ठैव। लक्षणान्तर्गतप्रतियोगितासामान्यपदेन तु यावत्प्रतियोगिता विवक्षिता, अर्थात् हेत्वधिकरणे पर्वतादौ येन येन सम्बन्धेन येन येन धर्मेण यो योऽभावो गृह्येत तस्य तस्याभावस्य प्रतियोगितायामुभयाभावो विवक्षितः। परमुक्तरीत्या समवायेन वह्निनिष्ठा प्रतियोगितापि यावत्पदान्तर्गता, परन्तु तत्र यद्धर्मावच्छिन्नत्वाभावो नास्ति, प्रत्युत यद्धर्मपदग्राह्यः साध्यतावच्छेदको वह्नित्वरूपो धर्मोऽस्तीत्यव्याप्तिर्लक्षणस्यायाता भवत्यस्तद्वारणाय"यत्सम्बन्ध" पदनिवेश। तेन साध्यतावच्छेदकसम्बन्धग्रहणे समवायेन वन्ह्यभावीयप्रतियोगितायां यद्यपि साध्यतावच्छेदकधर्मस्य (वह्नित्वस्य) अभावो नास्ति तथापि तस्यां साध्यतावच्छेदकसंयोगसम्बन्धस्याभावो वर्त्तत एवेति "एकसत्त्वेऽपि द्वयं नास्ती"तिप्रतीत्यनुरोधेन उभयाभावमुपादाय दोषाभावः।

एवम्—अभावीयप्रतियोगितायां यदि साध्यतावच्छेदकधर्मनिवेशो न स्यात्

---

खण्डकालावगाहित्वेन महाकालावगाहिन्याः प्रतीतेर्विरोधप्रसङ्ग इत्यस्वरसादाह 'वस्तुतस्त्विवति'।

किन्तु—"प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोग्यनधिकरणीभूतहेत्वधिकरणवृत्त्यभाव-प्रतियोगितासामान्ये यत्सम्बन्धावच्छिन्नत्वाभावः तेन सम्बन्धेन तद्धेतोः सामानाधिकरण्यं व्याप्तिः" इत्येतावन्मात्रं लक्षणमुच्येत तदा पुनरप्यत्रैवाव्याप्तिः स्यात्? यतो हेत्वधिकरणे पर्वते संयोगसम्बन्धावच्छिन्ना घटाभावीया घटनिष्ठा या प्रतियोगिता तस्यां तत्सम्बन्धावच्छिन्नत्वाभावो नास्ति, प्रत्युत साध्यतावच्छेदकसंयोगसम्बन्धावच्छिन्नत्वं धर्मो वर्त्तत एवेत्यव्याप्तिरापतति ।

यत्सम्बन्धावच्छिन्नत्वयद्धर्मावच्छिन्नत्वोभयनिवेशे तु नास्ति दोषः, यतो यद्यपि घटाभावीयघटनिष्ठप्रतियोगितायां साध्यताच्छेदकसंयोगसम्बन्धावाच्छन्नत्वं वर्त्तते तथापि साध्यतावच्छेदकवह्नित्वधर्मावच्छिन्नत्व नास्ति । एवम् "एकसत्त्वेऽपि द्वयं नास्ति" इतिप्रतीत्यनुरोधाद् घटाभावीयप्रतियोगितायामुभयाभावः शक्यत उन्नेतुम्, तथाच लक्षणसमन्वयः ।

लक्षणाकारस्तु—"प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोग्यनधिकरणीभूतहेत्वधिकरणवृत्त्यभावीया या प्रतियोगिता, तादृशप्रतियोगितासामान्ये यत्सम्बन्धावच्छिन्नत्वयद्धर्मावच्छिन्नत्वोभयाभावः तेन सम्बन्धेन तद्धर्मावच्छिन्नस्य तद्धेतुव्यापकत्वं, तादृशव्यापकसामानाधिकरण्यञ्च व्याप्तिरिति ।

**(मु०) इत्थं च कालो घटवान् कालपरिमाणादित्यादौ संयोगसम्बन्धेन यो घटाभावस्तत्प्रतियोगिनो घटस्यानधिकरणं हेत्वधिकरणं महाकाले वर्तमानः स एव संयोगेन घटाभावस्तस्य प्रतियोगितायां कालिकसम्बन्धावच्छिन्नत्वोभयाभावसत्त्वान्नाव्याप्तिः । "धूमवान् वह्नेः" इत्यादावतिव्याप्तिवारणाय सामान्यपदमुपात्तम् ।**

स्थलान्तरेऽपि लक्षणं समन्वेतुमाह—इत्थञ्चेति । अयमर्थः—"कालो घटवान् कालपरिमाणात्" इत्यादावपि नास्ति दोषः । अत्र संयोगेन घटभावीया घटनिष्ठा या प्रतियोगिता, तस्या यद्यपि साध्यतावच्छेदकघटत्वधर्मावच्छिन्नत्वमस्ति, तथापि साध्यतावच्छेदककालिकविशेषणतासम्बन्धावच्छिन्नत्वं नास्ति, तेन चैकसत्त्वन्यायेन संयोगेन घटाभावीयघटनिष्ठप्रतियोगितायामुभयाभावस्तिष्ठति इति कालिकविशेषणतासम्बन्धेन तद्घटत्वधर्मावच्छिन्नस्य तत्कालपरिमाणरूपहेतोः सामानाधिकरण्यं व्याप्तिरित्यदोषः ।

ननु—"प्रतियोगितासामान्ये" इत्यस्य स्थाने "यत्किञ्चित्प्रतियोगितायाम्" इति निवेशे उपस्थितिकृतं लाघवमित्याक्षेपं समाधातुमाह—"धूमवान् वह्ने" रिति । अत्र समाधातुरयमाशयः—यदि सामान्यपदं विहाय यत्किञ्चित्पदनिवेशः स्यात् तदा "धूमवान् वह्ने" रित्यत्रैवातिव्याप्तिः स्यात्, उक्तरीत्या यत्किञ्चित्पदग्राह्यघटनिष्ठप्रतियोगितायामुभयाभावसत्त्वेन लक्षणसङ्गतेः । यावदर्थकसामान्यपदनिवेशे तु यावदन्तर्गतायाः संयोगेन धूमाभावीयप्रतियोगिताया अपि ग्रहणं भविष्यति, अर्थात्

संयोगेन धूमाभावो हेत्वधिकरणे लोहपिण्डेऽपि मिलिष्यतीति। परन्तु संयोगेन धूमाभावीयप्रतियोगितायामुभयाभावो नास्ति किन्तूभयमेवास्तीति नातिव्याप्तिः।

(मु०) ननु प्रमेयवह्निमान् धूमादित्यादौ प्रमेयवह्नित्वावच्छिन्नत्वमप्रसिद्धं गुरुधर्मस्याऽनवच्छेदकत्वादिति चेन्न, कम्बुग्रीवादिमान्नास्तीति प्रतीत्या कम्बुग्रीवादिमत्त्वावच्छिन्नप्रतियोगिताविषयीकरणेन गुरुधर्मस्याप्यवच्छेदकत्वस्वीकारादिति सङ्क्षेपः॥

(प्र० टी) पूर्वोक्तानां सर्वेषां लक्षणानामव्याप्तिं शङ्कते—नन्विति। "पर्वतः प्रमेयवह्निमान् धूमाद्" इत्यत्र साध्यतावच्छेदको धर्मः प्रमेयवह्नित्वमेवेति मन्तव्यम्, परं तस्यावच्छेदकत्वं न स्वीक्रियते "सम्भवति लघुधर्मे गुरौ तदभावाद्" इति न्यायात्। प्रकृते प्रमेयवह्नित्वस्य समनियतो वह्नित्वरूपो धर्म एवावच्छेदको भवितुमर्हति लघुत्वात्, परन्त्वसौ साध्यतावच्छेदको नास्ति। साध्यतावच्छेदको धर्मः प्रमेयवह्नित्वरूपः, परमसौ गुरुधर्मत्वादवच्छेदको भवितुं नार्हति। सर्वेषु चोक्तलक्षणेषु साध्यतावच्छेदकधर्मस्य निवेशः स्वीकृतः, दर्शितरीत्या त्ववच्छेदकाप्रसिद्धिनिबन्धनोऽव्याप्तिदोष इति शङ्काकर्तुराशयः। अप्रसिद्धमिति। तथाचाव्याप्तिरिति भावः।

तदेतत् सिद्धान्ती खण्डयति—इतिचेन्नेति। अयमर्थः—पदार्थानां सिद्ध्यसिद्धी प्रतीत्यनुरोधेन भवतो नतु कल्पनामात्रतया। "इह भूतले कम्बुग्रीवादिमान्नास्ति" इति प्रतीतौ कम्बुग्रीवादिमत्त्वावच्छिन्नप्रतियोगिताकोऽभावो भासते, तादृशाभावीया प्रतियोगिताऽपि कम्बुग्रीवादिमत्त्वावच्छिन्नैव भवति। तथा चैवंप्रतीत्यनुरोधेन गुरुधर्मस्याप्यवच्छेदकत्वस्वीकारे ‡ "प्रमेयवह्नित्वस्याप्यवच्छेदकत्वमस्त्येव, तेन सर्वत्र दोषपरिहारः।

---

*—यत्सम्बन्धावच्छिन्नत्वयद्धर्मावच्छिन्नत्वोभयाभावो नास्ति। किन्तु—संयोगसम्बन्धावच्छिन्नत्वधूमत्वधर्मावच्छिन्नत्वोभयत्वमेवास्ति।

तथाच—तादृशप्रतियोगितासामान्यान्तःपातिधूमनिष्ठप्रतियोगितायामुभयाभावाऽसत्त्वान्नातिव्याप्तिरिति भावः।

‡ अवच्छेदकत्वं स्वरूपसम्बन्धविशेषः। स च कचित्प्रतियोग्यंशप्रकारीभूतधर्मत्वम्। यथा प्रमेयधूमाभावप्रतियोगिताया अवच्छेदकत्वं धूमत्वम्। कचित्तु—"अनतिरिक्तवृत्तित्वं तत्। तच्च द्विविधं। तत्राद्यम्—तच्छून्यावृत्तित्वे सति तदधिकरणवृत्त्यभावप्रतियोगित्वम्। यथा घटाभावप्रतियोगिताया अवच्छेदकत्वं घटत्वे। द्वितीयन्तु—व्यावर्त्तकत्व—सामानाधिकरण्य—स्वनिष्ठावच्छेद्यताकत्वैतत्रितयसम्बन्धेन यत्किञ्चिद्धर्मविशिष्टत्वम्,। यथा—घटकारणताया अवच्छेदकत्वं दण्डे। कचित्तु—तदधिकरणस्य तन्निष्ठधर्मावच्छेदकत्वम्। यथा—मूले वृक्षे न कपिसंयोगः शाखायाम्" इत्यादौ वृक्षाधिकरणस्य मूलस्य वृक्षनिष्ठकपिसंयोगाभावावच्छेदकत्वम्, वृक्षाधिकरणस्य शाखादेर्वृक्षनिष्ठकपिसंयोगावच्छेदकत्वञ्च। यथा वा—"इह पर्वते नितम्बे हुताशनः, न शिखरे" इत्यत्र नितम्बरूपदेशस्य हुताशनावच्छेदकत्वम्, शिखरस्य तु हुताशनाभावाव-

अधिकं न्यायचिन्तामण्यादिग्रन्थेषु द्रष्टव्यमित्याह–"इति सङ्क्षेप" इति । यदि च "कम्बुग्रीवादिमान्नास्ति" इत्यादौ कम्बुग्रीवादिमत्प्रतियोगिताकाभाव एव विषयो नतु कम्बुग्रीवादिमत्त्वे तत्प्रतियोगितावच्छेदकत्वमपीत्युच्यते तदा यत्किञ्चिद्घटवत्यपि "कम्बु-ग्रीवादिमान्नास्ति" इति वाक्यस्य प्रामाण्यापत्तिरिति हृदि निधाय आह "सङ्क्षेप" इति दिनकरी । ननु —" कम्बुग्रीवादिमान् नास्ति " इत्याकारा प्रतीतिः कम्बुग्रीवादि-मन्निष्ठप्रतियोगिताकाभावविषयिण्येव मन्तव्या नतु गुरुधर्मस्याप्यवच्छेदकत्वसाधिकेयं प्रतीतिरित्यत्र किञ्चित् प्रमाणं पश्यामः । यदि—" कम्बुग्रीवादिमान्नास्ती "ति प्रतीतिर्गुरुधर्मस्याऽवच्छेदकत्वं न विषयीकरोतीति मन्यसे तदा यत्किञ्चिद्घटवत्यपि भूतले "कम्बुग्रीवादिमान्नास्ति" इति वाक्यस्यापि प्रामाण्यापत्तिरतस्तद्वारणाय नञर्था-भावे कम्बुग्रीवादिमत्पदार्थकम्बुग्रीवादिमत्त्वविशिष्टस्यैव शाब्दबोधे प्रतियोगिता-सम्बन्धेन भानस्वीकारात् " अभावे यद्धर्मविशिष्टवैशिष्ट्यमवगाहते तत्र तद्धर्मावच्छिन्न-प्रतियोगिताकत्वम् " इति नियमेन कम्बुग्रीवादिमत्त्वावच्छिन्नप्रतियोगिताकाभावाऽप्र-सिद्ध्या गुरुधर्मस्यापि प्रतियोगितावच्छेदकत्वमवश्यमङ्गीकर्त्तव्यमिति वाच्यञ्चेत्? "अभावे यद्धर्मविशिष्टवैशिष्ट्यमवगाहते तत्र तद्धर्मसमनियतधर्मावच्छिन्नप्रतियोगिताकत्वम् " इत्येवनियमोऽङ्गीकर्त्तव्य इति ज्ञायताम् । अन्यथा—"गन्धवद्घटो नास्ति" " पृथिवी-घटो नास्ति " "द्रव्यघटो नास्ति" इत्यादिप्रतीत्या कम्बुग्रीवादिमत्त्वस्येव गन्धवद्घटत्वा-दीनामप्यवच्छेदकत्वसिद्ध्या अप्रामाणिकानन्ताभावकल्पनापत्तेः । एवञ्च–"कम्बुग्रीवादि-मान्नास्ती" त्यादिप्रतीतेः कम्बुग्रीवादिमत्त्वसमानियतघटत्वावच्छिन्नप्रतियोगिताकाभाव एव कम्बुग्रीवादिमत्त्वविशिष्टवैशिष्ट्यावगाहित्वं स्वीक्रियते नतु तद्घटत्वावच्छिन्नप्रतियोगिता-काभावे तद्घटत्वस्य कम्बुग्रीवादिमत्त्वसमनियतत्वाभावात् अतो यत्किञ्चिद्घटवति न तादृशप्रतीत्यापत्तिः तस्माद् गुरुधर्मस्य प्रतियोगितावच्छेदकत्वे प्रमाणं मृग्यमित्य-स्वरसत्सङ्क्षेप " इति प्राचीनप्रभाशयः ।

इति व्याप्तिवादः ।

( का० ) सिषाधयिषया शून्या सिद्धिर्यत्र न विद्यते ।
स पक्षस्तत्र वृत्तित्वज्ञानादनुमितिर्भवेत् ॥ ७० ॥

---

च्छेदकत्वञ्च । "इदानीं चत्वरे गौर्नास्ति" इत्यादौ एतत्कालेऽपि गवाभावस्यावच्छेदकत्वम् । वस्तुतस्तु—तत्तन्निष्ठमवच्छेदकत्वं तत्तद्व्यक्तिवेद्यमेवेति नैवानुगमय्य निर्वक्तुं शक्यमिति तु वयम् । अधिकमन्यतो ज्ञेयम् । कारणतावच्छेदक-कार्यतावच्छेदक लक्ष्यतावच्छेदक-साध्यतावच्छेदक-साधन तावच्छेदकधर्मादिनिरूपणमप्यूहनीयम् । अर्थात् यद्धर्मविशिष्टं कारणं भवति स धर्मः कारण-तावच्छेदकः । यथा—घटं प्रति दण्डत्वधर्मविशिष्ट एव दण्डः कारणम्, अतो दण्डत्वं कारणता-वच्छेदकम् । पटम्प्रति तन्तुत्वधर्मावच्छिन्नस्तन्तुः कारणमतः तन्तुत्वं कारणतावच्छेदकमित्यादि ।

( प्र० टी० ) लक्षिता व्याप्तिः, व्याप्यस्य स्वरूपञ्चोक्तम्, तत्र व्याप्यस्य पक्षवृत्तित्व" मित्यत्र किं पक्षत्वं ( पक्षता ) इत्याकाङ्क्षायामाह—परममूले—सिषाधयिषयेति। साधयितुमिच्छा सिषाधयिषा अनुमित्सेत्यर्थः, तया शून्या=विरहिता तदभावविशिष्टा सिद्धिः=साध्यनिश्चयः यत्र ( पर्वतादौ ) न तिष्ठति=न विद्यते स पक्षः, तत्र पक्षे हेतोः वृत्तित्वज्ञानात्=परमर्शरूपात् अनुमितिरनुमा भवेत्=स्यादिति कारिकाया ऋजुरर्थः।

( मु० ) पक्षवृत्तित्वमित्यत्र पक्षत्वं किं तदाह सिषाधयिषेति। सिषाधयिषाविरहविशिष्टसिद्ध्यभावः पक्षता तद्वान्पक्ष इत्यर्थः। सिषाधयिषामात्रं न पक्षता विनापि सिषाधयिषां घनगर्जितेन मेघानुमानात्। अत एव साध्यसन्देहोऽपि न पक्षता विनापि सन्देहं तदनुमानात्। सिद्धौ सत्यामपि सिषाधयिषासत्त्वेऽनुमितिर्भवत्येव। अतः सिषाधयिषाविरहविशिष्टत्वं सिद्धौ विशेषणम्। तथा* च यत्र सिद्धिर्नास्ति तत्र सिषाधयिषायां सत्यामसत्यामपि पक्षता। यत्र च सिषाधयिषाऽस्ति तत्र सिद्धौ सत्यामसत्यामपि पक्षता। यत्र सिद्धिरस्ति सिषाधयिषा च नास्ति तत्र न पक्षता, सिषाधयिषाविरहविशिष्टसिद्धेः सत्त्वात्।

मूले पक्षतानिरूपणे सङ्गतेरप्रदर्शनात् तां प्रदर्शयति टीकाकारः—पक्षवृत्तित्वमिति। अयमाशयः—अत्र प्रकृतः परामर्शः, तद्घटकं पक्षधर्मत्वमपि प्रकृतम्, तथाच तदुपपादकत्वेन उपोद्घातसङ्गत्या पक्षतानिरूपणम्। व्याप्तिनिरूपणानन्तरं पक्षतानिरूपणे तु एककार्यकारित्वमेव सङ्गतिः। एकं यत्कार्यमनुमितिरूपं तत्प्रयोजकत्वं यथा व्याप्तौ तथैव पक्षतायामित्यर्थः। अतएव दीधितिग्रन्थे "अनुमितिलक्षणैककार्यानुकूलतासङ्गत्या पक्षधर्मतां ( पक्षतां ) निरूपयितुमाह" इत्युक्तम्।

( प्र० टी० ) मूले पक्षतालक्षणं न स्पष्टमिति सिद्धान्तरीत्या पक्षतां लक्षयति—सिषाधयिषेति। सिषाधयिषाया विरहोऽभावः तद्विशिष्टा सिद्धिः=इन्द्रियार्थसन्निकर्षजन्यः " पर्वतो वह्निमान् " इत्याकारकश्चाक्षुषो निश्चयः तादृशसिषाधयिषाविरहविशिष्टसिद्धिः, तादृशविशिष्टसिद्धेर्योऽभावः स एव पक्षता=पक्षवृत्तिर्धर्मः तादृशपक्षतायाः आश्रय पर्वतादिः पक्षः। अयमाशयः—"पर्वते वन्ह्यनुमितिर्मे भवेत्" इत्याकारा या इच्छा सा "सिषाधयिषा" इत्युच्यते। सिषाधयिषा अनुमित्सेत्यनर्थान्तरम्। तादृशसिषाधयिषाभावविशिष्टसिद्ध्यभावः पक्षता, स्वप्रतियोगिविशेष्यतासम्बन्धेन तद्वान् पक्षः। "स्व" पदेन सिषाधयिषाभावविशिष्टसिद्ध्यभावस्य ग्रहणम्। "पर्वतो वह्निमान्" इत्याकारकप्रतिज्ञावाक्ये वह्निर्विशेषणं, पर्वतो विशेष्यः, विशेष्यता पर्वतनिष्ठा, सचोक्तविशेष्यतासम्बन्धद्वारा दर्शितपक्षतायाः† आश्रयत्वात् पक्षः।

---

*—तादृशपक्षता क्वचिद्विशेषणाभावप्रयुक्ता, क्वचिद्विशेष्याभावप्रयुक्ता, क्वचिदुभयाभावप्रयुक्तेत्युपपादयति—तथाचेति। † सिषाधयिषाविरहविशिष्टसिद्ध्यभावरूपायाः पक्षतायाः।

पक्षतालक्षणे सिद्धान्तमुक्ता प्राचामुक्तीः खण्डयति—सिषाधयिषामात्रमिति । सिषाधयिषामात्रम्=अनुमानकरणेच्छामात्रं न पक्षता "पर्वतो वह्निमान्" इत्यादिस्थले लक्षणस्य सङ्गतावपि "गगनं मेघवत् घनगर्जनात्" इत्यत्राव्याप्तेः । अत्रानुमानेच्छारूपायाः सिषाधयिषाया अभावेऽपि गृहाभ्यन्तरस्थितस्य पुरुषस्य मेघगर्जनाद्वारा "गगनं मेघवत् घनगर्जनात्" इति मेघानुमितेरप्रतिहतत्वादित्यर्थः । अतएवेति—केचित्—"साध्यसन्देहः पक्षता" इति मन्यन्ते तदपि न युक्तमित्यर्थः । दर्शितोदाहरणे साध्यसन्देहाभावेऽप्यनुमानसत्त्वादित्याशयः ।

इदमत्राकूतकम्—अनुमितिज्ञाने सिषाधयिषा उत्तेजिका, सिषाधयिषाभावविशिष्टा सिद्धिस्तु प्रतिबन्धिका । प्रतिबन्धकसत्त्वेऽपि कार्यजनकत्वमुत्तेजकत्वम्, कार्यविघातकत्वञ्च प्रतिबन्धकत्वमिति प्रत्यक्षखण्डे स्वतन्त्रशक्तिपदार्थवादखण्डनेऽवोचाम । प्रकृते च सिद्धिसत्त्वेऽपि यद्यनुमित्सा जायेत तदपि पक्षतायाः सम्पन्नत्वेनानुमितिज्ञानं भवत्येवेति तात्पर्यं हृदि कृत्वा "सिषाधयिषाविरहविशिष्टे" तिपदं सिद्धौ विशेषणं दत्तम् । अर्थात्—विशिष्टाभावरूपा पक्षता कदाचित् सिषाधयिषाभावरूपविशेषणस्य, कदाचित् सिद्धिरूपविशेष्यस्य चाभावात्, कदाचिद् विशेषणविशेष्योभयाभावात् फलिता भवति । एतदेवाग्रिमग्रन्थेन स्पष्टीकरोति "सिद्धौ सत्यामपि" इत्यादिना । इन्द्रियार्थसन्निकर्षजन्यं ज्ञानं सिद्धिः—तस्याः पर्वतादिपक्षे सत्त्वेऽपि अर्थात् यत्र पर्वते "पर्वतो वह्निमान्" इति चाक्षुषं प्रत्यक्षं जातम्, तदनन्तरं तत्रैव "पर्वते वह्निविषयकानुमितिर्मे जायताम्" इत्याकारिकेच्छोत्पन्ना, तत्र यद्यपि साध्यवत्तानिश्चयोऽनुमितिं प्रतिबध्नाति, तथापि सिषाधयिषोत्तेजिका वर्त्तते, तेन पक्षतायां जातायां वह्नेरनुमितिज्ञानं भवत्येव । सिषाधयिषाभावविशिष्टा या सिद्धिः सैवानुमितेः प्रतिबन्धिका, नतु सिद्धिमात्रम् । एतन्मूलैव "प्रत्यक्षसिद्धमप्यर्थमनुमानेन बुभुत्सन्ते तर्करसिका" इति प्राचामुक्तिः । "नहि करिणि दृष्टे चीत्कारेण तमनुमिमतेऽनुमातार" इत्युक्तिस्तु यत्र सिद्धिसत्त्वे सिषाधयिषा न भवति तत्र घटते ।

सम्प्रति पक्षताया तदभावस्य च स्थलं निर्धारयितुं विशेषतया वर्णयति—तथाचेति । यत्र=स्थले सिद्धिः=प्रत्यक्षं ज्ञानम् नास्ति—न वर्त्तते तत्र=सिषाधयिषायां सत्याम्—उभयाभावप्रयुक्तविशिष्टाभावमादाय पक्षता ज्ञेया । अर्थात् सिषाधयिषाया विद्यमानत्वात् तदभावरूपं विशेषणमपि नास्ति, सिद्धिरपि च नास्तीति कृत्वा विशेषणविशेष्योभयाभावमादाय सिद्ध्यभावरूपा पक्षता निर्बाधा । असत्यान्तु विशेष्याभावमात्रप्रयुक्तविशिष्टाभावमादाय, अर्थात् यत्र सिद्धिसिषाधयिषे द्वे अपि न स्तः तत्र सिषाधयिषाविरहरूपं विशेषणन्तु वर्त्तते परं सिद्धिरूपं विशेष्यं नास्तीति कृत्वा विशिष्टाभावव्यवहारद्वारा पक्षतायां जायमानायामनुमितिर्भवत्येव ।

यत्र च सिषाधयिषाऽस्ति तत्र सिद्धौ सत्यामिति-पूर्ववत् विशेषणाभाव-

प्रयुक्तविशिष्टाभावमादाय पक्षता, अर्थात्—यद्यपि एतादृशस्थले सिषाधयिषासिद्धी एते द्वे अपि स्तः, तथापि सिषाधयिषाभावरूपं विशेषणन्तु नास्ति इति तादृशविशेषणाभावद्वारा विशिष्टाभावं घटयित्वा पक्षता सम्पाद्यते येनाऽनुमितिर्निष्प्रत्यूहा। सिद्ध्यावसत्त्यामिति—पूर्ववत् उभयाभावप्रयुक्तो विशिष्टाभावः। अर्थात् एतादृशस्थले सिषाधयिषा वर्त्तते इति सिषाधयिषाभावरूपं विशेषणं नास्ति, सिद्धिर्न वर्त्तत इति सिद्धिरूपं विशेष्यमपि नास्तीति कृत्वा द्वयोर्विशेषणविशेष्ययोरभावमुपजीव्य पक्षतायां जायमानायामनुमितिज्ञानसम्पादने न काचन बाधां पश्यामः।

यत्र च सिद्धिरस्तीति। अयमर्थः—यत्र सिद्धिर्नाम प्रत्यक्षादिनिश्चयात्मकं ज्ञानं वर्त्तते उत्तेजनाकारिणी च सिषाधयिषा नास्त्येव, तादृशस्थले स्वप्नेऽपि न पक्षता यतः सिषाधयिषाभावविशिष्टा सिद्धिः अनुमितिप्रतिबन्धिकेति व्यवातिष्ठिपाम। नहि उत्तेजकाभावे प्रतिबन्धकसत्त्वे च क्वचिदपि कार्यं-दृष्टचरम्। अनया रीत्या पक्षतास्थल एवानुमितिर्भवति नान्यथेति निश्चेतव्यम् *।

( मु० ) ननु यत्र परामर्शानन्तरं सिद्धिस्ततः सिषाधयिषा, तत्र सिषाधयिषाकाले परामर्शनाशान्नानुमितिः। यत्र सिद्धिपरामर्शसिषाधयिषाः क्रमेण भवन्ति तत्र सिषाधयिषाकाले सिद्धेर्नाशात्प्रतिबन्धकाभावादेवानुमितिः। यत्र सिषाधयिषासिद्धिपरामर्शाः सन्ति तत्र परामर्शकाले सिषाधयिषैव नास्ति। एवमन्यत्रापि सिद्धिकाले परामर्शकाले च न सिषाधयिषा, योग्यविभुविशेषगुणानां यौगपद्यनिषेधात्, तत्कथं सिषाधयिषाविरहविशिष्टत्वं सिद्धेर्विशेषणमिति चेन्न, यत्र वह्निव्याप्यधूमवान् पर्वतो वह्निमानिति प्रत्यक्षं स्मरणं वा, ततः सिषाधयिषा तत्र पक्षतासंपत्तये तद्विशेषणस्यावश्यकत्वात्।

( प्र० टी० ) पक्षतालक्षणे "सिषाधयिषाविरहविशिष्टे" तिपदं सिद्धौ विशेषणं दत्तं तद्व्यर्थमिति मन्वानः शङ्कते—नन्विति ‡। "नन्वि" त्यारभ्य 'चेदि' त्यन्तः पूर्वपक्षग्रन्थः। "ने"त्यारभ्य "आवश्यकत्वादि"त्यन्तः उत्तरपक्षग्रन्थः। प्रतिपदार्थं व्याख्याने न बहु फलं पश्याम इति (प्रायः) पूर्वपक्षाभिप्रायमनूद्य तत उत्तरपक्षग्रन्थसारः कथ्यते—

---

* उक्तरीत्या=सिद्धान्तरीत्या—"उक्त-पक्षताङ्गीकारे तु श्रुत्या आत्मनिश्चयस्थलेऽनुमित्सायां सत्यामनुमित्साविरहलक्षणविशेषणाभावे तद्विशिष्टात्मनिश्चयस्याप्यभावेन सिषाधयिषाविरहसहकृतसिद्ध्यभावरूपायाः पक्षतायाः सत्त्वात् तत्राप्यनुमानं स्यादिति" **अद्वैतसिद्धेः** सिद्धिव्याख्या।

‡ परामर्शरूपकारणसत्त्वे सिद्धिरूपविरोधिसत्त्वे यद्यनुमित्सा स्यात् तदा तस्योत्तेजकत्वं वाच्यं नचैतत्सम्भवतीत्याशङ्कते—**नन्विति** दिनकरी।

पक्षतालक्षणे सिद्धान्तिना यत् 'सिषाधयिषे'त्यादि विशेषणं धृतं तदेककालावच्छेदेनैकात्मवृत्तित्वसम्बन्धेनैव विवक्षितम्, अर्थात् अनुमातुः सिषाधयिषादिकं युगपत्कालावच्छेदेन भवेत् तदा तस्यानुमितिः स्यात् तदेव तु नार्हति भवितुम्। नह्यात्मनो विशेषगुणा इच्छाज्ञानाद्या युगपद्भवन्ति, किन्तु भवन्ति ते क्रमेणेति नैयायिकानां मतम्। यत्र प्रथमक्षणे "वह्निव्याप्यधूमवानयं पर्वत" इति परामर्शः, तादृशपरामर्शानन्तरं=परामर्शस्य द्वितीयस्मिन् क्षणे सिद्धिः=प्रत्यक्षनिश्चयः ततः= सिद्ध्युत्पत्तिद्वितीयक्षणे सिषाधयिषा=अनुमित्सा उत्पन्नेति शेषः। तत्र=तादृशस्थले सिषाधयिषाकाले परामर्शनाशात्=अनुमितिकरणभूतस्य व्याप्तिज्ञानस्य व्यापारभूतो यः परामर्शः, यं विनानुमितिरेव नोत्पत्तुमर्हति तस्य नष्टत्वात् नानुमितिः स्यात्।

एवं यत्र प्रथमक्षणे सिद्धिः, तद्द्वितीयक्षणे परामर्शः, ततः तृतीयक्षणे सिषाधयिषा जाता=एवंक्रमेणैतत्सर्वमव्यवधानेन भवतीत्यर्थः। तत्र सिषाधयिषाकाले सिद्धेर्नाशात्, प्रतिबन्धकाभावात्=सिषाधयिषाभावविशिष्टसिद्धिरूपस्य प्रतिबन्धकस्याभावाद् अनुमितिः स्यादेव। एवमेव यत्रेत्यादिग्रन्थस्याप्यर्थो योजनीयः। अर्थात् प्रथमक्षणे सिषाधयिषोत्पन्ना, द्वितीयक्षणे सिद्धिः, तृतीयक्षणे परामर्श इति। अत्रापि परामर्शकाले सिषाधयिषैव नास्ति। तत्र परामर्शसत्त्वात्प्रतिबन्धकाभावात् स्यादेवाऽनुमितिरिति शेषः। यत्र तु—प्रथमे क्षणे सिषाधयिषा, द्वितीये परामर्शः, तृतीये सिद्धिज्ञानं तत्र सिद्धिकाले सिषाधयिषैव नास्तीति नैवानुमितिः। तस्मात्सिद्धान्त्युक्तरीत्या सिद्धिकाले परामर्शकाले वा सिषाधयिषैव न वर्त्तत इति व्यर्थमुक्तं विशेषणम्। किन्तु—"सिद्ध्यभावः पक्षता" इत्येव वक्तुं युक्तमित्याक्षेप्तुराशयः। तत्र पूर्वपक्षिणो युक्तिः—"योग्यविभुविशेषगुणानामिति"। प्रत्यक्षयोग्या ये विभूनां विशेषगुणाः= ज्ञानाद्याः तेषां यौगपद्यस्य=एककालावच्छेदेनोत्पत्तेर्निषेधो यत इति भावः।

समाधानग्रन्थस्यायं भावः—यत्रात्मनि=यस्मिन्ननुमानकर्त्तरि पुरुषे "वह्निव्याप्यधूमवान् पर्वतो वह्निमान्" इत्याकारकं प्रत्यक्षं स्मरणं वा जातं ततः=तदुत्तरं द्वितीयक्षणे "पर्वते वन्ह्यनुमितिर्मे जायताम्" इत्याकारिका सिषाधयिषा जाता, तादृशस्थले=अनुमित्यव्यवहितपूर्ववर्त्तिसिषाधयिषाक्षणे पक्षतालक्षणघटनाय 'सिषाधयिषाविरहविशिष्टत्वं सिद्धौ विशेषणं देयमेव। तथाच—परामर्शघटितसिद्धिः प्रथमक्षणे, सिषाधयिषा द्वितीयक्षणे, तृतीयक्षणे त्वनुमितिरेवेष्टा द्वितीयक्षणे सिद्धेरनाशात् तत्र पक्षतासम्पत्तये तद्विशेषणमावश्यकम्। अन्यथा तत्रानुमितिर्न भवेत् उक्ताकारायाः सिद्धेः सत्त्वात्। परमेतादृशस्थलेऽप्यनुमितिस्तु निर्विवादा। नह्यत्र सिद्ध्यभावः केवलोऽस्ति येनानुमितिरुद्भवेत् किन्तु सिद्ध्यात्मकः परामर्शो विद्यते एव। द्वितीयक्षणवृत्तिसिषाधयिषात्मकोत्तेजकसत्त्वे तदेव ज्ञानं परामर्शत्वेनानुमितिकारणम्, सिषाधयिषाया अभावे तु तदेव सिद्ध्यात्मकतया प्रतिबन्धकम्। तस्मादेतादृशस्थले—सिषाधयिषाविरहात्मकविशेषणोपादाने तु सिषाधयिषाविरहविशिष्टसिद्ध्यभावरूपा पक्षता निराबाधा

भवतीति सर्वं चतुरस्त्रम्।

( मु० ) अत्रेदं बोध्यम्। यादृशयादृशसिषाधयिषासत्त्वे सिद्धिसत्त्वे यल्लिङ्गकाऽनुमितिस्तादृशतादृशसिषाधयिषाविरहविशिष्टसिद्ध्यभावस्तल्लिङ्गकाऽनुमितौ पक्षता। तेन सिद्धिपरामर्शसत्त्वेऽपि यत्किंचिज्ज्ञानं मे जायतामितीच्छायामपि नानुमितिः। वह्निव्याप्यधूमवान् पर्वतो वह्निमानिति प्रत्यक्षसत्त्वे प्रत्यक्षातिरिक्तं वह्निज्ञानं जायतामितीच्छायां तु भवत्येव ॥

( प्र० टी ) "सिषाधयिषे" त्यादिविशेषणस्य स्वरूपं कीदृशमिति निर्धारयति—अत्रेदमिति। यादृशयादृशेति—अयमाशयः—"वह्निव्याप्यधूमवान् पर्वतो वह्निमान्" इत्याकारकसिद्ध्यात्मकपरामर्शे सति यदि "यत्किञ्चिज्ज्ञानं मे जायताम्" इतीच्छा प्रवर्त्तते तदा न वन्ह्यनुमितिः। यदि तु उक्ताकारकप्रत्यक्षात्मकपरामर्शकाले अर्थात् परामर्शद्वितीयक्षणे "प्रत्यक्षादिभिन्नं मे वह्निज्ञानं जायताम्" इत्याकारेच्छा भवेत् तदा तु भवत्येव वह्नेरनुमितिः। यत उक्तेच्छा प्रत्यक्षाद्यतिरिक्ते वन्ह्यनुमितिज्ञाने उत्तेजकस्वरूपेण वर्त्तते। वन्ह्यनुमितौ तु—"पर्वते मे वह्निज्ञानं जायताम्" इत्याकाराया एवेच्छायाः सिद्धिसत्त्वेऽपि उत्तेजकता नतु यत्किञ्चिज्ज्ञानविषयकत्वेन तस्या उत्तेजकत्वमिति युक्तमुक्तं "यादृशयादृशसिद्धिसत्त्व" इत्यादि। अक्षराणि त्वेवं योज्यानि—यादृशयादृशसिषाधयिषासत्त्वे="पर्वते वह्निमनुमिनुयाम्" इत्याकारकसिषाधयिषासत्त्वे यल्लिङ्गकानुमितिः=धूमलिङ्गकाऽनुमितिः भवतीति शेषः। तादृशतादृशसिषाधयिषाविरहविशिष्टसिद्ध्यभावः=तत्तद्रूपावच्छिन्नानुमित्साभावविशिष्टप्रत्यक्षनिश्चयात्मकाभावः * तल्लिङ्गकानुमितौ=तद्धेतुकानुमितौ अर्थात् ( यथा ) प्रसिद्धानुमाने धूमहेतुकाऽनुमितौ पक्षता=पक्षवृत्तित्वम्। विशेष्यतासम्बन्धेन तद्वान् पक्ष इति भावः। तेन=तत्तद्व्यक्तित्वेन इच्छाया उत्तेजकत्वेन सिद्धिपरामर्शसत्त्वेऽपि ="वह्निव्याप्यधूमवान् पर्वतो वह्निमान्" इत्याकारकसिद्ध्यात्मकपरामर्शसत्त्वेऽपि "यत्किञ्चित् ज्ञानं मे जायताम्"=पर्वतविशेष्यकघटप्रकारकं पर्वतविशेष्यकपटप्रकारकं वा मे ज्ञानं भवतु" इतीच्छायां=वर्त्तमानायामपि नानुमितिः=नैव वन्ह्यनुमितिरिति खण्डलकार्थः। तादृश्या इच्छाया यत्किञ्चिज्ज्ञानविषयकत्वेन प्रकृताऽनुमितिसामग्र्यामुत्तेजकत्वाभावादिति भावः। वह्निव्याप्यधूमवानिति—इत्याकारकप्रत्यक्षात्मकनिश्चयसत्त्वेऽपि "प्रत्यक्षातिरिक्तं वह्निज्ञानं मे जायताम्" इतीच्छायां तु भवत्येव अनुमितिरिति सम्बन्धः। तादृश्या इच्छायाः प्रत्यक्षातिरिक्तवन्ह्यनुमितिज्ञाने उत्तेजकत्वेन सत्त्वादिति भावः।

( मु० ) एवं धूमपरामर्शसत्त्वे आलोकेन वह्निमनुमिनुयामितीच्छायामपि नानुमितिः।

* तल्लिङ्गकत्वादिविनिवेशेनेत्यर्थः।

( प्रभा० ) उक्तविवक्षायाः फलं दर्शयति—एवञ्चेति । एवञ्च प्रसिद्धानुमाने " वह्निव्याप्यधूमवान् पर्वतो वह्निमान् " इत्याकारकपरामर्शद्वितीयक्षणे "आलोकेन हेतुना ममानुमितिर्जायताम्" इत्याकारेच्छायामपि नानुमित्यापत्तिः । तत्र "यद्धेतुक" पदनिवेशस्यापि सत्त्वात् । इयमुक्तेच्छा यद्धेतुकः परामर्शो जातस्तद्धेतुका न वर्त्तते किन्तु धूमहेतुकः परामर्शः, तदुत्तरं जायमानेच्छा त्वालोकहेतुकेति विषमस्वरूपत्वादनुमितिप्रतिबन्धकैवेति तादृश्या इच्छाया यल्लिङ्गकपरामर्शत्वं तल्लिङ्गकत्वं नेत्यतः प्रकृतपरामर्शे उत्तेजकत्वमपि नास्त्येवेति गूढं हृदयम् ।

( मु० ) सिषाधयिषाविरहकाले यादृशसिद्धिसत्त्वे नानुमितिस्तादृशी सिद्धिर्विशिष्यैव तत्तदनुमितौ प्रतिबन्धिका वक्तव्या । तेन पर्वतस्तेजस्वी पाषाणमयो वह्निमानिति ज्ञानसत्त्वेऽप्यनुमितेर्न विरोधः ।

( प्रभा० ) सिद्ध्यनुमित्योः कीदृशः प्रतिबध्यप्रतिबन्धकभाव इति निरूपयति—सिषाधयिषेति । सिषाधयिषाविरहकाले=अनुमित्सायाः अभावकाले यादृशसिद्धिसत्त्वे=यद्रूपावच्छिन्ननिश्चयात्मकज्ञानसद्भावे, नानुमितिः=अनुमितिर्न भवतीत्यर्थः । तादृशी सिद्धिः=तद्रूपावच्छिन्नं प्रत्यक्षादिनिश्चयात्मकं ज्ञानं विशिष्यैव=पृथक् पृथगेव, तत्तदनुमितौ=तत्तत्साध्यकानुमितिव्यक्तौ प्रतिबन्धिका वक्तव्येति पदार्थयोजना । आशयस्तु—" पर्वतो वह्निमान् " इत्याकारानुमितौ पर्वतत्वावच्छिन्नविशेष्यतानिरूपितवह्नित्वावच्छिन्नप्रकारताशालिनिश्चयत्वेन रूपेण सिद्धिज्ञानमनुमितिप्रतिबन्धकं नत्वन्यप्रकारताकमन्यविशेष्यताकं वा । एतादृशप्रतिबध्यप्रतिबन्धकभावस्य फलमाह—तेनेति । " पर्वतो वह्निमान् " इत्याकारानुमितेः पूर्वं जायमानमपि " पर्वतस्तेजस्वी " अथवा—" पाषाणमयो वह्निमान् " इत्याकारकज्ञानसत्त्वेऽपि अनुमितेर्न विरोधः=दर्शिताकारकं सिद्धिज्ञानं उक्ताकारानुमितिं प्रतिरोद्धुं न समर्थमित्यर्थः ।"तद्विशेष्यकतत्प्रकारानुमितिं प्रति तद्विशेष्यकतत्प्रकारकं सिद्धिज्ञानं प्रतिबन्धकम्" इति नियमस्य जागरूकत्वादिति भावः । "पर्वतस्तेजस्वी" इति ज्ञानं पर्वतविशेष्यकमपि पर्वतत्वावच्छिन्नविशेष्यतानिरूपितमपि न वह्नित्वावच्छिन्नप्रकारताकम् । " पाषाणमयो वह्निमान् " इति ज्ञानं वह्नित्वावच्छिन्नप्रकारताकमपि न पर्वतत्वावच्छिन्नविशेष्यतानिरूपितं, किन्तु पाषाणमयत्वावच्छिन्नविशेष्यतानिरूपितमिति बोध्यम् ।

( मुक्ता० ) परन्तु पक्षतावच्छेदकसामानाधिकरण्येन साध्यसिद्धावपि तदवच्छेदेनानुमितिदर्शनात्पक्षतावच्छेदकावच्छेदेनानुमितिं प्रति पक्षतावच्छेदकावच्छेदेन साध्यसिद्धिरेव प्रतिबन्धिका, पक्षतावच्छेदकसामानाकरण्येनानुमितिं प्रति तु सिद्धिमात्रं विरोधि ।

( प्रभा० ) सिद्ध्यनुमित्योः प्रतिबध्यप्रतिबन्धकभावेऽन्यदप्यावश्यकमाह—पर-

न्त्विति। पक्षतावच्छेदकसामानाधिकरण्येन=एकस्मिन् पर्वते वह्निरूपसाध्यस्य सिद्धावपि तदवच्छेदेन अर्थात् पक्षतावच्छेदकावच्छेदेनेनानुमितिम्प्रति पक्षतावच्छेदकावच्छेदेन=यावत्पर्वतवृत्तित्वेनेत्यर्थः साध्यसिद्धिरेव=वन्ह्यादिसाध्यविषयकं प्रत्यक्षज्ञानमेव। प्रतिबन्धिका अनुमितिविरोधिनी, पक्षतावच्छेदकसामानाधिकरण्येन तु सिद्धिमात्रं विरोधि।

अस्य प्रघट्टकस्यायमाशयः—हेतौ साध्यव्याप्तिद्वारा जायमानो निश्चयः साध्यनिश्चयः सिद्धिर्वेत्युच्यते, सचानुमितिप्रतिबन्धकः। परन्तु–"यत्र देशे साध्यस्यानुमानं क्रियते तद्देशीयः ततोऽधिकदेशीयो वा साध्यस्य निश्चयोऽनुमितिं प्रतिबध्नाति नतु कदाचिदपि न्यूनदेशीय" इत्यस्ति नियमः। तथाहि—यदि कस्मिंश्चित्पर्वते वह्नेरनुमानं जातं तदा तत्पर्वतवृत्तिर्वह्निनिश्चयः अथवा पर्वतमात्रवृत्तिर्वह्निनिश्चयोऽनुमितिप्रतिबन्धकः। यदा तु सकलपर्वते वह्निरनुमातव्यः तदा सकलपर्वतवृत्तिर्वह्निनिश्चयः पर्वतमात्रवृत्तिवन्ह्यनुमितिप्रतिबन्धकः। परन्तु सकलेषु पर्वतेषु वह्नेरनुमानकाले यत्किञ्चित्पर्वतनिष्ठवह्निनिश्चयो नानुमितिं प्रतिरोद्धुं समर्थोः न्यूनदेशवृत्तित्वात्। पर्वतमात्रं वन्ह्यनुमित्यपेक्षयाऽयं न्यूनो वर्त्तते यत इत्यर्थः। एतावतेदमागतं यत् पक्षैकदेशे * वर्त्तमानः साध्यनिश्चयः पक्षमात्रविषयिणीमनुमितिं न प्रतिरोत्स्यति तेन पक्षैकदेशोप्यनुमितिसमये दृष्टान्तीकर्त्तुं शक्यते। अर्थात्–" पृथिवी इतरेभ्यो भिद्यते गन्धवत्त्वात् घटवत् " इत्याकारा स्थापना न दुष्यति। किन्तु "यत्र यत्र गन्धवत्त्वं तत्र तत्रेतरभेद" इत्याकारा अन्वयव्याप्तिरपि भवतीति काणादं मतमुक्तं भवति।

पदानित्वेवं व्याख्यातव्यानि—पक्षतावच्छेदकसामानाधिकरण्येन=पक्षैकव्यक्तिगतत्वेन अथवा पर्वतीयान्यतमशिखरगतत्वेन। साध्यसिद्धावपि=वन्ह्यादिसाध्यस्य निश्चयेऽपि। तदवच्छेदेन=पक्षतावच्छेदकावच्छेदेन पक्षतात्वावच्छेदेनेति यावत्, अनुमितिदर्शनात्="पर्वतो वह्निमान्" इत्याद्याकारानुमितिरूपायाः प्रमायाः सत्त्वात् ( नहि पक्षैकदेशनिष्ठं निश्चयात्मकं ज्ञानं यावत्सु पक्षेषूनीयमानाया अनुमितेः प्रतिबन्धकमिति भावः-तस्मात् ) पक्षतावच्छेदकावच्छेदेन=यावत्पक्षतावच्छेदेन अनुमितिम्प्रति, पक्षतावच्छेदकावच्छेदेन=यावत्पक्षगतत्वेन रूपेण, साध्यसिद्धिरेव प्रतिबन्धिका। पक्षतावच्छेदकसामानाधिकरण्येन=पक्षैकव्यक्तिगतत्वेन अनुमितिम्प्रति तु सिद्धिमात्रम्=तदेकपक्षव्यक्तिगतो वन्ह्यादिसाध्यीयनिश्चयः ततोधिकयावत्पक्षगतसाध्यीयनिश्चयो वा विरोधि=प्रतिबन्धकमित्यर्थः।

---

* 'शिखरावच्छेदेन पर्वतो वह्निमान्' इत्यनुमितौ तु पक्षतावच्छेदकीभूतशिखरावच्छिन्नत्वं स्वरूपसम्बन्धरूपमेव भासते नतु व्यापकत्वलक्षणमननुभवात्। एवञ्च तत्र शिखरावच्छेदवह्निसंयोगेनैव वह्निनिश्चयो विरोधी नतु संयोगमात्रेणेत्यवधेयमिति पक्षतासिद्धान्ते **जगदीश**भट्टाचार्याः।

( मुक्ता० ) इदं तु बोध्यम् । यत्रायं पुरुषो न वेति संशयानन्तरं पुरुषत्वव्याप्यकरादिमानयमिति ज्ञानं तत्राऽसत्यामनुमित्सायां पुरुषस्य प्रत्यक्षं भवति नत्वनुमितिरतोऽनुमित्साविरहविशिष्टसमानविषयक-प्रत्यक्षसामग्री कामिनीजिज्ञासादिवत्स्वातन्त्र्येण प्रतिबन्धिका । एवं परा-मर्शानन्तरं विनापि प्रत्यक्षेच्छां पक्षादेः प्रत्यक्षानुत्पत्तेः प्रत्यक्षेच्छाविरह-विशिष्टानुमितिसामग्री भिन्नविषयकप्रत्यक्षे प्रतिबन्धिका ॥ ७० ॥

( प्रभा० ) सिद्ध्यनुमित्योः प्रतिबध्यप्रतिबन्धकभावे उपाध्यायमतस्य * खण्डनाभिप्रायेण ग्रन्थान्तरमवतारयति—इदन्तु बोध्यमिति । यत्र=तिमिरादि-दोषवशात् प्रमातरि=पुरुषे अर्थात् प्रमातुरेव "अयं पुरुषो नवा" इत्याकारकः संशयः समजनि, तत उत्तरं द्वितीयक्षणे सम्यक्चक्षुःसम्प्रयोगेन "पुरुषत्वव्याप्यकरचरणादि-मानयम्" इत्याकारकः परामर्शो जातः तत्र संशयात्मकपक्षताविशिष्टा अनुमितिसामग्री वर्त्तते परं तत्सहकारिणी अनुमित्सा नास्ति, तदा पुरुषविषयकं प्रत्यक्षात्मकमेव ज्ञानं भवति नानुमित्यात्मकम् । अतोऽनुमित्साविरहविशिष्टा समानविषयकप्रत्यक्ष-सामग्री=अनुमित्साभावविशिष्टा तुल्यविषयिणी या प्रत्यक्षज्ञानस्य सामग्री चक्षुः-सम्प्रयोगादिरूपा सा कामिनीजिज्ञासादिवत्=विरहिणः पुरुषस्य सुन्दरस्त्रीभोगेच्छा-दिवत् स्वातन्त्र्येण=स्वभावत एव (पक्षताकुक्ष्यप्रविष्टत्वेनैव) प्रतिबन्धिका=अनुमिति-ज्ञानविरोधिनी भवतीतिशेषः । अनुमित्साभावविशिष्टानुमितिसामग्रीं प्रति समान-विषयिका=तुल्यविषयिणी ( यद्विषयिकाऽनुमितिसामग्री तद्विषयिणी ) प्रत्यक्षसामग्री ( चक्षुःसम्प्रयोगादिरूपा ) कामिनीजिज्ञासादिवत्=सुन्दरस्त्रीजिज्ञासावत्, स्वातन्त्र्येण= पक्षताकुक्षौ प्रवेशं विनैव प्रतिबन्धिका भवतीत्यर्थः । यथा कामिनः पुरुषस्य सुन्दरीसङ्गमनेच्छा सकलकार्यप्रतिबन्धिका भवति तथैवानुमित्साभावविशिष्टा प्रत्यक्ष-सामग्री समानविषयकानुमितिं प्रति स्वभावेनैव प्रतिबन्धिका ज्ञेयेति भावः ।

प्रत्यक्षस्यानुमितिबाधकत्वं प्रदर्श्य अनुमितेरपि क्वचित्प्रत्यक्षबाधकत्वं भवतीति दर्शयति—एवमिति । "वह्निव्याप्यधूमवानयं पर्वत" इत्यादिपरामर्शानन्तरं यदि "पक्षादिविषयकं प्रत्यक्षं ज्ञानं मम जायताम्" इत्याकारिकेच्छा उत्तेजनाकारिणी न स्यात् तदा पक्षादिविषयकं प्रत्यक्षं ज्ञानं न भवति । किन्तु—"पर्वतो वह्निमान्" इत्याकारा समुदितरूपा=पक्षसाध्यविषयिणी अनुमितिरेव जायते । अतोऽयं निष्कर्षो ज्ञेयो यदनुमितिविषयाद् भिन्नविषयके प्रत्यक्षे प्रत्यक्षेच्छाभावविशिष्टाऽनुमितिसामग्र्येव प्रतिबन्धिका । † समानविषयके प्रत्यक्षे तु अनुमित्साभावविशिष्टा प्रत्यक्षसामग्र्येव

* उपाध्यायास्तु—सिषाधयिषाविरहविशिष्टसिद्धिप्रत्यक्षसामग्र्योरन्यतरस्याभावः पक्षता तेन सिद्धिकाले समानविषयकप्रत्यक्षसामग्रीकाले च नानुमित्यापत्तिरित्याहुरिति **दिनकरी**।

† अनुमितितुल्यविषयक इत्यर्थः ।

बलवत्तरा सत्यनुमितिप्रतिबन्धिकेति सङ्क्षेपः । शिष्टानि पदानि एवं व्याख्येयानि—परामर्शानन्तरम्=दर्शिताकारपरामर्शज्ञानस्योत्तरक्षणे "प्रत्यक्षेच्छां विनाऽपि प्रत्यक्षानुपपत्तेः"="पक्षादिविषयकं प्रत्यक्षं ज्ञानं मे भवतु" इतीच्छां विनापि भिन्नविषयकप्रत्यक्षे=अनुमितिभिन्नविषयकप्रत्यक्षे प्रतिबन्धिका=अनुमितिसामग्रीति शेषः ।

* "प्रसिद्धिपूर्वकत्वादपदेशस्य" ( कणा० ३ । १ । १४ ) इत्याद्यार्षसूत्राणि उक्ताकारायाः सपरिकराया व्याप्तेर्मूलं वेद्यम् । ग्रन्थगौरवभयाद्वहु न प्रतानितम् ।

(मुक्ता०) † हेतुप्रसङ्गाद्धेत्वाभासान्विभजते—

( प्रभा० ) ‡ हेतुप्रसङ्गादिति— प्रसङ्गसङ्गत्या हेत्वाभासान्विभजत इत्यर्थः । स्मृतस्योपेक्षानर्हत्वं प्रसङ्गसङ्गतिः । यद्वा—विजयलक्षणैककार्यकारित्वसङ्गत्या हेत्वाभासनिरूपणं बोध्यम् । वादिनो विजयस्वरूपं यदेकं कार्यं तत्कारित्वं नाम तत्प्रयोजकत्वम् । स्वोक्तहेतोः सद्धेतुत्वप्रतिपादनम्, परोक्तप्रतिहेतोर्दुष्टत्वप्रतिपादनम् । आभ्यां द्वाभ्यां कथायां वादिनो विजयो भवतीति भावः । हेतुवदाभासन्ते इति "हेत्वाभासाः" असद्धेतवः दुष्टहेतव इति यावत् । इदमुक्तं भवति—यो हि वस्तुतोहेतुर्न भवति केवलं पञ्चम्यादिसामान्याद्धेतुवदाभासते, किम्बहुना यद्गोचरयज्ज्ञानं साक्षात्परम्परया वाऽनुमितिं प्रतिबध्नाति स एव हेतुवदाभासभानत्वाद्धेत्वाभासः । हेतुदोषैरनुपदं वक्ष्यमाणैः व्यभिचारादिभिर्दुष्टत्वादसद्धेतुरित्युच्यते इत्यर्थः । उक्तञ्च कणादमुनिना—"§ अप्रसिद्धोऽनपदेशः" (वै०३ । १ । १५) इति हेतुरपदेश इति हेत्वाभासोऽनपदेश इति चानर्थान्तरम् । हेतोराभासा हेत्वाभासाः हेतुनिष्ठा दोषाः तेषां भावस्तत्त्वमिति व्या-

---

* प्रसिद्धिः=स्मर्यमाणा व्याप्तिः, अपदेशो=हेतुवचनं तेन स्मर्यमाणव्याप्तिविशिष्टो हेतुर्हेत्ववयवत्वेन उपनयावयवत्वेन वोच्यते प्रसिद्धिपूर्वकोऽपदेश इति । विशिष्टं व्याप्तिग्रहोपाये वक्ष्यामः ।

† विभागपदार्थलापनप्रकारः प्रत्यक्षखण्डे दर्शितोऽपि प्रकृते पुनः शिष्यबुद्धिवैशद्यार्थं प्रदर्श्यते—स्वसमभिव्याहृतपदार्थतावच्छेदकधर्मव्याप्येत्यादि विपूर्वकभजधातोरर्थ एवं घटनीयः । तथाहि—"स्व" पदेन विपूर्वकभजधातोरर्थग्रहणम् । तत्समभिव्याहृतपदं प्रकृते हेत्वाभासपदं तदर्थतावच्छेदको धर्मो हेत्वाभासत्वम्, तद्व्याप्या मिथो विरुद्धा यावन्तो धर्मा अनैकान्तिकत्वादयः तत्प्रकारकं ज्ञानम् "अनैकान्तः विरुद्धः" इत्यादिरूपम्, तदनुकूलो व्यापारः पक्षात्मकवाक्यप्रयोगरूपः ( ग्रन्थकर्तुरेव ) तादृशव्यापाराऽनुकूलकृतिमान् ग्रन्थकार इत्यर्थः ।

‡ हेतुप्रसङ्गादिति—अत्र हेतुनिरूपितप्रसङ्गसङ्गतेः प्रयोज्यत्वं पञ्चम्यर्थः विभागान्वयिकर्मत्वं द्वितीयार्थः । तथाच—"हेतुनिरूपितप्रसङ्गसङ्गतिप्रयोज्यहेत्वाभासकर्मकविभागानुकूलकृतिमान् ग्रन्थकार" इति वाक्यार्थबोधः ।

§ अप्रसिद्ध इति—व्याप्त्या पक्षधर्मतया चाऽप्रमितोऽप्रसिद्धः । तथाच—यत्र व्याप्तिः पक्षधर्मत्वं वा नास्ति स "असिद्ध" इति यावत् । अधिकमुपस्कारादौ ।

स्थानान्तरम् । एवञ्च —" ह्रदो वह्निमान्" इत्याद्यनुमितिं प्रति " वन्ह्यभाववान् ह्रद " इत्यादिबाधनिश्चयः प्रतिबन्धकः । तादृशप्रतिबन्धकताविषयत्वं द्रव्यत्वादिहेताविति तेषां हेत्वाभासत्वमित्याद्यनुपदं स्फुटीभविष्यति ।

( का० ) अनैकान्तो विरुद्धश्चाप्यसिद्धः प्रतिपक्षितः।
कालात्ययापदिष्टश्च हेत्वाभासास्तु पञ्चधा ॥७१॥

( प्रभा० ) पञ्चधा विभागं दर्शयति—अनैकान्त इति कारिकया । स्पष्टम् ।

( मुक्ता० ) तल्लक्षणं तु यद्विषयकत्वेन ज्ञानस्याऽनुमितिविरोधित्वं तत्त्वम् । तथाहि—व्यभिचारादिविषयकत्वेन ज्ञानस्यानुमितिविरोधित्वात्ते दोषाः। यद्विषयकत्वं च यादृशविशिष्टविषयकत्वं बोध्यम् । तेन बाधभ्रमस्यानुमितिविरोधित्वेऽपि न क्षतिः । तत्र पर्वतो वह्न्यभाववानिति विशिष्टस्याप्रसिद्धत्वान्न हेतुदोषः । नच वह्न्यभावव्याप्यपाषाणमयत्ववान् पर्वत इति परामर्शकाले वह्निव्याप्यधूमस्याभासत्वं न स्यात्, तत्र वह्न्यभावव्याप्यवान्पक्ष इति विशिष्टस्याऽप्रसिद्धत्वादिति वाच्यम्, इष्टापत्तेः । अन्यथा बाधस्यानित्यदोषत्वापत्तेः। तस्मात्तत्र "वह्न्यभावव्याप्यपाषाणमयत्ववान् पर्वत " इति परामर्शकाले वह्निव्याप्यधूमस्य नाभासत्वम्, भ्रमादनुमितिप्रतिबन्धमात्रं, हेतुस्तु न दुष्टः। इत्थं च साध्याभाववद्वृत्तिहेत्वादिकं दोषः तद्वत्त्वं च हेतौ येन केनापि सम्बन्धेनेति नव्याः।

( प्रभा० ) ननु—लक्षणात्मकसाधारणधर्मज्ञानं विना विशेषे ( लक्ष्यभेदे ) जिज्ञासा नोदेतीति तत्कथं विभागो वक्तव्यः स्यादित्यत आह—तल्लक्षणन्त्विति । हेत्वाभाससामान्यलक्षणमित्यर्थः । मणिकारोक्तहेतुदोषसामान्यलक्षणमिति यावत् ।

यद्विषयकत्वेनेति–यद्विषयकत्वेन=व्यभिचारादिविषयकत्वेन ज्ञानस्य="पर्वतो वह्निमान् प्रमेयत्वात " इत्यादौ " अयं प्रमेयत्वहेतुर्व्यभिचारी " इत्याद्याकारकज्ञानस्य " पर्वतो वह्निमान् " इत्यनुमितिम्प्रति विरोधित्वं=प्रतिबन्धकत्वं तत्त्वं=तदेव हेत्वाभासत्वम् । अर्थाद् येषु प्रमेयत्वादिहेतुषु व्यभिचारादिदोषाणां ( वक्ष्यमाणलक्षणानां ) निश्चयो जायते तदा " पर्वतो वह्निमान् " इत्याद्यनुमितिज्ञानानि नोत्पत्तुमर्हन्ति तादृशानुमितिज्ञानप्रतिबन्धकत्वमेव प्रकृते हेत्वाभासत्वम् । एवं ' ह्रदो वह्निमान् धूमात्' इत्यादिबाधितस्थले वन्ह्यभावप्रयुक्तह्रदादिविषयकत्वेन " ह्रदो वन्ह्यभाववान् " इत्याकारकज्ञानस्य " ह्रदो वह्निमान् " इत्याकारकानुमितिज्ञानम्प्रति या प्रतिबन्धकता सैव प्रकृतानुमाने बाधित्वरूपं हेत्वाभासत्वमिति सरलं व्याकृतम् । प्राचीनपरिपाट्या तु यद्विषयकत्वेनेत्यत्र तृतीयार्थोऽवच्छिन्नत्वम्, तस्य अनुमितिविरोधित्वेऽन्वयः । ज्ञानस्येति षष्ठ्यर्थो वर्त्तमानत्वम्, तस्य च यद्विषयकत्वेऽन्वयः । अनुमितिविरोधित्वं नाम अनुमितिनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकत्वम् । तथाच—" ज्ञाननिष्ठयद्विषयकत्वा-

वच्छिन्नमनुमितिनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकत्वं तत्त्वं हेत्वाभाससामान्यलक्षणम्" इति ज्ञेयम् । "ह्रदो वन्ह्यभाववान्" इत्याकारकज्ञानस्य वन्ह्यभाववद्ध्रदादिविषयकत्वेन "ह्रदो वह्निमान्" इत्यनुमितिनिष्ठा या प्रतिबध्यता तन्निरूपितप्रतिबन्धकत्वं तादृशज्ञानस्याक्षतमेवेति लक्षणसमन्वयः । एतदेव मूले स्वयं स्पष्टीकरोति—तथाहीति । व्यभिचारादिविषयकत्वेन="अयं हेतुर्व्यभिचारी" इत्याकारकं ज्ञानं व्यभिचारिहेतुकां सर्वामनुमितिं प्रतिबध्नाति, अत एवंविधस्य ज्ञानस्य अनुमितिविरोधित्वात् ते= व्यभिचारादयो दोषाः=अनुमितिप्रतिबन्धकतया "हेत्वाभासा" इत्युच्यन्ते । लक्षणघटकस्य यद्विषयकपदस्य यादृशविशिष्टविषयकत्वमित्यर्थो बोध्य इत्याह—यद्विषयकत्वञ्चेति । विवक्षाफलं दर्शयति—तेनेत्यादिना । बाधभ्रमस्यानुमितिविरोधित्वेऽपीति । अयमाशयः—यदि "यद्विषयकत्व" पदस्य यादृशविशिष्टविषयकत्वरूपोऽर्थो न गृह्येत तदा यत्र पर्वते यस्य कस्यापि पुरुषस्य "पर्वतो वन्ह्यभाववान्" इत्याकारको बाधभ्रमो जातः तत्रापि बाधविषयकत्वेन धूमात्मकसद्धेतोः "पर्वतो वह्निमान्" इत्याकारानुमितिर्न स्यात् । अर्थात् उक्तां धूमात्मकसद्धेतुकामनुमितिम्प्रति बाधस्य प्रतिबन्धकता स्यात् ( बाधभ्रमोऽपि बाधरूप एव ) तेन हेत्वाभासलक्षणस्य सद्धेतावेवातिव्याप्तिरापतेत् । यदा तु "यादृशविशिष्टविषयकत्व" मित्यर्थो गृह्येत तदा प्रकृते—"यादृशविशिष्ट" पदेन वन्ह्यभावविशिष्टपर्वतस्यैव ग्रहणं भविष्यति, तादृशपर्वतस्तु सर्वत्र संसारेऽप्रसिद्ध इति नातिव्याप्तिः । "धर्म्यंशे सर्वं ज्ञानं प्रमा प्रकारांशे तु भ्रम" इत्यभ्युपगमादिति भावः ।

इदमुक्तं भवति—यत्र पक्षे वस्तुगत्यैव साध्याभावः तत्रैव बाधो भवितुमर्हति । यदि वस्तुतः पक्षे साध्याभावो न स्यात् किन्तु पक्षे साध्याभावभ्रमो जातः तदा प्रकृतानुमाने हेतुर्न दुष्टो भवति । किन्तु भ्रमापगमेऽनुमितिर्जायत एव । न क्षतिः= नातिव्याप्तिः ।

उक्तेऽर्थे हेतुमाह—तत्रेति । "पर्वतो वह्निमान् धूमाद्" इत्यत्र सद्धेतुकस्थापनायाम् । एतादृशस्थले ( भ्रमकाले ) पर्वतविशेष्यकवन्ह्यभावप्रकारकनिश्चयनिष्ठप्रतिबन्धकत्वेऽपि विशिष्टस्याप्रसिद्धत्वादित्यर्थः । न हेतुदोष इति । एवञ्च सद्धेतुस्थले दोषस्याऽप्रसिद्धत्वादेव न हेतोर्दुष्टत्वापत्तिरिति फलितार्थः ।

तथाच—पर्वतविशेष्यकवन्ह्यभावप्रकारकनिश्चयस्य प्रकृतानुमितिप्रतिबन्धकत्वेऽपि तादृशप्रतिबन्धकताऽनतिरिक्तयद्रूपावच्छिन्नविषयकत्वं तद्रूपस्याप्रसिद्धत्वेन सद्धेतुस्थले नैव दोषत्वापत्तिरित्येवमाह—"हेतुश्च न दुष्ट" इति भावः ।

सत्प्रतिपक्षस्यानित्यदोषत्ववादी शङ्कते—नचेति । शङ्काग्रन्थस्यायमाशयः— यदा यत्र स्थले सिद्धान्तिनः "पर्वतो वह्निमान् धूमात्" इत्याकारानुमाने धूमहेतुना "वह्निव्याप्यधूमवान् पर्वतः" इत्याकारकं परामर्शज्ञानं जातम्, तस्मिन्नेव काले

तत्रैव स्थले वादिनः " वन्ह्यभावव्याप्यपाषाणमयत्ववान् पर्वत " इति परामर्शज्ञानं जायेत, तत्र द्वितीयपरामर्शेन प्रथमपरामर्शकुक्षिनिविष्टधूमहेतोः सत्प्रतिपक्षत्वेन हेत्वाभासता युक्ता। भवदीय " यादृशविशिष्टविषयकत्व " कथनेन सा न युज्येत अर्थात् विरोधिपरामर्शकाले धूमहेतुः सत्प्रतिपक्षितो न भवेत्, संसारमात्रे पर्वते वह्न्यभावव्याप्यविशिष्टस्याप्रसिद्धत्वात् । पाषाणमयत्वहेतोर्वन्ह्यभावनिरूपिता व्याप्यता ( व्याप्तिः ) नास्ति, ततः तव पक्षे धूमो हेत्वाभासो नैव भवितुमुचितः। सिद्धान्ती इष्टापत्त्या परिहरति—**इष्टापत्तेरिति** । इष्टमेवास्माकमिदं यद्विरोधिहेतुसत्त्वेऽपि धूमादिसद्धेतुषु कदापि न हेत्वाभासव्यवहार इति । अनिष्टापत्तौ बाधकमुपन्यस्यति—**अन्यथेति**। प्रतिबन्धकीभूतभ्रमविषयस्यापि दोषत्वेन स्वीकारे बाधोऽप्यनित्यदोषः स्यात्। वह्निव्याप्यधूमस्याभासत्वस्वीकारे बाधोऽप्यनित्यो दोषः स्यात् कादाचित्कत्वादिति तु परमार्थः ।

पक्षे साध्याभावव्याप्यस्य भ्रमेण वस्तुतः सद्धेतुर्न दुष्यति। यदि दर्शितरीत्या सद्धेतावपि सत्प्रतिपक्षता स्वीक्रियते=अत्र सद्धेतावपि विरोधिपरामर्शकाले दुष्टता स्वीक्रियते अर्थादेवं तस्य *अनित्यदोषत्वस्वीकारः तदा पक्षे साध्याभावस्य भ्रमेण सद्धेतावऽपि बाधदोषेण दुष्टव्यवहारः कर्त्तव्यो भविष्यति परमिदं न कस्यापि सम्मतम्। तस्माद् एवंविधस्थले " वन्ह्यभावव्याप्यपाषाणमयत्ववान् पर्वत " इत्याकारकपरामर्शकाले वह्निव्याप्यधूमहेतोराभासत्वं नास्ति किन्तु भ्रमादनुमितेः प्रतिरोधमात्रं, तदपगमे तु जायत एवानुमितिः। "धूमादिहेतुस्तु कालयत्रेऽपि न दुष्ट" इत्यभिसन्धिमान् " अन्यथा " इत्यारभ्य " न दुष्ट " इत्यन्तं प्रश्नाति । **इत्थञ्चेति**—यादृशविशिष्टविषयकत्वेन ज्ञानस्य प्रतिबन्धकत्वं तादृशविशिष्टस्य दोषत्वमित्यङ्गीकरणेन वस्तुतः साध्याभाववति वृत्तिर्यस्य हेत्वादेस्तादृशं हेत्वादिकमेव दोषः। " अत्रादि " पदेन साध्याभावविशिष्टः पक्षोपि दोषत्वेन ज्ञातव्यः । **तद्वत्ता चेति**—तादृशदोषवत्ता चेत्यर्थः। **येन केनापि सम्बन्धेन**=अर्थात् सा दोषवत्ता व्यभिचारादिस्थले तादात्म्यसम्बन्धेन, बाधादिस्थले " साध्याभाववान् पक्षो हेतुश्च " अर्थात्—" †ह्रदोवन्ह्यभाववान् धूमश्च " इत्याकारकैकज्ञानविषयत्वेन सम्बन्धेन यथासम्भवं ज्ञेया । इदञ्च नव्यनैयायिकानां मतमित्याह—**नव्या** इति। अस्मिन् सिद्धान्ते " हेतुवदाभासन्त इति हेत्वाभासा " इतिव्युत्पत्तिबलेन हेत्वाभासपदं दुष्टहेतुपरमिति बोध्यम्।

**( मु० ) परे तु यद्विषयकत्वेन ज्ञानस्यानुमितिविरोधित्वं तद्वत्त्वं**

---

* **तादृशज्ञानकाले** दुष्टत्वं तादृशज्ञानाभावकालेऽदुष्टत्वमित्येवाऽनित्यदोषत्वम् । बाधस्य तु नित्यदोषत्वं सर्वसम्मतमिति भावः।

† **" ह्रदो वन्ह्यभाववान् धूमश्च "** इत्याकारकसमूहालम्बनविषयतामादाय बाधितादौ लक्षणसमन्वयादित्याहुः ।

हेत्वाभासत्वम् । सत्प्रतिपक्षे विरोधिव्याप्त्यादिकमेव तथा । तद्वत्त्वं च हेतोर्ज्ञानरूपसम्बन्धेन । न चैवं वह्निमान् धूमादित्यादौ पक्षे बाधभ्रमस्य साध्याभावविषयकत्वेनानुमितिविरोधित्वाज्ज्ञानरूपसम्बन्धेन तद्वत्त्वस्यापि सत्त्वात्सद्धेतोरपि बाधितत्वापत्तिरिति वाच्यं, तत्र ज्ञानस्य सम्बन्धत्वाकल्पनात् । अत्र सत्प्रतिपक्षित इति व्यवहारेण तत्कल्पनात् । तत्र बाधित इति व्यवहाराभावादित्याहुः । अनुमितिविरोधित्वं च अनुमितितत्करणान्यतरविरोधित्वम् तेन व्यभिचारिणि नाव्याप्तिः । दोषज्ञानञ्च यद्धेतुविषयकं तद्धेतुकानुमितौ प्रतिबन्धकम् । तेनैकहेतौ व्यभिचारग्रहे हेत्वन्तरेणानुमित्युपपत्तेस्तदभावाद्यनवगाहित्वाच्च व्यभिचारज्ञानस्यानुमितिविरोधित्वाभावेऽपि न क्षतिरिति सङ्क्षेपः । यादृशपक्षसाध्यहेतौ यावन्तो दोषास्तावदन्यान्यत्वं तत्र हेत्वाभासत्वम् । पञ्चत्वकथनं तु तत्सम्भवस्थलाभिप्रायेण ।

सत्प्रतिपक्षादेरनित्यदोषत्ववादिनां मतमाह परेत्विति—अस्य "इत्याहु" रित्यग्रेण सम्बन्धः । सत्प्रतिपक्षस्यानित्यदोषत्ववादिनस्तु इत्यर्थः । एतेषां मते "हेतोराभासा हेत्वाभासा" इति षष्ठीसमासाश्रयणेन हेत्वाभासपदं व्यभिचारादिदोषपरम् । दोषवत्ता च सर्वत्रैव एकज्ञानविषयत्वसम्बन्धेन दर्शितरीत्या वर्त्तते । लक्षणन्तु—"यद्विषयकत्वेन ज्ञानस्यानुमितिविरोधित्व" मिति दोषाणामेवास्ति नतु दुष्टहेतूनाम् । तादृशदोषवत्त्वं हेत्वाभासत्वमिति दुष्टहेतुलक्षणम् । अर्थात्—व्यभिचारादिदोषवत्सु हेतुषु "साध्याभाववान् पक्षो हेतुश्च" इत्याकारकैकज्ञानविषयत्वसम्बन्धेन हेत्वाभासपदव्यवहारः । सत्प्रतिपक्ष इति—सत्प्रतिपक्षादिस्थले तु विरोधिव्याप्त्यादिकमेव दोषरूपेण ग्रहीतव्यम् । तद्वत्त्वञ्चेति—तादृशदोषवत्त्वञ्च "अयं विरुद्धव्याप्तिविशिष्टोहेतुः" इत्याकारकैकज्ञानविषयत्वसम्बन्धेन ज्ञातव्यम् । उभयत्रापि हेतौ "अयं विरुद्धव्याप्तिविशिष्टो हेतु" रित्याकारकैकज्ञानविषयत्वसम्बन्धः समान इति भावः ।

अत्र शङ्कते—"नच" इति । "एवम्" इति । दर्शितरीत्या एकज्ञानविषयत्वसम्बन्धेन दोषवत्तास्वीकारे सतीत्यर्थः । शङ्काग्रन्थस्यायमाशयः—सत्प्रतिपक्षस्यानित्यदोषतावादिमते बाधोऽप्यनित्यो दोषः स्यात् । कथमिति चेत् ? शृणु । यद्यपि—"वह्निमान् धूमात्" इत्यादिसद्धेतुस्थले पर्वते पक्षे वस्तुतः साध्याभावो नास्तीति न बाधः, तथापि यदि तत्रैव कस्यचित् 'पर्वतो वन्ह्यभाववान्' इत्यकारको बाधभ्रमो जातः तत्र भ्रमज्ञानमेव साध्याभावविषयकत्वेन "पर्वतो वह्निमान्" इत्याकारामनुमितिं प्रतिरोत्स्यति । एवं "वन्ह्यभाववान् पर्वतो धूमश्च" इत्याकारकभ्रमात्मकैकज्ञानविषयत्वसम्बन्धेन धूमात्मकः सद्धेतुरपि तादृशदोषवान् बाधित इत्युच्येत, तेन हेत्वाभासलक्षणस्य सद्धेतावेवातिव्याप्तिः । भ्रमज्ञाननाशे हेतौ बाधितव्यवहाराभाव इति चेद् ? तदा बाधोऽप्यनित्यो दोषः स्याद् ? इति ।

अनित्यदोषवादी समाधत्ते—तत्रेति । तत्र=बाधभ्रमकालीने धूमादिसद्धेतौ ज्ञानस्य="साध्याभाववान् पक्षो हेतुश्च" इत्याकारकज्ञानस्य सम्बन्धत्वाऽकल्पनात्= एकज्ञानविषयत्वसम्बन्धाकल्पनात् । अर्थात् बाधभ्रमकालीने एकज्ञानविषयत्वसम्बन्धकल्पनैव प्रमाणशून्या, यतस्तत्र "अयं (धूमादि) हेतुर्बाधित" इति व्यवहारो न जायते। धूमादिसद्धेतौ तादृशव्यवहाराभाव एव एकज्ञानविषयत्वसम्बन्धस्याघटकः प्रतिरोधक इति यावत्, तत् कथं तत्र लक्षणातिव्याप्तिः स्यादित्यर्थः ।

अत्र सत्प्रतिपक्षित इति—अत्र=प्रतिपरामर्शकालीने धूमादिसद्धेतौ "अयं हेतुः सत्प्रतिपक्षित" इत्याकारकव्यवहारसत्त्वात् दर्शितरीत्या एकज्ञानविषयत्वसम्बन्धकल्पना युज्येत नतु बाधभ्रमस्थले तादृशकल्पनायां किमपि मानं पश्यामः। तस्मात्सत्प्रतिपक्षोऽनित्यो दोष इति पक्षेऽपि न दोषः । बाधस्तु नित्य एव । आहुरित्यस्वरसः सूचितः । तद्बीजन्तु—सत्प्रतिपक्षस्य बाधव्याप्यतया व्याप्यसत्त्वे व्यापकसत्त्वस्याऽवश्यम्भावात् सद्धेतोर्बाधितत्वमावश्यकमेव । यदि तथाव्यवहाराभावात् तस्याऽबाधित्वमुच्यते तदा व्यापकनिवृत्त्या व्याप्यनिवृत्तेः सत्प्रतिपक्षितत्वमपि नाङ्गीकर्त्तव्यम्, भ्रमादेव सत्प्रतिपक्षितत्वव्यवहारोपपत्तेरिति ज्ञेयम्। अनुमितिविरोधित्वञ्चेति—अस्यायमर्थः—" यादृशविशिष्टविषयकत्वेन ज्ञानस्यानुमितितत्करणान्यतरविरोधित्वं तत्त्वं हेत्वाभासत्वमिति " लक्षणं कर्त्तव्यम् । अन्यथा "अयं हेतुर्व्यभिचारी" इत्याकारकज्ञानस्य साक्षादनुमितिविरोधिता नास्तीति व्यभिचार्यादिहेतुष्वव्याप्तिः स्यात् *अनुमितिपदेनाधिकार्थग्रहणे तु व्यभिचार्यादिहेतुषु व्याप्तिज्ञानप्रतिबन्धद्वाराऽनुमितिप्रतिबन्धकत्वेन नाव्याप्तिरिति भावः ।

किञ्च—यद्धेतुविषयकं दोषज्ञानं जातं तद्धेतुविषयिकाया एवानुमितेः प्रतिबन्धकं ज्ञेयम् । यथा " पर्वतो वह्निमान् प्रमेयत्वाद् " इत्यत्र " अयं प्रमेयत्वहेतुर्व्यभिचारी वह्निरूपसाध्याभाववति ह्रदेऽपि विद्यमानत्वाद्" इति "प्रमेयत्व" हेतौ व्यभिचारात्मकदोषज्ञाने जाते तद्धेतुकाया अनुमितेरेव तादृशदोषज्ञानं प्रतिबन्धकं नतु धूमहेतुकायाः पर्वतपक्षकाया वन्ह्यनुमितेरित्याशयवानाह—दोषज्ञानञ्चेति । यद्धेतुविषयकम्= यद्धेतुविशेष्यकयद्धेतुघटितव्यभिचारप्रकारकम् । तद्धेतुकानुमितौ=तद्धेतुघटितनिरुक्ताव्यभिचरितसाध्यसामानाधिकरण्यप्रकारक—तद्धेतुविशेष्यकव्याप्तिज्ञानकरणकानुमितितत्करणान्यतरस्मिन्नित्यर्थः । प्रतिबन्धकम्=अनुमितिविघटकम् । तेन=हेतुविशेषान्तर्भावेन प्रतिबध्यप्रतिबन्धकभावस्वीकारेणेत्यर्थः ।

---

* अनुमितिपदेनाधिकार्थग्रहणे तु इति । अजहत्स्वार्थवृत्त्या अनुमितिपदमनुमितिनिष्ठकार्यतानिरूपकसम्बन्धित्वेनानुमितितत्कारणज्ञानपरम् । सम्बन्धित्वञ्च—तत्कार्यताविषयकसाक्षात्कारजनकसाक्षात्कारविषयतात्मकनिरूपकत्वम् । अधिकन्तु गादाधर्यां तद्विवेचनायां गोलोकनाथ्यां कालीशाङ्कर्याञ्च अभिहितमिति-तत एव कथेहत्य निरीक्षणीयम् ।

**एकहेताविति** एकहेतौ=प्रमेयत्वादिहेतौ । **व्यभिचारज्ञानेऽपि**=साध्याभाववद्वृत्तित्वग्रहेऽपि अर्थात् वह्निविशेष्यकवह्निसमानाधिकरणाऽभावप्रतियोगितावच्छेदकधूमत्वात्मकव्यभिचारनिष्ठयत्किञ्चित्सम्बन्धावच्छिन्नप्रकारताशालिनिश्चयेऽपि । हेत्वन्तरेण=धूमादिना, वन्ह्यादिसाध्याऽव्यभिचरितेनेति शेषः । **अनुमित्युत्पत्तेः**="पर्वतो वह्निमान्" इत्याद्यनुमितिसत्त्वात् । **तदभावाद्यनवगाहित्वाच्च**=ग्राह्या-(साध्या) भावाद्यनवगाहित्वात् । अर्थात्-"पर्वतो वन्ह्यभाववान्" इत्याकारकवन्ह्यभावाविषयकत्वात् **व्यभिचारज्ञानस्यानुमितिविरोधित्वाऽभावेऽपि** = "प्रमेयत्वं हेतुर्व्यभिचारी" इत्याकारकव्यभिचारज्ञानस्य "पर्वतो वह्निमान्" इत्याकारकधूमहेतुकाऽनुमितिप्रतिबन्धकत्वाऽभावेऽपि **न क्षतिः**=नाव्याप्तिः हेत्वाभाससामान्यलक्षणस्य व्यभिचारेऽव्याप्तिर्नेत्यर्थः । अस्य साक्षादनुमित्यप्रतिबन्धकत्वेऽपि परम्परया तत्प्रतिबन्धकत्वमस्त्येवेति भावः ।

वस्तुतस्तु एवं व्यापनीयम्—**तदभावाद्यनवगाहित्वाच्चेति**—अनुमित्यभावानवगाहित्वादित्यर्थः । अयं भावः-यथा—"ह्रदो वह्निमान्" इत्याकारानुमित्यभावावगाहित्वं "ह्रदो वन्ह्यभाववान्" इति बाधदोषस्य, तथा "पर्वतो वह्निमान्" इत्याकारानुमित्यभावावगाहित्वं "वन्ह्यभाववद्वृत्ति प्रमेयत्वम्" इति व्यभिचारदोषस्य नास्ति, तथापि तत्करणान्यतरत्वनिवेशेन व्यभिचारादौ हेत्वाभाससामान्यलक्षणस्याऽव्याप्तिर्नास्ति । अयमत्र सारः—साध्याभावावगाहित्वाद् बाधादिदोषाणां साक्षादनुमितिप्रतिबन्धकत्वं युक्तं नतु तथा व्यभिचारादिदोषाः साक्षादनुमित्यभावावगाहिनः सपक्षस्थले साध्याभावानवगाहित्वात्तेषाम्, तथापि दर्शितरीत्या अनुमितिकरणव्याप्तिज्ञानादिप्रतिबन्धकत्वात् परम्परया तेषामप्यनुमितिप्रतिबन्धकत्वं नापन्होतुं शक्यते । इत्थञ्च हेत्वाभाससामान्यलक्षणस्य "धूमवान्वन्हे" रित्यादौ न क्षतिः=नाव्याप्तिरित्यर्थः । "**सङ्क्षेप**" इति—*अधिकमाकरग्रन्थेषु द्रष्टव्यमितिबालबुद्धिव्याकुलताभयान्न प्रपञ्चितमित्यर्थः ।

† **यादृशपक्षसाध्यहेताविति**—अस्यायमर्थः-यत्पक्षके यत्साध्यके हेतौ यावन्तो दोषाः प्रतीयेरन् तावन्त एव तत्र भिन्ना भिन्ना हेत्वाभासा मन्तव्याः । **पञ्चत्वकथनन्त्विति**—यत्तु "**सव्यभिचारविरुद्धप्रकरणसमसाध्यसमातीतकाला हेत्वाभासाः**" (न्या० २।२।४९) इत्याचार्योक्त्यनुरोधिमूलकृत्पञ्चत्वोक्तिश्च

---

* गादाधर्यादिग्रन्थेष्विलत्र तात्पर्यम् ।

† तथाच यादृशविशिष्टविषयकत्वमनुमितिप्रतिबन्धकतानतिरिक्तवृत्ति तादृशविशिष्टान्तराघटितत्वेनेति । यादृशविशिष्टविषयकत्वं तथाविधं तादृशविशिष्टो दोष इति पर्यवमितोऽर्थ इत्यादि बहूक्तं रामरुद्याम् । इह बालाऽनुपयोगं मत्वा सारदृष्ट्या अप्यस्माभिर्नाधिकं प्रपञ्चितम । तथा क्रियमाणेऽप्याधुनिकानां सुकुमारधियां काठिन्यानतिवृत्तेः ।

तत्सम्भवस्थलाभिप्रायेण । अर्थाद् हेत्वाभासानामियत्ता कर्तुं न शक्यते * दोषाणामानन्त्यात्, किन्तु "वायुर्गन्धवान् स्नेहात्" इत्यत्रैकस्मिन्नेवाऽनुमाने पञ्चापि दोषा घटयितुं शक्यन्ते । तथाहि-गन्धाभाववति जले वृत्तित्वात् स्नेहहेतुर्व्यभिचारी, गन्धवत्यां पृथिव्यामविद्यमानत्वाद् विरुद्धोऽपि, "वायुर्गन्धाभाववान् अपृथिवीत्वाद्" इति सत्प्रतिपक्षितोऽपि, स्नेहहेतुर्वाय्वात्मके पक्षे न वर्त्तते "पाकजगुणवत्त्वो" पाधिना सोपाधिकोपीत्यसिद्धः, स्नेहरूपहेतोः गन्धरूपसाध्यस्य वायुपक्षेऽभावोऽप्यस्तीति बाधित इत्यभिप्रायेणाचार्यसूत्रानुसारी "हेत्वाभासास्तु पञ्चधा" इतिमूलग्रन्थो विद्यते नतु सम्भाव्यमानहेत्वाभासान्तरव्यावृत्त्यर्थं इति ध्येयम् ॥७१॥

**(का०) आद्यः साधारणस्तु स्यादसाधारणकोऽपरः ।**
**तथैवानुपसंहारी त्रिधाऽनैकान्तिको भवेत् ॥७२॥**

(मु० ) एवञ्च साधारणाद्यन्यतमत्वमनैकान्तिकत्वम् । साधारणः साध्यवदन्यवृत्तिर्हेतुः । तेन च व्याप्तिग्रहप्रतिबन्धः क्रियते । असाधारणः साध्यासमानाधिकरणो हेतुः । तेन साध्यसामानाधिकरण्यग्रहः प्रतिबध्यते । तथा शब्दो नित्यः शब्दत्वादित्यादावसाधारण्यं, शब्दोऽनित्यः शब्दत्वादित्यादौ त्वसाधारण्यभ्रमः । अन्ये तु सपक्षावृत्तिरसाधारणः । सपक्षश्च निश्चितसाध्यवान् । इत्थं च शब्दोऽनित्यः शब्दत्वादित्यादौ यदा पक्षे साध्यनिश्चयस्तदा नासाधारण्यं तत्र हेतुनिश्चयादिति वदन्ति । अनुपसंहारी चात्यन्ताभावाप्रतियोगिसाध्यकादिः । अनेन च व्यतिरेकव्याप्तिज्ञानप्रतिबन्धः क्रियते ।

( प्र० टी० ) परममूले आद्यं विभजते—आद्य इति । हेत्वाभाससामान्यलक्षणमुक्त्वा मूले अनैकान्तिकं लक्षयति-एवञ्चेति । अनैकान्तिकत्वं साधारणत्वाद्युपाधित्रितयान्यतमत्वव्याप्यमित्यर्थः । साधारणादीति—आदिना असाधारणाऽनुपसंहारिणोर्ग्रहः । साधारणं लक्षयति—साधारण इति । साध्यवदन्य इति—साध्यं विद्यतेऽस्येति साध्यवान् पर्वतादिः पक्षः, ततोऽन्यः साध्यवदन्यः जलहृदादिर्विपक्षः तद्वृत्तिर्हेतुः साधारणोऽनैकान्तिक इत्यर्थः । †साध्याभाववद्वृत्तिरिति फलितम् ।

---

* **दोषाणामानन्त्यादिति**—हेतुहेत्वाभासभेदः प्रपञ्च्यमानः पट्सप्ततिशतम्—७६०० इति न्यायवार्तिके । तत्तात्पर्ये तु केवलमसिद्धाश्रयाणां व्यधिकरणविशेषणविशेष्यसन्दिग्धविशेषणविशेष्याऽसमर्थविशेषणविशेष्यभेदेन असङ्ख्याता भेदाः प्रदर्शिताः किम्पुनः सर्वेषाम् । द्रष्टव्यश्चात्र प्रथमाध्याये द्वितीयाह्निके चतुर्थे सूत्रे न्यायवार्तिकं न्यायवार्त्तिकतात्पर्यञ्च ।

† साध्यस्याभावः साध्याभाव इति षष्ठयर्थः प्रतियोगित्वम् । तथाच—यः साध्यप्रतियोगिकाभाववद्वृत्तिर्यो हेतुः स साधारणोऽनैकान्तिको हेत्वाभास इत्यर्थः । **प्राञ्चस्तु**—साध्येन अभावः साध्याभावः इति व्युत्पत्त्या साध्यावच्छिन्नप्रतियोगिताकभेद एव साध्याभावशब्दार्थ

*तेन चेति—व्याप्तिज्ञानप्रतिबन्ध इति। साध्यवदन्यावृत्तित्वरूपा साध्यसामानाधिकरण्यरूपा या व्याप्तिः तस्या ग्रहो ज्ञानं तत्प्रतिबन्धः। उदाहरणं तु—"पर्वतो वह्निमान् प्रमेयत्वाद्" इति। अत्र हि प्रमेयत्वं वन्हिरूपसाध्यवदन्यहृदवृत्तित्वाद् व्यभिचारी, साधारणो व्यभिचारीत्यर्थः। नचोक्तं साधारणलक्षणं विरुद्धेऽतिव्याप्तमिति वाच्यम्। उपधेयसङ्करेप्युपाधेरसाङ्कर्यादिति न्यायेन विरुद्धस्यापि सव्यभिचारत्वेन लक्ष्यत्वात्। अधिकन्तु नृसिंहप्रकाशिकायां द्रष्टव्यम्। असाधारणं लक्षयति—साध्यासमानाधिकरण इति। साध्यसामानाधिकरण्यात्मकव्याप्तिविकल इत्यर्थः। एतत्प्रतिबध्यं व्याप्तिज्ञानमित्याशयेनाह—तेनेति। असाधारणहेत्वाभासेनेत्यर्थः! साध्यसामानाधिकरण्यग्रहः=सिद्धान्तव्याप्तिग्रह इत्यर्थः। अस्योदाहरणस्थलमाह—"यथा शब्दो नित्य" इति। शब्दत्वं हि सर्वेभ्यो नित्येभ्योऽनित्येभ्यश्च व्यावृत्तं शब्दमात्रवृत्ति। "शब्दत्वं हेतुर्न साध्यसमानाधिकरणः" इति निश्चये जाते "शब्दो नित्य" इत्यनुमितिर्नोदेति। मीमांसकास्तु—"शब्दोऽनित्यः-शब्दत्वात्" इतीदमप्युदाहरणमसाधारणस्य मन्वते तन्न युक्तम्, कार्यत्वहेतुना शब्दस्यानित्यत्वे निश्चिते अनित्यत्वरूपसाध्यसमानाधिकरणत्वात् शब्दत्वस्य कथमसाधारणता। किन्त्वसाधारणत्वस्य भ्रान्तिरेवेत्यर्थकः "शब्दोऽनित्य" इत्यादिग्रन्थः।

प्राचां †मतमाह—अन्येत्विति। अस्य—"वदन्ति" इत्यग्रेणान्वयः। सपक्षावृत्तिरिति—सपक्षे=निश्चितसाध्यवति न वृत्तिर्यस्य सः सपक्षावृत्तिः। शिष्टं व्याख्यातप्रायम्। सारस्तु—"पक्षे साध्यसन्देहदशायामेवाऽसाधारणस्य हेत्वाभासता नतु निश्चयदशायाम्। तदा पक्षस्यैव सपक्षत्वेन निश्चितसाध्यवद्व्यावृत्तत्वाभावादित्यनित्यदोषत्वमसाधारणस्य" इति बोध्यम्। अनुपसंहारिणं लक्षयति—अनुपसंहारीति। अत्यन्ताभावस्य न प्रतियोगी साध्यकादिर्यस्य। साध्यमेव साध्यकम् आदिना पक्षहेत्वोर्ग्रहः। तथाच यत्र पक्षः ‡साध्यं हेतुश्चैतत्त्रयं केवलान्वयि स्यात् सः अनुपसंहारी अनैकान्तिको हेत्वाभासः। उदाहरणं यथा—"सर्वमनित्यं प्रमेयत्वात्" इति। अत्र सर्वस्यापि पक्षत्वात् व्याप्तिग्रहस्थलान्तराभावः। सर्वमिति पक्षोऽत्यन्ताऽभावाऽप्रतियोगी हेतुरपि तथा। एतस्य फलं दर्शयति—तेन चेति

---

इत्याहुः। तेन न यथाश्रुते "कपिसंयोगी एतद्वृक्षत्वात्" इत्यादौ एतद्वृक्षत्वादेः कपिसंयोगाभाववद्वृत्तित्वादतिव्याप्त्यापत्तिः।

* अस्याऽनुमितितत्करणान्यतरविरोधिज्ञानविषयत्वाभावात् कथं हेत्वाभासत्वमिति शङ्कायां दूषकताबीजमाह—तेन चेति।

† असाधारणस्याऽनित्यदोषत्ववादिनामित्यर्थः।

‡ पक्षो वा साध्यं वा हेतुर्वेत्यत्र तात्पर्यम्। यदा बहुव्रीहिः समासो न विवक्षितस्तदा दोषस्यैवेदं लक्षणम्।

व्यतिरेकेति—साध्याभावव्यापकीभूताभावप्रतियोगित्वरूपायाः ( वक्ष्यमाणायाः ) प्रतिबन्धः क्रियते। "प्रमेयत्वं हेतुरनित्यत्वाभाववद्वृत्तिः" इति निश्चये उक्ताकारव्याप्तिज्ञानप्रतिबन्धे "सर्वमनित्यम्" इत्यनुमितिप्रतिबन्धः सिद्धः।

इदन्तु बोध्यम्—केवलान्वयिसाध्यकस्थले तु अन्वयव्याप्तिज्ञानादनुमितिर्भवत्येवेति। यथा-"घटोऽभिधेयः प्रमेयत्वात् पटवत्" इत्यादौ यत्र २ प्रमेयत्वं तत्र २ अभिधेयत्वमित्यन्वयव्याप्तिनिश्चयस्थलं पटः। तस्मादत्र नाऽस्य हेत्वाभासत्वम्।

(मुक्ता०) विरुद्धस्तु साध्यव्यापकीभूताभावप्रतियोगी। अयं साध्याभावग्रहसामग्रीत्वेन प्रतिबन्धकः। सत्प्रतिपक्षे तु प्रतिहेतुः साध्याभावसाधकः, अत्र तु हेतुरेक एवेति विशेषः। साध्याभावसाधक एव हेतुः साध्यसाधकत्वेनोपन्यस्त इत्यशक्तिविशेषोपस्थापकत्वाच्च विशेषः। सत्प्रतिपक्षः साध्याभावव्याप्यवान्पक्षः। अगृहीताप्रामाण्यकसाध्यव्याप्यवत्त्वोपस्थितिकालीनागृहीताप्रामाण्यकसाध्याभावव्याप्यवत्त्वोपस्थितिविषयस्तथेत्यन्ये। अत्र च परस्पराभावव्याप्यवत्ताज्ञानात्परस्परानुमितिप्रतिबन्धः फलम्।

( प्र० टी० ) विरुद्धं लक्षयति—विरुद्धस्त्विति साध्यस्य व्यापकीभूतो योऽभावः अर्थात् साध्यसमानाधिकरणे वर्त्तमानो योऽभावः तस्य प्रतियोगी विरुद्धो हेत्वाभासः। * साध्याभावव्याप्तो विरुद्ध इत्यर्थः। उदाहरणं यथा—"शब्दो नित्यः कृतकत्वात्" इति अत्र शब्दः पक्षः, नित्यत्वं साध्यं, कृतकत्वं हेतुः। परन्तु शब्दात्मके पक्षे नित्यत्वसाधनाय प्रयुक्तः "कृतकत्वात्" इति हेतुर्विरुद्धः। यतो नित्यत्वसाध्यस्य व्यापकीभूतोऽभावः कृतकत्वाभावो गगनादिषु वर्त्तते तादृशाऽभावस्य प्रतियोग्येव कृतकत्वमिति लक्षणसङ्गतिः। अर्थात्—कृतकत्वं हेतुः साध्याभावेन अनित्यत्वेन व्याप्तः=यत्र २ कृतकत्वं तत्र २ अनित्यत्वमिति व्याप्तेराश्रयः, अतो विरुद्धः। साध्यसाधनाय प्रयुक्तो हेतुर्यः साध्याभावमेव साधयेदसौ विरुद्ध इति तु परः सारः। मुनिरपि—सिद्धान्तमभ्युपेत्य तद्विरोधी विरुद्ध' ( न्या० १।२ ६ ) इत्याह। "अनित्यत्वव्याप्यकृतकत्ववानयं शब्द" इत्याकारकविरोधिपरामर्शज्ञानात् "नित्यः शब्दः" इत्याकारानुमितेः प्रतिबन्ध इत्याशयेनाह—अयञ्चेति। साध्याभावग्रहः=साध्याभावज्ञानम्, तत्सामग्रीत्वेन=तत्साधकत्वेनेत्यर्थः। अत्राह नीलकण्ठः—साध्याभावव्याप्तिः=साध्यवदन्यवृत्तित्वम् असाधारणस्य तु निश्चितसाध्यवदवृत्तित्वरूपतया नाऽभेदः। नवीनमते तु—साध्याभावस्य व्यतिरेकव्याप्तिः साध्यव्यापकाभावप्रतियोगित्वरूपेति नासाधारण्याभेदः। एतादृशव्याप्तिविशिष्टहेतुमत्ताज्ञानं साक्षादनुमितिप्रतिबन्धकमिति ध्येयम्। ननु विरुद्धसत्प्रतिपक्षयोः साध्याभावसाधकत्वे न कश्चिद्विशेष इत्याशङ्कायामाह सत्प्रतिपक्ष इति। प्रतिहेतुः=द्वितीयहेतुः।

* साध्याभावनिरूपितव्याप्त्याश्रयः।

अयमाशयः—सत्प्रतिपक्षस्थले द्वौ हेतू परस्परं व्याप्तिज्ञानप्रतिबन्धकौ; विरुद्धे तु एक एव हेतुः साध्याभावेन व्याप्तो व्याप्तिज्ञानप्रतिबन्धकतयाऽनुमितिप्रतिबन्धकः ।

भेदकान्तरमप्याह—**साध्याभावसाधक** † इति । **अशङ्किविशेषेति** । प्रयोक्तुरिति शेषः । स्पष्टमन्यत् । **रघुनाथभट्टाचार्य**कृतदीधितिग्रन्थानुसारं सत्प्रतिपक्षं लक्षयति—**सत्प्रतिपक्ष** इति । साध्याभावस्य व्याप्यः साध्याभावव्याप्यः । साध्याभावव्याप्यो हेतुर्यस्मिन् पक्षे वर्त्तते असौ साध्याभावव्याप्यवान् पक्ष एव सत्प्रतिपक्षपदेनोच्यते । तदिदं सत्प्रतिपक्षदोषलक्षणं, तद्दोषवत्ता च हेतौ पूर्वोक्तज्ञानसम्बन्धेन ज्ञेया । यथा—" ह्रदो वह्निमान् धूमात्, ह्रदो वन्ह्यभाववान् जलात् " इत्यादि । अत्र—ह्रदपक्षे वह्निसाध्यसिद्धये प्रयुक्तो धूमहेतुः सत्प्रतिपक्षहेत्वाभासः । कुतः "जलाद्" इत्ययं हेतुः साध्यस्य वह्नेरभावेन व्याप्यः, तादृशसाध्याभावव्याप्यहेतुमान् ह्रदात्मकः पक्षः सत्प्रतिपक्षः, तादृशे ह्रदे विद्यमानो धूमो हेतुरपि सत्प्रतिपक्षः । अत्र द्वावेव हेतू परस्परं विरोधिनावित्युभयत्रापि सत्प्रतिपक्षव्यवहारः ।

आचार्यान्तरमतेन सत्प्रतिपक्षलक्षणमाह—**अगृहीताप्रामाण्यकेति** । अस्यायमर्थः—न गृहीतं=निश्चितं अप्रामाण्यं यस्य तदगृहीताप्रामाण्यकम्, तादृशं यत्साध्यव्याप्यवत्त्वं, तादृशसाध्यव्याप्यवत्त्वेन या उपस्थितिः=ज्ञानविशेषः तत्कालीनं यद् अगृहीताप्रामाण्यकसाध्याभावव्याप्यवत्त्वं, तद्रूपत्वेन य उपस्थितिविषयोऽसौ हेतुः तथा=सत्प्रतिपक्षो हेत्वाभासः । अयमाशयः—" साध्यव्याप्यहेतुमानयं पक्ष " इत्याकारकपरामर्शज्ञानकाले यस्मिन्हेतौ अप्रामाण्यनिश्चयो न स्यात् यदि तस्मिन्नेव हेतौ " साध्याभावव्याप्यहेतुमानयं पक्ष " इत्याकारकः परामर्शोऽपि अप्रामाणिको निश्चितो न भवेत्, तदासौ हेतुः " सत्प्रतिपक्ष " इत्युच्यते । अस्य दूषकताबीजं दर्शयति—अत्रचेत्यादिना । अत्र च=सत्प्रतिपक्षे चेत्यर्थः । **परस्पराभावव्याप्यवत्ताज्ञानात्**=परस्परसाध्याभावव्याप्तिज्ञानादित्यर्थः । **परस्परानुमितिप्रतिबन्धः**=अर्थात् " ह्रदो वह्निमान् " "ह्रदो वह्न्यभाववान्" इत्यन्योन्यानुमितिप्रतिबन्धः फलम् । परमिदं न सम्यक् एकस्मिन्नेव हेतौ साध्यतदभावविषयकपरामर्शस्याऽसम्भवात् । नहि "कपिसंयोगी एतत्त्वात्=पुरोवर्त्तिवृक्षत्वात् " इत्यत्र सत्प्रतिपक्षव्यवहारः प्रामाणिकानाम् ।

एतदुक्तम्भवति—यत्रैकस्मिन्नेव वृक्षे शाखाद्यवच्छेदेन कपिसंयोगः मूलावच्छेदेन तदभावोऽपि, तदेतद्द्वयमेव पुरोवर्त्तिवृक्षत्वहेतुना साध्येत । तत्र " कपिसंयोगव्याप्यपुरोवर्त्तिवृक्षत्ववानयं वृक्षः, कपिसंयोगाभावव्याप्यपुरोवर्त्तिवृक्षत्ववानयं वृक्षः" इति कपिसंयोगतदभावविषयकविरोधिपरामर्शेन एकस्मिन्नेव वृक्षत्वहेतौ सत्प्रतिपक्षव्यवहारो न

---

† यद्यपि साध्याभावव्याप्यवान्पक्षः सत्प्रतिपक्षः, विरोधस्तु साध्यव्यापकीभूताभावप्रतियोगी प्रकृतो हेतुरिति स्वरूपभेदो वर्त्तत एव तथापि यथा साधारणादीनां परस्परवैलक्षण्येपि दूषकताबीजस्यैक्येनैकहेत्वाभासत्वं तथा सत्प्रतिपक्षविरोधयोरपि विरोध्यनुमितिसामग्रीत्वेन प्रतिबन्धरूपदूषकताबीजैक्यादेकहेत्वाभासत्वं स्यादिति शङ्काशयः ।

कस्याप्याचार्यस्य सम्मतः। किन्तु यत्र उभौ हेतू परस्परं विरुद्धौ स्यातां तत्र साध्यतदभावविषयकपरस्परप्रतिस्पर्धिपरामर्शीययथार्थज्ञानात् हेतौ सत्प्रतिपक्षत्वकल्पना युक्ता तस्मादगृहीतेत्यादिपरामर्शलक्षणमसङ्गतम् । निर्दुष्टं लक्षणन्तु--" स्वसाध्यविरुद्धसाध्याभावव्याप्यवत्तापरामर्शकालीनसाध्यव्याप्यवत्तापरामर्शविषयः सत्प्रतिपक्षः " । उदाहरणं यथा—ह्रदो वह्निमान् धूमात्, " ह्रदो वन्ह्यभाववान् जलाद् " इति । अत्र धूमहेतौ सत्प्रतिपक्षव्यवहारः । तथाहि प्रकृते " स्व " पदेन जलहेतुग्रहणं, तस्य साध्यो वन्ह्यभावः, तद्विरुद्धं वह्निरूपं साध्यं तदभावविषयकपरामर्शसमानकाले एव वह्निव्याप्यधूमवानयं ह्रद" इति ह्रदे परामर्शविषयो धूमहेतुरेव सत्प्रतिपक्षव्यवहारभाक्।

" वन्ह्यभावव्याप्यजलवान् ह्रद " इति परामर्शकाले जायमानो वन्हिसाध्यविषयको यः परामर्शः " वह्निव्याप्यधूमवानयं ह्रद " इत्याकारः तद्विषयो धूमरूपहेतुः सत्प्रतिपक्ष इत्यर्थः । प्रस्थानरत्नाकरे तु—" पक्षे साध्यधीप्रतिबन्धकः सत्प्रतिपक्षः " यथा—जलमुष्णं स्पर्शवत्त्वात्, नोष्णमतेजस्त्वाद् " इत्युक्तम् । अत्र जलात्मके पक्षे उष्णत्वधीप्रतिबन्धकत्वं स्पर्शवत्त्वहेतोर्विरोधिपरामर्शकाल एवेत्यपि ज्ञेयम् । अत्रापि " उष्णत्वव्याप्यस्पर्शत्ववज्जलम्, उष्णत्वाऽभावव्याप्याऽतेजस्त्ववज्जलम् " इति परामर्शद्वयेन परस्परप्रतिबन्धाद् उष्णत्वस्योष्णत्वाभावस्य वा नानुमितिरिति भावः ।

( मु० ) अत्र केचित्-यथा घटाभावव्याप्यवत्ताज्ञाने विद्यमानेऽपि घटचक्षुःसंयोगे सति घटवत्ताज्ञानं जायते । यथा च शङ्खे सत्यपि पीतत्वाभावव्याप्यशङ्खत्ववत्ताज्ञाने सति पित्तादिदोषे पीतः शङ्ख इति धीर्जायते । एवं कोटिद्वयव्याप्यदर्शनेऽपि कोटिद्वयस्य प्रत्यक्षरूपः संशयो भवति । तथा सत्प्रतिपक्षस्थले संशयरूपानुमितिर्भवत्येव । यत्र चैककोटिव्याप्यदर्शनं तत्राधिकबलतया द्वितीयकोटिभानप्रतिबन्धान्न संशयः । फलबलेन चाधिकस्यबलभावः कल्प्यत इति वदन्ति । तन्न, तदभावव्याप्यवत्ताज्ञाने सति तदुपनीतभानविशेषशाब्दबोधादेरनुदयालौकिकसन्निकर्षाजन्यदोषविशेषाजन्यज्ञानमात्रे तस्य प्रतिबन्धकता लाघवात् । नतूपनीतभानविशेषे शाब्दबोधे च पृथक्प्रतिबन्धकता गौरवात् । तथा च प्रतिबन्धकसत्त्वात्कथमनुमितिः । नहि लौकिकसन्निकर्षस्थले प्रत्यक्षमिव सत्प्रतिपक्षस्थले संशयाकारानुमितिः प्रामाणिकी, येनानुमितिभिन्नत्वेनापि विशेषणीयम् । यत्र च कोटिद्वयव्याप्यवत्ताज्ञानं तत्रोभयत्राप्रामाण्यज्ञानात्संशयो नान्यथाऽगृहीताप्रामाण्यकस्यैव विरोधिज्ञानस्य प्रतिबन्धकत्वादिति ।

( प्र० टी० ) सत्प्रतिपक्षः साध्यतदभावयोः संशयं जनयति नत्वनुमितिं प्रतिरुणद्धि, नहि तदभावव्याप्यवत्ताज्ञानस्य अनुमितिप्रतिबन्धकत्वे किमपि प्रमाण-

मिति रत्नकोषकार नैयायिकस्य मतं दूषयितुमुपन्यस्यति—अत्र केचिदित्यादिना । केचित्=रत्नकोषकारप्रभृतयः । अस्य "वदन्ति" इत्यग्रिमेणान्वयः । "यथाघटाभाववत्ताज्ञाने" इत्यारभ्य "वदन्ति" इत्यन्तग्रन्थस्यायमाशयः—ज्ञानानां परस्परप्रतिबध्यप्रतिबन्धकभावोऽनुभवानुसारं कल्पनीयः नत्वन्यथाऽतिप्रसङ्गात् । तथाहि—कार्यविघटको धर्मः प्रतिबन्धको विरोधीति यावत् । यस्तद्विषयः असौ प्रतिबध्य इत्युच्यते । यत्र—घटवति भूतलेऽन्धकारादिना वस्तुव्यवधानेन वा प्रथमं "घटाभाववद् भूतलम्" इति प्रत्ययो जातः, तत्र घटाभावव्याप्यवत्ताज्ञाने=घटाभावनिष्ठाधेयतानिरूपितभूतलनिष्ठाधिकरणताज्ञाने अथवा भूतलनिष्ठाधिकरणतानिरूपितघटाभावनिष्ठाधेयताज्ञाने जातेऽपि पश्चाद् यथावद् घटचक्षुःसंयोगे सति=अर्थात् घटचक्षुःसंयोगेन "घटवद्भूतलम्" इत्याकारकं घटवत्ताज्ञानं जायते=घटवत्ताज्ञानं जातमित्यर्थः, तादृशस्थले चक्षुःसंयोगात्मकगुणस्य प्रबलतया घटाभावविषयकं ज्ञानं प्रतिबध्यं, घटवत्ताविषयकं ज्ञानं तु प्रतिबन्धकं मन्तव्यं यतोऽत्र दोषापेक्षया गुणः प्रबलः ।

यत्र निर्दुष्टचक्षुष्मतः पुरुषस्य "पीतत्वाभावव्याप्यशङ्खत्ववानयं शङ्खः" इति परामर्शो वर्त्तते तस्यैव च कालान्तरे सत्यपि शङ्खे पीतत्वाभावव्याप्यशङ्खत्ववत्ताज्ञाने, सति पित्तादिदोषे=अर्थात् पित्तादिदोषवशात् "पीतः शङ्खः" इति धीर्जायते=जातेत्यर्थः, तत्र गुणापेक्षया दोषस्यैव प्राबल्यमित्यत्र शङ्खवृत्तिश्वेतताज्ञानं प्रतिबध्यं पीतताज्ञानं तु प्रतिबन्धकम् ।

एवं कोटिद्वयव्याप्येति—अर्थात् यत्र तु मदान्धकारे स्थाणौ पुरुषे वा "स्थाणुर्वा पुरुषो वा" इत्याकारकमेकस्मिन्नेव धर्मिणि विरुद्धकोटि (प्रकार) द्वयोपस्थापकं ज्ञानं जातं, तत्र "स्थाणुत्वव्याप्यवक्रकोटरादिमानयम्, पुरुषत्वव्याप्यकरचरणादिमानयम्" इति परस्परविरोधिपरामर्शद्वयाद् हेतोः प्रत्यक्षात्मकः संशयः=भावाभावावगाहि ज्ञानं भवत्येव । एतादृशस्थले चक्षुःसंयोगादिर्गुणो वा प्रबलः तिमिरादिदोषो वा दुर्बलः उभयोर्विपर्ययो वेति विनिगन्तुं न शक्यते । तथा=एवमेव सत्प्रतिपक्षस्थले=ऽपि हेत्वोः समबलतया संशयरूपा=साध्यतदभावप्रकारिका संशयात्मिका अनुमितिः=परामर्शजन्यं ज्ञानं भवत्येव=जायत एव । अर्थात् गुणदोषयोः समबलत्ववत् सत्प्रतिपक्षेऽपि द्वयोर्हेत्वोः समबलतया "पर्वतो वन्हिमान्न वा" इत्याकारा संशयात्मिका, "शब्दो नित्यो न वा" इत्याकारा वा संशयात्मिकाऽनुमितिस्तत्र तत्र भवत्येवेति सत्प्रतिपक्षस्यानुमितिप्रतिबन्धकत्वोद्भावनमविचारितरमणीयम् । ननु—संशयं प्रति तादृशनिश्चयस्याप्रतिबन्धकत्वे एककोटिव्याप्यवत्तानिश्चयस्थलेऽपि कोटिद्वयोपस्थितिमहिम्ना संशयापत्तिरत आह—यत्र त्वैकेति—

यत्र त्वैककोटिव्याप्यदर्शनं तत्राधिकबलतया द्वितीयकोटिभानप्रतिबन्धान्न संशयः,

तथा प्रतिपादितमधस्तात् । अर्थात् * पित्तादिदोषप्राबल्येन शङ्खादौ पीतत्वसाक्षात्कारस्यैवानुभविकतया शुक्लत्वज्ञाने विद्यमानेऽपि पित्तरूपदोषस्य प्रतिबन्धकत्वं कल्पयित्वा पीततासाक्षात्कारसामग्र्या अधिकबलवत्त्वम् । एवं दूरतादोषे सत्यपि स्थाणुत्वपुरुषत्वयोः स्मृतौ संशयस्यैवोदयात् सामग्र्याः समबलत्वमेवेति फलबलेन धियामधिकसमबलभावः †कल्प्यत इति रत्नकोपकारः ।

तदेतन्मतं खण्डयति—तन्नेत्यादिना । तदभाववत्ताज्ञाने सतीति—साध्याभाववत्ताज्ञाने सतीत्यर्थः । तदुपनीतभानेति—उपनीतभानम्=अलौकिकसन्निकर्षजन्यसाक्षात्कारः । आदिना अनुमितिपरिग्रहः । अनुदयात्=उत्पत्त्यभावात् । लौकिकसन्निकर्षाजन्यदोषविशेषाजन्यज्ञानमात्रे तस्य (साध्याभाववत्ताज्ञानस्य) प्रतिबन्धकता लाघवात् । अस्य—समाधानग्रन्थस्यायमभिप्रायः—धियां परस्परं प्रतिबध्यप्रतिबन्धकभावो लाघवानुरोधेनानुसरणीयः । तथाच—यत्र साध्याभावव्याप्यवत्तासाक्षात्कारः तत्रैव विषये साध्यविषयकोऽलौकिकसन्निकर्षजन्यसाक्षात्कारः अनुमितिः शाब्दबोधो वा न भवति । "साध्याभावविषयकं परामर्शप्रत्यक्षात्मकं ज्ञानं लौकिकसन्निकर्षाजन्यदोषविशेषाजन्यज्ञानत्वावच्छिन्नम्प्रति ( ज्ञानमात्रम्प्रति ) प्रतिबन्धकम्" इत्यस्ति नियमः । अर्थात् साक्षात्कारात्मकसाध्याभावव्याप्यवत्ताज्ञानस्य लौकिकसन्निकर्षनिष्ठजनकतानिरूपितजन्यताशून्यज्ञानमात्रम्प्रति दोषविशेषनिष्ठजनकतानिरूपितजन्यताशून्यज्ञानमात्रम्प्रति च प्रतिबन्धकता । शाब्दबोधादिज्ञानं न लौकिकसन्निकर्षजन्यं, किन्तु पदज्ञानादिजन्यं "पीतः शङ्खः" इत्यादिज्ञानञ्च न दोषविशेषाऽजन्यं किन्तु पित्तादिदोषविशेषजन्यमेव । इत्थं साध्याभावव्याप्यवत्ताज्ञानस्य शाब्दबोधादिज्ञानम्प्रति प्रतिबन्धकत्वं "पीतः शङ्खः" इत्यादिज्ञानम्प्रति चाऽप्रतिबन्धकत्वं दर्शितलाघवसिद्धमेवोपादेयं नतु प्रतिबध्यकोट्यवगाहिज्ञानशरीरे भिन्नभिन्ननियमनिवेशेन गौरवमादरणीयम् । तेन "पीतत्वाभावव्याप्यशङ्खत्ववानयं शङ्खः" इत्याकारकः परामर्शः "पीतः शङ्खः" इति ज्ञानस्य न प्रतिबन्धकः शङ्खवृत्तिपीतिमज्ञानस्य पित्तात्मकदोषविशेषजन्यत्वात् । साध्याभावविषयकं परामर्शात्मकं ज्ञानं शाब्दबोधमनुमितिञ्च प्रतिबध्नाति नतूक्ताकारं ज्ञानमिति तु निष्कर्षः ।

एतदेवोपसंहारव्याजेनाह—* ननूपनीतभानविशेष इति । "उपनीतभान

---

* **तथाच**—तत्र पीतत्वप्रकारकनिश्चयस्यैवोत्पत्त्या पित्तादिदोषस्यैव प्रतिबन्धकत्वं कल्प्यते, दूरत्वादिदोषे सत्यपि कोटिद्वयव्याप्यवत्ताज्ञानस्थले संशयस्यैवोत्पत्त्या तत्र समबलत्वमेव स्वीक्रियत इति भावः ।

† **कल्पना**प्रकारश्च—"पीततासाक्षात्कारसामग्री प्रबला सत्यपि शङ्खे शुक्लत्वज्ञाने पीतः शङ्ख इत्यनुभवात् । "स्थाणुर्वा पुरुषो वा" इति संशयज्ञानं समबलदोषजन्यं द्वयोः स्मृतौ सत्यामपि उभयकोट्यवगाहनाद् यन्नैवं तन्नैवं" यथा घट इति ज्ञानम् ।

विशेषे शाब्दबोधे च ननु पृथक् प्रतिबन्धकता" इत्यन्वयः । उक्तनियमानुरोधेन साध्याभावव्याप्यवत्ताज्ञानस्य अलौकिकसाक्षात्कारविशेषे शाब्दबोधे च पृथक् प्रतिबन्धकताकल्पनमयुक्तमित्यर्थः । अर्थात् यत्र विषये साध्याभावविषयकं ज्ञानमुत्पन्नं तत्रैव अलौकिकसन्निकर्षजन्यसाध्यविषयकं ज्ञानमनुमितिज्ञानम्प्रति प्रतिबन्धकं, अलौकिकसन्निकर्षजन्यज्ञानादिकम्प्रति पृथक्प्रतिबन्धकतायां गौरवमेव । अतः सत्प्रतिपक्षस्थले साध्याभावविषयकपरामर्शात्मकप्रतिबन्धकसत्त्वे नैवानुमितिरिति बोध्यम् । तत्र तस्याः साध्याभावव्याप्यवत्ताज्ञाननिष्ठप्रतिबन्धकतानिरूपितप्रतिबध्यताकोटौ प्रविष्टत्वादेवेति सिद्धम् ।

एवं रत्नकोषकारमतानुसारं दर्शितप्रतिबध्यप्रतिबन्धकभावनियमे " अनुमितिभिन्नत्वेन " इति पदस्य निवेशोऽपि निरावश्यकः । एतदेव स्पष्टयन्नाह—**नहि लौकिकसन्निकर्षस्थल** इत्यादि । हि=यतः लौकिकसन्निकर्षस्थले प्रत्यक्षमिव सत्प्रतिपक्षस्थले न संशयानुमितिः प्रामाणिकीत्यन्वयः । लौकिकसन्निकर्षस्थले प्रत्यक्षस्य प्रामाण्यं सत्प्रतिपक्षस्थले च संशयानुमितेरप्रामाण्यमित्येव प्रामाणिकव्यवहार इत्यर्थः ।

यत्तु—" स्थाणुर्वा पुरुषो वा " इत्याकारकप्रत्यक्षसंशयोदाहरणेन सत्प्रतिपक्षस्थले संशयाकारानुमितिः स्वीकृता तदप्ययुक्तमित्याशयेनाह—**यत्रत्विति** । यत्र= स्थाणुर्वा पुरुषो वेत्यादौ संशयस्थले **उभयकोटिव्याप्यवत्ताज्ञानम्**=उभयकोटिनिष्ठा या व्यापकता, तादृशव्यापकतानिरूपिता या व्याप्यता तद्वत्ताज्ञानम्, तत्रोभयत्र कोटौ अप्रामाण्यज्ञानात् प्रमात्वाभावनिश्चयात् संशयो जायत इति शेषः । न, **अन्यथा**= अप्रामाण्यज्ञानाभावे तु न संशयः । अर्थात्—कस्याञ्चित् कोटौ प्रामाण्यनिश्चये सति न संशयः । अत्र हेतुमाह—**अगृहीताप्रामाण्यकस्येति**—न गृहीतं ज्ञातम् अप्रामाण्यं यस्य तत् "अगृहीताप्रामाण्यकं" तस्य तादृशस्यैव **विरोधिज्ञानस्य** प्रतिबन्धकत्वम् । अर्थात् यस्य प्रामाण्यं निश्चितं तस्यैव विरोधिज्ञानस्य प्रतिबन्धकत्वं गृहीताऽप्रामाण्यकस्य तु प्रतिबध्यत्वमेव । एवं सत्प्रतिपक्षस्थले एकतरकोटेरप्यप्रामाण्ये गमकाभावात् परस्पराभावव्याप्यवत्ताज्ञानतया अनुमितिप्रतिबन्धे सिद्धे तत्र संशयाकारानुमितिस्वीकारो रत्नकोषकारस्यासमीक्ष्यकारितैवेति दिक् ।

( मुक्ता० ) असिद्धिस्त्वाश्रयासिद्ध्याद्यन्यतमत्वम् । आश्रयासिद्धिः पक्षे पक्षतावच्छेदकस्याभावः । यदि च काञ्चनमयः पर्वतोवह्निमानिति साध्यते तत्र पर्वतो न काञ्चनमय इति ज्ञाने विद्यमाने काञ्चनमये पर्वते परामर्शप्रतिबन्धः फलम् । स्वरूपासिद्धिस्तु पक्षे व्याप्यत्वाभिमतस्य हेतोरभावः । अत्र च ह्रदो द्रव्यं धूमादित्यादौ पक्षे व्याप्यत्वाभिमतस्य हेतोरभावे ज्ञाते पक्षे साध्यव्याप्यहेतुमत्ताज्ञानरूपस्य परामर्शस्य प्रतिबन्धः फलम् । साध्याप्रसिद्ध्यादयस्तु व्याप्यत्वासिद्धिमध्येऽन्तर्भूताः । साध्याप्रसिद्धिरपि व्याप्यत्वासिद्धिः । साच साध्ये साध्यतावच्छेदक-

स्याभावः। तथाच काञ्चनमयवह्निमानित्यादौ साध्ये साध्यतावच्छेदकाभावे ज्ञाते साध्यतावच्छेदकविशिष्टसाध्यव्याप्यवत्ताज्ञानरूपपरामर्शप्रतिबन्धः फलम्। एवं हेतौ हेतुतावच्छेदकाभावः साधनाप्रसिद्धिः। यथा च काञ्चनमयधूमादित्यादौ। अत्र हेतुतावच्छेदकविशिष्टहेतोर्ज्ञानाभावात्तद्धेतुकव्याप्तिज्ञानादेरभावः फलम्। एवं वह्निमान् नीलधूमादित्यादौ गुरुतया नीलधूमत्वं हेतुतानवच्छेदकमपि व्याप्यत्वासिद्धिरित्यपि वदन्ति।

(प्र० टी०) असिद्धिं लक्षयति—असिद्धिस्त्विति। आश्रयासिद्ध्यादिभेदाभाववान् समुदाय असिद्धिरित्यर्थः। सा च त्रिधा। आश्रयासिद्धिः व्याप्यत्वासिद्धिः साधनाप्रसिद्धिरिति भेदात्। तत्र आद्यां लक्षयति—आश्रयासिद्धिरिति। पक्षे=पर्वतादौ यः पक्षनिष्ठो धर्मः पक्षतावच्छेदकः, तस्याभावः आश्रयासिद्धिः, तद्वान् हेतुराश्रयासिद्धो हेत्वाभास इत्यर्थः। एवमग्रेऽपि व्याख्येयम्। अस्योदाहरणे फलं दर्शयति--यत्र चेत्यादिना। अर्थात्--"काञ्चनमयः पर्वतो वह्निमान् धूमात्" इत्यत्र पर्वतपक्षे काञ्चनमयत्वं धर्मः पक्षतावच्छेदको न वर्त्तत इति तस्याभाव आश्रयासिद्धिर्दोषः तादृशपक्षवृत्तितया प्रयुक्तस्तद्दोषवान् धूमहेतुराश्रयासिद्धो हेत्वाभासः। तथैव दर्शयति—"पर्वतो न काञ्चनमय" इति ज्ञाने जाते "वह्निव्याप्यधूमवानयं काञ्चनमयपर्वत" इति परामर्शप्रतिबन्धे सति "पर्वतो वह्निमान्" इत्यनुमितिप्रतिबन्धः फलमित्यर्थः। एवमेव—"गगनारविन्दं सुरभि अरविन्दत्वात्सरोजारविन्दवत्" इत्यत्र "अरविन्दत्वात्" हेतुरपि स्वरूपासिद्धो बोध्यः। गगनीयमरविन्दं नास्त्येवेत्यरविन्दे गगनीयत्वरूपपक्षतावच्छेदकाभावनिश्चयादस्य "सुरभिव्याप्यारविन्दत्ववद्गगनारविन्दम्"—इति परामर्शप्रतिबन्धः फलम्। अत्रेदं विचार्यम्—"गगनारविन्दं नास्ति" इत्यत्र किमरविन्दत्वनिषेधः? आहोस्विद् गगनीयत्वनिषेधः?। सामानाधिकरण्यसम्बन्धेन गगनीयत्वविशिष्टारविन्दस्यारविन्दत्वमरविन्दे निषेद्धुमशक्यम्, अरविन्दस्य प्रसिद्धत्वात् (प्रत्यक्षप्रमाणसिद्धत्वात्) किन्तु—"सविशेषणे विधिनिषेधौ सति विशेष्येऽन्वयबाधे विशेषणमुपसङ्क्रामत" इति न्यायेन गगनीयत्वस्यैव निषेध इति सुष्ठूक्तं पक्षे पक्षतावच्छेदकाभाव इति। एष एव न्यायः पूर्वस्थापनायामपि योजनीयः।

स्वरूपासिद्धिस्त्विति—व्याप्यत्वेन=हेतुत्वेनाभिमतस्य हेतोर्यदि पक्षेऽभावः सः स्वरूपासिद्धिर्दोषः तद्वान् हेतुः "स्वरूपासिद्ध" इत्यर्थः। उदाहरति—ह्रदो द्रव्यमिति। अत्र "ह्रदो न धूमवान्" इति ज्ञाने जाते "द्रव्यत्वव्याप्यधूमवानयं ह्रदः" इति परामर्शानुदयः फलं "ह्रदो वह्निमान्" इत्यनुमितिर्न भवतीत्यर्थे इत्याशयेनाह—"साध्यव्याप्यहेतुमत्ताज्ञानस्येति"।

साध्याप्रसिद्धिं व्याप्यत्वासिद्धावन्तर्भावयितुमाह—साध्याप्रसिद्धिरपीति। एतेन साध्याप्रसिद्ध्यादीनामाधिक्यं निराकृतं भवति। तां लक्षयति—साध्य इति।

साध्यनिष्ठो धर्मः साध्यतावच्छेदकः तस्याभावः साध्याप्रसिद्धिर्हेतुदोषः तद्दोषवान् हेतुः "साध्याप्रसिद्धो" हेत्वाभास इत्यर्थः । उदाहरणं यथा– "पर्वतः काञ्चनमयवह्निमान् धूमाद्" इति । अत्र " वह्निर्न काञ्चनमयः " इति वह्निरूपे साध्ये काञ्चनमयवह्नित्वरूपसाध्यतावच्छेदकधर्मस्याभावे ज्ञाते सति " काञ्चनमयवह्निव्याप्यधूमवानयं पर्वत " इत्याकारकः परामर्शो नोदेति । तस्याभावे च " पर्वतः काञ्चनमयवह्निमान् " इत्यनुमितेरनुदयः । तस्मात् काञ्चनमयवह्निसाध्यसाधनाय प्रयुक्तो धूमहेतुर्व्याप्यत्वासिद्ध इत्याशयवान् " तथाच "—इत्यारभ्य " फल " मित्यन्तो ग्रन्थः ।

साधनाप्रसिद्धिं दर्शयति—एवमिति—हेतौ हेतुतावच्छेदकधर्मस्याभावः साधनाप्रसिद्धिः तद्वान् "साधनाप्रसिद्धो" हेत्वाभास इत्यर्थः । उदाहरति–यथाचेति । " पर्वतो वह्निमान् काञ्चनमयधूमाद् " इत्यर्थः । अत्र " धूमो न काञ्चनमयः " इति ज्ञाने जाते " यत्र वह्निः तत्र काञ्चनमयधूम " इति व्याप्तिज्ञानमेव नोदेति काञ्चनमयत्वधर्मस्य धूमहेतोरनवच्छेदकत्वात् । एवमस्य व्याप्तिज्ञानप्रतिबन्धः फलम् । ततोऽनुमितेरनुदयः । व्याप्तिज्ञानादेरिति —आदिना " वह्निव्याप्यकाञ्चनमयधूमवान् पर्वत " इति परार्शप्रतिबन्धोऽपि ग्राह्यः । हेतुतावच्छेदकमत्र काञ्चनमयधूमत्वम्, तद्विशिष्टो हेतुः काञ्चनमयधूमः ।

अत्रैवैकदेशिमतमाह—एवमिति । इदन्तु—गुरुधर्मस्यानवच्छेदकत्वम्*मितिवादिनो मतेनोक्तम् । अर्थात् " सम्भवति लघुनि धर्मे गुरुधर्मस्यानवच्छेदकत्वम् " इति नियमात् नीलधूमत्वं न हेतुतावच्छेदकं गौरवात् । किन्तु धूमत्वमेव हेतुतावच्छेदकं लाघवात् । स्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकप्रकृतसाध्यव्याप्यतावच्छेदकधर्मत्वादिति भावः । एवं नीलधूमत्वविशिष्टहेतौ वह्निव्याप्तिज्ञानाभावः फलं, ततो नानुमितिः । एतन्न्यायमपि व्याप्यत्वासिद्ध एव । "गुरुधर्मस्याप्यवच्छेदकत्व" मिति वादिनां मते तु " नीलधूमात् " इत्ययं सद्धेतुरेव नतु हेत्वाभास इत्याशयः ।

---

* इदमिहसम्प्रधार्यम्—" सम्भवति लघौ गुरौ तदभावाद् " अयं नियमः स्वरूपसम्बन्धरूपावच्छेदकतायां नत्वनतिरिक्तवृत्तित्वरूपावच्छेदकत्वे इति न्यायविदः ।

तत्र स्वरूपसम्बन्धरूपमवच्छेदकं प्रतियोग्यंशप्रकारीभूतधर्मत्वम्—यथा प्रमेयधूमाभावप्रतियोगितावच्छेदकं धूमत्वम् । अनतिरिक्तवृत्तित्वरूपमवच्छेदकत्वन्तु तच्छून्यावृत्तित्वे सति तदधिकरणवृत्त्यभावप्रतियोगित्वम्—यथा घटाभावप्रतियोगितावच्छेदकत्वं घटत्वे वर्त्तते । तदधिकरणस्य तन्निष्ठधर्मावच्छेदकत्वम्—यथा—" मूले वृक्षे न कपिसंयोगः शाखायाम् " इत्यादौ वृक्षाधिकरणस्य मूलस्य वृक्षनिष्ठकपिसंयोगाभावावच्छेदकत्वम् अथच वृक्षाधिकरणस्य शाखादेर्वृक्षनिष्ठकपिसंयोगावच्छेदकत्वम । " पर्वतत्वावच्छेदेन पर्वतो वह्निमान् " इत्यादौ पर्वतत्वव्यापकवह्निप्रतियोगिकसंयोगत्वस्य संसर्गतावच्छेदकत्वावगाहनाद् व्यापकत्वमेवावच्छेदकत्वमित्यलम्पल्लवितेन ।

( मु० ) बाधस्तु पक्षे साध्याभावादिः। एतस्यानुमितिप्रतिबन्धः फलम्। तद्धर्मिकतदभावनिश्चयो लौकिकसन्निकर्षाजन्यदोषविशेषाजन्यतद्धर्मिकतज्ज्ञानमात्रे विरोधीति। न तु संशयसाधारणं पक्षे साध्यसंसृष्टत्वज्ञानमनुमितिकारणं तद्विरोधितया च बाधसत्प्रतिपक्षयोर्हेत्वाभासत्वमिति युक्तम्। अप्रसिद्धसाध्यकानुमित्यनापत्तेः, साध्यसंशयादिकं विनाऽप्यनुमित्युत्पत्तेश्च।

( प्र० टी० ) बाधं निरूपयति—बाधस्त्विति। पक्षे साध्याभावादिर्बाधो दोषः तद्वान् हेतुर्बाधितो हेत्वाभासः। अर्थात् यस्य साध्याभावः प्रमाणान्तरेण निश्चितः स "बाधितः"। "यथा वह्निरनुष्णो द्रव्यत्वात्" इत्यत्र "द्रव्यत्वात्" इति हेतुर्बाधितः। यत "अनुष्णत्वाभाववान् वह्निः" इत्याकारकस्पार्शनप्रत्यक्षप्रमाणेन "द्रव्यत्व" हेतोः साध्यस्यानुष्णत्वस्य अभावः पक्षे ( वन्हौ ) निश्चितः। तेन "वन्हिरनुष्ण" इत्यनुमितिर्न भवतीति साक्षादयमनुमितिप्रतिबन्धक इत्याह–एतस्येति। साध्याभावादिरित्यादिना साध्यवदन्यत्वस्य पक्षावृत्तिसाध्यादेश्च परिग्रहः। अत्र नियामकमाह—तद्धर्मिकेत्यादि। "अनाहार्याप्रामाण्यज्ञानानास्कन्दिततद्धर्मिकतदभावनिश्चयो लौकिकसन्निकर्षाजन्यदोषविशेषाजन्यतद्धर्म्मिकतज्ज्ञानमात्रम्प्रति विरोधि" इति नियम इत्यर्थः। उक्तनियमशरीरे प्रथमतत्पदेन प्रकृतोपयोगिनो धर्मस्य ग्रहणम्, द्वितीयतत्पदेन धर्मिणो ग्रहणम्। अयमर्थः—बाधकालीनेच्छाजन्यं ज्ञानमाहार्यम्। यथा शालग्रामशिलायां विष्णुबुद्धिः यथा वा प्रतिमायां देवबुद्धिः। प्रकृते–यथा–"ह्रदो वन्हिमान्"इति ज्ञानानन्तरं "ह्रदे वन्ह्यभावप्रत्यक्षं मे जायताम्" इतीच्छायां सत्यां '"ह्रदो वन्ह्यभाववान्" इतिज्ञानमाहार्यम्। यत्तन्न भवति तद् "अनाहार्यम्" इत्युच्यते। संशयादिज्ञानमप्रमाण्यज्ञानम्। आस्कन्दितं सम्भिन्नं सम्मिश्रमित्यनर्थान्तरम्। न आस्कन्दितमनास्कन्दितम्। यत् संशयादिज्ञानासम्मिश्रं तद् "अप्रामाण्यज्ञानानास्कन्दित" मित्युच्यते। अनाहार्यः तथा अप्रामाण्यज्ञानानास्कन्दितः=संशयादिज्ञानर*हितो यस्तद्धर्मिकतदभावनिश्चयः=प्रकृतधर्मविशिष्टधर्मिणोऽभावविषयकं यथार्थज्ञानं तत् लौकिकसन्निकर्षाजन्यस्य तथा पित्तादिदोषविशेषाजन्यस्य तद्धर्मिकतज्ज्ञानमात्रस्य=प्रकृतधर्मविशिष्टधर्मिणो ज्ञानमात्रस्य प्रतिबन्धकमिति नियम इत्यर्थः। प्रत्यक्षभिन्नं ज्ञानमात्रं लौकिकसन्निकर्षाजन्यम्। "पीतः शङ्ख" इत्यादिज्ञानं दोषविशेषजन्यम्।

अयमाशयः—योऽसौ प्रकृतधर्मविशिष्टधर्मिणोऽभावनिश्चयः स सर्वोपि–यल्लौकिकसन्निकर्षजन्यं न भवति यच्च दोषविशेषजन्यं न भवति तस्य सर्वस्यैव ज्ञानस्य प्रतिबन्धक इति नियमेन अनुष्णत्वधर्मविशिष्टानुष्णाभाववद्धर्मिविषयकं ज्ञानं अर्थात् "वन्हिरुष्णः" इत्याकारकं स्पार्शनप्रत्यक्षरूपं ज्ञानं तत् अनाहार्यत्वात्=बाधकाली-

* संशयादिज्ञानभिन्न इत्यत्र तात्पर्यम्।

नेच्छया अजन्यत्वात् अप्रामाण्यज्ञानानास्कन्दितत्वात्=संशयादिमिथ्याज्ञानासंमिश्रितत्वाच्च "वह्निरुष्णः" इत्यनुमितेः प्रतिबन्धकम्भाति। यतः अनुष्णत्वधर्मविषयकमुक्तं वन्ह्यनुमितिज्ञानं न लौकिकसन्निकर्षजन्यं नापि दोषविशेषजन्यं किन्तु-लौकिकसन्निकर्षाजन्यं-दोषविशेषाजन्यञ्चास्ति। एवं "वन्हिरुष्ण" इति स्पार्शनप्रत्यक्षात्मकप्रतिबन्धकज्ञानस्य "वन्हिरनुष्ण" इत्याकारकमनुमितिज्ञानं प्रतिबध्यम्=अनुमित्याभासरूपमिति यावत्।

लौकिकप्रत्यक्षभिन्नं सर्वमनुमित्यादिज्ञानं लौकिकसन्निकर्षाजन्यं तत्र "पीतः शङ्खः" इति ज्ञानं पित्तदोषजन्यमित्यत्रोचाम। तद्धर्मविशिष्टधर्मिणोऽभावज्ञानन्तु "पीतः शङ्खः" इत्यादिदोषविशेषजन्यं ज्ञानं वर्जयित्वा सर्वस्यैव ज्ञानस्य प्रतिबन्धकमिति तत्त्वम्।

केषाञ्चिन्मतं खण्डयितुमाह—नत्विति। अयमाशयः—साध्यसम्बन्धविषयकं ज्ञानं "साध्यसंसृष्टत्वज्ञानम्" इत्युच्यते। "पर्वतो वन्हिमान्नवा" इत्याकारकं संशयसाधारणं=संशयसहितं यत् साध्यसंसृष्टत्वज्ञानं तदेवानुमितिहेतुरिति तादृशज्ञानप्रतिबन्धकत्वेन बाधः सत्प्रतिपक्षश्चेति द्वौ हेत्वाभासौ स्तः। नतु परस्परसाध्याभावाविषयकपरामर्शप्रतिबन्धकत्वेन सत्प्रतिपक्षस्य, साक्षादनुमितिप्रतिरोधकत्वेन च बाधस्य हेत्वाभासत्वं युक्तमिति केचिन्मन्यन्ते, तन्न युक्तमित्याह—"अप्रसिद्धसाध्यकानुमित्यनापत्तेः" इति। न प्रसिद्धं साध्यं यस्याः सा अप्रसिद्धसाध्यिका साचासावनुमितिः, तस्या अनापत्तिः असिद्धिरित्यर्थः। यदि उक्तरीत्या प्रतिबध्यप्रतिबन्धकभावः स्वीक्रियते तदा "पृथिवी इतरभेदवती"=जलादिपदार्थभेदवती इत्याकारानुमितिर्न स्यात्, यतः तादृशानुमितेः पूर्वं पृथिव्यात्मकपक्षे जलादिभेदरूपसाध्यसम्बन्धस्य ज्ञानं न केनापि प्रकारेण जातं, पक्षे साध्यसंसृष्टत्वज्ञानञ्चानुमितिहेतुं मन्यसे, प्रकृते तस्याभावात्कथमनुमितिः सम्भवेत्, कारणाभावे कार्याभावस्य सर्वसम्मतत्वात्। *तस्मात् साध्यसंसृष्टत्वज्ञानमनुमितिहेतुरिति रिक्तं वचः।

यत्तु—संशयसाधारणमित्युक्तं तदपि दुरुक्तम्। "गगनं मेघवन्नवेति" संशयं विनापि "गगनं मेघवत् घनगर्जनाद्" इति घनगर्जनहेतोः "गगनं मेघवद्" इत्याकारानुमिति दृश्यते यतः। इत्थञ्च साध्यसंशयः साध्यसंसृष्टत्वज्ञानं वा नानुमितिकारणं, नवा तदुभयज्ञानप्रतिबन्धकत्वेन बाधसत्प्रतिपक्षयोर्हेत्वाभासता युक्ता, किन्तु परस्परसाध्याभावविषयकपरामर्शप्रतिबन्धकत्वेन सत्प्रतिपक्षस्य हेत्वाभासत्वं, साक्षादनुमितिप्रतिबन्धकत्वेन च बाधस्य तथात्वमिति सिद्धान्तः।

(मुक्ता०) एवं साध्याभावज्ञाने प्रमात्वज्ञानमपि न प्रतिबन्धकं प्रामाण्याभावाद्गौरवाच्च। अन्यथा सत्प्रतिपक्षादावपि तदभावव्याप्यवत्ताज्ञाने प्रमात्वविषयकत्वेन प्रतिबन्धकतापत्तेः। किन्तु भ्रमत्वज्ञानानास्कन्दितबाधादिबुद्धेः प्रतिबन्धकता, तत्र भ्रमत्वशङ्काविघटनेन प्रामाण्यज्ञानं क्वचिदुपयुज्यते।

---

* अनुमितिहेतुभूतभवदभिमततादृशसाध्यसंसृष्टत्वज्ञानाभावादित्यर्थः।

( प्र० टी० ) प्रासङ्गिकं प्राचां मतं खण्डयति—एवमिति। साध्याभावज्ञाने प्रमात्वज्ञानमेव प्रतिबन्धकम्, अर्थात् "ह्रदो वह्निमान्" इत्याकारानुमितिम्प्रति "ह्रदो वन्ह्यभाववान्" इत्याकारकवन्ह्यभावविषयको य "इदं ज्ञानं प्रमा" इति यथार्थत्वनिश्चयः स एव प्रतिबन्धक इति प्राञ्च आहुः, तदपि युक्तिशून्यमाभाति, यतो ग्राह्याभावावगाहित्वेन प्रतिबन्धकता स्वीक्रियते। नहि--"इदं ज्ञानं प्रमा" इत्याकारकं ज्ञानं ग्राह्याभावावगाहि किन्तु ग्राह्याभावानवगाह्येव। अर्थात्–प्रकृते ग्राह्यो वह्निः ग्राह्याभावो वन्ह्यभावः तद्विषयको "वन्ह्यभाववान् ह्रद" इत्याकारकं ज्ञानमेव प्रतिबन्धकम्। पक्षविशेष्यकसाध्याभावावगाहिज्ञाने प्रमात्वनिश्चयत्वेन प्रतिबन्धकतायां गौरवं, तदपेक्षया संशयनिश्चयसाधारणाप्रामाण्यज्ञानाभावत्वेन प्रतिबन्धकताकल्पने लाघवमित्याशयेनाह—प्रमाणाभावात् गौरवाच्चेति।

अयं भावः—बाधस्थले "इदं ज्ञानं प्रमा" इत्याकारकं ज्ञानमपि ग्राह्याभावमुद्रया प्रतिबन्धकं न स्वातन्त्र्येण। किन्तु घटोत्पत्तौ दैवागतरासभ इवान्यथासिद्धतया "ह्रदो वह्निमान्" इत्यनुमितिज्ञानम्प्रति प्रतिबन्धकरूपं कारणं नार्हति भवितुम्, अतः प्रथमोपस्थितवन्ह्यादिसाध्याभावनिश्चयस्यैव प्रतिबन्धकता युक्ता। विपक्षे दण्डमाह—अन्यथेति। यदि ( आग्रहवशात् ) साध्याभावज्ञाने प्रमात्वनिश्चयस्यैव बाधस्थले प्रतिबन्धकत्वं स्वीक्रियते तर्हि सर्वत्रैव सत्प्रतिपक्षादिस्थलेऽप्यनुमितिं प्रति तदभाववत्ताज्ञाने=साध्याभाववत्ताज्ञाने प्रमात्वविषयकत्वेन प्रतिबन्धकतापत्तेः प्रमात्वनिश्चयस्यैव प्रतिबन्धकत्वं स्वीकर्त्तव्यं स्यात्। परं नत्वेवं मन्यते केनापीत्यर्थः। कस्य तर्हि प्रतिबन्धकतेति जिज्ञासायामाह—किन्तु भ्रमत्वज्ञानेति। भ्रमत्वज्ञानेन अनास्कन्दितं अनाप्लुतं भ्रमत्वज्ञानशून्यमिति यावत् तादृशं यद्बाधज्ञानं तस्य प्रतिबन्धकत्वं सकलविज्ञसम्मतेति भावः। तत्रेति—बाधस्थले भ्रमत्वशङ्काविघटनेन=भ्रमत्वशङ्कानिवारणेन, प्रामाण्यज्ञानं=प्रमात्वज्ञानमपि क्वचिदुपयुज्यते इत्यक्षरार्थः। तथाचानुमितितत्कारणज्ञानान्यतरं प्रति साक्षात्प्रतिबन्धकीभूतज्ञानविषयत्वाभावान्न साध्याभावज्ञानीय प्रमात्वं हेत्वाभास इति भावः।

(मुक्ता०) न च बाधस्थले पक्षे हेतुसत्त्वे व्यभिचारः पक्षे हेत्वभावे स्वरूपासिद्धिरेव दोष इति वाच्यम्, बाधज्ञानस्य व्यभिचारज्ञानादेर्भेदात्। किंच यत्र परामर्शानन्तरं बाधबुद्धिस्तत्र व्यभिचारज्ञानादेरकिंचित्करत्वाद्बाधस्यानुमितिप्रतिबन्धकत्वं वाच्यम्। एवं यत्रोत्पत्तिक्षणावच्छिन्ने घटादौ गन्धव्याप्यपृथिवीत्ववत्ताज्ञानं तत्र बाधस्यैव प्रतिबन्धकत्वं वाच्यम्। नच पक्षे घटे गन्धसत्त्वात्कथं बाध इति वाच्यम्, पक्षतावच्छेदकदेशकालावच्छेदेनानुमितेरनुभवसिद्धत्वादिति। बाधसत्प्रतिपक्षभिन्ना ये हेत्वाभासास्तद्व्याप्या अपि तन्मध्य एवान्तर्भवन्ति। अन्यथा

हेत्वाभासाधिक्यप्रसङ्गात्। बाधव्याप्यसत्प्रतिपक्षस्तु भिन्न एव, स्वतन्त्रेच्छेन मुनिना पृथगुपदेशात्। सत्प्रतिपक्षव्याप्यस्तु न प्रतिबन्धक इति प्रघट्टकार्थः॥ ७१॥ ७२॥

(प्र० टी०) नास्ति बाधितो हेत्वाभासः पञ्चम इत्यभिप्रायवान्शङ्कते—नचेति। अयमर्थः—"वह्निरनुष्णो द्रव्यत्वाद्" इत्यादिबाधस्थले वह्निरूपे पक्षे हेतुरस्ति नवा?। यद्यस्ति तदा अनुष्णत्वाभावरूपसाध्याभाववति जलादौ द्रव्यत्व हेतोर्वृत्तित्वात्साधारणानैकान्तिकत्वरूपो *व्यभिचार एव दोषः। यदि तु पक्षे हेतुर्नास्ति तदा स्वरूपासिद्धिरेव† दोष इति व्यभिचारस्वरूपासिद्धिरूपान्यतरदोषप्रयुक्त एव हेत्वाभासव्यवहारो भवतु, नतु बाधदोषप्रयुक्तो बाधितनाम्ना तथा व्यवहार इत्याक्षेप्तुराशयः।

यद्यप्युक्तयुक्त्या तत्रान्यतरव्यवहारः कर्त्तव्य इति नास्ति पञ्चमो हेत्वाभास इति ते भाति तथापि उक्तदोषद्वयवत् तत्र स्वतन्त्रतया बाधोऽपि दोषः प्रतीयते तस्माद्व्यभिचारादिप्रतीतिभिन्नप्रतीतिरूपत्वाद्बाधस्य तादृशदोषदुष्टो "बाधित" नामा स्वतन्त्रः पञ्चमो हेत्वाभास इति युक्तियुक्तः समाधातुराशयः। सिद्धान्ती स्वपक्षे उपपत्त्यन्तरं दर्शयति—किञ्चेति। यत्र—"अयोगोलकं धूमवद्वह्नेः" इत्यादिस्थले "वह्निव्याप्यधूमवदयोगोलक" मिति परामर्शबुद्धिर्जाता ततो व्यभिचारज्ञानं विनैव "अयोगोलकं न धूमवत्" इत्याकारा बाधबुद्धिरुत्पन्ना, तत्र व्यभिचारज्ञानादेः=व्यभिचारज्ञानस्य स्वरूपासिद्धिज्ञानस्य च अकिञ्चित्करत्वात्=असमर्थत्वात् बाधस्यैवानुमितिप्रतिबन्धकत्वं वाच्यम्। अर्थात् एतादृशस्थले व्यभिचारः स्वरूपासिद्धिश्च नानुमितिं प्रतिबध्नीतः किन्तु बाध एवाऽनुमितिप्रतिबन्धकः यतो व्यभिचारादिस्तु परामर्शप्रतिबन्धद्वाराऽनुमितिप्रतिबन्धको न स्वतन्त्रतया। बाधस्तु अनुमितिप्रतिबन्धे स्वतन्त्रः। तत्र तु परामर्शज्ञानं जातमेव तदुत्तरं व्यभिचारादिबुद्ध्या किं प्रतिबध्येतेति सूक्ष्मं निरीक्ष्यम्। तस्मादेतादृशस्थले बाधस्य प्रतिबन्धकता बलादङ्गीकरणीया नतु व्यभिचारादीनाम्।

व्यभिचारज्ञानादेरिति— आदिनाऽसिद्धिज्ञानपरिग्रहः। भेदादिति—तथाच बाधस्थलेऽसिद्धिव्यभिचारान्यतरानियमेऽपि बाधज्ञानस्य व्यभिचारादिविषयकत्वाभावेन तस्य हेत्वाभासन्तरत्वमिति भावः।

व्यभिचाराद्यसङ्कीर्णं बाधस्थलं दर्शयति—एवमित्यादिना। उत्पत्तिक्षणावच्छिन्ने=उत्पत्तिकालीने घटादौ। अयमाशयः—"उत्पत्तिक्षणावच्छिन्नो घटो गन्धवान् पृथिवीत्वात्" इत्यत्र उत्पत्तिक्षणावच्छिन्ने घटात्मके पक्षे पृथिवीत्वरूपं हेतुस्तु वर्त्तते परं गन्धो नास्ति। 'जायमानं द्रव्यं क्षणमगुणं भवती"ति सिद्धान्तात्। एवं कृत्वाऽत्र पक्षे हेत्वभावरूपा स्वरूपासिद्धिर्न दोषः प्रतियोगिव्यधिकरणसाध्याभाववद्वृत्तित्वरूपो व्यभिचारदोषोऽपि नास्ति।

---

* साध्याभाववद्वृत्तिः साधारणोऽनैकान्तिकः। † पक्षे हेत्वभावः स्वरूपासिद्धिः।

*नहि पृथिवीत्वं प्रतियोगिव्यधिकरणगन्धाभावद्वृत्ति योगिदृष्ट्यापि। तस्मात् "उत्पत्तिक्षणावच्छिन्नो घटो गन्धाभाववान्" इत्याकारकं बाधज्ञानमेव प्रतिबन्धकमित्यसौ हेत्वाभासः स्वतन्त्रः पञ्चमश्चेति सर्वं सुस्थम् । आशङ्क्य समाधत्ते—नचेति । शङ्काग्रन्थः स्पष्टार्थः। पक्षतावच्छेदकदेशकालावच्छेदेन इत्युत्तरग्रन्थस्यायमर्थः-पक्षतावच्छेदकौ यौ देशकालौ तयोरवच्छेदेन व्यावर्त्तकत्वेन रूपेण अनुमितिर्विदुषामनुभवसिद्धा । अर्थात् घटत्वपर्वतत्वादिधर्मवत् देशकालावपि पक्षतावच्छेदकरूपतया स्वीकर्त्तव्यौ। नहि काचिदनुमितिः कालानवच्छिन्ना देशानवच्छिन्ना वेति कश्चिदपि समाधातुं समर्थः स्यात् । तस्माद् घटात्मकपक्षस्योत्पत्तिक्षणात्मकः कालोऽप्यवच्छेदकः। एवं घटे पक्षे गन्धसत्त्वेऽपि उत्पत्तिकालानुरोधेन तत्र गन्धाभावोऽवश्यं मन्तव्यः। अन्यथा घटगन्धयोः कार्यकारणभावभङ्गप्रसङ्गः स्यात् । एवमिदं दोषान्तरैरसङ्कीर्णं बाधस्थलं प्रजापतिनाप्यपरिहार्यम् ।

ननु-बाधादिवत् असाधारणत्वादिरूपेणापि प्रतिबन्धकतेति कथं पञ्चैव हेत्वाभासा इत्याशङ्कायामाह—" बाधसत्प्रतिपक्षाभिन्न।" इति। बाधः=साध्याभावविशिष्टपक्षादिः, सत्प्रतिपक्षः=विरोधिव्याप्तिविशिष्टहेतुकः बाधव्याप्य एव । तद्भिन्नाः=ताभ्यां भिन्ना ये व्यभिचारविरुद्धासिद्धा हेत्वाभासाः, तद्व्याप्याः=व्यभिचारादिव्याप्या ये साधारणाश्रयासिद्धाद्याः, ते तत्रैव=व्यभिचारादिष्वेवान्तर्भवन्तीति न तेषां पृथग्रूपतया प्रतिबन्धकता येनपिंकृतपञ्चसङ्ख्याविरुद्धसङ्ख्या हेत्वाभासानामापतेत् । विपक्षे दोषमाह-अन्यथेति । ननु बाधव्याप्योऽपि सत्प्रतिपक्षः कथं पृथक् प्रतिबन्धको गणितः इत्याशङ्कायामाह—बाधव्याप्येति । मुनिना=गोतमेन पृथगुपदेशात्=प्रथमाध्यायस्य द्वितीयाह्निके—"सव्यभिचारविरुद्धप्रकरणसमसाध्यसमकालातीता हेत्वाभासाः" (न्या० १।२।४) इति पञ्चसङ्ख्याकथनात् । ननु सत्प्रतिपक्षस्य ये व्याप्या दोषास्तेषामपि पृथक् प्रतिबन्धकत्वं कुतो नाङ्गीक्रियते इत्याशङ्कायामाह—सत्प्रतिपक्षव्याप्यस्त्विति । अयमत्र सर्वसारः- बाधस्य तु "अयं हेतुर्बाधित" इत्याकारकबाधज्ञानविषयकत्वेन प्रतिबन्धकता, सत्प्रतिपक्षस्यापि सत्प्रतिपक्षितत्वेन स्वतन्त्रतयैव प्रतिबन्धकता, साधारणादीनान्तु साधारणादित्वेन रूपेण नास्ति प्रतिबन्धकता। किन्तु "अयं हेतुर्व्यभिचारी" इत्येवं व्यभिचारादित्वेन रूपेणैव प्रतिबन्धकता भवति ।

---

* **नहि पृथिवीत्व**मिति—यद्यप्युत्पत्तिक्षणावच्छिन्ने घटे गन्धाभाववति पृथिवीत्वहेतोर्वृत्तित्वाद् व्यभिचारस्तथापि प्रतियोगिव्यधिकरणसाध्याभाववद्वृत्तित्वं **व्यभिचारत्वम्**। **प्रतियोगिव्यधिकरणत्वञ्च** प्रतियोग्यनधिकरणवृत्तित्वम् । तथाच—प्रतियोगिनो गन्धस्याधिकरण एव घटः। कुतः अव्याप्यवृत्तिपदार्थस्य अधिकरणता व्याप्यवृत्तिरेव स्वीकृता। अतो गन्धाधिकरणता घटादिषु सदैव वर्त्तते। गन्धस्या ऽव्याप्यवृत्तित्वेऽपि तस्या व्याप्यवृत्तित्वादित्याशयो दर्शनाचार्याणामिति मिति स्वामि**विश्वेश्वराश्रमदण्डिनः** ।

यद्यपि व्यभिचारादिव्याप्याः साधारणाद्याः, न तावता हेत्वाभाससङ्ख्याधिक्यं तथैव बाधादिव्याप्यव्यभिचारादिभिरपि सङ्ख्याधिक्यं नार्हति भवितुम्, तथापि स्वायत्तप्रज्ञाप्रतिभासितार्थस्वरूपस्य मुनेरिच्छैवात्र नियामिका सत्यस्मत्प्राकृततर्कोनेर्हति सन्तुष्यताम् ॥७२॥

(का०) यः सपक्षे विपक्षे च भवेत्साधारणस्तु सः ।

(मु०) यः सपक्ष इति । सपक्षविपक्षवृत्तिः साधारण इत्यर्थः । सपक्षो निश्चितसाध्यवान् । विपक्षः साध्याभाववान् * । विरुद्धवारणाय सपक्षवृत्तित्वमुक्तम् । वस्तुतो विपक्षवृत्तित्वमेव वाच्यम्, विरुद्धस्य साधारणत्वेऽपि दूषकताबीजस्य भिन्नतया तस्य पार्थक्यात् ॥

(प्रभा०) व्यभिचारिव्याप्यं साधारणं लक्षयति—सपक्षेति । सपक्षं लक्षयति—सपक्ष इति । साध्यवत्त्वप्रकारतानिरूपितनिश्चयीयविशेष्यत्वं सपक्षलक्षणमित्यर्थः । साध्यवत्त्वेन निश्चीयमानत्वं सपक्षत्वमिति सारः । विपक्षलक्षणमाह—विपक्ष इति । साध्याभाववत्त्वप्रकारतानिरूपितनिश्चयीयविशेष्यत्वं विपक्षलक्षणमित्यर्थः । पदकृत्यं दर्शयति--विरुद्धवारणायेति । साध्याभावव्याप्यरूपस्य विरुद्धस्य केवलविपक्षवृत्तित्वादित्याशयः । तावत्यपि दोषाभावप्रकारमाह—वस्तुत इति । यद्यपि विरुद्धोपि हेतुर्विपक्षवृत्तिः, साधारणोपि च, तावता नानयोर्विशेषेण भाव्यम्। तथापि दूषकताबीजस्य भिन्नत्वादुभयोर्भेदः साधारणोऽव्यभिचारज्ञानं प्रतिबध्नाति, विरुद्धस्तु सामानाधिकरण्यज्ञानस्य प्रतिबन्धक इति वैलक्षण्ये सति विपक्षमात्रवृत्तित्वेन नोभयोरविशेष इति भावः ।

अस्योदाहरणन्तु--"पर्वतो धूमवान् वह्ने" रित्यादि ज्ञेयम् । अत्र हि वह्निर्हेतुर्निश्चितसाध्यवति महानसादौ सपक्षे निश्चितसाध्याभाववति अयोगोलके विपक्षे च सत्त्वात्साधारणः ।

(का०) यस्तूभयस्माद्व्यावृत्तः स चासाधारणो मतः ॥७३॥

(मु०) यस्तूभयस्मादिति । सपक्षविपक्षव्यावृत्त इत्यर्थः । सपक्षः साध्यवत्तया निश्चितः । विपक्षः साध्यशून्यतया निश्चितः । शब्दोऽनित्यः शब्दत्वादित्यादौ यदा शब्देऽनित्यत्वसन्देहस्तदा सपक्षत्वं घटादीनामेव, तद्व्यावृत्तं च शब्दत्वमिति तदा तदसाधारणम् । यदा तु शब्देऽनित्यत्वनिश्चयस्तदा नासाधारणः । इदं च प्राचां मतम् । नवीनमतं तु पूर्वमुक्तम् ॥ ७३ ॥

(प्रभा०) असाधारणं लक्षयति—सपक्षविपक्षेति । पक्षमात्रवृत्तिरित्यर्थः ।

---

* क्वचित्—"साध्यवद्भिन्न" इति पाठः । तत्रैष निर्णयः—अत्यन्ताभावघटितव्याप्तिपक्षे "साध्याभाववान्" इति पाठः । अन्योन्याभावघटितव्याप्तिपक्षे "साध्यवद्भिन्न" इति पाठः ।

यथा " शब्दोनित्यः शब्दत्वात् " इत्यत्र शब्दत्वं सर्वेभ्यो नित्येभ्योऽनित्येभ्यो व्यावृत्तं पक्षभूतशब्दमात्रवृत्तित्वादसाधारणः । सपक्षः—साध्यवत्तयेति—कृतव्याख्यानमधस्तात् । अत्र मतभेदं दर्शयितुं ग्रन्थान्तरमवतारयति—यदात्विति । " शब्दोऽनित्यः शब्दत्वात् " इत्यादौ शब्दात्मके पक्षे यदा अनित्यत्वरूपसाध्यस्य सन्देहः तदा घटपटादिः सपक्षो भवति, तस्य अनित्यत्वरूपसाध्यवत्त्वेन निश्चितत्वात् । गगनादिकं तु विपक्षः तत्रानित्यत्वरूपसाध्याभावस्य नित्यत्वस्य निश्चितत्वात् । ताभ्यामुभाभ्यां व्यावृत्तः शब्दत्वात्मको हेतुः शब्दात्मकपक्षमात्रवृत्तित्वाद्भवत्यसाधारणः । अथ यदा—"शब्दोऽनित्यः कार्यत्वाद् घटवद्" इति कार्यत्वेन हेतुना शब्दे पक्षे अनित्यत्वनिश्चयः तदा " शब्दत्वं " हेतुर्नाऽसाधारणः । किन्तु तत्राऽसाधारण्यभ्रम इति प्राचां नैयायिकानां मतम् । नवीनमते तु " साध्यासमानाधिकरणो हेतुरसाधारण " इति लक्षणान्तरमुक्तं प्रागिति तत्त्वम् । " भूमिर्नित्या गन्धवत्त्वात् " इत्याद्यप्यसाधारणस्योदाहरणान्तरं ज्ञेयम् ॥७३॥

**( का० ) तथैवानुपसंहारी केवलान्वयिपक्षकः ।**

( मु० ) तथैवेति । केवलान्वयिपक्षक इति । केवलान्वयिधर्मावच्छिन्नपक्षक इत्यर्थः । सर्वमभिधेयं प्रमेयत्वादित्यादौ सर्वस्यैव पक्षत्वात्-सामानाधिकरण्यग्रहस्थलान्तराभावान्नानुमितिः । इदं तु न सम्यक्, पक्षैकदेशे सहचारग्रहेऽपि क्षतेरभावात् । अस्तु वा सहचाराग्रहस्तावताप्यज्ञानरूपासिद्धिरेव ननु हेत्वाभासत्वं तस्य तथापि केवलान्वयिसाध्यकत्वं तत्त्वमित्युक्तम् ।

( प्र० टी० ) अनुपसंहारिणं लक्षयति—केवलेति । केवलम् अन्वयी=अन्वयिधर्मावच्छिन्नः पक्षो यस्य सः केवलान्ययिपक्षकः । उदाहरति—सर्वमिति । अत्र पदार्थमात्रस्यैव पक्षत्वमिति हेतोः " यत्र यत्र प्रमेयत्वं तत्र तत्र अभिधेयत्व " मिति रूपेण साध्यहेत्वोः सामानाधिकरण्यज्ञानरूपाया व्याप्तेरभिलापकं किमपि दृष्टान्तस्थलं नोपलभ्यते । तेन " सर्वमभिधेयम् " इत्याकाराया अनुमितेः प्रतिबन्ध इत्याशयः । परमिदं प्राचां मतं न सम्यक्—इत्याशयेनाह—इदमिति । अयमत्राशयः—माभूत् सामानाधिकरण्यग्रहस्य किमपि दृष्टान्तभूतं स्थलादिकं तथापि पक्षैकदेशे साध्यहेत्वोः सहचारग्रहदर्शनादनुमितिर्निराबाधा । एतच्च काणादमतेन पक्षताग्रन्थेऽवोचाम । ननु—संशयसत्त्वे कथं पक्षैकदेशे साध्यनिश्चय इति चेन्न सर्वत्वधर्मितावच्छेदकसंशयसामग्रीसत्त्वेऽपि घटत्वादिधर्मितावच्छेदकसाध्यानिश्चयोत्पादे बाधकाभावात् । घटे प्रमेयत्वेन हेतुना अभिधेयत्वरूपसाध्यनिश्चये प्रतिबन्धकाभावादित्यर्थः । अत्रैव कल्पान्तरमाह *अस्तुवेति । तस्य=सहचारग्रहस्येत्यर्थः । यत्र साध्येन सह हेतोः

* ननु—प्राचीनमते समानविषयकत्वेनैव प्रतिबन्धककत्वात् पर्वतत्वावच्छिन्नसाध्यसंशयकाले घटत्वावच्छिन्नेऽपि साध्यनिश्चयो न भवत्येवेत्यत आह—अस्तुवेति ।

सहचारग्रहाभावः न तत्र हेत्वाभासता अपित्वज्ञानरूपासिद्धिरेवेति युक्तम् । यद्यप्येवं तथापि केवलान्वयिसाध्यकस्थले अनुपसंहारिव्यवहारः साम्प्रदायिकानामिति भावः । तत्त्वम्=अनुपसंहारित्वमित्यर्थः ।

**( का० ) यः साध्यवति नैवास्ति स विरुद्ध उदाहृतः ॥७४॥**

( मु० ) साध्यवतीति । एवकारेण साध्यवत्त्वावच्छेदेन हेत्वभावो बोधितः । तथा च साध्यव्यापकीभूताभावप्रतियोगित्वं तदर्थः ॥ ७४ ॥

(प्र टी०) विरुद्धं व्याख्यातुं प्रतीकमादत्ते—य इति । यो हेतुः साध्यवति= साध्याधिकरणे नैवास्ति=न वर्त्तते स विरुद्धः=विरुद्धो नाम हेत्वाभास उक्तः । कारिकास्थैवकारव्यावृत्तं दर्शयति—एवकारेणेति । यदि साध्यवत्त्वावच्छेदेन हेत्वभावो न विवक्षितः स्यात् तदाऽसाधारणेऽतिव्याप्तिः स्यात् । निष्कृष्टं लक्षणमाह–तथाचेति । साध्यस्य व्यापकीभूतो योऽभावः तस्य प्रतियोगित्वमित्यर्थः । यथा— "घटो नित्यः कृतकत्वात्" इत्यत्र साध्यस्य नित्यत्वस्य व्यापकीभूतो योऽभावः कृतकत्वाभावः तत्प्रयोगित्वं कृतकत्वस्येति "कृतकत्वं" विरुद्धो हेतुरिति लक्ष्ये लक्षणसमन्वयः । एवम्—"प्रकृतिर्नित्या कृतकत्वात् कालवत्" इत्यादावपि "कृतकत्वं" हेतुः साध्याभावव्याप्तः ।

"कृतकत्वाभावो हि नित्यत्वव्यापक" इति साध्याभावग्रहसामग्रीत्वेन साक्षादेयमनुमितिप्रतिबन्धक इत्येवास्य दुष्टिबीजम् ॥७४॥

**(का०) आश्रयासिद्धिराद्या स्यात्स्वरूपासिद्धिरप्यथ ।**
**व्याप्यत्वासिद्धिरपरा स्यादसिद्धिरतस्त्रिधा ॥ ७५ ॥**
**पक्षासिद्धिर्यत्र पक्षो भवेन्मणिमयो गिरिः ।**
**ह्रदो द्रव्यं धूमवत्त्वादत्रासिद्धिरथापरा ॥ ७६ ॥**
**व्याप्यत्वासिद्धिरपरा नीलधूमादिके भवेत् ।**

( मु० ) असिद्धिं विभजते । आश्रयासिद्धिरित्यादि । पक्षासिद्धिरिति । आश्रयासिद्धिरित्यर्थः । अपरेति । स्वरूपासिद्धिरित्यर्थः । नीलधूमादिक इति । नीलधूमत्वं गुरुतया न हेतुतावच्छेदकं स्वसमानाधिकरणव्याप्यतावच्छेदकधर्मान्तराघटितस्यैव व्याप्यतावच्छेदकत्वात् । धूमप्रागभावत्वसङ्ग्रहाय स्वसमानाधिकरणेति ॥

(प्र० टी०) असिद्धस्य तृतीयहेत्वाभासस्य लक्षणं दर्शयितुमादौ तद्भेदानमाह–परममूले—आश्रयेति । सामान्यलक्षणन्तु—आश्रयासिद्धयाद्यन्यतमत्वमसिद्धिः, तद्वत्त्वमसिद्धत्वम् । एतदभिप्रायेणैवाह मूले—असिद्धमिति । आश्रये=साध्यहेत्वोर्धर्मिणि

पक्षे असिद्धिः आश्रयासिद्धिः । पक्षे पक्षतावच्छेदकस्याभाव इत्यर्थः । स्वरूपासिद्धिस्तु पक्षे व्याप्यत्वेनाभिमतस्य हेतोरभावः। हेतौ हेतुतावच्छेदकस्याभावः स्वरूपासिद्धिरित्यर्थः * व्याप्यत्वस्य=व्याप्तेरसिद्धिरभावो व्याप्यत्वासिद्धिः, यस्य हेतोर्व्याप्तिरेव न सिद्धयेदित्यर्थः ।

आश्रयासिद्धिमुदाहरति परममूले—पक्षासिद्धिरिति । पक्षासिद्धिराश्रयासिद्धिरित्यनर्थान्तरन् । तस्या उदाहरणं "मणिमय" इति । "मणिमयः पर्वतो वह्निमान् धूमाद्" इत्यत्र मणिमयस्य पर्वतस्याप्रसिद्धत्वात् मणिमयपर्वतत्वरूपस्य पक्षतावच्छेदकस्य सुतरामभाव इति नानुमितिः । अर्थात्—" पर्वतो न मणिमय " इति ज्ञाने सति "वह्निव्याप्यधूमवानयं मणिमयः पर्वत" इति परामर्शप्रतिबन्धो भवति इतीदमेवास्य दूषकताबीजम् । स्वरूपासिद्धिमुदाहरति—परममूले " ह्रद " इति। उदाहरणाकारः स्पष्टः । अत्रापि—" ह्रदो न धूमवान् " इत्याकारे ज्ञाने सति " वह्निव्याप्यधूमवानयं ह्रद " इति परामर्शो न जायत इत्यास्या अपि परामर्शप्रतिबन्धो दुष्टिबीजम् । व्याप्यत्वासिद्धिं दर्शयति—परममूले " नीलधूमादिक " इति। " पर्वतो वह्निमान् नीलधूमात्" इत्यस्या उदाहरणाकारः । अत्रत्यं रहस्यं प्रकटीकरोति मूले—'नीलधूमत्व' मिति । स्वसमानाधिकरणेति । अयमत्राशयः— " लघुधर्मसमनियतगुरुधर्मस्यानवच्छेदकत्वम् " इत्यस्त्येको नियमः । अर्थात् यो धर्मो गुरुभूतोऽस्ति, लघुधर्मसमानाधिकरणश्च नासौ हेतुतावच्छेदकतया स्वीक्रियते । प्रकृते च—'स्व' पदेन नीलधूमत्वरूपो धर्मो गृह्यते । सच हेतुतावच्छेदको नास्ति, यतो नीलधूमत्वसमानाधिकरणकं व्याप्यतावच्छेदकं धर्मान्तरं यत् शुद्धधूमत्वम्, तादृशशुद्धधूमत्वरूपधर्मेण घटित एव नीलधूमत्वरूपो धर्मोऽस्ति अघटितोनास्ति । अतो नीलधूमत्वस्य हेतुतानवच्छेदकत्वात् " यत्र यत्र नीलधूमः तत्र तत्र वह्नि " रिति व्याप्तेरभाव एव व्याप्यत्वासिद्धिः । तादृशदोषदुष्टो हेतुर्व्याप्यत्वाऽसिद्धो हेत्वाभास इत्यर्थः ।

स्वसमानाधिकरणपदनिवेशफलं दर्शयति—धूमेति । " इयं यज्ञशाला वह्निमती भविष्यति धूमप्रागभावात् " इत्यादिस्थल धूकप्रागभावत्वरूपस्य धर्मस्य अवच्छेदकत्वस्वीकारणाय 'स्वसमानाधिकरण' पदं दत्तम् । एतद्विहाय व्याप्यतावच्छेदकधर्मान्तराघटितमात्रमुच्येत चेत् ? तदा धूमप्रागभावोहेतुरसन् स्यात्, यतो धूमप्रागभावत्वमपि व्याप्यतावच्छेदकधर्मान्तराघटितं नास्ति । किन्तु व्याप्यतावच्छेद-

---

*इदन्तु बोध्यम्—साहचर्यनियमरूपां व्याप्तिक्रियां प्रति यत्कर्म तद्व्याप्यम्। विपूर्वादापेः कर्मणि ण्यद्विधानात् । तद्धूमादिरेव। एनामेव व्याप्तिक्रियां प्रति यत्कर्तृ तद्व्यापकम् । व्यापेः कर्त्तरि ण्वुलि सति व्यापकमिति सिद्धेरित्यादि बहूक्तं न्यायदीपिकायाम् । व्याप्यस्य भावो व्याप्यत्वं तच्च व्याप्तिरेवेति ध्येयम् ।

कीभूतं यद् धूमत्वम्, तेन धर्मेण घटितमेवेति कृत्वेतीदमपि अवच्छेदकं न स्यात्, इष्टञ्चावच्छेदकत्वेन रूपेण तत्। स्वेत्यादिनिवेशे तु नास्ति दोषः। यतो धूमप्रागभावत्वं धूमप्रागभावे तिष्ठति धूमत्वञ्च धूमे, अतो द्वयोर्धर्मयोः परस्परं समानमधिकरणं नास्ति, व्यधिकरणवृत्तिधर्मस्य गुरुभूतत्वेन व्याप्यतावच्छेदकान्तःपातित्वे प्रतीयमानेऽपि नास्ति काचन क्षतिरिति भावः।

(का०) विरुद्धयोः परामर्शे हेत्वोः सत्प्रतिपक्षता ॥ ७७ ॥

(मुक्ता०) विरुद्धयोरिति। कपिसंयोगतदभावव्याप्यवत्तापरामर्शेऽपि न सत्प्रतिपक्षत्वमत उक्तं--विरुद्धयोरिति। तथाच-स्वसाध्यविरुद्धसाध्याभावव्याप्यवत्तापरामर्शकालीनसाध्यव्याप्यवत्तापरामर्शविषय इत्यर्थः ॥ ७५ ॥ ७६ ॥ ७७ ॥

(प्र० टी०) सत्प्रतिपक्षं लक्षयति परममूले—" विरुद्धयो " रिति। "हेत्वो" रिति पदस्य " विरुद्धयो " रितिविशेषणं तस्य प्रयोजनमाह मूले—कपिसंयोगेत्यादि। नह्येवंविधस्थले हेत्वोः परस्परं विरोधव्यवहारः। अर्थात् प्रकृते वृक्षत्वहेतौ कपिसंयोगस्य कपिसंयोगाभावस्य च या व्याप्यवत्ता, तस्याः परामर्शे सत्यपि न सत्प्रतिपक्षत्वव्यवहारः पारस्परिकहेतुविरोधाभावात्। निष्कृष्टं लक्षणं दर्शयति—तथाचेति। स्वसाध्येति—"स्वं" सत्प्रतिपक्षत्वेनाभिमतो यो हेतुः, तत्साध्यविरुद्धो यः साध्याभावः, तद्व्याप्यवत्तापरामर्शकालिको यः साध्यव्याप्यवत्तापरामर्शः, तद्विषयो यो हेतुः सः सत्प्रतिपक्ष इत्यर्थः। यथा–"ह्रदो वह्निमान् धूमात्"इति केनचित्स्थापितम्। तदुत्तरं सिद्धान्ती वादिप्रयुक्तं धूमहेतुमेवं सत्प्रतिपक्षयति—यत् " ह्रदो वन्ह्यभाववान् जलाद् " इति। अत्र " स्व " पदेन जलहेतोर्ग्रहणं तस्य साध्यं वन्ह्यभावः, तद्विरुद्धं वन्हिरूपं साध्यम्, तस्याभावविषयकः यः परामर्शः "वन्ह्यभावव्याप्यजलवानयं ह्रद" इत्याकारकः, एतादृशपरामर्शकाल एव जायमानो यो " वह्निव्याप्यधूमवानयं ह्रद " इत्याकारकः परामर्शः तादृशपरामर्शविषयता धूमहेतावस्तीति ह्रदात्मकपक्षे वह्निसाधनाय प्रयुक्तो धूमहेतुः सत्प्रतिपक्ष इति लक्षणसमन्वयः।

अयमेव प्राचां मते "प्रकरणसम" इत्युच्यते। प्रकरणेन पक्षेण समस्तुल्यः पक्षो हि साध्यवान्नवेति सन्दिह्यते तदर्थं प्रयुक्तो हेतुरपि "अत्र स्वसाध्यं साधयितुमीष्टे नवेति सन्दिह्यत" इत्युभयोः समत्वं बोध्यम्। साध्यविपरीतसाधकहेत्वन्तरदर्शनेनायं हेतुः स्वसाध्यं साधयितुमीष्टे नवेति सन्देहोदयादयं " सन्दिग्ध " इत्यपि भण्यते।

ननु—सन्देहस्याऽनुमानाङ्गत्वात्तदुत्थापकस्यास्य कथं हेत्वाभासत्वमिति चेद् ? भ्रान्तोऽसि। द्विविधा खलु सन्देहप्रवृत्तिः। एका स्वारसिकी सर्वानुमानसाधारणी। द्वितीया पुनः प्रतिकूलाऽनुमानजनिता। तत्र प्रथमैवाऽनुमानाङ्गं नतु द्वितीया। शङ्कापनोदनप्रवृत्तपूर्वाऽनुमानपरिपन्थित्वरूपेणाऽनुमानान्तरेण प्रवर्तितत्वात्तस्या इति यतीन्द्रप्रकाशकारः ॥७५, ७६, ७७॥

(का०) साध्यशून्यो यत्र पक्षस्त्वसौ बाध उदाहृतः ।
उत्पत्तिकालीनघटे गन्धादिर्यत्र साध्यते ॥ ७८ ॥

(मुक्ता०) साध्यशून्य इति । पक्षः पक्षतावच्छेदकविशिष्ट इत्यर्थः । तेन घटे गन्धसत्त्वेऽपि न क्षतिः । एवं मूलावच्छिन्नो वृक्षः कपिसंयोगीत्यत्रापि बोध्यम् ॥ ७८ ॥

इति श्रीविश्वनाथन्यायपञ्चाननभट्टाचार्यविरचितायां सिद्धान्त-
मुक्तावल्यामनुमानखण्डम् ।

---

(प्र० टी०) बाधं लक्षयति परममूले—" साध्यशून्य " इति । पक्षपदेन सङ्गृहीतमर्थं दर्शयति मूले—" पक्षतावच्छेदकविशिष्ट " इति । अर्थात् पक्षतावच्छेदकदेशकालादिविशिष्टस्यैव पक्षस्य ग्रहणं लक्षणे बोध्यम् । तेन घटोत्पत्तिकालोत्तरकाले घटे गन्धसत्त्वेऽपि न बाधलक्षणस्याव्याप्तिः । प्रपञ्चितप्रायमधस्तात् । अतिस्पष्टं बाधस्थलं दर्शयति—" एवं मूलावच्छिन्न " इति । " मूलावच्छिन्नो वृक्षः कपिसंयोगी एतद्वृक्षत्वाद् " इत्यत्र पूर्वोक्तस्थलीयकालस्येव देशस्यापि पक्षतावच्छेदकत्वात् । यद्यपि वृक्षे शाखावच्छेदेन कपिसंयोगो वर्त्तत एव, तथापि मूलदेशावच्छेदेन कपिसंयोगाभावः प्रत्यक्षप्रमाणसिद्ध इति । मूलदेशावच्छिन्न एव वृक्षः पक्षः । तथा चैतद्वृक्षत्वं हेतुर्बाधितः । अवशिष्टं रामरुद्रकृतानुमानतरङ्गिण्यां निरीक्ष्यम् । ग्रन्थगौरवभयान्नेहोक्तम् ।

इदन्तु बोध्यम्—धर्मिग्राहकमानबाधितः, साध्यप्रतियोगिग्राहकमानबाधितः, साध्यग्राहकमानबाधितः, हेतुग्राहकमानबाधितश्चेति चतुर्धा बाधितः । धर्मिविषयकेन प्रमाणेन यस्य बाधोऽसौ " धर्मिग्राहकमानबाधित " इत्युच्यते—यथा—" घटो व्यापको द्रव्यत्वाद् आकाशवद् " इत्यत्र " द्रव्यत्वं " हेतुरुक्तो बाधितः, यतः प्रत्यक्षेणैव धर्मिणो घटस्य व्यापकताया अभावो निश्चितः ।

द्वितीयस्तु—" वह्निरनुष्णः कृतकत्वाद् " इति । अत्र " कृतकत्वं " हेतुस्तथा। यत उष्णताभावरूपस्य साध्यस्य प्रतियोगिभूतं यदुष्णत्वं तद्ग्राहकं स्पार्शनं प्रत्यक्षं=स्पार्शनप्रत्यक्षरूपं मानं तेनानुष्णत्वसाध्यस्य बाधः । तादृशसाध्यशून्यपक्षकत्वादयं तथोच्यते ।

तृतीयस्तु—" ब्राह्मणेन सुरा पेया द्रवद्रव्यत्वात् क्षीरवद् " इति । तथाहि—

गौडी पैष्टी च माध्वी च विज्ञेया त्रिविधा सुरा ।
यथैवैका तथा सर्वा न पेया ब्रह्मवादिभिः ॥

इति स्मृत्या सुरापानरूपं साध्यं सर्वथा ब्राह्मणकृते निषिद्धमिति "द्रवद्रव्यत्वं" हेतुस्तथा—अर्थात् साध्यग्राहकमानबाधितः । प्रकृते साध्यं सुरापानं, तद्ग्राहकं मानं

गौडीत्यादि शब्दरूपं प्रमाणं, तेनैव तस्या निषिद्धतया बाधितसाध्यकत्वादुक्तनामा बाधितोऽयम्।

चतुर्थस्तु--"राजसूयो ब्राह्मणेन कर्त्तव्यः स्वर्गसाधनत्वाद् अग्निष्टोमवत्" इति। "अत्र 'राजा राजसूयेन यजेत" इति श्रुत्या क्षत्रिय एवोक्तयज्ञाधिकारी नतु ब्राह्मण इति निश्चीयते। तेन स्वर्गसाधनत्वं हेतुर्ब्राह्मणकर्तृकबाधितसाध्यताक इति दिक्।

अयं "बाधित" एवार्हतैः "अकिञ्चित्कर" इतिनामकहेत्वाभासस्य भेदविशेष उच्यते। "असिद्धविरुद्धानैकान्तिकाकिञ्चित्करभेदात् चतुर्विधो हेत्वाभासाः। अप्रयोजकोऽकिञ्चित्कर इति च" ते वदन्ति। परन्तु—'प्रमाणनयतत्त्वालोकालङ्कार" कारवादिदेवसूरिमते तु त्रय एव हेत्वाभासाः। तथाच तस्य सूत्रम्—"असिद्धविरुद्धानैकान्तिकास्त्रयोहेत्वाभासाः" इति। इदन्तु बोध्यम्—बाधित एव "कालात्ययापदिष्ट" उच्यते। कालस्य साधनकालस्याभावेऽपदिष्टः प्रयुक्तो हेतुः कालात्ययापदिष्टः अकालप्रयुक्त इति यावत्। "बाधितसाध्यक" इत्यस्यापरं नाम। दुष्टं लक्षणमपि हेत्वाभासान्तःपात्येव भवति। तथाहि—लक्षणेनेतरभेदसाधकानुमाने अतिव्याप्तं लक्षणं व्याप्यत्वासिद्धम्। तत्राऽसाधारणधर्मस्योपाधित्वात्। अव्याप्तन्तु भागासिद्धम्। असम्भवग्रस्तञ्च स्वरूपासिद्धम्।

अपिचाऽनुमानप्रकरणे बालकैरिदमवश्यं बोद्धव्यम्—पक्षसत्त्वम्, सपक्षसत्त्वम्, विपक्षाद्व्यावृत्तत्वम्, अबाधितविषयत्वम्, असत्प्रतिपक्षितत्वमितिपञ्चरूपोपपन्नोहेतुर्हेतुर्भवति। तद्यथा—साध्यधर्मविशिष्टो धर्मी पक्षः—यथा वन्ह्यनुमाने पर्वतः, तस्मिन् व्याप्य वर्त्तमानत्वं हेतोः "पक्षधर्मत्वम्"। साध्यसजातीयधर्मा धर्मी सपक्षः। यथा तत्रैव महानसम्, तस्यैकदेशे सर्वत्र वा वर्त्तमानत्वं हेतोः "सपक्षसत्त्वम्"। साध्यविरुद्धधर्मा धर्मी विपक्षः। यथा तत्रैव महाह्रदः तस्मात्सर्वत्रैव व्यावृत्तिर्हेतो "र्विपक्षाद्व्यावृत्तत्वम्"। साध्याभावनिश्चायकप्रबलप्रमाणाऽविषयीकृतत्वमेव "अबाधितविषयत्वम्"। यथा धूमवत्त्वस्य हेतोर्यो विषयो वह्निमत्त्वाख्यं साध्यं, तस्य प्रत्यक्षादिप्रमाणैर्बाधो नास्त्येव। साध्याभावनिश्चायकसमबलप्रमाणशून्यत्व "मसत्प्रतिपक्षितत्वम्"। यथाऽत्रैव सर्वप्रसिद्धे वन्ह्यनुमाने साध्याभावसाधकसमबलप्रमाणाभावः। एवंविधपाञ्चरूप्योपपत्तिरेव धूमवत्त्वस्य वन्हिसाध्यसाधकत्वे निबन्धनम्। एवं सर्वत्रोहनीयम्। एषां मध्येऽन्यतमविरहादेव पञ्च हेत्वाभासाः सम्पद्यन्ते। तथाहि–"शब्दोऽनित्यश्चाक्षुषत्वाद्" इत्यत्र चाक्षुषत्वं हेतुः पक्षीकृते शब्दे न वर्त्तते शब्दस्य श्रावणत्वादित्येवं चाक्षुषत्वे पक्षसत्त्वं नास्तीत्यसिद्धो हेत्वाभासः। "शब्दः नित्यः कृतकत्वाद् आकाशवत्" इत्यत्र सपक्षे आकाशे कृतकत्वस्याभावादत्र हेतौ सपक्षसत्त्वं धर्मो नास्तीत्ययं विरुद्धो-हेत्वाभासः साध्यभूतनित्यत्वाभावेनाऽनित्यत्वेन व्याप्तत्वात्। "शब्दोऽनित्यः प्रमेय-

त्वाद् घटादिवद् ” इत्यत्र प्रमेयत्वहेतोर्विपक्षभूता गगनाद्याः, तेभ्योऽस्य व्यावृत्तिर्नास्ति। प्रमेयत्वस्य केवलान्वयित्वेन गगनादिषु वर्त्तमानत्वात्, एवं विपक्षाद्व्यावृत्त्यभावात् साध्याभाववद्वृत्तित्वादयं हेतुर्व्यभिचारी जातः। “ वन्हिरनुष्णः पदार्थत्वाद् ” इत्यत्र पदार्थत्वहेतौ अबाधितविषयत्वं नास्ति उष्णत्वग्राहकेण प्रत्यक्षप्रमाणेन तस्य बाधितसाध्यकत्वात्। तस्मादयमुक्तधर्माभावाद्बाधितो हेत्वाभासः। “शब्दोऽनित्यः नित्यधर्मानुपलब्धेः” इत्यत्र नित्यधर्मोऽनुपलब्धिर्हेतुः असत्प्रतिपक्षितत्वधर्मरहितो न भवति, कुतः? “ शब्दः नित्यः अनित्यधर्माऽनुपलब्धेः ” इत्यनेन सत्प्रतिपक्षितत्वात्। तस्मान्नित्यधर्मानुपलब्धिर्हेतुः सत्प्रतिपक्षितो हेत्वाभासः। अनया रीत्या पाञ्चरूप्योपपन्नो हेतुर्हेतुर्भवति। एकतमरूपापाये हेत्वाभासत्वप्रसङ्गात्। परं पाञ्चरूप्योपपन्नत्वं प्रायिकं बोध्यं * कृत्तिकोदयस्य पक्षधर्मरहितस्यापि शकटोदयं प्रतिहेतुत्वदर्शनादिति दिक् ॥७८॥

इति श्रीपण्डितदेवीदासतनुजनुषा सतीविष्णुदेवीगर्भजेन श्रीजैनन्यायविशारद-कवितार्किक-दर्शनाचार्य-नृसिंहदेवशास्त्रिणा विरचितायां सिद्धान्त-मुक्तावल्याः “ प्रभा ”ख्यायां व्याख्यायां द्वितीयमनुमान-खण्डं समाप्तम्

समाप्ता चाऽनुमानस्वरूपप्ररूपणनाम्नी पञ्चमी मुक्ता।

---

# अथोपमानखण्डम्—

(का०) ग्रामीणस्य प्रथमतः पश्यतो गवयादिकम्।
सादृश्यधीर्गवादीनां या स्यात्सा करणं मतम् ॥७९॥
वाक्यार्थस्याऽतिदेशस्य स्मृतिर्व्यापार उच्यते।
गवयादिपदानां तु शक्तिधीरुपमा फलम् ॥८०॥

( मु० ) उपमितिं व्युत्पादयति—

(प्र० टी०) प्रतिमानं न यस्यास्ति यच्च व्यापि महद्यशः।
श्रुत्येरितमतस्तस्मै कस्मैचिन्महसे नमः ॥ १ ॥

**उपमितिमिति**—अवसरसङ्गत्या उपमितिं निरूपयतीत्यर्थः।

**अयमाशयः**—प्रत्यक्षनिरूपणानन्तरं शिष्यस्य अनुमानजिज्ञासैवाऽभूत्। प्रत्यक्षानुमानयोर्द्वयोः कार्यकारणभावात् सा जिज्ञासैव उपमितिनिरूपणस्य प्रतिबन्धकी

---

* न्यायवार्तिकतात्पर्यटीकादिषु बहुप्रपञ्चः।

भूता, याचानुमितिनिरूपणेन शान्ता, तेन सम्प्रत्युपमितिनिरूपणस्यावसरः । अतश्चात्र "प्रतिबन्धकीभूतशिष्यजिज्ञासानिवृत्त्या अनन्तरवक्तव्यत्वमवसरसङ्गति" रित्यवसरसङ्गत्या लक्षणं घटितमेवेति ज्ञायताम् । कारिकाद्वयस्यायमर्थः- ‡ ग्रामीणस्य=ग्रामे भवो ग्रामीणः हालिकादिर्जनः तस्य । कीदृशस्य प्रथमतः=प्रथमकाल एव गवयादिकम्= आरण्यगोसदृशं पशुविशेषं पश्यतः=आलोकयतः एवम्भूतस्य पुरुषस्य या गवादीनां=गोप्रभृतीनां ग्राम्याणां प्रसिद्धानां पशुविशेषाणां सादृश्यधीः=पुरोवर्ती ( आरण्यः ) पिण्डः गोसदृशः "गोप्रतियोगिकसादृश्यनिरूपितप्रकारतावान्" इत्याकारकं यद् गवयादिविशेष्यकं गोसादृश्यप्रकारकं प्रत्यक्षात्मकं ज्ञानं, सा=बुद्धिः तादृशं ज्ञानमित्यर्थः करणम्=साधकतमं मतम्=उपमितिरूपायाः फलभूतायाः प्रमायाः करणं कुठार इव छिदाया इष्टं नैयायिकानामित्यर्थः। एतदेव "उपमितिकरणमुपमानम्" इत्युक्तं भवति । ननु—विना व्यापारं करणं न भवतीति व्यापार उच्यतामित्यत आह—वाक्यार्थेति । वाक्यार्थस्य="गोसदृशो गवयपदवाच्य" इत्यतिदेशरूपस्य वाक्यार्थस्य (आप्तोक्तपदकदम्बरूपवाक्यार्थस्य) स्मृतिः=स्मरणात्मकं ज्ञानं व्यापारः=तज्जन्यत्वादिलक्षणघटितः उच्यते=कथ्यते ।

ननु=उक्तकरणस्य किं फलमित्याह—गवयादीति । गवयादिपदानां= गवयप्रभृतिशब्दानां शक्तिधीः="गवयादिरर्थो गवयादिपदवाच्य"इत्याकारकं सङ्केतज्ञानं यत् सैव उपमा=उपमितिः फलम्=सादृश्यज्ञानरूपोपमानात्मककरणजन्यं प्रमारूपं ज्ञानं फलमित्यर्थः । करणस्य फलवत्त्वनियमादिति भावः ।

( मु० ) यत्रारण्यकेन केनचिद् ग्रामीणं प्रत्युक्तं गोसदृशो गवयपदवाच्य इति । पश्चाद् ग्रामीणेन क्वचिदरण्यादौ गवयो दृष्टस्तत्र गोसादृश्यज्ञानं यज्जातं तदुपमितिकरणम् । तदनन्तरं "गोसदृशो गवयपदवाच्य" इत्यतिदेशवाक्यार्थस्मरणं यज्जायते तदेव व्यापारः । तदनन्तरं तत्र "गवयो गवयपदवाच्य" इति ज्ञानं यज्जायते तदुपमितिः । न त्वयं गवयपदवाच्य इत्युपमितिः, गवयान्तरे शक्तिग्रहाभावप्रसङ्गात् ॥ ॥ ७९ ॥ ८० ॥

इति श्रीविश्वनाथन्यायपञ्चाननभट्टाचार्यविरचितायां
सिद्धान्तमुक्तावल्यामुपमानखण्डम् ॥

उक्तकारिकाद्वयसङ्गृहीतमर्थं मुक्तावल्यां निरूपयति—"ग्रामीणस्येति" प्रतीकं धृत्वा "यत्रारण्यकेन" इत्यादिना ग्रन्थेन । निगदेनैव व्याख्यातार्थोऽयं

---

‡ "ग्रामादुघखञौ" ( ४ । २ । ९४ ) इति पाणिनिसूत्रेण खञि साधुः । सारस्वतानान्तु—"केनेयेकः" ( ८ । २७३ ) इति तद्धितप्रकरणपठितेन सूत्रेण "ईन" प्रत्यये यथेष्टसिद्धिः ।

ग्रन्थः तथापि कानिचित् पदानि व्याकुर्मः । आरण्यकेन=वन्येन किरातादिजनेन नित्यपरिचितगवयपशुनेत्यर्थः । अतिदेशवाक्यार्थस्मरणम्=एकत्र दृष्टस्य श्रुतस्य वाऽन्यत्र योगोऽतिदेशः । यथा आरण्यकस्य अन्तिके श्रुतस्य "गोसदृशो गवय" इति वाक्यार्थस्य अरण्य एव तादृशे वन्ये पशौ "तथाऽयम्" इति योजनमतिदेशः। तस्य अतिदेशस्य एकत्र श्रुतस्यान्यत्र योजितस्य वाक्यार्थस्य "गोसदृशो गवय" इत्यादिकस्य स्मृतिर्व्यापारः तज्जन्यत्वे सति तज्जन्यजनकत्वरूपः । अर्थात् सादृश्यज्ञान-जन्यत्वे सति सादृश्यज्ञानजन्योपमितिजनकत्वादुक्तकारा स्मृतिरेव व्यापारः । ननु— "अयं गवयपदवाच्य" इति ज्ञानं कुतो नोपमितिरित्याशङ्कायामाह—गवय इति ।

अयमाशयः—यदि इदन्तावगाहि उपमितिज्ञानं स्वीक्रियेत तदा पुरोवर्त्तिनि गवयपिण्डे एव गवयपदस्य शक्तिग्रहः स्याद् न तु देशान्तरीयकालान्तरीयगवयव्यक्तौ, इष्यते च गवयव्यक्त्यन्तरेऽपि शक्तिग्रह इति हेतोः "गवयो गवयपदवाच्य" इत्येवोपमितेराकारः समीचीनः ।

सर्वसारस्तु—गोसादृश्यज्ञानमुपमानं प्रमाणम् । अतिदेशवाक्यार्थस्मृति-र्व्यापारः । "गवयो गवयपदवाच्य" इति पदपदार्थसम्बन्धज्ञानमुपमितिः फलम्। इदन्तु बोध्यम्—उपमानं त्रिविधम्—सादृश्यविशिष्टपिण्डज्ञानम्, असाधारणधर्म-विशिष्टपिण्डज्ञानम्, वैधर्म्यविशिष्टपिण्डज्ञानञ्च । प्रथमं मूलोक्तम् । द्वितीयं यथा "*खड्गी मृगः कीदृशः" इति केनचिद् कुतश्चित् पृष्टम् । तच्छ्रुत्वा उत्तरदाता आह— "नासिकालसदेकशृङ्गः अनतिक्रान्तगजाकृतिश्च" इति । एतदुत्तरं श्रुत्वा प्राश्निकः पुरुषः कालान्तरे तादृशपिण्डं पश्यन् अतिदेशवाक्यार्थं स्मरति, तदनन्तरं "खड्गी मृगः खड्गिपदवाच्यः" इति तस्योपमितिरुद्भवति । अत्र "नासिकालसदेकशृङ्गत्वम्" असाधारणधर्मः । तृतीयं यथा—"उष्ट्रः कीदृक्" इति केनचित् पृष्टे 'अश्वादिवद-समानपृष्ठो न ह्रस्वग्रीवो न ह्रस्वशरीरश्च' इत्याप्तेनोत्तरदात्रोक्तं श्रुत्वाऽसौ पुरुषः कालान्तरे मरुदेशङ्गतः पिण्डविशेषं पश्यति। तदा तस्य "उष्ट्र उष्ट्रपदवाच्य" इत्युपमितिरुत्पद्यते। अर्थाद् वैधर्म्यविशिष्टपिण्डज्ञानमुपमानम्, अतिदेशवाक्यार्थस्मृतिर्व्यापारः । "उष्ट्रः उष्ट्रपदवाच्य" इत्युपमितिः फलम् ।

एवमेव—"जलादिविधर्मगुणवती पृथिवी" इत्यतिदेशवाक्यार्थस्मृतिर्व्यापारः पृथिवीत्वावच्छेदेन पृथिवीपदवाच्यत्वोपमितिः फलमित्यपि बोध्यम् ।

औपनिषदास्तु—प्राङ्गणेषु दृष्टगोपिण्डस्य पुरुषस्य वनङ्गतस्य गवयेन्द्रियसन्निकर्षे सति भवति प्रतीतिः "अयं पिण्डो गोसदृश" इति । तदनन्तरञ्च भवति निश्चयः "अनेन सदृशी मदीया गौ" रिति । तत्र अन्वयव्यतिरेकाभ्यां गवयनिष्ठगोसादृश्यज्ञानं करणम्, गोनिष्ठगवयसादृश्यज्ञानं फल" मित्याहुः । अधिकन्तु दिनकरीसाणिप्रभादिषु

* मृगो वन्यः पशुः ।

द्रष्टव्यम्। * 'प्रसिद्धसाधर्म्यात्साध्यसाधनमुपमानम्' (न्या० १।१।६) इत्याद्यार्षवचनमूलकमेतत्प्रकरणम् ॥८०॥

इति श्रीपण्डितदेवीदासतनुजनुषा सतीविष्णुदेवीगर्भजेन श्रीजैनन्ययविशारद-कवितार्किक-दर्शनाचार्य-नृसिंहदेवशास्त्रिणा विरचितायां सिद्धान्तमुक्तावल्याः 'प्रभा' ख्यायां व्याख्यायां तृतीयमुपमानखण्डं समाप्तम्।

समाप्ता चोपमानस्वरूपनाम्नी षष्ठी मुक्ता।

---

# अथ शब्दखण्डम्

(का०) पदज्ञानं तु करणं द्वारं तत्र पदार्थधीः।
शाब्दबोधः फलं तत्र शक्तिधीः सहकारिणी ॥८१॥

(प्र० टी०) आर्य्याऽनार्यस्वान्तध्वान्तध्वंसनपटीयसी सद्यः।
परिहरतु दुरितजालं तर्कासाराञ्च दिशतु मेधां मे ॥ १ ॥
वाक्यार्थबोधविकला भ्रान्ताः सन्तीह निगमसिद्धान्ते।
तेषामद्यकृतेसौ विज्ञै र्मुक्ता प्रभा हि विज्ञेया ॥ २ ॥

(प्र० टी०) शाब्दबोधप्रकारमिति—उपजीव्योपजीवकभावसङ्गतिं ज्ञात्वा उपमानोत्तरं शाब्दबोधप्रकारं दर्शयति। अर्थात् शक्तिज्ञानात्मकोपमितिजन्यः शाब्द-बोधः उपजीवकं कार्यमित्युच्यते, तादृशमुपमितिज्ञानं उपजीव्यं कारणमित्युच्यत इति तयोः कार्यकारणभावसङ्गत्या उपमित्यनन्तरं शाब्दबोधनिरूपणम्। "गामानय त्वम्"

---

*अत्रेदमवगन्तव्यम्—प्रसिद्धसाधर्म्यादित्यत्र प्रसिद्धिर्द्विधा श्रुतिमयी प्रत्यक्षमयी चेति। तत्राद्या यथ—'यथा गौस्तथा गवयः' इति। द्वितीया यथा—'गोसादृश्यविशिष्टोऽयमीदृशः पिण्डः' इति। तत्र प्रत्यक्षमयी प्रसिद्धिरागमसहितस्मृत्यपेक्षा समाख्यासम्बन्धप्रतिपत्तिहेतुः। यद्यपि—'यथा गौरेवंगवय' इत्येतस्मादपि गोसादृश्यस्य गवयः समाख्येति शक्यतेऽवगन्तुम्। न खलु प्रत्यक्ष एव समाख्याकर्म। समानजातीयव्यवच्छिन्ने हि तद्भवति। तच्च यदि मानान्तरेणापि तथावगम्यते कस्तत्र संज्ञाकर्म निवारयेत्। गोसादृश्येन चोपलक्षितः पिण्डो य इति सर्वनाम्ना परामृष्टः शक्यो घटादिभ्योऽसमानजातीयेभ्यो महिषादिभ्यश्च समानजातीभ्यो व्यवच्छिन्नोऽवगन्तुं गवयः, तथापि यावदसौ गवय इति साक्षात्प्रतीते सम्बन्धिनि संज्ञां न निवेशयति तावदयं परिप्लुतमतिः प्रमाता कश्चित्खलु द्रक्ष्यामि तादृशं पिण्डं यत्र गवयसंज्ञां प्रतिपत्स्य इति प्रोत्सुक एवोदीक्षते। नचासौ वाक्यमात्रसहायोऽप्रत्यक्षीकृतगोसदृशपिण्डोऽ'यमसौ गवयाख्य' इति प्रतिपत्तुमर्हति। तथा वाक्यं विना प्रत्यक्षमात्रादसौ गवयाख्य इति प्रतिपत्तुं नार्हति। तस्मादागमप्रत्यक्षाभ्यामन्यदेवेदमागम-स्मृतिसहितं सादृश्यज्ञानमुपमानाख्यं प्रमाणमास्थेयमिति दिगिति **न्यायवाचस्पत्यकाराः**।

इति श्रुतवतः ज्ञातपदपदार्थसम्बन्धस्य पुरुषस्य तत्तत्पदश्रवणात् तत्तदर्थोपस्थितौ " गोकर्मकानयानुकूलकृतिमांस्त्वम्भव " इत्याकारः समुदितपदेभ्यो वाक्यार्थबोधो जायते यः, स एव शाब्दबोधः तस्य प्रकारं=स्वरूपं दर्शयति=निरूपयतीत्यर्थः । शाब्दीं प्रमामाह परममूले—पदज्ञानमिति । तत्र=शाब्द्यां प्रमायां पदज्ञानं=पदानुभवः, तु=एव करणम्=व्यापारवदसाधारणं कारणम्. पदार्थधीः=पदार्थज्ञानं, द्वारं=व्यापारः, तत्र=पदजन्यपदार्थोपस्थितौ शक्तिधीः=पदेन पदार्थस्य सम्बन्धरूपायाः वक्ष्यमाणायाः सङ्केताख्यायाः शक्तेर्धीः ज्ञानं, सहकारिणी=सहकारिकारणम् अन्यथा पदानुभवेऽपि पदार्थस्य स्मरणं न भवेत् * शाब्दबोधः=वाक्यार्थज्ञानं " गामानये " त्यादिवाक्येन जायमानमुक्ताकारं, फलम्=प्रमारूपम् करणस्य फलावश्यम्भावनियमादिति सान्वयः कारिकार्थः ।

( मु० ) शाब्दबोधप्रकारं दर्शयति—पदज्ञानं त्विति । नतु ज्ञायमानं पदं करणं पदाभावेऽपि मौनिश्लोकादौ शाब्दबोधात् । पदार्थधीरिति । पदजन्यपदार्थस्मरणं व्यापारः। अन्यथा पदज्ञानवतः प्रत्यक्षादिना पदार्थोपस्थितावपि शाब्दबोधापत्तेः । तत्रापि वृत्त्या पदजन्यत्वं बोध्यम् । अन्यथा घटादिपदात्समवायसम्बन्धेनाकाशस्मरणे जाते आकाशस्यापि शाब्दबोधापत्तेः। वृत्तिश्च शक्तिलक्षणान्यतरः सम्बन्धः । अत्रैव शक्तिज्ञानस्योपयोगः । पूर्वं शक्तिग्रहाभावे पदज्ञानेऽपि स्मरणानुपपत्तेः । पदज्ञानस्य च एकसम्बन्धिज्ञानविधयार्थस्मारकत्वम् ।

( प्र० टी० ) कारिकया सङ्गृहीतमर्थं दर्शयति--पदज्ञानन्त्वित्यादिना । नत्विति—शाब्दबोधे पदज्ञानमेव करणं नतु ज्ञायमानं=वर्त्तमानकालीनश्रावणज्ञानविषयीभूतं पदं न करणमित्यर्थः । अत्र हेतुमाह—पदाभावेपीति । पदोच्चारणाभावेपीत्यर्थः । मौनिश्लोकादाविति—मौनिपदं मूकादीनामप्युपलक्षणम् । आदिपदेन विजातीयकरचेष्टादेरपि सङ्ग्रहः ।

**इदमत्राकूतकम्**—प्रत्येकशब्दस्य ज्ञानं श्रोत्रादेव भवति नत्विन्द्रियान्तरात् पदमपि शब्दविशेषः। ( वर्णात्मकः ) यस्य साक्षात्कारः श्रोत्रादेव । परं यदा कश्चन कृतमौनव्रतः पुरुषः स्वभावतो वा मूकादिर्जनो वर्णविन्यासेन करादिचेष्टया वा स्वाभिप्रायं परं प्रति बोधयति, तत्र परो बोध्यमानः पुरुषः पदोच्चारणाभावेऽपि पदज्ञानमात्रेण शाब्दबोधवान् जायते । यदि श्रूयमाणमेव पदं करणं स्यात् तदासौ श्रोता तदर्थप्रमा-

---

* एतल्लक्षणन्तु—एकपदार्थेऽपरपदार्थसंसर्गविषयकं ज्ञानं **शाब्दबोध** इति । यथा—" नीलो घट " इति वाक्याज्जायमानं घटपदार्थे नीलाभेदसंसर्ग विषयीकुर्वत् "नीलाभिन्नोघट" इत्याकारकं ज्ञानम् ।

वान् न भवेत्, यतो भवति, अतो मन्यामहे पदज्ञानमेव करणं नतु ज्ञायमानं पदमिति सर्वोऽयमर्थः कारिकास्थ "तु" पदेन सूचितः । करणं निरूप्य व्यापारं निरूपयति—पदार्थधीरित्यादिना। पदार्थस्मरणं पदार्थोपस्थितिरिति पर्यायशब्दाविमौ। पदजन्यस्येत्यस्यानुपादाने दोषमाह---अन्यथेति । अन्यथा=पदार्थज्ञानमात्रस्य व्यापारत्वे ।

अयमाशयः—यदि सामान्यतः पदजन्यपदार्थज्ञानमेव व्यापारः स्वीक्रियेत तदा यत्र पदज्ञानवतः पुरुषस्य प्रत्यक्षादिना प्रमाणेन घटादिपदार्थस्योपस्थितिर्जाता, तस्यापि शाब्दी प्रमा ( शाब्दबोधः ) स्यात् नत्वेवं दृश्यते, तस्मात् पदजन्यं पदार्थस्मरणरूपं विशिष्टं ज्ञानमेव पदज्ञानात्मके करणे व्यापारः, नतु यतस्ततो जायमानं पदार्थज्ञानम् । अत्रापि यो विशेषस्तमाह—तत्रापीति । पदजन्यपदार्थस्मृतावपि । वृत्त्या=शक्तिलक्षणान्यतरसम्बन्धेन । पदजन्यत्वम्=पदनिष्ठा या जनकता, तादृशजनकतानिरूपिता या जन्यता तद्वत्त्वम् । यद् विशेषणं पदार्थस्मृतिपदे व्यापारभूते दत्तं तन्न येन केनापि सम्बन्धेन ग्रहीतव्यं, किन्तु वृत्यात्मकसम्बन्धेन पदार्थस्मरणात्मकव्यापारे पदजन्यत्वं बोध्यम् । यद्येवं न स्यात् तर्हि को दोष इत्याकाङ्क्षायामाह —अन्यथेति । वृत्त्या इत्यस्यानुपादान इत्यर्थः । घटादिपदादिति—"शाब्दबोधापत्तेः" इत्यन्तस्यायमर्थः—जन्यं कार्यं, जनकं कारणमित्युमुच्यते । प्रकृते पदार्थस्मरणं जन्यं, पदं (पदस्य श्रावणं ज्ञानं) जनकमस्ति, परं जन्यजनकयोरपि कश्चित् सम्बन्धो भवति अन्यथा कथं तयोर्भावः सिद्ध्येत्। यद्यत्र येन केनापि सम्बन्धेन पदस्य पदार्थस्मरणम्प्रति जनकता, पदार्थस्मरणस्य च जन्यता मन्येत तर्हि "घटमानय" इति वाक्यात् घटादिपदेभ्यः समवायसम्बन्धेन आकाशस्यापि शाब्दबोधे भानं स्यात्, अस्ति च शब्दस्वरूपाणां घटादिपदानामाकाशे समवायाख्यः सम्बन्धः, शब्दस्य गुणत्वात् गुणगुणिनोश्च समवायात् । परमुक्तवाक्यात् कस्याप्याकाशीयशाब्दबोधो न जायते, तस्मात् पदार्थस्मरणे पदजन्यत्वं वृत्तिनामकसम्बन्धेन बोध्यम् ।

ननु—का सा वृत्तिः यद्रूपेण=यदात्मकेन सम्बन्धेन पदजन्यत्वं पदार्थस्मरणे भवति, येनाकाशस्य शाब्दबोधे न भानं, किन्तु तत्तत्पदार्थसंसर्गरूपवाक्यार्थस्यैवेत्याकाङ्क्षायामाह—वृत्तिश्चेति । शक्तिलक्षणान्यतरसम्बन्धः=शक्तिः=ईश्वरेच्छारूपा सङ्केताख्या अनुपदमेव वक्ष्यमाणलक्षणा, लक्षणा* अपि वक्ष्यमाणलक्षणा शक्यसम्बन्धरूपा तदन्यतरसम्बन्धो वृत्तिरित्यर्थः । "अर्थस्मृत्यनुकूलः पदपदार्थयोः परस्परसम्बन्धो वृत्ति" रिति तु हृदयम् । साच द्विविधा शक्तिर्लक्षणा चेति । उक्तञ्च गदाधरभट्टाचार्यैः शक्तिवादे—सङ्केतो † लक्षणाचार्थे पदवृत्तिः । अत्रैव=पदजन्यपदार्थो-

---

* "तीरं गङ्गापदार्थसम्बन्धि न गङ्गापदार्थ" इति ज्ञानेऽपि "गङ्गायां घोष" इत्यादितः शाब्दबोधोदयात्सङ्केतमात्रेण नोपपत्तिरतो लक्षणाया वृत्त्यन्तरत्वमेषितव्यमित्याशयः ।

† सर्वत्र लोके श्रुतैरेव पदैः सर्वेषां जनानां शाब्दबोधो जायते नाश्रुतैः । परन्तु श्रुतैरपि

पस्थितावेव, **शक्तिज्ञानस्य**=सङ्केतज्ञानस्य, **उपयोगः**=आवश्यकता । प्रयोजकतेति यावत् **पूर्वं**=प्रथमं, **शक्तिग्रहाभावे**=शक्तिज्ञानाऽसत्त्वे **पदज्ञानेऽपि**=पदीयश्रौत्रसाक्षात्कारेपि, **तत्सम्बन्धेन**=पदीयसम्बन्धेन, **स्मरणानुपपत्तेः**=पदार्थस्मरणानुपपत्तेः। यावत्पदीयशक्तिज्ञानं न स्यात् तावत्पदीयज्ञानमात्रेण न पदार्थोपस्थितिर्भवतीति भावः। **ननु**— कथं पदज्ञानं स्मारकमित्याह—**पदज्ञानस्येति** । **ननु**—पदविषयकाऽनुभवरूपाज्ज्ञानात्पदविषयकस्मृतिरुत्पद्यते, पदार्थविषयकानुभवरूपाज्ज्ञानात्पदार्थविषयकस्मृतिरुत्पद्यते, समानविषयकत्वेन अनुभवस्मरणयोः कार्यकारणभावात् तत्कथं पदज्ञानजन्यं पदार्थस्मरणमित्यत आह-**एकसम्बन्धीति** । "एकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकम्" इत्यस्ति नियमः । अनेन नियमेन यथा तत्पुत्रं दृष्ट्वा तत्पितरं स्मरति किं वा हस्तिनं दृष्ट्वा हस्तिपकस्य, तञ्चालोक्य हस्तिनः स्मरणं जायते, एवमेव पदज्ञानस्यापि सम्बन्धिज्ञानविधयाऽर्थस्मारकत्वम् । शक्तिज्ञानवतः पुरुषस्य पदं ज्ञात्वा (पदीयश्रवणं कृत्वा) तत्सम्बन्धिनोऽर्थस्यावश्यमुपस्थितिर्भवतीति सारः ।

**( मुक्ता० ) शक्तिश्च पदेन सह पदार्थस्य सम्बन्धः । सा * चास्मा-**

---

केषाञ्चिदेव भवति शाब्दबोधो न सर्वेषामिति "शाब्दबोधम्प्रति वृत्तिप्रयोज्यपदार्थोपस्थितिरेवान्वयव्यतिरेकाभ्यां कारणमस्तीति" निश्चीयते । तत्र का नाम सा वृत्तिरिति जिज्ञासायां **गदाधरभट्टाचार्यः शक्तिवाद**ग्रन्थे वृत्तिनिरूपणमारभमाण आह " **सङ्केत** " इति । अत्र "अर्थ" इति सप्तम्यन्तपदे सप्तम्यर्थो निष्ठात्वम् । तथा चोक्तवाक्यस्यायमर्थः सम्पन्नः—अर्थनिरूपिता पदनिष्ठा या वृत्तिः सा सङ्केतो लक्षणा चेति । तत्रापि घटाद्यर्थनिरूपिता घटादिपदनिष्ठा वृत्तिः " **सङ्केतः** " तीराद्यर्थनिरूपिता गङ्गादिपदनिष्ठा या वृत्तिः सा " **लक्षणा** " इति विवेकः । " शक्तिर्लक्षणा च पदवृत्ति " रित्यनुक्त्वा " सङ्केतो लक्षणा च पदवृत्ति " रिति कथनमाधुनिकपित्रादिकृतसङ्केतसङ्ग्रहार्थं बोध्यम् । " शाब्दबोधानुकूलार्थोपस्थित्यनुकूलः पदपदार्थयोः सम्बन्धः शक्तिलक्षणान्यतरा वृत्ति" रिति तु निष्कर्षः । वृत्त्या पदप्रतिपाद्य एव **पदार्थः** । अत्र " वृत्त्या " इति तृतीयायाः प्रयोज्यत्वमर्थः । पदेन प्रतिपाद्यः पदप्रतिपाद्य इत्यत्र जन्यत्वं तृतीयार्थः । प्रतिपाद्यः=प्रतीतिविषयः । विषयत्वञ्च प्रत्ययार्थः । तथाच—" वृत्तिप्रयोज्यपदजन्यप्रतीतिविषयः पदार्थ " इति फलितं भवति । प्रतीतिरत्र शाब्दबोध एव ।

* इदमत्रावधार्यम्—" इदं पदमिममर्थं बोधयतु " इति " अस्माच्छब्दादयमर्थो बोद्धव्य " इति वेच्छा सङ्केतरूपा **वृत्तिः** । न्यायनये सङ्केतस्येच्छारूपत्वेन " इद " मित्यादिना पदविशेष्यकः सङ्केत उक्तः । अत्र प्रथमाकारे पदशब्दस्य प्रथमान्तत्वेन पदविशेष्यकः शाब्दबोधः ( न्यायनये प्रथमान्तमुख्यविशेष्यकशाब्दबोधस्येष्टत्वात् ) । तथा च " इदं पद " मित्यादेरिदं गोपदमित्याद्यर्थः । सम्पन्नार्थस्तु—" गोत्वाद्यवच्छिन्नविषयतानिरूपकबोधनिरूपितजनकताश्रयो गवादिपदम् " इति । " अस्मात्पदादि " **त्यर्थ**विशेष्यकः सङ्केतः—अर्थात् गवादिपदात्

च्छब्दादयमर्थो बोद्धव्य इतीश्वरेच्छारूपः। आधुनिके नाम्नि शक्तिरस्त्येव एकादशेऽहनि पिता नाम कुर्यादितीश्वरेच्छायाः सत्त्वात्। आधुनिके तु सङ्केते न शक्तिरिति सम्प्रदायः। नव्यास्तु ईश्वरेच्छा न शक्तिः, किन्त्विच्छैव तेनाधुनिकसङ्केतेऽपि शक्तिरस्त्येवेत्याहुः।

(प्र० टी०) शक्तिं लक्षयति—शक्तिश्चेति। भगवदिच्छारूपा शक्तिश्च—पदेन सह=गवादिपदेन सह, पदार्थस्य=गोत्वादिविशिष्टार्थस्य, सम्बन्धः=वाच्यवाचकभावरूपः। शक्तिं लक्षयति—साचेति। अस्मात् शब्दात्=घटादिपदात् अयमर्थः= कम्बुग्रीवादिव्यक्तिरूपः घटत्वादिजातिरूपो वार्थः, बोद्धव्यः=ज्ञातव्य इत्याकारा या ईश्वरेच्छा=भगवदिच्छा, तद्रूप एव सम्बन्धः शक्तिरित्युच्यते न्यायनये। इयमेव "मुख्यावृत्तिः" "अभिधा" इति च तन्त्रान्तरे व्यवह्रियते। उक्तञ्च महर्षिणा कणभुजा "सामायिकः शब्दादर्थप्रत्ययः" (वै० अ० ७। आ० २। सूत्र २०) सामायिकः=समय ईश्वरकृतः सङ्केतः "अस्माच्छब्दादयमर्थो बोद्धव्यः" इत्याकारः। तेन समयेन निर्वृत्तः सामयिकः। "तेन निर्वृत्तम्" (४।१।७९) इति पाणिनिसूत्रेण ठञ्। शब्दात्=घटपटादिपदात् अर्थसम्प्रत्ययः=पृथुबुध्नोदराद्याकारादिप्रतीतिर्भवतीति सूत्रार्थः। तथाच शब्दार्थयोरीश्वरेच्छैव सम्बन्धः, सच समयाधीनः। अमुमेवार्थं महर्षिर्गौतमोऽपि * "न सामयिकत्वाच्छब्दार्थसम्प्रत्ययस्य" (न्या० २।१।५५) इत्यसूत्रयत्। वाचस्पतिमिश्राश्च अत्रत्यं भाष्यं विवृण्वाना "अभिधानाभिधेययोर्नियमो गोशब्दस्य सास्नादिमानेवार्थः, एवमश्वशब्दस्य केसरादिमानेवेति तस्मिन्नियोगो बोद्धव्य इति भगवतः परमेश्वरस्य सर्गादौ सोऽयं समय इत्यर्थ" इत्याहुः।

इदन्तु बोध्यम्—यद्यपीश्वरेच्छा एकैव तस्मात् "घटपदात् पटो बोद्धव्यः" इत्याकारापीश्वरीयेच्छा पटे स्यादिति घटपदात्पटरूपार्थबोधातिप्रसङ्गः। एवमेव "गङ्गापदात्तीरबोधो भवतु" इत्याकारापीश्वरेच्छा तीरे वर्त्तत इति शक्त्यैव तीरबोधसत्त्वाल्लक्षणाया उच्छेद एव, तथापि "तीरं गङ्गापदवाच्य" मित्याकारस्तीरे व्यवहारो नास्ति। तस्माद् गङ्गादिपदजन्यबोधविषयतात्वावच्छिन्नप्रकारतानिरूपितविशेष्यतासम्बन्धेन या ईश्वरीयेच्छा तयैव गङ्गादिपदानां जलप्रवाहादिरूपेऽर्थे शक्तिः। तीरादिनिष्ठविशेष्यताया

---

गवादिपदार्थो बोद्धव्यः। तथा च—"गवादिपदजन्यबोधविषयताश्रयो गवादिक"मिति फलितम्। गवादिपदजन्यबोधनिष्ठविषयितानिरूपितविषयताश्रयत्वं गवादौ स्पष्टमेव। एवं बोधविशेष्यकोऽपि सङ्केतो ज्ञेयः यथा—"गोत्वावच्छिन्नविषयको बोधो गवादिपदजन्यो भवतु" इत्याकार इति दिक्।

*सूत्रार्थस्तु—शब्दार्थयोरविनाभावलक्षणः सम्बन्धो न सम्भवति, कुतः शब्दार्थसम्प्रत्ययस्य=शब्दाज्जायमानायाः अर्थप्रतीतेः सामयिकत्वात्="अस्माच्छब्दादयमर्थो बोद्धव्य" इतीश्वरेच्छारूपो यः सङ्केतः तदधीनत्वात् तन्निर्वर्त्यत्वादिति यावत्।

गङ्गादिपदजन्यबोधविषयत्वप्रकारतानिरूपितत्वेऽपि न तस्यास्ताद्दशविषयतात्वेन ताद्दशप्रकारतानिरूपितत्वम्। अपि तु शुद्धविषयतात्वेनेति नातिप्रसङ्गो नवा लक्षणोच्छेदापत्तिरित्याद्यन्यत्र विस्तरः।

इदमत्राधिकं पण्डितैर्ज्ञातव्यम्–अर्थविशेष्यकशक्तिपक्षे–"गङ्गापदजन्यबोधविषया गङ्गा" इत्यस्य गङ्गापदजन्यबोधविषयताश्रयो गङ्गेत्यर्थः। अत्राश्रयतासम्बन्धेन पदजन्यबोधविषयता गङ्गापदार्थे प्रकारः। प्रकारतावच्छेदकं बोधविषयतात्वम्। प्रकारता च बोधविषयतात्वावच्छिन्ना। तथाच—आश्रयतासम्बन्धावच्छिन्नगङ्गापदजन्यबोधविषयतात्वावच्छिन्नप्रकारतानिरूपितभगवदिच्छीयविशेष्यतासम्बन्धेन गङ्गापदजन्यबोधविषयता गङ्गापदार्थे वर्त्तते। "गङ्गा गङ्गापदजन्यबोधविषया भवतु" इतीश्वरेच्छाया आकारः। स्वनिष्ठावच्छेद्यतानिरूपितावच्छेदकतावच्छेदकत्वसम्बन्धावच्छिन्नगङ्गापदजन्यबोधविषयतात्वावच्छिन्नप्रकारतानिरूपितभगवदिच्छीयविशेष्यतासम्बन्धेन सैव गङ्गापदजन्यबोधविषयता गङ्गात्वसमवाये वर्त्तते। "समवायो गङ्गापदजन्यबोधविषयतावच्छेदकतावच्छेदको भवतु" इतीश्वरेच्छाया आकारः। अत्र "स्वं" बोधविषयता, तन्निष्ठा या अवच्छेद्यता ( अवच्छिन्नता ) तन्निरूपिता या अवच्छेदकता सा गङ्गात्वे वर्त्तते, ताद्दशबोधविषयताऽपि गङ्गायाम्, गङ्गात्वमपि च गङ्गायां वर्त्तते इति ताद्दशबोधविषयतानतिरिक्तवृत्तित्वाद्बोधविषयतावच्छेदकं गङ्गात्वम्, अवच्छेद्यत्वं च बोधविषयतायां प्राप्तम्। तथाच—गङ्गापदजन्यबोधविषयतानिष्ठावच्छेद्यत्वनिरूपितं यद्गङ्गात्वनिष्ठमवच्छेदकत्वं तत्सम्बन्धावच्छिन्ना या गङ्गात्वनिष्ठा बोधविषयता तन्निष्ठप्रकारतानिरूपितभगवदिच्छीयविशेष्यता गङ्गात्वे वर्त्तते। एवं तृतीयेऽपि "स्वं" बोधविषयता तन्निष्ठाऽवच्छेद्यतानिरूपिता अवच्छेदकता गङ्गात्वे, ताद्दशगङ्गात्वनिष्ठावच्छेदकतावच्छेदकत्वं समवाये। तथाच—स्वनिष्ठावच्छेद्यतानिरूपितावच्छेदकतावच्छेदकत्वसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतासम्बन्धेन गङ्गापदजन्यबोधविषयता समवाये वर्त्तते। एकैव गङ्गापदजन्यबोधविषयता आश्रयतासम्बन्धेन गङ्गायां, अवच्छेदकतासम्बन्धेन गङ्गात्वे, अवच्छेदकतावच्छेदकत्वसम्बन्धेन समवाये, एवं सा सम्बन्धभेदात्त्रिष्वेव वर्त्तते। अतएव "व्यक्त्याकृतिजातयस्तु पदार्थः ( न्या० ) इति गोतमसूत्रे पदार्थ इत्येकवचनोपपत्तिः पदार्थत्वस्य पदजन्यप्रतीतिविषयत्वस्यैकत्वादिति भावः।

ननु—यदीश्वरेच्छैव शक्तिः तर्हि पुत्रादौ पित्रादिकल्पितानां चैत्रादिपदानां शक्तिर्न स्यात् तत्रेश्वरेच्छाया अभावादित्याशङ्क्याह—"आधुनिक" इति। आधुनिकैः पित्रादिभिरेकादशेऽहनि सङ्केतिते नाम्नीत्यर्थः। "इतीश्वरेच्छाया" इति—एकादशाहकालीनपित्रुच्चारणविषयनामत्वेन सामान्यरूपेण ईश्वरेच्छारूपा शक्तिरस्त्येवेति नाव्याप्तिरित्याशयः। आधुनिकसङ्केतमात्रे नदीवृद्ध्यादिपदे डित्थादिपदे च नेश्वरेच्छा-

रूपा शक्तिः किन्तु तु सा " यदृच्छारूपा " इति साम्प्रदायिकानां मतमित्याशयेनाह— " आधुनिके सङ्केते न शक्तिरिति सम्प्रदाय " इति । एतदाशयेनैव शक्तिवादे- " आधुनिकसङ्केतः परिभाषा तया चार्थबोधकं पदं पारिभाषिकम् " इत्याद्युक्तमिति तदेकदेशीयमाभाति । अत्रास्वरसो नव्यानामिति नवीनमतं दर्शयति—नव्यास्त्विति । अयमाशयः—यदीश्वरेच्छारूपैव शक्तिः, तर्हि आधुनिकपाणिन्यादिमुनिना 'यूस्त्र्याख्यौ नदी' ( पा० १ । ४ । ३ ) इत्यादिरूपेण सङ्केतितात् नद्यादिपदाच्छाब्दबोधो न स्यात्, तस्मादिच्छात्वेन रूपेण शक्तित्वं स्वीकार्यम्, तत्क्वचिदीश्वरेच्छारूपम् क्वचिदनीश्वरेच्छारूपमिति सर्वसङ्ग्रहः । एवञ्चाधुनिकसङ्केतिताः चैत्रमैत्रडित्थडवित्थाद्याः शब्दा यदृच्छाशब्दा द्रव्यवचनाश्चेत्यभिधीयन्ते । अधिकं मत्प्रणीतकाव्यप्रकाशटीकाया द्वितीयोल्लासे द्रष्टव्यम् । मतद्वयेऽपि अपभ्रंशगगर्यादिपदे शक्तिभ्रमादेव बोध इत्यप्यवधेयम् ।

( मु० ) शक्तिग्रहस्तु व्याकरणादितः । तथा हि—

शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद्व्यवहारतश्च ।
वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः ॥

धातुप्रकृतिप्रत्ययादीनां शक्तिग्रहो व्याकरणाद्भवति ।

( प्र० टी० ) ननु कानि शक्तिज्ञानप्रयोजकानि इत्याकाङ्क्षायामाह—" शक्तिग्रहस्तु " इति । अत्राभियुक्तोक्तिं प्रमाणयति—" तथाही " ति । तत्र—व्याकरणम्=अष्टप्रस्थानमिन्द्रादिप्रणीतम् । उपमानं=सादृश्यज्ञानमुपमितिकरणं पूर्वं व्याख्यातम् । कोशः=अमरसिंहादिप्रणीतः । आप्तवाक्यम्=प्रयोगहेतुभूतयथार्थज्ञानवानाप्तः, तद्वाक्यं आकाङ्क्षादिमत्पदसमूहात्मकम् । व्यवहारः=शब्दप्रयोगः प्रयोज्यवृद्धमुद्दिश्य उत्तमवृद्धादिकृतः " गामानय त्वम् " इत्यादिप्रेरणारूपः । वाक्यशेषः= स्वभिन्नवाक्ये स्वार्थबोधोपयोगी पदकदम्बोऽर्थवादादिरूपः । विवृतिः=विवरणम् । सिद्धपदस्य सान्निध्यम्=प्रसिद्धपदस्य सन्निधिः । एतान्यष्टौ शक्तिज्ञानस्य प्रयोजकानि । तानि च क्रमशः प्रदर्श्यन्ते—" धातुप्रकृतिप्रत्ययादीनाम् " इत्यादिना ग्रन्थेन । तत्र " भू " धातोः सत्तायां शक्तिः । लटो वर्त्तमानार्थे शक्तिरित्यादिधातुप्रकृतिप्रत्ययानां " भू " सत्तायाम् " वर्त्तमाने लट् " ( ३ । २ । १२३ ) इत्यादिव्याकरणाद् " यथायथं वेद्या । आदिना " कर्मणि द्वितीया " ( पा० २।३।२ ) इत्यादेः सङ्ग्रहः । उक्तञ्च—

आश्रयोऽवधिरुद्देश्यः सम्बन्धः शक्तिरेव वा ।
यथायथं विभक्त्यर्थः सुपां कर्मेति भाष्यतः ॥

द्वितीयातृतीयासप्तमीनामाश्रयोऽर्थः । अर्थात्—क्रियाजन्यफलाश्रयः कर्म । धात्वर्थव्यापाराश्रयः कर्त्ता इति कर्त्तरि तृतीयाया आश्रयोऽर्थः । करणतृतीयास्तु साक्ष-

यद्व्यापारौ वाच्यौ । तथाहि—" साधकतमं करणम् " ( पा० १ । ४ । ४६ ) इत्यत्र तमबर्थः प्रकर्षः । सचाव्यवधानेन फलजनकव्यापारवत्ता, तादृशव्यापारवत्कारणं करणम् । सप्तम्या अप्याश्रयोऽर्थः । तच्च " आधारोऽधिकरणम् " ( पा० १ । ४। ४५ ) इति सूत्रादाधारः । तच्चाश्रयत्वम् । तत्राश्रयांशः शक्यः तत्त्वमवच्छेदकत्वम् । उक्तञ्च वाक्यपदीये—

कर्तृकर्मव्यवहितामसाक्षाद्धारयत्क्रियाम् ।
उपकुर्वत्क्रियासिद्धौ शास्त्रेऽधिकरणं स्मृतम् ॥

उपकुर्वत् क्रियासिद्धाविति स्वनिष्ठव्यापारेण प्रधानक्रियानिर्वर्त्तकमित्यर्थः । अवधिः पञ्चम्यर्थः । तच्चापादानम् । "ध्रुवमपायेऽपादानम्" (पा० १ ४ २४) इति सूत्रादपायो विश्लेषः, तज्जनिका या क्रिया, तत्रावधिभूतमपादानम् । उक्तञ्च वाक्यपदीये—

अपाये यदुदासीनं चलं वा यदि वाचलम् ।
ध्रुवमेवातदावेशात्तदपादानमुच्यते ॥

उद्देश्यश्चतुर्थ्यर्थः । तच्च सम्प्रदानमेवोद्देश्यम् " कर्मणा यमभिप्रैति स सम्प्रदानम् "( पा० १।४.३२ ) इति पाणिनिशासनात् । इदमेव शेषित्वम् । तदुद्देश्यकेच्छाविषयत्वञ्च शेषत्वमित्येवं पूर्वतन्त्रेऽपि निरूपितम् । " षष्ठी शेषे " (पा० २।३।५०) इति सूत्रात् सम्बन्धमात्रं षष्ठ्या अर्थः । सच कारकप्रातिपदिकार्थभिन्नः स्वस्वामिभावादिसम्बन्धश्च शेषपदार्थः । शक्तिरेव वा षण्णां विभक्तीनामर्थः । कारकषष्ठ्यास्तु शक्तिरेवेति । एवमादिरीत्या व्याकरणाच्छक्तिग्रहः । प्रपञ्चस्तु वैयाकरणभूषणादौ । दिङ्मात्रन्तूक्तम् ।

( मु० ) क्वचित्सति बाधके त्यज्यतेऽपि । यथा वैयाकरणैराख्यातस्य कर्तरि शक्तिरुच्यते । चैत्रः पचतीत्यादौ कर्त्रा सह चैत्रस्याभेदान्वयः । तच्च गौरवात्त्यज्यते, किन्तु कृतौ शक्तिर्लाघवात् । कृतिश्चैत्रादौ प्रकारीभूय भासते ।

( प्र० टी ) व्याकरणशक्तेरपवादस्थलं दर्शयितुमाह—" क्वचिदि"ति । क्वचित्=कस्मिंश्चित् स्थले सति बाधके=गौरवादिदोषकारणात् त्यज्यतेऽपि—व्याकरणाद् गृहीताया अपि शक्तेस्त्यागः कर्त्तव्य इत्यर्थः । तदेतदुदाहरणेन स्पष्टीकर्त्तुमाह —"यथे"ति—"लः कर्मणि च भावे चाकर्मकेभ्यः" (३।४.६९) इत्यादिव्याकरणानुशासनबलात् "पचती"त्यादेः आख्यातस्य=क्रियापदस्य कर्त्तरि=धात्वर्थव्यापाराश्रये चैत्रादिकर्त्तरि शक्तिरुच्यते=शक्तिः स्वीकृता वैयाकरणैः, तेषां मते " चैत्रः पचति " इत्यादिस्थले कर्त्रा=पचत्याख्यातवाच्येन कर्त्रा सह चैत्रस्य=चैत्रपदार्थस्य अभेदान्वयः=अभेदसंसर्गः । अर्थात्—"एकत्वसङ्ख्याश्रयचैत्राऽभिन्नकर्तृवृत्तिवर्त्तमानकालिकः

पाकानुकूलो व्यापार" इति व्याकरणमते बोधो भवति । एतादृशेऽर्थे प्रमाणन्तु—"लः कर्मणि"—(३।४।६९) इति सूत्रमेव। एवं तिप्प्रत्ययस्य सङ्ख्या, कर्त्ता, कालश्चेति त्रयोऽर्थः । "सामान्यविशेषयोरभेदान्वय" इति नियमेन तिप्प्रत्ययवाच्यभूतेन सामान्यकर्तृरूपेण तद्विशेषचैत्ररूपस्यार्थस्याऽभेदान्वयः । तथाच दर्शितम् । एवं स्थिते नैयायिक आह—"तच्च गौरवात्त्यज्यते" इति । परमेवं कृते सति गौरवमापद्यते किन्तु तेन आख्यातस्य कृतौ=यत्ने शक्तिर्मन्तव्या लाघवात्=लाघवहेतोरित्यर्थः ।"कृति"रिति—सा चाख्यातार्थभूता कृतिः चैत्रादौ=चैत्रमैत्रादौ कर्त्तरि कृत्याश्रय प्रकारीभूय=विशेषणभावमापद्य भासते=विशेषणतासम्बन्धेनान्विता भवतीत्यर्थः ।

अयमत्र नैयायिकानामाशयः—यदि—"लः कर्मणी"त्यनुशासनबलाद् आख्यातस्य कर्त्तरि शक्तिरभ्युपगम्येत, तदा कर्तृनिष्ठो धर्मः कृतिरूप एव शक्यतावच्छेदकः स्यात्। कृतिस्तु प्रतिकर्त्तृ नानारूपतया वर्त्तते । ततश्च शक्यतावच्छेदकधर्माणामानन्त्यापत्तिः । एकरूपस्यावच्छेदकधर्मस्योपस्थित्यपेक्षया नानाधर्माणामवच्छेदकभूतानामुपस्थितेर्महद्गौरवमापद्येत । अत उपस्थितिकृतलाघवहेतोराख्यातस्य पचत्यादेः कर्तृनिष्ठे कृतिरूपे धर्म एव शक्तिरङ्गीकार्या । शक्यतावच्छेदकत्वञ्च नानाकृतिष्वनुगतायाः कृतित्वरूपाया जातेरेवेति पारमार्थिकं लाघवमनुसरद्भिर्नैयायिकैरर्धमात्रालाघवाभिमानारूढा वैयाकरणा सोपहासमीक्ष्यन्ते ।

(मु०) न च—कर्तुरनभिधानाच्चैत्रादिपदानन्तरं तृतीया स्यादिति वाच्यम्, कर्तृसङ्ख्यानभिधानस्य तत्र तन्त्रत्वात् । सङ्ख्याभिधानयोग्यश्च कर्मत्वाद्यनवरुद्धः प्रथमान्तपदोपस्थाप्यः । कर्मत्वादीत्यस्येतरविशेषणत्वतात्पर्याविषयत्वमर्थः । तेन चैत्र इव मैत्रो गच्छतीत्यादौ न चैत्रे सङ्ख्यान्वयः ।

(प्र० टी०) ननु—भवद्रीत्या आख्यातप्रत्ययस्य कृतौ शक्तिस्वीकारे कर्त्ता तु नाख्यातवाच्यः, एवं प्रत्ययादिनाऽनुक्ते कर्त्तरि "अनभिहिते" (२।३।१) इतिसूत्राधिकारवता "कर्त्तृकरणयोस्तृतीया" (२।३।१८) इत्यनुशासनेन "चैत्रः पचति" इति वक्तव्ये "चैत्रेण पचति" इति प्रयोगापत्तिः स्यादित्याशयेन शङ्कामुत्थाप्य प्रतिक्षिपति—"नच" इत्यारभ्य "तन्त्रत्वाद्" इत्यन्तेन । कर्त्तुः=चैत्रादेः अनभिधानात्=प्रत्ययानुक्तत्वात्, चैत्रादिपदानन्तरं "चैत्रः पचति" इत्यादौ चैत्रादिपदोत्तरम्। आदिना मैत्रादिपरिग्रहः। तृतीया विभक्तिः स्यादितिशङ्काग्रन्थपदार्थः। कर्त्तृसङ्ख्यानभिधानस्य=कर्त्तृगतायाः सङ्ख्याया यदनभिधानम् तस्य तत्र=तृतीयायां तन्त्रत्वात्=प्रयोजकत्वात् । अर्थात् यदा कर्त्तृगता सङ्ख्या आख्यातप्रत्ययेनोक्ता न भवति तदोक्तसूत्रेण कर्त्तरि तृतीया विभक्तिर्भवति यदा

कर्तृनिष्ठा सङ्ख्या आख्यातप्रत्ययेनोक्ता भवति तदा कर्त्तरि प्रथमा विभक्तिर्भवतीति नियमो बोध्यः । यदाहुः—

कर्त्ता कर्म च करणं सम्प्रदानं तथैव च ।
अपादानाधिकरणमित्याहुः कारकाणि षट् ॥
द्वितीया कर्मणि ज्ञेया कर्त्तरि प्रथमा यदा ।
उक्तकर्तृ-प्रयोगोऽयं न तदा यक्प्रयुज्यते ॥
तृतीया कर्त्तरि यदा कर्मणि प्रथमा तदा ।
उक्तकर्म-प्रयोगोऽयं न तदा परस्मैपदम् ॥ इति ।

अत्र कर्त्तरीति कर्तृसङ्ख्याभिधान इत्यर्थः । ननु—कर्तृसङ्ख्याभिधाने (उक्ते* कर्त्तरि) किं प्रयोजकमित्याशङ्क्य तत्प्रयोजकं दर्शयति—"**सङ्ख्याभिधाने**"ति । **कर्मत्वाद्यनवरुद्धः**=कर्मत्वादिधर्मानवच्छिन्नः **प्रथमान्तपदोपस्थाप्यः**=प्रथमाविभक्त्यन्तपदेन स्मृतिविषयतां गमितः कर्त्ता **सङ्ख्याभिधानयोग्यः**=उक्तः कर्त्ता भवतीत्युक्तकर्तृलक्षणं ज्ञेयमित्यर्थः ।

**ननु**—"चैत्र इव मैत्रो गच्छति" इत्यादावाख्यातेनैकवचनत्वरूपेण उक्तायाः सङ्ख्याया यथा मैत्रेऽन्वयस्तथा चैत्रेऽपि† स्यात्, यतश्चैत्रोऽपि कर्मत्वादिधर्मानवरुद्धः प्रथमान्तपदोपस्थाप्यश्चेति । किञ्च—"पक्वमन्नं भुज्यते" इत्यत्राख्यातसङ्ख्याया अन्नपदार्थेऽन्वयानुपपत्तिः, पाककर्मत्वस्य अन्नेऽन्वयेन कर्मत्वाद्यनवरुद्धत्वाभावाच्चेत्यस्वरसं मत्वा परिष्कृतमुक्तकर्तृलक्षणं वक्तुमाह—**कर्मत्वादीत्यस्ये**ति । तथाच—कर्मत्वपदमितरपरम् अनवरुद्धत्वञ्च विशेषणतया अविवक्षितम् । अर्थात्—कर्मत्वाद्यनवरुद्धेत्यस्य "इतरविशेषणत्वेन तात्पर्याऽविषयत्वम्" इति पारिभाषिकार्थः । कर्मपदमितरपरम्, अनवरुद्धपदं विशेषणत्वेनाऽविवक्षितपरमिति दिनकर्युक्तेः । इत्थं लक्षणस्यायमाकारः सम्पद्यते—"इतरविशेषणत्वेन तात्पर्याविषयत्वविशिष्टप्रथमान्तपदोपस्थाप्यः कर्त्ता सङ्ख्याभिधानयोग्यः" इति । तेनोक्तस्थले आख्यातसङ्ख्याया मैत्र

---

* कर्त्तुरुक्तत्वे इत्यर्थः ।

† **अत्राहुः**—यत्र "चैत्रीयं सादृश्य" मित्यवान्तरवाक्यार्थबोधः तत्र कथं चैत्रस्याविशेषणत्वमिति तन्न यत्र "खले कपोतन्यायेन" युगपत्पदार्थान्वयबोधः तत्र 'चैत्रीयं सादृश्य' मित्यवान्तरवाक्यार्थबोधस्य पूर्वमभावः, अतो विशेषणत्वतात्पर्याविषत्वपर्यन्तानुधावनम् । नच—"चैत्र एव पचति" 'चैत्रश्चैत्रं पश्यति' इत्यादौ एवकारार्थे अन्यस्मिन् कर्मादौ च चैत्रस्य विशेषणत्वात् कथं तत्र सङ्ख्यान्वय इति वाच्यम्, विशेषणत्वमुख्यविशेष्यत्वाभ्यां तात्पर्यविषयत्वात् तत्र सङ्ख्यान्वयोपपत्तिर्यतः ।

**इदन्तु बोध्यम्**—एवकारार्थस्त्रिविधः । अन्ययोगव्यवच्छेदः, अयोगव्यवच्छेदः, अत्यन्तायोगव्यवच्छेदश्चेति । विशेष्यसङ्गतैवकारस्य अन्ययोगव्यवच्छेदोऽर्थः । यथा "चैत्र एव

इव न चैत्रपदार्थेऽन्वयः। तस्य इवार्थे सादृश्यरूपे विशेषणत्वेन तात्पर्यविषयत्वात्। "चैत्रनिरूपितं यत्सादृश्यं, तादृशसादृश्येन यद् गमनं, तादृशगमनानुकूला या वर्त्तमानकालिका कृतिः, तादृशकृत्याश्रय एकत्वसङ्ख्याविशिष्टो मैत्रः" इत्युक्तवाक्यस्य शाब्दबोधः।

(मु०) यत्र कर्मादौ न विशेषणत्वे तात्पर्यं तद्वारणाय प्रथमान्तेति। यद्वा धात्वर्थातिरिक्ताविशेषणत्वं प्रथमदलार्थः। तेन चैत्र इव मैत्रो गच्छतीत्यत्र चैत्रादेर्वारणम्। स्तोकं पचतीत्यादौ स्तोकादेर्वारणाय च द्वितीयदलम्। तस्य द्वितीयान्तपदोपस्थाप्यत्वाद्वारणमिति।

(प्र० टी०) "प्रथमान्तपदोपस्थाप्य"—इत्यस्योक्तकर्त्तृलक्षणस्य पदकृत्यं दर्शयति—"तत्रे"ति। अयमर्थः—"चैत्रस्तण्डुलं पचति" इत्यादौ आख्यातार्थ-सङ्ख्यायाः तण्डुलेऽन्वयो माभूत्, नापिच "चैत्रेण सुप्यते" इत्यादौ धात्वर्थभूते स्वापादौ सङ्ख्याया अन्वयः स्यात् तदर्थं "प्रथमान्तपदोपस्थाप्य" इत्युक्तम्। अन्यथा इतरविशेषणत्वतात्पर्याविषत्वं तण्डुलेपि वर्त्तत एव, तस्यापि च सङ्ख्याभि-धानयोग्यतायां "चैत्रस्तण्डुलौ पचति" इति प्रयोगो न स्यात्। किन्तु "चैत्रस्त-ण्डुलौ पचत" इत्येव स्यात्। एवञ्च "चैत्रेण सुप्यते" इत्यत्रापि चैत्रस्य इतरविशेषणत्वतात्पर्याऽविषयत्वन्तु वर्त्तते तदाऽस्यापि सङ्ख्याभिधानयोग्यतायां "चैत्राभ्यां सुप्येते, चैत्रैः सुप्यन्ते" इत्येवमपि कर्मवाच्यवत् प्रयोगौ स्याताम्, परं नतु तथा तौ भवतः। किन्तु धात्वर्थभूतस्य स्वापादिभावस्यैकत्वादेकवचनमेव भवतीति भावः। वैयाकरणा अपि "तिङ्वाच्यभावनाया असत्त्वरूपत्वेन द्वित्वाद्यप्रतीतेर्न द्विवचनादि। किन्त्वेकवचनमेव। तस्यौत्सर्गिकत्वेन सङ्ख्यानपेक्षत्वात्" इत्याहुः।

वैयाकरणा "भावप्रधानमाख्यातम्" इतिनियमानुरोधेन सर्वत्रैव कर्त्तुर्विशे-षणभावमभ्युपगच्छन्ति। ततश्च सर्वत्र कर्त्तुर्विशेषणतया विशेषणत्वतात्पर्याविषयत्वं न सङ्गच्छते एवं कृते सति "चैत्र इव मैत्रो गच्छति" इत्यत्रापि चैत्रे सङ्ख्याया अन्वयः स्यादित्यस्वरसबीजं हृदि निधाय कल्पान्तरमाह—'यद्वे'ति। "इतरविशे-षणत्वतात्पर्याऽविषयत्वम्" इत्यादिप्रथमदलस्य धात्वर्थातिरिक्ताविशेषणत्वमर्थो बोध्य इत्यर्थः। प्रथमदलार्थः=कर्मत्वाद्यनवरुद्ध इति वाक्यप्रतिपाद्य इत्यर्थः। एतद्विवक्षायाः फलमाह—"तेने"ति। धात्वर्थातिरिक्तस्वविशेषणेनापीत्यर्थः। चैत्रपदार्थो धात्वर्थातिरिक्ते

---

पचति" इत्यादौ चैत्राद्यन्यस्मिन् पाककर्त्तृत्वयोगो व्यवच्छिद्यते। अर्थात् "चैत्रान्यो न पाककर्त्ता"। विशेषणसङ्गतैवकारस्यायोगव्यवच्छेदोऽर्थः। यथा "शङ्खः पाण्डुर एव" इत्यादौ शङ्खे पाण्डुरायोगो व्यवच्छिद्यते। अर्थात् शङ्खमात्रेऽवश्यं पाण्डुरतायाः सम्बन्धः। क्रियासङ्गतैवकारस्य अत्यन्ता-योगव्यवच्छेदोर्थः। यथा—"नीलं सरोजं भवत्येव" इत्यादौ सरोजे नीलभवनस्य अत्यन्ताऽयोगो व्यवच्छिद्यते नत्वयोगो व्यवच्छिद्यते। क्वचित्सरोजे नीलत्वासम्भवस्यापि सत्त्वात्। अर्थात्—किञ्चित्सरोजमनीलमपि भवति।

इवार्थे सादृश्यपदार्थे विशेषणत्वेन तात्पर्यविषय एव । अर्थात् वक्ता इच्छति यच्चैत्रपदार्थः सादृश्ये विशेषणं स्यादिति, तस्मादत्र नातिव्याप्तिः । "प्रथमान्तपदोपस्थाप्य" इत्यस्य फलन्तु "स्तोकं पचति मृदु पचति" इत्यादौ स्तोकादिरूपेऽर्थे आख्यातार्थभूतायाः सङ्ख्याया वारणं बोध्यम् ।

अयमभिसन्धिः—यद्यपि क्रियाविशेषणभूतानां स्तोकादिपदार्थानां धात्वर्थातिरिक्ताविशेषणत्वं स्वतःसम्भवि, ततस्तत्राप्याख्यातार्थसङ्ख्याया अन्वयेन भाव्यम्, येन "स्तोके पचतः स्तोकानि पचन्ति" इत्याकारा अपि क्रियाविशेषणतया प्रयोगा आपद्येरन् तथापि "प्रथमान्तपदोपस्थाप्य" इति द्वितीयदलनिवेशेन स्तोकादिपदार्थे नाख्यातार्थसङ्ख्याया अन्वयः "क्रियाविशेषणानां कर्मत्वं नपुंसकलिङ्गता च" इत्यनुशासनबलात् स्तोकादिर्द्वितीयान्तपदोपस्थाप्यः ततश्च नात्राप्यतिप्रसङ्ग इत्याशयेन "स्तोक" मित्यारभ्य "वारण" मित्यन्तो ग्रन्थः । चैत्रादेर्वारणमिति । चैत्रादेराख्यातार्थसङ्ख्यावारणमित्यर्थः । इदन्तु बोध्यम्—नैयायिकमते "लः कर्मणि"—इत्यादिसूत्रे अनुवृत्तसप्तम्यन्तकर्तृपदस्य कर्तृत्वं लाक्षणिकत्वमेव । एवं "कर्मणि द्वितीया" "कर्तृकरणयोस्तृतीया" इत्यादिसूत्रघटकसप्तम्यन्तकर्मकर्त्रादिपदानामपि कर्मत्वकर्तृत्वाद्यर्थे लाक्षणिकत्वमेव । "ग्रामं गच्छति" इत्यादौ द्वितीयादिना कर्मत्वादिबोधनात् । तथाच—सकर्मकधातुसमभिव्याहृतयगाद्यनुत्तरलकाराः कर्तृत्ववाचकाः । तादृशधातुसमभिव्याहृतयगाद्युत्तरलकाराः कर्मत्ववाचकाः । एवमकर्मकधातुसमभिव्याहृतयगाद्यनुत्तरलकाराः कर्तृत्ववाचकाः । तादृशधातुसमभिव्याहृतयगाद्युत्तरलकारा निरर्थका इत्युक्तरीत्यैव सूत्रार्थः पर्यवसितः ।

**( मु० ) एवं व्यापारेऽपि न शक्तिर्गौरवात् । रथो गच्छतीत्यादौ तु स्वव्यापारे आश्रयत्वे वा लक्षणा । जानातीत्यादौ तु आश्रयत्वे, नश्यतीत्यादौ प्रतियोगित्वे निरूढलक्षणा ॥**

( प्र० टी० ) "रथो गच्छति" इत्यादिसाधारण्याय लकारसामान्यस्य अनुकूलव्यापारे शक्तिरित्याशयवतां मीमांसकानां मतं दूषयति—"एवम्" इति । व्यापारेऽपि=अपिना कर्त्ता समुच्चीयते । तथाच लकारसामान्यवाच्यो यथा कर्त्ता न भवति तथा व्यापारोपीति भावः । गौरवात्=जन्यत्वादिघटितव्यापारस्यापि कृतित्व-( यत्नत्व ) जात्यपेक्षया गुरुत्वादित्यर्थः । तथाच—गौरवात् कर्तृत्वं यथा नाख्यातपदशक्यतावच्छेदकं तथा जन्यत्वघटितव्यापारत्वमपि न शक्यतावच्छेदकमिति भावः । ननु-कृतौ शक्तिकल्पनमन्यत्र लक्षणाकल्पनमिति तवापि गौरवमिति चेन्न तादृशगौरवस्य फलमुखत्वेनादोषत्वात् । अमुमेवार्थं "रथो गच्छति" इत्यादिना स्फुटीकरोति ।

अयमाशयः—"तज्जन्यत्वे सति तज्जन्यजनको व्यापार" इति व्यापारलक्षणम् । एवं जन्यत्वादिधर्मघटितव्यापारलक्षणलक्षितस्यास्य व्यापारस्य यत्नत्वजात्यपेक्षया शक्यतावच्छेदकांशे गौरवम् । तस्माद् व्यापारे शक्तिर्लकाराणामित्ययुक्तं वचो मीमांसकानाम् ।

ननु—तवापि मते "रथो गच्छति" इत्यादिस्थले व्यापारे शक्तिं विना कथं निर्वाहः, अचेतने रथे यत्नापरपर्यायाः कृतेरभावादत्याक्षेपे स्वसिद्धान्तं निर्वाहयति—"रथ" इति । अत्र गमनानुकूलकृतिरूपस्याख्यातार्थस्य मुख्यार्थस्य जडे रथे बाधात्=अन्वयानुपपत्तेः व्यापारे अर्थात् गमनानुकूलव्यापारे निरूढा लक्षणा नतु शक्तिः । ततश्च "गमनानुकूलव्यापारवान् रथ" इत्येव बोधः । *नवीनमतेनाह—"आश्रयत्वे वेति । रथे गमनानुकूलव्यापारस्य बाधाभावात् गमनाश्रयत्वे उक्ता लक्षणा । बोधस्तु—"गमनानुकूलव्यापाराश्रयत्वधर्मावच्छिन्नो रथ" इति ।

अयमाशयः—अनुकूलव्यापारमात्रमाख्यातार्थः । ततश्च "रथो गच्छति" इत्यादौ "गमनानुकूलव्यापारवान् रथ" इति शक्त्यैव शाब्दबोध इति मीमांसका आहुः तन्न युक्तम् । आख्यातस्य यत्ने (कृतौ) शक्तिस्वीकारे यत्नत्वस्य (कृतित्वस्य) शक्यतावच्छेदकांशे लाघवात् । यत्ने अनुकूलताप्रतीतिस्तु संसर्गमर्यादालभ्या, तदेतदावयोः समानमेव । ननु—कथं तर्हि †'जानाति, यतते, इच्छति, करोति, इत्यादयः प्रयोगाः नह्यत्र ज्ञानाद्यनुकूलयत्नस्य प्रतीतिः ज्ञानादीनां विषयस्वभावपारतन्त्र्यादिति चेन्न ? अत्र लक्षणया *ज्ञानाद्याश्रयत्वप्रतीतेः । नह्यत्रास्माकं मते धात्वर्थानुकूलकृतिव्यापारयोः प्रतीतिः तस्याः प्रमाणान्तरबाधितत्वात् तस्मादाश्रयत्वे लक्षणावश्यमेवाश्रणीया । एवमेव 'रथ' इत्यादावपि व्यापारे लक्षणा । धात्वर्थनामार्थयोर्भेदेनान्वयस्याव्युत्पन्नत्वात् लक्षणाश्रयणं, रथगमनयोः परस्परमन्वयासम्भवात् । एवञ्च—‡'जानाती' त्यादौ ज्ञानाद्यनुकूलयत्नस्य बाधात् आश्रयत्वे लक्षणास्वीकारे आख्यातेन वर्त्तमानत्वादीनां धात्वर्थ एवान्वयः । धात्वर्थस्य चाश्रयत्वे, तस्य चैत्रे । तथा च "चैत्रो घटं जानाति" इत्यत्र घटविषयक-

---

* एतमेवार्थं हृदि कृत्वा **अप्पय्यदीक्षित**सोदर्यपौत्रो **नीलकण्ठदीक्षितः** शिवतत्त्वरहस्ये 'शिव' नामव्याख्यानावसरे यद्वा—वष्टीति शिवः पृषोदरादित्वात्साधुरित्युक्त्वा 'यद्यपि "कर्त्तरि कृत्"इत्यनुशासनात् कर्त्तृत्वस्य च धात्वर्थविषयकृत्याश्रत्वरूपात्प्रकृते पचाद्यच्प्रत्ययस्याश्रयार्थकत्वमलभ्यम् तथापि ज्ञानादिगोचरकृतेरभावेन ज्ञानादिबोधकधातूत्तरकर्तृप्रत्ययानां जानातीच्छति यतते इत्यादिषु आश्रयत्वलक्षकतया सम्प्रतिपन्नत्वे इच्छाश्रयत्वपर्यवसानात्" इत्युक्तवान् ।

† अधिकारमतेनेत्यर्थः ।

‡ **जानातीति**—जानातीत्यत्र प्राकट्यावच्छिन्नं ज्ञानं धात्वर्थः । प्राकट्यञ्च ज्ञाततेति **भाट्टाः** । आवरणभङ्गानुकूलव्यापार इति **वैयाकरणाः** । धात्वर्थतावच्छेदकफलशालित्वं **कर्मत्वम्** । यथा—"ग्रामं गच्छति" इत्यत्र उत्तरदेशसंयोगानुकूलव्यापारो धात्वर्थः । धात्वर्थतावच्छेदकं फलं तादृशसंयोगः, तच्छाली ग्रामः कर्म । फलावच्छिन्नव्यापारस्य धात्वर्थतामतेनेदम् । तथा **भाट्टमते** च ज्ञाततारूपधात्वर्थतावच्छेदकं फलम्, तच्छाली घटः कर्मः । **वैयाकरणमते** च आवरणभङ्गरूपं धात्वर्थतावच्छेदकं तच्छाली वटः कर्म । ननु ज्ञानानुकूलव्यापारो धात्वर्थः तस्याऽप्रसिद्धत्वात् । ज्ञानमात्रस्य धात्वर्थत्वे धात्वर्थतावच्छेदकीभूतज्ञानत्वस्य घटरूपकर्मण्यवृत्तित्वाच्च 'घटं जानाति' इति द्वितीयानुपपत्तिः, तस्याः कर्मत्वे विधानादित्यवधेयम् ।

वर्त्तमानज्ञानाश्रयश्चैत्र" इति शाब्दबोधः ।

रत्नकोशकारस्तु—आख्यातस्य न यत्ने नवा व्यापारे शक्तिः, किन्तु भावनापरपर्यायायामुत्पादनायाम् । तथाच चेतनाचेतनयोः साधारण्यात् सर्वत्राख्यातार्थे धात्वर्थोत्पादकता । तेन—"ओदनं पचति रथो गच्छति" इत्यादयः मुख्या एव प्रयोगाः । "पचति" इत्यादौ 'पाकमुत्पादयति' इति विवरणदर्शनात् । "रथो गच्छति" इत्यत्र गमनमुत्पादयति "यतते" यत्नमुत्पादयति इत्याद्यर्थो बोध्यः । नच—'उत्पादयति' इत्यत्र का गतिरिति वाच्यम् उत्पादनार्थकधातूत्तरवर्त्तिन आख्यातस्योत्पादनाश्रयार्थस्य स्वीकारात् "अनन्यलभ्यो हि शब्दार्थ" इत्युक्तेरित्याह तदप्यपेशलम् उत्पादकत्वस्योपाधित्वेन गौरवात् "चक्षुर्जानाति" इत्यादिमुख्यप्रयोगापत्तेश्च ।

चिन्तामणिकारास्तु—'चैत्रो घटं जानाति" इत्यादौ "धात्वर्थप्रकारकबोधे" पदजन्यपदार्थोपस्थितिहेतुः नतु विभक्त्यर्थोपस्थितिरि"ति नियमः । तथाच—ज्ञानस्य धात्वर्थभूतस्य साक्षादेव चैत्रेऽन्वयः, आख्यातप्रतिपाद्यः वर्त्तमानादिः कालः सङ्ख्या वैकत्वादिश्च,नतु यत्नोपि तस्यायोग्यत्वादित्याहुः । तच्चिन्त्यम्, नामार्थधात्वर्थयोः साक्षाद्भेदान्वयबोधस्याव्युत्पत्तेः अन्यथा * "ओदनः पचति" इत्यत्रोदनपाकयोः कर्मतासंसर्गेणान्वयः स्यात् । अर्थात् कर्मतासंसर्गेण ओदनप्रकारकपाकविशेष्यकान्वयः स्यात् ।

वस्तुतस्तु—'जानातीत्यादौ आख्यातार्थस्य अनवभासे आख्यातार्थसङ्ख्यान्वयो न स्यात् तस्या आख्यातार्थविशेष्यगामित्वनियमात् (आख्यातार्थस्य यो विशेष्योस्ति तेन सहैवाख्यातार्थसङ्ख्याऽन्वेतीति नियमात्) । आख्यातार्थविशेष्यस्तु—विभक्त्यर्थाविशेषणीभूतो नामार्थः । अर्थात्—"चैत्र ओदनं पचति" इत्यत्र आख्यातार्थस्य विशेष्यश्चैत्रो नत्वोदनः तस्य द्वितीयार्थविशेषणत्वात् । 'चैत्रेण ओदनः पच्यत' इत्यत्र कर्मीभूत ओदनादिरेव आख्यातार्थस्य विशेष्यो नतु चैत्रादिः, तस्य तृतीयार्थावरुद्धत्वात् । "स्थीयते' इत्यत्र तु "स्थित्यनुकूला कृति" रिति बोधादाख्यातार्थे न कस्यापि विशेष्यत्वमित्यनन्वितैव सङ्ख्या । अत एवैतादृशस्थले औत्सर्गिकमेकवचनमेवेत्यूचुः । अत्र धात्वर्थविशेष्यक एवान्वयबोधः । ननु—आख्यातार्थः कुत्रान्वेतीति चेत्? एकपदोपात्तत्वप्रत्यासत्त्या कृतावेवेति जानीहि । केचित्तु धात्वर्थे कालान्वयः जानातीत्यादौ ज्ञाने वर्त्तमानत्वादिप्रतीतेरित्याहुः ।

एवञ्च—"चैत्र ओदनं पचती"त्यत्र विक्लित्तिरूपं कर्मत्वं द्वितीयार्थः, तस्य विशेषणतया पाके, ओदनस्य कर्मत्वविशेषणतया कर्मणि, पाकस्य संसर्गमर्यादालभ्यायामनुकूलतायां, तस्याः कृतौ, तस्याः चैत्रे सङ्ख्याभिधानयोग्येऽन्वयः । एवञ्च—"ओदनकर्मकपाकानुकूलवर्त्तमानकृतिमांश्चैत्र" इति बोधः । "चैत्रेण पच्यते तण्डुल" इत्यत्र तृतीयार्थो वृत्तिः, साच कृतौ प्रकारः, कृतिर्विषयतासम्बन्धेन तण्डुलेऽन्वेति । तथाच—"चैत्रवृत्तिपाकानुकूलकृतिविषयस्तण्डुलः" इति बोध इति प्राचीनमतम् ।

---

* साक्षाद्धात्वर्थनामार्थयोरन्वयस्याव्युत्पन्नत्वाभावे ।

नव्यमते तु—"तण्डुलं पचती" त्यत्र विक्लित्तिरूपफलप्रकारको बोधः। "पच्यते तण्डुल" इत्यत्र तु फलप्रकारकबोधस्यानुभवंसिद्धत्वात् फलमात्मनेपदार्थः। तथाच—"चैत्रेण पच्यते तण्डुल" इत्यत्र तृतीयार्थः कृतिः, सा जन्यत्वसम्बन्धेन पाकेऽन्वेति, पाको जन्यत्वसम्बन्धेन फले, चैत्रस्तृतीयार्थे। एवञ्च—"चैत्रीयकृतिजन्यपाकजन्य—(विक्लित्तिरूप)-फलशाली तण्डुल" इति बोधः। मतद्वयेऽपि न भावनाविशेष्यश्चैत्रः किन्तु तण्डुल इति। केचित्तु—कर्तृत्वं तृतीयार्थः। ततश्च—"चैत्रकर्तृकपचनकर्मीभूतस्तण्डुल" इति व्याख्यानयन्तीति कृतमतिकल्पनया ग्रन्थगौरवकारिण्या। अधिकजिज्ञासवो न्यायसिद्धान्तमञ्जरीकुसुमाञ्जलिप्रकाशप्रभृतिग्रन्थान् परिशीलयन्तु। मदीयं वा "वाक्यार्थनिर्णयं" पठन्तु।

एवमेव जानातीत्यादावाह—"जानाती"ति "चक्षुर्जानाति" इत्यत्र—"ज्ञानानुकूलव्यापाराश्रयश्चक्षु"रिति लक्षणया बोधः। ज्ञानानुकूलकृतेरचेतने चक्षुष्यभावात्। नश्यतीत्यादाविति—"घटो नश्यति" इत्यादौ नाशानुकूलव्यापाराश्रयत्वे प्रतियोगित्वे वोक्तैव निरूढा लक्षणा। ततश्च—"स्वध्वंसानुकूलव्यापाराश्रयः स्वध्वंसप्रतियोगी वा घट" इत्यन्वयबोधः।

धात्वर्थमुख्यविशेष्यकशाब्दबोधस्तु वैयाकरणानां न युक्तः। तथासति '* प्रयाति पुरुषस्तस्य चरणावभिवादयेत" इत्यत्र वैयाकरणनयानुसारेण "देवदत्ताभिन्नैककर्तृकं वर्त्तमानकालिकं प्रयाणम्"इति बोधः स्यात्। तदादीनामुत्सर्गतः प्रधानपरामर्शित्वनियमात्। प्रधानञ्च विशेष्यमेव, तच्च वैयाकरणमते आख्यातार्थरूपमिति कृत्वा "प्रयाणकर्मसम्बन्धिचरणाभिवादनम्" इत्यन्वयः पर्यवसास्यति। तत्र प्रयाणसम्बन्ध्यभिवादनाप्रसिद्धेः आख्यातार्थमुख्यविशेष्यकशाब्दबोधपक्षं परित्यज्य नैयायिकैः प्रथमान्तार्थमुख्यविशेष्यक एव शाब्दबोध आदृतः। तथाच—वर्त्तमानकालिकप्रयाणानुकूलकृतिमान् यस्तत्सम्बन्धिचरणकर्मकाभिवादनानुकूलकृतिमान्भवेद्" इति वाक्यार्थो युक्तः।

(मु०) उपमानाद्यथा शक्तिग्रहस्तथोक्तम्॥ एवं कोशादपि शक्तिग्रहः सति बाधके क्वचित्त्यज्यते। यथा नीलादिपदानां नीलरूपादौ नीलादिविशिष्टे च शक्तिः कोशेन व्युत्पादिता तथापि लाघवान्नीलादावेव शक्तिः। नीलादिरूपविशिष्टे तु लक्षणेति॥

(प्रभा०) "उपमानादि"ति। अर्थात्—गोनिरूपितगवयनिष्ठसादृश्यसाक्षात्काररूपोपमानेन यथा "गवयो गवयपदवाच्य" इत्याकारकशक्तिग्रहो जायते तथोपमानप्रस्तावे पूर्वं प्रतिपादितमिति नेह पुनरुक्तिमपेक्षते।

---

* "मृगो धावति तं पश्य" इत्यत्र तं मृगकर्तृकधावनानुकूलव्यापारं पश्य" इति व्यापारमुख्यविशेष्यकबोधस्वीकारेऽपि सर्वनाम्ना तच्छब्देन परामर्शसम्भवान्न तादृशनियमविरोधो वैयाकरणमतेपि, अतस्तदपहाय "प्रयाति पुरुषस्तस्य" इत्युदाहृतम्।

"कोशादि"ति—स्वसमानार्थबोधकशब्दसमूहरूपाद् अमरसिंहादिप्रणीतात् कोशग्रन्थात् । "अमरा निर्जरा देवा" इत्यादिरूपादपि तत्तद्देवाद्यर्थे अमरादिपदानां शक्तिग्रहो भवतीत्यर्थः । "सती"ति—परन्तु सति बाधके=बाधकसद्भावे क्वचित् त्यज्यते=कोशीयशक्तेर्ग्रहस्य परित्यागोऽपि युज्यते इत्यर्थः । तदेतद्दर्शयति—"यथे"ति "नीलादी" त्यारभ्य "लक्षणत्य" त्यन्तस्य ग्रन्थस्यायमाशयः-"गुणे* शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वति" इति कोशेन शुक्लादिशब्दानां शुक्लादिगुणरूपेऽर्थे शक्तिः प्रदर्शिता, अथच शुक्लादिगुणविशिष्टे पटादावपि शक्तिरित्युभयत्र शक्तिग्राहकत्वं कोशस्य । एवं सति नीलादिमत्त्वरूपे शक्यतावच्छेदकांशे गौरवं परं नीलत्वरूपशक्यतावच्छेदकधर्मस्वीकारे लाघवमिति लाघवात्=अर्थात् "नीलादिमत्त्वस्य" शक्यतावच्छेदकस्वरूपे गौरवात्=उपस्थितिकृतगौरवात् । नीलत्वस्य च शक्यतावच्छेदकत्वे लाघवबलेन शुक्लनीलादिरूपो गुण एव वाच्यः=शक्यः तद्विशिष्टे पटादौ तु नीलादिपदानां लक्षणैव । केचित्तु "गुणवचनान्मतुपो लुगिष्ट" इति वार्त्तिकस्मरणात्, लुप्तेन मतुपैव विशिष्टार्थबोधसम्भवे लक्षणाश्रयणे नास्ति किञ्चित्फलमित्यपि वदन्ति । तदसम्भ्यमपि रोचते मुख्यया वृत्त्या प्रयोजनसम्भवे जघन्यवृत्तेराश्रयणस्यायुक्तत्वात् । रामरुद्रप्रभृतयस्तु "अत्र नीलो घटोऽस्ति इत्यादौ सर्वत्रैव शाब्दबोधात्पूर्वं लुप्तमतुबर्थप्रत्ययकल्पनामपेक्ष्य नीलादिरूपविशिष्टे नीलादीनां पदानां लक्षणाकल्पनमेव ज्याय" इत्येवमेवाहुः । तत्र सन्तु पण्डिताः प्रमाणम्, ग्रन्थगौरवभयान्नाधिकं लिख्यते ।

**(मु०) एवमाप्तवाक्यादपि । यथा कोकिलः पिकपदवाच्य इत्यादिशब्दात्पिकादिपदशक्तिग्रहः । एवं व्यवहारादपि । यथा प्रयोजकवृद्धेन घटमानयेत्युक्तम् । तच्छ्रुत्वा प्रयोज्यवृद्धेन घट आनीतः तदवधार्य पार्श्वस्थो बालो घटानयनरूपं कार्यं घटमानयेतिशब्दप्रयोज्यमित्यवधारयति । ततश्च घटं नय गामानयेत्यादावावापोद्वापाभ्यां घटादिपदानां कार्यान्वितघटादौ शक्तिं गृह्णाति । इत्थं च भूतले नीलो घट इत्यादिशब्दान्न शाब्दबोधः ।**

**(प्र० टी०)** "एवमाप्तवाक्यादि"ति । प्रयोगहेतुभूतयथार्थज्ञानवानाप्तः । उक्तञ्च † वात्स्यायनीये "आप्तः खलु साक्षात्कृतधर्मा यथादृष्टस्यार्थस्य चिख्यापयिषया

---

* नच—गुणवाचकत्वे शुक्लादिशब्दानां पुंल्लिङ्गत्वेन "शुक्लं रूपम्" इति प्रयोगानुपपत्तिः "शुक्लो रूपम्" इति प्रयोगापत्तिश्चेति वाच्यम् "गुणे शुक्लादय" इति कोशघटकगुणशब्दस्य विशेष्यार्थकतया तादृशगुणिशब्दस्य विशेषणार्थकतया च "विशेष्यवाचकशुक्लादिशब्दाः पुंसि विशेषणवाचकशुक्लादिशब्दो गुणिलिङ्ग' इत्यर्थलाभात् शुक्लं रूपमित्यत्र शुक्लशब्दस्य विशेषणवाचकत्वेन नपुंसकलिङ्गत्वं नतु पुंल्लिङ्गत्वं विशेष्यवाचकत्वाभावादित्यत्र कोशतात्पर्यादिति **प्राचीना प्रभा ।**

**घटादिपदानां शक्तिं गृह्णाति**=सामान्येन विशिष्टार्थस्य शक्तिं निश्चिनोतीत्यर्थः

† न्यायप्रथमाध्यायस्य प्रथमाह्निके—"आप्तोपदेशः शब्दः' (१ । १ । ७) इति सूत्रभाष्ये

प्रयुक्त उपदेष्टा, साक्षात्करणमर्थस्याप्तिस्तया प्रवर्त्तत इत्याप्त" इति। तस्यैवंलक्षणलक्षितस्याप्तस्य वाक्यादपि शक्तिग्रहो भवति । यथा—'पिक'-पदस्यार्थमजानानो बालः कञ्चनाप्तं पृष्टवान् यत् "पिकपदवाच्यः कोऽस्ती" ति । तद्धितैषिणा तेनोक्तं "कोकिलः पिकपदवाच्यः" इति। तद्वाक्यं श्रुत्वा बाल=पिकपदीयशक्तिग्रहशून्यः पुरुषः पिकपदस्य कोकिलरूपार्थे शक्तिमवधारयति । "एवं व्यवहारादपी' ति । शक्तिग्रह इति शेषः । यथा—व्यवहाराच्छक्तिग्रहो जायते तथाऽभिनीय दर्शयति—"यथे" ति । अत्र प्रयोजकवृद्धो गुर्वादिः, प्रयोज्यवृद्धः शिष्यादिः । बालोऽज्ञातघटादिपदशक्तिको ननु स्तनन्धयमात्र एव। अवापोद्वापाभ्याम्=अन्वयव्यतिरेकाभ्याम्। अर्थात् क्रियापदप्रक्षेपोद्धाराभ्यामित्यर्थः । घटं नयेत्यत्र घटपदसत्त्वे कम्बुग्रीवादिमत्पदार्थबोधः । आनयपदव्यतिरेकेण कम्बुग्रीवादिमत्पदार्थबोधाभावः। आनयपदसत्त्वे आनयनपदार्थबोध इत्याकारकौ तावन्वयव्यतिरेकाविति ताभ्यामिति निर्गलितोऽर्थः । अवधारयति=निश्चिनोति ।

अयमत्राभिप्रायः—प्राभाकरा मीमांसका इत्थं मन्यन्ते यद् घटादिपदानां कार्य्यान्वितघटादौ शक्तिः अर्थात् "घटपदं कार्य्यान्वितघटरूपेऽर्थे शक्तम्" इत्याद्याकारकः शक्तिग्रह एव "घटानयनं कार्यम्" इत्याकारकशाब्दबोधम्प्रति कारणमिति नियमः । यदा "भो शिष्य ! त्वं घटमानय" इति वाक्यं प्रयोजको गुर्वादिरुच्चारयति तदनन्तरं प्रयोज्यः शिष्यादिस्तदाकर्ण्य घटानयने प्रवर्त्तते । पार्श्वस्थो बालस्तु—"अयमेतद्वाक्यजन्यैतदर्थगोचरज्ञानवान् एतद्वाक्यश्रवणानन्तरमेतदर्थगोचरचेष्टावत्वात्" इत्यनुमाति । ततो "घटं नय गामानय" इति प्रयोजकवृद्धोक्तिं श्रुत्वा प्रयोज्यवृद्धेन तथानुष्ठिते सति स एव बालः 'घट' पदस्यानयनकार्यान्वितायां कम्बुग्रीवादिमत्यां व्यक्तौ "गोपदस्य च सास्नादिमत्यां व्यक्तौ शक्तिमवधारयति। तस्माद्व्यवहारतो घटादिपदानां कार्यान्विते घटादिरूपार्थे शक्तिरित्येष राजमार्गः । एवञ्च साक्षात्परम्परया वा कार्य्यान्वितविषयकशाब्दत्वावच्छिन्नम्प्रति कार्यान्वितपदत्वेन कारणतेति कार्यकारणभावः पर्यवसितः। इयमेव कार्यान्विते पदानाम् "आनुभाविकी शक्ति" रित्युच्यते। तस्मात् कार्यत्वान्वितविषयकशाब्दत्वव्यापकीभूतकार्यताविषयकशाब्दत्वावच्छिन्नजनककार्यतावाचकलिङादिपदाभावात् काशादितः शक्तिग्रहो नार्हति भवितुमिति ध्येयम्। 'इत्थञ्चे'ति। दर्शितरीत्या लिङादिपदसत्त्व एव कार्यताबोधात् "भूतले नीले घट" इत्यादिवाक्यादपि न शाब्दबोधः। तत्र कार्यतावाचकलिङादिपदाभावात् । सिद्धार्थे नैव पदानां शक्तिरिति भावः । अतएव

---

अत्राह—सर्वतन्त्रस्वतन्त्रो वाचस्पतिमिश्रोऽपि—"आप्तानामृष्यार्यम्लेच्छानामुपदेशः शब्दो नत्वनाप्तानां मायामोहनिर्मितानां बुद्धर्षभादीनां प्रमाणविरुद्धक्षणिकसर्वधर्मनैरात्म्यवादिनामिति" इति । तत्रैव "ऋष्यार्यम्लेच्छाना" मित्यस्य—ऋषीति प्रतीकमादाय—"दर्शनादृषिःकरतलामलकफलवत् साक्षात्कृतत्रैकाल्यवृत्तिप्रमेयमात्रः । आराद्यातः पातकेभ्य इत्यार्यो मध्यलोकः । म्लेच्छाः प्रसिद्धाः । म्लेच्छा अपि हि प्रतिपथमवस्थिताः पान्थानामपहृतसर्वस्वानां मार्गाख्याने हेतुदर्शनशून्या भवन्त्याप्ता इति" इति च ।

" आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम् ' (पू० मी० १ । २ । १ ।) इत्यादिसूत्रैः सिद्धार्थप्रतिपादकतया अर्थवादानामप्रामाण्यमाशङ्क्य विधिवाक्यैः सहैकवाक्यतया प्रामाण्यमवधारितम् । तथाहि—काम्यपशुकाण्डे विध्यर्थवादौ श्रूयेते—"वायव्यं श्वेतमालभेत भूतिकामः" (तैत्ति० २ कां० । प्र० १ । कं० १ ) इति विधिः। "वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयति" (तैत्ति० २ कां प्र० १ । कं० १) इत्यत्र विधिवाक्यगता वाय्वादिशब्दाः स्वतो विशिष्टमर्थमभिदधति । अर्थवादशब्दा अपि विधिशब्दनिरपेक्षतया भूतार्थमन्वाचक्षते । "क्षिप्रगामी वायुर्देवः स्वोचितेन भागेन तोषितो भागप्रदायैश्वर्यं प्रयच्छति" इत्युक्ते रामायणादिवत्कश्चित् वृत्तान्तः सिद्धरूपः प्रतीयते नत्वनुष्ठेयं किञ्चिदस्तीत्येकवाक्यत्वाभावात्सिद्धार्थपराणामर्थवादानां धर्मे नास्ति प्रामाण्यमिति पूर्वपक्षे प्राप्ते उच्यते—

पदैकवाक्यताया अभावेऽपि विध्यर्थवादवाक्ययोर्वाक्यैकवाक्यता भवितुमर्हति अर्थात् विधिवाक्यं पुरुषं प्रेरयितुं विधेयार्थस्य प्राशस्त्यमपेक्षते, अर्थवादवाक्यञ्च फलवदर्थावबोधपर्यवसिताध्ययनविधिपरिगृहीतत्वेन पुरुषार्थमपेक्षते । तत्र पुरुषार्थपर्यवसितविध्यपेक्षितं प्राशस्त्यं लक्षणाद्वारा समर्पयदर्थवादवाक्यं विधिवाक्येन सह नष्टाश्वदग्धरथन्यायेनैकवाक्यतामापद्यते । "यतः क्षिप्रगामिस्वभावतया शीघ्रफलप्रदो वायुरस्य पशोर्देवता ततः प्रशस्तमिदं कर्म वायव्यं पशुमालभेत" इत्येवं वाक्ययोः परस्परमन्वयः। तस्मादर्थवादवाक्यानां धर्मे* प्रमाण्यम् । नच सिद्धार्थपरकता वेदस्येति प्राभाकरादीनामाशयः । उभयपक्षीयसाधकबाधकयुक्तिपूर्वकाविरोधपरिहारसारस्तु गुरूपासनया आकरग्रन्थपरिशीलनेनैव ज्ञातुं सुशकः, प्रकृतानुपयुक्तत्वान्मयात्र विस्तरो न कृतः।

**( मु० ) घटादिपदानां कार्यान्वितघटादिबोधे सामर्थ्यावधारणात्, कार्यताबोधं प्रति च लिङादीनां सामर्थ्यात्तदभावान्न शाब्दबोध इत्यपि केचित् । तन्न । प्रथमतः कार्यान्वितघटादौ शक्त्यवधारणेऽपि लाघवेन पश्चात्तस्य परित्यागौचित्यात् ।**

( प्र० टी० ) अत्रोपपत्तिमाह–"घटादिपदानामि"ति । अधस्ताद्व्याख्यातप्रायोऽयं ग्रन्थः । कार्यान्वितेति—कार्यत्वञ्च कृत्युद्देश्यत्वरूपम् । इदन्तु बोध्यम्—प्राभाकरा वेदलिङादिविषये कार्यत्वेनाऽपूर्वविषयकशाब्दबोधं स्वीकुर्वन्ति । अत्रचापूर्वस्य प्रथममनुपस्थितत्वेन तत्र शक्तिग्रहासम्भव इत्याशङ्कायां सामान्यलक्षणामनङ्गीकुर्वाणा एते " स्वन्मते यथाऽनुभूते गवि गृहीतशक्तिकत्वाद्गवादिपदाद् योग्यताबलात् पूर्वाऽननुभूतगवादिविषयकशाब्दबोधो भवति तथा मन्मतेऽपि घटादौ कार्यत्वेन गृहीतशक्तिकलिङादितोऽपि स्वर्गकामो यजेतेत्यादौ यागजन्यं कार्यमिति घटादिरूपकार्ये यागजन्यत्वस्य बाधितत्वेन योग्यताबलादपूर्वविषयकशाब्दबोधो भवति" इत्येवं समादधते । केचिदिति—प्राभाकरा इत्यर्थः । तदेतत् खण्डयति नैयायिकः

* विधिवाक्यैः सहैकीभूयैवेति शेषः ।

"नन्न" इत्यादिना । प्रथमतः=प्राथमिकशक्तिग्रहकाल इत्यर्थः । कार्यान्वितघटादौ=आनयनादिकार्यसंसर्गविशिष्टघटपटादिपदार्थे । शक्त्यवधारणेऽपि=शक्तेः सङ्केतरूपायाः पदीयसामर्थ्यरूपाया वा निश्चयेऽपि । लाघवेन=कार्यत्वान्वितघटशब्दत्वापेक्षया घटशब्दत्वस्य कार्यतावच्छेदकांशे शरीरात्मकलाघवेनेत्यर्थः । पश्चात्=कार्यान्वितघटादौ शक्त्यवधारणानन्तरम् तस्य=शक्त्यवधारणस्य परित्यागौचित्यात्=स्वीकर्त्तुमयोग्यत्वात् । विनापि कार्यान्वयं घटपटादिशब्दैः सिद्धार्थबोधसम्भवादिति भावः ।

( मु० ) अत एव "चैत्र पुत्रस्ते जातः कन्या ते गर्भिणी जाता" इत्यादौ मुखप्रसादमुखमालिन्याभ्यां सुखदुःखे अनुमाय तत्कारणत्वेन परिशेषाच्छाब्दबोधं निर्णीय तद्धेतुतया तं शब्दमवधारयति । तथा च व्यभिचारात्कार्यान्विते न शक्तिः । नच तत्र तं पश्येत्यादि शब्दान्तरमध्याहार्यं, मानाभावात् । चैत्र ! पुत्रस्ते जातो मृतश्चेत्यादौ तदभावाच्च । इत्थं च लाघवादन्वितघटेऽपि शक्तिं त्यक्त्वा घटपदस्य घटमात्रे शक्तिमवधारयति ॥

( प्र० टी० ) उक्तार्थे गमकमाह—"अत एवे"ति । अतएव=कार्यत्वाऽविषयकबोधम्प्रति पदानां हेतुत्वादेव । "चैत्र पुत्रस्ते जातः" कन्या=कुमारिका ते गर्भिणी इत्यादौ=इत्यादिवाक्ये श्रुते सतीत्यर्थः । मुखप्रसादमुखमालिन्याभ्याम्=मुखप्रसादो मुखविकासः, मुखमालिन्यम्=मुखधूसरत्वं ताभ्यां सुखदुःखे अनुमाय=पुत्रस्य निरयत्रायकत्वाज्जन्मनि सुखम्, कन्यागर्भे च तदीयपातादिराजदण्डादिभीतेर्दुःखम्, तयोरनुमानं कृत्वा । तत्कारणत्वेन=सुखदुःखयोः कारणत्वेन । परिशेषात्=लिङ्गज्ञानात् अर्थात्—"चैत्रसमवेते सुखदुःखे साऽसाधारणकारणके जन्यगुणत्वाद्" इत्यनुमानाद् असाधारणकारणजन्यत्वे सिद्धे—"तादृशसुखं दुःखं वा निरुक्तवाक्यीयज्ञानाधीनशाब्दबोधाऽसाधारणकारणकं तदितराऽसाधारणकारणकत्वाभावे सति सासाधारणकारणकत्वाद्" इत्येवं रीत्या अनुमानात् "चैत्रपुत्रस्ते जात" इत्यादिवाक्यस्य तादृशशाब्दबोधप्रयोजकत्वं निश्चिनोति ॥

अत्रायमाशयः—'चैत्र' इत्यादिवाक्ये कार्यताबोधकं किमपि लिङादिपदं नास्ति, तथापि श्रोतुश्चैत्रस्य बोधो जायत एवेति पार्श्वस्थोऽपि जानाति । तथाहि—उक्तं वाक्यं श्रुत्वा पुत्रजन्मना चैत्रः सुखी भवति कन्यागर्भेण च दुःखी जायते, परन्तु चैत्रीयसुखदुःखयोः प्रत्यक्षं चैत्रस्यैव, तथापि पार्श्वस्थो मुखप्रसादलिङ्गेन तदीयं सुखं, मुखमालिन्येन लिङ्गेन च तदीयं *दुःखमनुमाति । तद्वाक्यार्थबोधमन्तरा च चैत्रस्य

---

* कार्यान्वितेऽर्थे पदानां शक्तिरित्यस्मिन्नर्थे ।

* अनुमानप्रकारश्चायम्—"अयं चैत्रः सुखी संवृत्तः पुत्रोत्पत्तिबोधकवाक्यश्रवणोत्तरं मुखप्रसादवत्त्वात्, तथाऽयं दुःखी संवृत्तः कन्यागर्भबोधकवाक्यश्रवणोत्तरं मुखमालिन्यवत्त्वात् यज्ञदत्तादिवत् ।

सुखदुःखे नैव स्तः तत्र हेत्वन्तरादर्शनात् । वाक्ये च किमपि कार्यताबोधकं लिङादिपदं न पश्यामः, तेन मन्यामहे यदस्ति कार्यानन्वितोऽपि शब्दो बोधहेतुरिति कार्यान्वित-शक्तिग्रहो व्यभिचरितः प्रभाकरस्य ।

किञ्च सर्वथा कार्यान्वित एव शक्तिं वदतां प्राभाकराणां मते "ब्राह्मणो न हन्तव्य" इत्येवमादिभ्यो वाक्येभ्यो निवृत्त्युपदेशानुपपत्तिप्रसङ्गोऽनिवार्यः स्यात् नह्येवंविधैर्वाक्यैः किमपि कार्यमुपदिश्यते हननादिक्रियानिवृत्त्यौदासीन्यव्यतिरेकेण। नञश्चैष स्वभावो यत्स्वसम्बन्धिनोऽभावं बोधयतीति † शास्त्रतात्पर्यविदो-प्याहुः । तथाहि अत्र नञः प्रकृत्यर्थेन सम्बन्धात् हननाभावो नञर्थः, इष्टसाधनत्वञ्च तव्यादिप्रत्ययार्थः, इष्टञ्चात्र नरकदुःखाभावः, तत्परिपालको हननाभाव इति निषेधवाक्यार्थः । "हननाभावो दुःखाभावहेतु" रित्युक्तौ अर्थात्—हननस्य दुःखसाधनत्वधिया पुरुषो निवर्त्तते, नात्र नियोगः कश्चिदस्ति नच हननाभावरूपा नञ्वाच्या निवृत्तिः क्रियास्तीति कश्चिदप्यनुन्मत्त उत्प्रेक्षेत । अभावत्वादेव च न क्रियासाधनम् । अतो निषेधशास्त्रस्य सिद्धार्थे प्रामाण्यमकामेनाप्यभ्युपेयम् । उक्तञ्च सर्वज्ञात्ममुनिभिः सङ्क्षेपशारीरके—

‡ अपिच प्रतिषेधचोदनाविषयः स्यात्प्रतिषिद्धकर्मणः ।
फलगर्द्धिनिवृत्तिरेव सा न नियोगो नच तस्य गोचरः ॥ इति

तस्मात्कार्यान्विते शक्तिं वदतां प्राभाकराणां "ब्राह्मणं न हन्याद्" इत्यादौ व्यभिचारो दुरुद्धर एवेतियुक्तमाभाति । विस्तरस्तु गदाधरभट्टाचार्यादिप्रणीत "विधिस्वरूपविचारा"दिषु द्रष्टव्यः ।

सुखदुःखे=चैत्रात्मवर्त्तिनी ये स्तः । तत्कारणत्वेन=सुखदुःखयोः कारणत्वेन। तद्धेतुतया=तादृशशाब्दबोधहेतुतया । तं शब्दम्=पुत्रादिशब्दम् । अवधारयति= निश्चिनोति । व्यभिचारात्=घटादिपदानां कार्यान्वितघटादिबोध एव सामर्थ्यमिति नियमस्य "चैत्र पुत्रस्ते जात" इत्यादौ अनैकान्तिकत्वादित्यर्थः । शिष्टं स्पष्टं व्याख्यातप्रायञ्च ।

आशङ्क्य समाधत्ते—"नचे"ति "चैत्र ! पुत्रस्ते जात" इत्यादिवाक्ये "ते पश्य" इति क्रियापदस्याध्याहारं करिष्यामः, तेन नोक्तो व्यभिचार इति शङ्का-कर्त्तुराशयः । तथाच—तत्रापि लोडादिजन्यकार्यत्वोपस्थितेः सत्त्वेन कार्यताविषयक-बोधस्यैवोत्पादान्न तादृशनियमे व्यभिचार इति भावः । एवंविधाध्याहारे न किमपि प्रमाणमस्ति, निष्प्रमाणकञ्च नादरार्हमिति समाधातुराशयः । मानाभावाच्च—अश्रुत-

---

† श्रीपूज्यपादा आदिमश्रीशङ्कराचार्याः ।

‡ "न पिबेत्" इत्यादिचोदनाया हि प्रतिषिद्धस्य पानादेः फलस्पृहानिवृत्तिरेव विषयः । सा चौदासीन्यलक्षणा पानादिप्रागभावरूपत्वेनाकार्यत्वान्न नियोगो नवाऽननुष्ठेयत्वान्नि-योगविषयोऽपीत्यर्थः । अतएव न भावनारूपोऽपीति भावः ।

तादृशवाक्यानुसन्धानान्तरमेव निरुक्तवाक्याच्छाब्दबोधो नान्यथेति नियमे माना भावादित्यर्थः ।

नियमाभ्युपगमपक्षेऽपि दोषमाह—चैत्र इति । तदभावाच्चेति । पश्येति कार्यतावाचकलोडन्तदृशधातुपदाध्याहारासम्भवाच्चेत्यर्थः । प्राणसंयोगविशिष्टशरीरस्यैव पुत्रपदार्थतया नष्टे प्राणसंयोगविशिष्टत्वाभावेन तस्य दर्शनकर्मत्वासम्भवादिति भावः ।

अध्याहारेऽसम्भवमपि दर्शयति "चैत्र" इति । "जातो मृतश्च" इत्यत्र देशान्तरे स्थितश्चैत्रंप्रति "तं पश्य" इत्यध्याहारासम्भव एवेत्यर्थः । भट्टमतप्रक्षेप-व्याजेन स्वमतमुपसंहरति—"इत्थञ्चे"ति । लाघवात्=अन्वितघटे शक्तिकल्पना-पेक्षया घटमात्रे तस्य लाघवात् । अन्वितघटे=सम्बद्धघटे । भट्टमते यद्यपि कार्यान्विते न शक्तिः तथापि इतरान्विते शक्तिरस्त्येव । अत्र भट्टानामयमाशयः—यद्यप्यन्यलभ्य-त्वाद् घटादिपदानां कार्यान्वितघटादौ न शक्तिः तथाप्यनन्यलभ्यत्वात्समभिव्याहृत-पदार्थान्वयविशिष्टघटादौ शक्तिरावश्यकी न केवलघटादौ, तथासति—पदार्थद्वयसंसर्ग-स्यापदार्थत्वेन तस्य शाब्दबोधे भानानापत्तेः । नच तस्य संसर्गतयैव भानमस्त्विति वाच्यम् तत्प्रकारकशाब्दबोधभानस्यैवानुभवसिद्धत्वादिति । इत्थञ्चेत्यत्र चोऽवधारणे। समभिव्याहृतपदार्थान्वयविशिष्टघटत्वादेः घटादिपदशक्यतावच्छेदकत्वे गौरवादिदोषा देवेत्यर्थः । लाघवादित्यस्यावधारयतीत्यनेनान्वयः । तत्रापि पूर्ववत्कार्यतावच्छेदकांशे गौरवमेवास्तीति भावः । वेदान्तिनोऽपि—अन्विते शक्तिरित्याहुः । तेषामाशयः—पदानां लाघवादितरान्विते पदार्थे शक्तिर्न कार्यान्विते गौरवान्मानाभावाच्च । यद्यपि प्रथमव्युत्पत्तौ कार्यान्विते पदानां शक्तिर्गृह्यते तथापि पर्यायान्तरे कार्यांशं गौरवबलेनो-पेक्ष्य इतरान्विते पदार्थे पदानां सामर्थ्यमवधार्यते तावतैव व्यवहारोपपत्तेः । नचैवं कार्यताज्ञानाभावे प्रवृत्त्यभावात्कथं शक्तिग्रह इति वाच्यम् "पुत्रस्ते जात" इति वाक्यश्रवणानन्तरं सिद्धार्थज्ञानादपि मुखविकासनेन हर्षमनुमाय * अनन्तरं तस्य वाक्यजन्यत्वमन्वयव्यतिरेकाभ्यां † निश्चित्यास्य शक्तेरवधारणेन कार्यताज्ञानस्य सर्वत्र अतन्त्रत्वात् । तदुक्तं वाचस्पतिमिश्रैः समन्वयसूत्रीयभाष्य-भामतीटीकायाम्—

‡ कार्यबोधे यथा चेष्टा लिङ्गं हर्षादयस्तथा ;
सिद्धबोधेऽर्थवत्ता च शास्त्रत्वं हितशासनात् ॥ इति

---

* अयं हर्ष इष्टज्ञानजन्यः हर्षत्वात् सम्प्रतिपन्नवत् ।

† इदमिष्टज्ञानं वाक्यजन्यम् एतद्वाक्यान्वयव्यतिरेकानुविधायित्वाद् दण्डान्वयव्यतिरेका-नुविधायिघटवत् ।

‡ अत्र "विवादाध्यासितानि वचनानि भूतार्थविषयाणि भूतार्थविषयप्रमाजनकत्वात् । यद्यद्विषयप्रमाजनकं तत्तद्विषयं यथा रूपादिविषयं चक्षुरादि, तथा चैतानि, तस्मात्तथेति" इति भामतीकाराणामनुमानमपि बोध्यम् ।

एतेन कार्यपराणामेव वाक्यानां प्रामाण्यं न तु सिद्धवस्तुपराणामिति प्रत्युक्तं भवति। उक्तरीत्या सङ्गतिग्रहसम्भवात् प्रयोजनवत्त्वाच्च अनधिगतार्थबोधकतया प्रामाण्योपपत्तेः। एवं व्यवहारे ( प्रक्रियायां ) भट्टवेदान्तिनोः प्रायो नयैक्यं विज्ञेयम्।

( मुक्ता० ) एवं वाक्यशेषादपि शक्तिग्रहः। यथा यवमयश्चरुर्भवतीत्यत्र यवपदस्य दीर्घशूकविशेषे आर्याणां प्रयोगः कङ्गौ तु म्लेच्छानाम् तत्र हि "अथान्या ओषधयो म्लायन्तेऽथैते मोदमानातिष्ठन्ति" इति वाक्यशेषाद्दीर्घशूके शक्तिर्निर्णीयते, कङ्गौ तु शक्तिभ्रमात्प्रयोगः, नानाशक्तिकल्पने गौरवात्। हर्यादिपदे तु विनिगमकाभावान्नानाशक्तिकल्पनम्।

( प्र० टी० ) वाक्यशेषात् शक्तिग्रहं दर्शयति—"एवम्" इति। उदाहरति—'यथे'ति। यवमयः=यवविकारः। "मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः" ( ४। ३। १४३ ) इति सूत्रेण विकारार्थो मयट्। तथाच—यवविकारीभूतचरुभवनमिष्टसाधनमिति शाब्दबोधः। भवतीत्यत्र भूधातूत्तरलट्प्रत्ययनेन इष्टसाधनत्वबोधनात्। इत्यत्र यवपदस्य=एतादृशश्रुतिघटकयवपदस्य। चरुः=देवदेयं हविः। आर्याणाम्=याजकानां द्विजानाम्। प्रयोगः=शाब्दव्यवहारः अभिलाप इति। शक्त्या बोधतात्पर्येणोच्चारणमित्यर्थ इति यावत्। कङ्गौत्विति—तुरवधारणे। प्रियङ्गुतण्डुल एवेत्यर्थः। तत्रहि=दीर्घशूकविशिष्टप्रियङ्गुततण्डुलयोरित्यर्थः। म्लेच्छानाम्=अपशब्दभाषिणां यवनादीनाम्। वाक्यशेषं दर्शयितुमाह—'तत्रही'ति। अन्याः=दीर्घशूकविशिष्टान्या यवभिन्नानि सस्यानीत्यर्थः। म्लायन्ते=म्लानवत्यो भवन्तीत्यर्थः। "मोदमाना इवोत्तिष्ठन्ती"ति पाठे मोदमाना एवेत्यर्थः उत्तिष्ठन्ति=परिदृश्यमानास्तिष्ठन्तीत्यर्थः मोदमाना=समञ्जरीका हरिताश्चेत्यर्थः। अस्माद् वाक्यशेषात् दीर्घशूके शक्तिर्निर्णीयते "सन्दिग्धेषु वाक्यशेषात्" ( पू० मी० १। ४। १६ ) इत्युक्तेः। अत्र हि "अक्ताः शर्करा उपदधाति" इत्याकारे श्रुतिवाक्ये शर्कराञ्जनसन्देहे "तेजो वै घृत"मिति वाक्यशेषे तेजस्त्वेन घृतस्य स्तूयमानत्वात् घृतेनाक्ता नतु तैलादिनेत्यर्थोऽवसीयते यथा, तद्वत्प्रकृतेऽपि बोध्यम्। * म्लेच्छप्रसिद्धेरार्यप्रसिद्धिर्बलीयसीति भावः। "दीर्घ-

* इदञ्च पूर्वमीमांसायाः प्रथमाध्यायस्य तृतीयपादे आर्यम्लेच्छप्रसिद्ध्याधिकरणे ( शास्त्रप्रसिद्धार्थप्रामाण्याधिकरणे ) तेष्वदर्शनाद्विरोधस्य समा विप्रतिपत्तिः स्यात्, शास्त्रस्था वा तन्निमित्तत्वात्' इति द्वाभ्यां ( ८, ९ ) सूत्राभ्यां निर्णीतम्। सचैष निर्णयः—'यवमयश्चरुर्भवति, वाराही उपानहावुपमुञ्चते' इति श्रूयते। तत्रार्याणां यवपदस्य दीर्घशूके व्यवहारः, म्लेच्छानान्तु प्रियङ्गौ ( कङ्गौ ) वर्त्तते। वराहशब्दाच्चार्याः शूकरे म्लेच्छास्तु कृष्णशकुनौ प्रयुञ्जते। तत्र लोकव्यवहारेण निश्चेतव्येषु शब्दार्थेषु आर्यम्लेच्छप्रसिद्ध्योः समबलतया उभयविधार्थग्रहणे विकल्पः स्यात् ( वात्स्यायनोऽपि आर्यम्लेच्छानां समानं लक्षणमित्याह ) एवम्प्राप्ते पूर्वपक्षे—सिद्धान्तः—शास्त्रीयप्रसिद्धिरेव बलीयसी प्रत्यासन्न-

शूकविशिष्टो यवपदवाच्य " इति यवपदशक्तेराकारः । कङ्गौत्विति—अवधारणार्थ-कस्तुशब्दः भ्रमादित्यस्योत्तरं योज्यः । शक्तिभ्रमादेवेत्यर्थः । "कङ्गुर्यवपदवाच्य" इति तु शक्तिभ्रम इत्याशयेनाह—" **शक्तिभ्रमात्प्रयोग** " इति । तस्मात्सन्देहस्थले वाक्य-शेषः शक्तिनिर्णायकः । **निर्णीयते**=अप्रामाण्यज्ञानास्कन्दितमानसप्रत्यक्षविषयीक्रियत इत्यर्थः । तटस्थस्येतिशेषः । केषुचिन्मूलपुस्तकेषु तु " अथान्या " इत्यस्याग्रे—

वसन्ते सर्वसस्यानां जायते पत्रशातनम् ।
मोदमानाश्च तिष्ठन्ति यवाः कणिशशालिनः ॥

इति श्लोको दृश्यते । तत्र **कणिशशालिनः**=बीजवन्त इत्यर्थः । " कणिशं बीजमाखियाद् " इति कोशात् । ननु 'यव' पदस्य हर्यादिपदवन्नानार्थ एव शक्तिः स्यादित्याशङ्क्याह—" **नानाशक्तिकल्पने** " इति । एकपदस्यानेकशक्तिस्वीकार इत्यर्थः । " **गौरवादि** "ति—तथाच–दीर्घशूकविशिष्ट इव प्रियङ्गुतण्डुलेऽपि शक्ति-स्वीकारे दीर्घशूकत्वादिरूपशक्यतावच्छेदकभेदाच्छक्तिभेदापत्त्या अप्रामाणिकानन्तशक्ति-कल्पनगौरवप्रसङ्गः । ततश्च शक्यतावच्छेदकानन्त्यमपि दोष इति भावः । कथं तर्हि हर्यादिपदे नानाशक्तिकल्पनमित्यत आह—" **हर्यादिपदं त्वि** "ति । अवधारणार्थकस्तुशब्दो "विनिगमकाभावाद्" इत्यस्योत्तरं योज्यः विनिगमकाभावादेवेत्यर्थः । **विनिगमकाभा-वादि**" ति—हर्यादिपदे कोशस्य § **उभयत्र**=हरिरूपेऽर्थे शुकादिरूपे चार्थे तुल्य-त्वान्नानार्थे शक्तिरस्तु प्रकृते तु वाक्यशेषस्यैव नियामकत्वमिति परः सारः ।

---

त्वात् अविच्छिन्नपारम्पर्यागतत्वाच्च । **अयमाशयः**—शक्यतावच्छेदकभेदेनानन्तशक्तिकल्पना-प्रसङ्गादेकैवशक्तिर्नोभयविधा । आर्या हि शब्दैकसमधिगम्यधर्माधर्मयोरविप्लुतिलिप्सया शब्दार्थं विविच्य परिपालयन्ति न म्लेच्छाः दृष्टार्थव्यवहारस्य यथाकथञ्चिदपि सिद्धेः । शास्त्रे च यवविध्यर्थवादे एवं श्रूयते ' **यत्रान्या ओषधयो म्लायन्ते अथैते मोदमाना एवोत्तिष्ठ-न्ति** ' इति । इतरौषधिविनाशकालेऽभिवृद्धिर्दीर्घशूकेष्वेव दृश्यते नतु प्रियङ्गुषु । वाराहोपानद्वि-ध्यर्थवादोऽपि " **वाराहं गावोऽनुधावन्ति** " इत्यस्ति । तत्र गवामनुधावनं शूकरे सति सम्भवति नतु कृष्णशकुनौ । तस्माद्यववाराहादिशब्दा नियतैकत्रशक्तिका दीर्घशूकाद्यर्था इत्यार्य-प्रसिद्ध्यैव म्लेच्छप्रसिद्ध्यपवादिन्या सति विरोधे निर्णयः । यत्र तु नास्ति विरोधो यथा—पिक-नेम-सत-तामरसादिशब्देषु तत्र म्लेच्छप्रसिद्धेरेवार्थनिर्णायकत्वं नतु तत्र निगमनिरुक्तादिनार्था-न्तरकल्पनाप्रयासः । एतच्च—" **चोदितन्तु प्रतीयेताविरोधात्प्रमाणेन** " ( पू॰ मी॰ १ । ३ । ९) इत्यत्राग्रिम एवाधिकरणे निर्णीतम् । विस्तरस्तु सोपपत्तिकः **भाट्टदीपिका-प्रभावल्यादिषु** द्रष्टव्यः ।

§ यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु ।
शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु ॥ इत्यमरः ।
" हरिर्वाच्यवदाख्यातो हरित्कपिलवर्णयोः ' इति विश्वश्च ।

( मु० ) एवं विवरणादपि शक्तिग्रहः। विवरणं तु तत्समानार्थकपदान्तरेण तदर्थकथनम्। यथा घटोऽस्तीत्यस्य कलशोऽस्तीत्यनेन विवरणाद्घटपदस्य कलशे शक्तिग्रहः। एवं पचतीत्यस्य पाकं करोतीत्यनेन विवरणादाख्यातस्य यत्नार्थकत्वं कल्प्यते।

( प्र० टी० ) विवरणाच्छक्तिग्रहं दर्शयति—"एवम्" इति। विवरणं लक्षयति—"विवरणन्त्वि"ति। तदा विव्रियमाणपदं ग्राह्यम्। तत्समानार्थकेति—तत्पदशक्यतावच्छेदकावच्छिन्नशक्ततत्पदभिन्नपदेनेत्यर्थः। तदर्थकथनम् = तत्पदशक्यतावच्छेदकावच्छिन्नप्रतिपादनम्। अभिनीय दर्शयति—"यथे"ति। "घटोऽस्ति" इत्यस्य विवरणं "कलशोऽस्ति" इति। तेन घटपदस्य घटे शक्तिग्रह इत्यर्थः। नाम्नो विवरणमुदाहृत्य आख्यातपदस्य विवरणप्रकारमभिधत्ते—"एवं पचती"ति। आख्यातस्य=पचतीत्याख्यातस्य। यत्नार्थकत्वं=कृत्यर्थकत्वं। कल्प्यते=अनुमीयते। तत्प्रकारश्चायम्—आख्यातं यत्नत्वविशिष्टे शक्तं यत्नत्वविशिष्टशक्तिं करोति प्रतिपादितार्थप्रतिपादकत्वाद्" इति। यद्यद्धर्मावच्छिन्नप्रतिपादनार्थप्रतिपादकं तत्तद्धर्मावच्छिन्नशक्तम् इति व्याप्तेराकारः। एवञ्च कथं विवरणस्य शक्तिग्राहकत्वं तद्वाचकपदाभावादिति शङ्का निरस्ता। उक्तानुमानेन तस्य शक्तिग्राहकत्वसिद्धेः।

( मु० ) एवं प्रसिद्धपदसान्निध्यादपि शक्तिग्रहः। यथा—इह सहकारतरौ मधुरं पिको रौतीत्यादौ पिकपदस्य कोकिले शक्तिग्रह इति।

( प्र० टी० ) प्रसिद्धपदसान्निधेः शक्तिग्राहकत्वं दर्शयति—"एवमि"ति। प्रसिद्धपदस्य=प्रसिद्धार्थकपदस्य सान्निध्यात् = सन्निधेरित्यर्थः। "इहाम्रवृक्षे मधुररावकर्त्ता पिकपदवाच्य" इत्याकारको बोधः। प्रसिद्धार्थकसमभिव्याहारोऽपि अनुमानविधया शक्तिग्राहकः। पिकपदस्य पूर्वं शक्तिग्रहाभावात्। कोकिलदर्शनान्तरं "कोकिलः पिकपदवाच्यः सहकारतरौ मधुररावकर्तृत्वात्" इति तदाकारः। उक्तवाक्यस्य शाब्दबोधस्तु—"सहकारतर्ववच्छेद्यमधुराऽभिन्नशब्दानुकूलकृतिमान् पिक" इत्येवंरूपः। सहकारतरावित्यत्र सप्तम्या अवच्छेद्यत्वमर्थः। तस्य रुधात्वर्थध्वनावन्वयः।

तिङर्थधर्मिणि नामार्थान्वयाव्युत्पन्नतया नेदं शक्तिग्रहस्योदाहरणमिति तु न, "यो यः शूद्रस्य पचति द्विजोऽन्नं सोऽतिनिन्दित" इत्यादौ तिङर्थधर्मिणि तथान्वयदर्शनेन तादृशनियमस्यासिद्धेरिति—दिनकरी।

अत्रेदमनुसन्धेयम्—फलानुकूलो यत्नसहितो व्यापारो धात्वर्थः। "फलव्यापारयोर्धातु"रित्युक्तेः। तद्धात्वर्थजन्यत्वे सति कर्तृप्रत्ययसमभिव्याहारे तद्धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारतावत्त्वं फलत्वम्। विभागजन्यसंयोगादिरूपे पतत्यादिधात्वर्थे विभागस्य संयोगस्य च फलत्ववारणायोभयदलम्। अर्थात्—विभागस्य फलत्ववारणाय सत्यन्तम्। संयोगे फलत्ववारणाय प्रकारतावत्त्वान्तमुक्तम्। कर्म-

प्रत्ययसमभिव्याहारे तु फलमेव विशेष्यं भवति । व्यापारत्वञ्च—धात्वर्थफलजनकत्वे सति धातुवाच्यत्वम् । अनुकूलत्वं संसर्गः । फलनिष्ठजन्यतानिरूपितजनकत्वमनुकूलत्वम् । बोधस्तु—कर्त्तरि प्रत्यये व्यापारविशेष्यको भवति कर्मणि प्रत्यये तु फलविशेष्यकः । तद्यथा—"चैत्रो ग्रामं गच्छति" इत्यत्र एकत्वावच्छिन्नचैत्राभिन्नकर्त्तृको वर्त्तमानकालिको ग्रामाभिन्नकर्मनिष्ठसंयोगानुकूलो व्यापार इति कर्त्तृप्रत्यये, "ग्रामो गम्यते चैत्रेण" इत्यत्र चैत्रकर्त्तृकवर्त्तमानकालिकव्यापारजन्यो ग्रामाभिन्नकर्मनिष्ठः संयोग इति च कर्मप्रत्यये बोधः । ग्रामसंयोगः प्रकृते फलम् । "भावप्रधानमाख्यातं सत्त्वप्रधानानि नामानि" इति यास्कोक्तेः व्यापारविशेष्यक एव वाक्यार्थबोधः । तत्र तिङ्वाच्यं सङ्ख्याविशिष्टकारकं कालश्च व्यापारविशेषणम् । तथाचोपरि वाक्यार्थबोधद्वयस्थलेऽभिलाप्य दर्शितम् ।

केचित्तु—फलव्यापारयो र्यदि पृथक् पृथक् धातोः शक्तिः स्यात् तदा तयोरुद्देश्यविधेयभावेनान्वयापत्तिरपि स्यात् । एकस्मिन्नेव पदे (पचत्यादौ) व्युत्पत्तिद्वयकल्पने गौरवञ्च भवेत् । अर्थात्—"फलविशेषणकव्यापारबोधम्प्रति कर्त्तृप्रत्ययसमभिव्याहृतधातुजन्योपस्थितिः कारणम्" इत्येकः कार्यकारणभावः । "व्यापारविशेषणकफलशाब्दबोधे कर्मप्रत्ययसमभिव्याहृतधातुजन्योपस्थितिः कारणम्" इत्यपरः कार्यकारणभाव इति कार्यकारणभावद्वयकल्पनरूपं गौरवम् । एकस्यैव धातोरर्थद्वये शक्तिद्वयकल्पनमिति "अन्यायश्चानेकार्थदर्शनम्" इतिन्यायविरोधश्च धातोर्बोधजनकत्वरूपसम्बन्धद्वयकल्पनमिति गौरवपरम्परापत्तिरनिवार्या । तेन फलावच्छिन्ने व्यापारे व्यापारावच्छिन्ने वा फले धातूनां शक्तिरभ्युपेया । नचैवं सति सकर्मकाकर्मकव्यवस्था न स्यादिति भेत्तव्यम् कर्त्तृकर्मार्थकतत्तत्प्रत्ययसमभिव्याहारस्यैव सकर्मकाकर्मकशाब्दबोधे हेतुत्वादित्याहुः ।

यत्तु—मीमांसकाः फलं धात्वर्थो, व्यापारः प्रत्ययार्थ इति वदन्ति तन्न । "लः कर्मणि"—(३।४।६९) सूत्रविरोधापत्तेः । नहि तेन सूत्रेण व्यापारः प्रत्ययार्थ इति लभ्यते । किन्तु—कर्त्ता कर्म वा प्रत्ययार्थः व्यापारस्तु धातुलभ्य एव अनन्यलभ्यश्च शब्दार्थः । अपिच—पचति, पक्ष्यति "अपाक्षीद्" इत्यादौ फूत्कारादिप्रतीतये अनेकप्रत्ययानां शक्तिकल्पना मीमांसकस्य गरीयसी तद्वरं धातोरेव व्यापारे शक्तिरिति । एवं सकर्मकाकर्मकव्यवहारोच्छेदाभिधानानभिधानव्यवस्थोच्छेदादिदूषणमपि मीमांसकस्यानिवार्यमित्यन्यत्र विस्तरः ।

व्यापारश्च क्रियैव । "व्यापारो भावना सैव सैव चोत्पादना क्रिया" इति हर्युक्तेः । उक्तञ्च—

यावत्सिद्धमसिद्धं वा साध्यत्वेनाभिधीयते ।
आश्रितक्रमरूपत्वात्सा क्रियेत्यभिधीयते ॥
गुणभूतै रवयवैः समूहः क्रमजन्मनाम् ।

बुद्ध्या प्रकल्पिताभेदः क्रियेति व्यपदिश्यते ॥

अत्रावयवाश्रयं पौर्वापर्यं समुदायाश्रयमेकत्वमित्याद्यन्यतो ज्ञेयम् ।

फलव्यधिकरणव्यापारवाचकत्वं सकर्मकत्वम् । फलसमानाधिकरणव्यापारवाचकत्वमकर्मकत्वम् । वस्तुतस्तु—शब्दशास्त्रीयकर्मसंज्ञकार्थान्वय्यर्थकत्वं सकर्मकत्वम् । तदनन्वय्यर्थकत्वमकर्मकत्वमिति ज्ञेयम् । तेन "अध्यासिता भूमय" इत्यकर्मणोऽप्यस् धातोः सकर्मकत्वे न दोषः । तत्र "अधिशीङ्स्थासामाधारः कर्म" (पाणि० । १ । ४ । ४६ । ) इत्यनुशासनाद् "भूमय" इत्याधारस्य कर्मत्वम् । "ज्ञा" धातोश्च विषयतया ज्ञानं फलम्, आत्ममनःसंयोगो व्यापारः । अतएव "मनो जानाती" त्याद्यपि साधु । आत्मा चात्रान्तःकरणमेव, मनश्च तद्वृत्तिविशेषः । "आत्मा आत्मानं जानाती" त्यादिस्थले तु अन्तःकरणावच्छिन्नः कर्त्ता, शरीरावच्छिन्नश्च कर्मेति—कर्मवत्कर्मणा तुल्यक्रियः ( पाणि० ३ । १ ८७ । ) इति सूत्रभाष्ये स्पष्टम् ।

सकर्मकोऽपि धातुर्द्विविधः । कर्तृस्थभावकः कर्मस्थभावकश्च । यत्र—कर्तृकर्मसाधारणरूपं फलं शब्देन प्रतिपाद्यते स कर्तृस्थभावकः । यथा—घटं पश्यति, ग्रामं गच्छति' इत्यादौ । अत्र विषयतासमवायाभ्यां ज्ञानं यथायथं घटरूपकर्मनिष्ठं आत्मरूपकर्तृनिष्ठश्च । संयोगश्च कर्तृकर्मोभयनिष्ठः । यत्र कर्त्रवृत्तिकर्मस्थफलं स कर्मस्थभावकः । यथा—"भिनत्ति" इत्यादौ । नह्यत्र द्विधाभवनादि कथमपि भेत्तृपुरुषरूपकर्तृनिष्ठं, किन्तु कर्मभूतदार्वादिनिष्ठमेवेति हेलाराजाद्याः । इच्छतिधातोरपि इच्छानुकूलं ज्ञानमर्थः । अतीतानागतयोरपि बुद्ध्युपारोहात् फलशालित्वं बोध्यम् । पतिस्तु गमिवत्सकर्मकः । 'नरकं पतित' इत्यादिप्रयोगदर्शनात् । विभागजन्यसंयोगमात्रपरत्वे तु अकर्मक एव । "कृञ्" धातोः उत्पत्तिव्यधिकरणः तदनुकूलो व्यापारोऽर्थः । फलमात्रार्थकत्वे तु यतिवदकर्मकत्वापत्तिः स्यात् । किञ्च—कर्मस्थभावकत्वाभावात् कर्मकर्त्तरि यगाद्यनापत्तिः । "कृति" रित्यादौ धातूनामनेकार्थत्वात् यत्नमात्रे वृत्तिः । यद्वा—यत्नकृतिशब्दयोरपि व्यापारसामान्यवाचित्वमेव । अतएव स्थालीस्थे यत्ने पचिना कथ्यमाने "स्थाली पचति" इति साधु । तदेतत् 'कारक' ( पाणि० १ । ४ । २३ ) इति सूत्रभाष्ये स्पष्टम् ।

यत्तु—तार्किकाः—धातोः फले व्यापारे च शक्तिरस्तु । किन्तु लकाराणां ( आख्यातस्य ) कृतावेव शक्तिर्लाघवात् नतु कर्त्तरि शक्तिः, तथासति शक्यतावच्छेदकानां कृतीनां प्रतिकर्तृभिन्नतया नानात्वाच्छक्यतावच्छेदकांशे गौरवं स्याद्, अतस्तत्र शक्तेः परित्यागः, कर्तुश्च प्रथमान्तपदेनैव लाभश्च । आख्यातार्थे ( कृतौ ) धात्वर्थो विशेषणं, प्रकृत्यर्थप्रत्ययार्थयोः सहार्थत्वे प्रत्ययार्थस्यैव प्राधान्यात् । आख्यातार्थस्तु—प्रथमान्तार्थे ( कर्त्तरि ) विशेषणम् । अनुकूलत्वमाश्रयत्वञ्च संसर्गः ( वाक्यार्थभूतः संसर्गमर्यादालभ्यः ) । तथा च—"तण्डुलश्चैत्रःपचति" इत्यत्र कर्मत्वं द्वितीयार्थः, तत्र तण्डुलस्याधेयतयाऽन्वयः । कर्मत्वस्य च पाकेऽ ( धातोरर्थभूते व्यापारे ) न्वयः,

अनुकूलत्वं संसर्गमर्यादया भासते । लटो वर्त्तमानत्वमर्थः, आख्यातस्य कृतिरर्थः. तत्सम्बन्धः संसर्गमर्यादयैव । एवञ्च पाकस्याख्यातार्थकृतौ, तस्याश्चैत्रे प्रथमान्तार्थे ऽन्वयः । एवं च—"तण्डुलकर्मकपाकानुकूल (व्यापारानुकूल-) वर्त्तमानकृतिमांश्चैत्र" इति वाक्यार्थः । "रथोगच्छती" त्यादौ रथस्याचेतनत्वाद्यत्नशून्यतया व्यापारे आश्रयत्वे वा अख्यातस्य लक्षणेत्याहुः—तदेतत्सर्वमापातरमणीयमाभाति । तथाहि—कृतौ शक्तिस्वीकारे युष्मदस्मदोर्लकारेण सह सामानाधिकरण्याभावान्मध्यमोत्तमपुरुषव्यवस्था न स्यात् । शतृशानजादीनामपि तिबादिवल्लादेशाविशेषेण" तेभ्योऽपि कृतिमात्रस्य बोधापत्तिश्च । यदि तु "पचन्तं देवदत्तं पश्य" इत्यर्थाभ्युपगमे आश्रयाश्रयिभावेन कर्मणि कृतेरन्वयात् शतृशानजादिस्थलेपि कृतौ शक्तिस्वीकारे इष्टापत्तिरेवास्माकमिति ब्रूषे, तदा तव मते "नामार्थयोरभेदान्वयो व्युत्पन्न" इति व्युत्पत्तिविरोधः कथं वार्येत । न च फलमुखगौरवस्यादोषत्वात् शत्रादीनां कर्त्तरि शक्तिः, तिबादीनान्तु कृतौ शक्तिरस्तु इति वाच्यम् स्वासिद्धान्तहान्यापत्तेः । स्थान्येव (लकारो) वाचको लाघवात् नादेशाः (तिबाद्याः) तेषां बहुत्वेन गौरवात् । किन्तु तिबादीनां शत्रादीनां च स्थानिस्मारकतया लिपिस्थानीयत्वं, बोधकस्तु लकार एव । सच शत्राद्यन्ते कर्त्तरि शक्तश्चेत् तर्हि तिबाद्यन्तेऽपि कर्त्तरि शक्तौ कोऽपराधः, एकस्यैव लकारस्य कर्त्तरि कृतौ च शक्तिस्वीकारे "अन्याय्यञ्चानेकार्थत्व" मिति न्यायविरोधस्तव दुरुद्धरः ।

ननु–"लः कर्मणि"-इति सूत्रे कर्त्तृकर्मपदे भावप्रधाननिर्देशमङ्गीकृत्य कर्त्तृत्वं कृतिः कर्मत्वं फलमित्यर्थं मत्वा कृतौ फले च सूत्रस्य शक्तिस्वरसः तेन कर्मप्रत्ययान्ते "देवदत्तेन तण्डुलः पच्यत" इत्यादौ "देवदत्तनिष्ठकृतिजन्यव्यापारजन्यविक्लित्तिरूपफलाश्रयस्तण्डुल" इति बोधः । 'कर्त्तरि कृत्'-इति सूत्रे तु कर्त्तरीतिपदस्य धर्मिप्रधानत्वात् कृत्याश्रये (कर्त्तरि) एव शत्रादीनां शक्तिरिति वक्तुं युज्यते इति चेद् ? अत्र ब्रूमः–यदेव "कर्त्तरि" इति पदमुक्तसूत्रे तस्यैव 'लः कर्मणि'—इति सूत्रेऽनुवृत्तिश्चकारेण कृतेति तस्य धर्मिप्रधानत्वमुभयत्रैव तुल्यम् ।

किञ्च–कृतेर्लकारवाच्यत्वेन "रथो गच्छति" इत्यादावाश्रये लक्षणास्वीकारेण तवैव गौरवम् । अभिहितानभिहितत्वव्यवस्थोच्छेदापत्तिश्च । ननु–"अनभिहिते" इति सूत्रे अनभिहितसङ्ख्याके इत्यर्थकरणे सा व्यवस्था साध्वीति चेद् ? भ्रान्तोसि, नहि कृत्तद्धितसमासैः क्वचिदपि सङ्ख्याभिधानं प्रसिद्धम् । वस्तुतस्तु यत्नोऽपि व्यापारसामान्यान्तःपाती धातुलभ्य एव । अनन्यलभ्यस्यैव शब्दार्थत्वादिति कृतौ शक्तिकल्पना आशामोदकचर्वणासमैव नैयायिकानाम् ।

यत्तु–प्रथमान्तार्थमुख्यविशेष्यकबोधे समादरो नैयायिकानां तत्रोच्यते=शाब्दिकमते"—पश्य मृगो धावति" इत्यादौ मृगकर्त्तृकं धावनं दृशिक्रियायां कर्म, प्रधानन्तु दृशिक्रियैव । तथाच—"मृग कर्त्तृकधावनकर्मकं प्रेरणाविषयीभूतं त्वत्कर्तृकं दर्शन" मिति

वाक्यार्थः। तत्र "मृगो धावति" इत्यत्र विशेष्यभूतधावनरूपार्थवाचकस्य 'धावती'त्यस्य प्रातिपदिकत्वाभावान्न द्वितीया, कर्मत्वन्तु संसर्गमर्यादया भासते। एवं 'पचति भवति' इत्यस्य 'पचिक्रियाकर्तृका सत्ते'ति बोधः। "पच्यादयः क्रिया भवति क्रियायाः कर्त्र्यो भवन्ती"ति भूवादिसूत्रास्थभाष्यात्। उक्तञ्च हरिणा—

सुबन्तं हि यथानेकं तिङन्तस्य विशेषणम्
तथा तिङन्तमप्याहुस्तिङन्तस्य विशेषणम्॥

इति।

तार्किकमते तु—"अन्यदेशसंयोगानुकूलधावनानुकूलकृतिमन्मृगकर्मकं प्रेरणा विषयीभूतं यद्दर्शनं, तदनुकूलकृतिमांस्त्व' मिति बोधः। तत्र विशेष्यभूतार्थवाचकमृग-शब्दस्य प्रातिपदिकत्वात् दृशिक्रियाकर्मत्वाच्च द्वितीयापत्तौ "धावन्तं मृगं पश्ये"तिवत् "पश्य मृगन्धावति' इत्यापत्तिः स्यात्, अप्रथमासमानाधिकरणे शतृशानचोर्नित्यत्वादेवं विधप्रयोगाविलयापत्तिश्च स्यादित्याद्यन्यत्र विस्तरः।

इति धात्वर्थमुख्यविशेष्यकवादिवैयाकरणमतम्।

---

मीमांसकास्तु—आख्यातार्थमुख्यविशेष्यकं शाब्दबोधं मन्यन्ते—तथाच पचती'त्यस्य पाकं करोति। 'पचत्योदन' मित्यस्य पाकेनोदनं करोती'ति विवरणदर्शनात् धात्वर्थकर्मत्वेन करणत्वेन वा आख्यातार्थकृतावान्वयो युक्त इति 'पचत्योदन देवदत्त' इत्यस्य "पाककरणिका ओदनभाव्यिका देवदत्तकृति" रिति बोधो जायते। तत्र च धात्वर्थस्य कृतिं प्रति करणत्वं न साक्षात्साधनत्वरूपम्, किन्तु कृतौ भाव्यत्वेनान्वित-स्वर्गादिसाधनत्वरूपम्। दृष्टं हि लोके तत्फलसाधने तदसाधनेऽपि साधनशब्दप्रयोगः। यथा—"कुठारेण छिनत्ति" इत्यादौ छेदनं प्रति कुठारः करणमिति। छेदनशब्दस्य हि द्वैधीभावानुकूलव्यापारोऽर्थः, नहि कुठारो व्यापारं प्रति करणं, किन्तु तत्फलद्वैधीभावं प्रति। तत्रोद्यमननिपतनादीनामेवेतिकर्त्तव्यतात्वेनान्वयः, अत्राङ्गयागादीनामितिकर्त्तव्य-तात्वेनान्वयः। तथाच "ज्योतिष्टोमेन स्वर्गकामो यजेत" इति वाक्यस्य "ज्योतिष्टो-माभिन्नयागकरणिका स्वर्गभाव्यिका दीक्षणीयाद्यङ्गयागेतिकर्त्तव्यताका कृति"रिति तदनु-कूलो व्यापार" इति वा केषाञ्चिन्मते इति बोधप्रकारं कल्पयन्ति।

इत्याख्यातार्थमुख्यविशेष्यकशाब्दबोधवादिमीमांसकमतम्।

---

नैयायिकास्तु—यद्यपि लडादिदशलकाराणां कर्त्ता कालः सङ्ख्या चेतित्रय-मर्थः, तथापि गौरवभयाद् यत * एव लकारसामान्यस्य शक्तिः व्यापारताद्यपेक्षया

---

* कृतावित्यर्थः।

कृतित्वस्य लाघवेन शक्यतावच्छेदकत्वात् । शक्तावच्छेदकञ्च लकारसाधारणं लत्वमेव । चैत्रो गन्ता, गतो ग्राम, इत्यादौ तु सामानाधिकरण्यानुरोधेन यथायथं कर्तृकर्मणी कृद्वाच्ये ।

ननु—" लटः शतृशानचावप्रथमासमानाधिकरणे " ( ३।२।१२४ ) इत्यनेन शतृशानचोरादेशत्वात् कर्त्तरि शक्तिः आदेशिशक्त्या निर्वाह एवादेशशक्त्यकल्पनादिति चेद् ? "चैत्रः पचन्" इत्यादौ सामानाधिकरण्यानुरोधादादेशिशक्त्याऽनिर्वाहादादेशेऽपि शक्तिः ।

इयांस्तु विशेषः—लत्वेन यत्ने शक्तिः आत्मनेपदत्वेन फले । "मैत्रेण गम्यते ग्राम" इत्यादौ "मैत्रवृत्तिकृतिजन्यगमनजन्यफलशाली ग्राम" इत्यन्वयबोधात् । कृतिश्चात्र तृतीयार्थः, जन्यत्वं संसर्गः, मैत्रः कृतौ विशेषणम्, सा च गमने, तच्च फले, तच्च ग्रामे । "ग्रामं गच्छति मैत्र" इत्यत्र तु "ग्रामवृत्तिफलजनकगमनानुकूलकृतिमान्मैत्र" इति बोधः । फलञ्च द्वितीयार्थः, जनकत्वं संसर्गः, ग्रामश्चात्र फले विशेषणम्, तद् गमने, तच्च कृतौ, सा मैत्रे इति विशेष्यविशेषणभावभेदेनैव कर्मकर्तृस्थत्वयोर्बोधः । तावन्तः पदार्थास्तु उभयत्रैव समानाः । "मैत्रेण ज्ञायते इष्यते क्रियते घट" इत्यादौ तु वृत्तिस्तृतीयायाः विषयतात्वाख्यातस्यार्थः ज्ञानेच्छाकृतीनां सविषयत्वनियमात् "मैत्रवृत्तिज्ञानविषयो घट" इति बोधः । "घटञ्जानाति मैत्र" इत्यादौ तु विषयता द्वितीयायाः, आश्रयत्वञ्चाख्यातस्यार्थः । "घटविषयकज्ञानाश्रयो मैत्र" इति बोधः । बहु शास्त्रार्थस्तु सटीकलघुमञ्जूषादौ शब्दशक्तिप्रकाशिकादिषु चावलोकनीयः ।

इदन्तु बोध्यम्—शाब्दबोधश्च द्विविधो भवति । भेदान्वयोऽभेदान्वयश्च । अभेदान्वयस्तु* स्वसमानविभक्तिकेन स्वाव्यवहितोत्तरवर्त्तिना च पदेनोपस्थापितस्यैव संसर्गमर्यादया भासते, नतु विरुद्धविभक्तिमत्पदार्थस्य "देवदत्तस्य धन" मित्यादावभेदान्वयबोधस्य सर्वानुभवविरुद्धत्वात् । एवं "कुण्डलिनौ देवदत्त" इत्याद्यनिष्टापत्तिवारणाय अभेदान्वयबोधे "समानवचनत्व" मपि निवेश्यम् । परन्तु—"विंशत्याद्याः सदैकत्वे सर्वाः सङ्ख्येयसङ्ख्ययो" रित्याद्यनुशासनाद् "शतं ब्राह्मणाः" इत्याद्युपपादनसम्भवेऽपि "वेदाः प्रमाणम्" इत्याद्याः कथं प्रयोगाः सङ्गच्छेरन् । यदि तु समानलिङ्गकस्थल एव समानवचनत्वस्वीकारः तदा "वेदाः प्रमाण" मित्यादीनां साधुत्वोपपादनेऽपि "त्रयः समुदिता हेतु" रिति काव्यप्रकाशोक्तेरसङ्गतिर्दुर्वारैव ।

अथ असमानलिङ्गकस्थल एव विशेष्यवाचकपदाऽसमानवचनविशेषणवाचकपदं साधु नतु समानलिङ्गकस्थले तदा "प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि (न्या०) " पितरो देवता " इत्यादौ समानलिङ्गकत्वाभावेऽपि विशेष्यवाचकपदासमानविशेषण-

---

* स्वसमानविभक्तिकेन स्वाव्यवहितपूर्ववर्त्तिना स्वाव्यवहितोत्तरवर्त्तिना च नामपदेनोपस्थापितस्यैव गौर्गृष्टिरित्यादौ, उत्तरवर्त्तिनापि क्वचित् ।

वाचकपदं नास्ति, किन्तु विशेष्यवाचकं यत्प्रमाणपदम्, तत्समानवचनमेव विशेषण-वाचकं शब्दान्तं पदमस्ति तस्मादेवंविधस्थलेऽभेदान्वयबोधानुपपत्तिरेव । तस्मात्— "विशेष्यवाचकपदोत्तरविभक्तितात्पर्यसङ्ख्याविरुद्धसङ्ख्याया अविवक्षितस्थल एव समानवचनत्वं तन्त्रं नत्वन्यत्र" इति साधारणो नियमः । तथाच— "वेदाः प्रमाण" मित्यत्र वेदानां बहुत्वेऽपि तत्रैकशाब्दप्रमितेः करणत्वस्य विद्यमानत्वात् प्रमाणपदोत्तरं बहुत्वविरुद्धमेकत्वं विवक्षितमेव । तत्रायोग्यतया प्रकृत्यर्थे ( वेदात्मके ) एकत्वान्वयासम्भवेऽपि एकदेशान्वयमङ्गीकृत्य प्रकृत्यर्थतावच्छेदके प्रमितिकरणत्वेऽन्वयः ।

एवं "त्रयः समुदिता हेतुः" इत्यत्र शक्त्यादित्रयस्यैकास्काव्योत्पत्तिवारणाय तृणारणिमणिन्यायसिद्धकारणतां विहाय समुदायत्वेन कारणत्वस्य वाच्यतया समुदायत्वस्य च शक्त्यादित्रिष्वप्येकस्यैव सत्त्वाद् हेतुपदस्यैकवचनान्तता ।

एवं "पितरो देवता" इत्यत्र पितृपितामहादीनामेकरूपेण यागोद्देश्यत्वविरहात् पितृत्वपितामहत्वादिभिरुपाधिभिः * पृथक् पृथगेव यागोद्देश्यत्वरूपदेवतात्वम्, उद्देश्यतावच्छेदकभेदेनोद्देश्यभेदात् । तथाच देवतानां देवतात्वानाञ्च बहुत्वात् तत्र चायोग्यतया एकत्वान्वयासम्भवात् देवतापदस्य बहुवचनान्ततेति दिक् ।

‡ स्वसमानविभक्तिकत्वन्तु—स्वप्रकृतिकविभक्तिसजातीयविभक्तिकत्वम् । साजात्यन्तु-प्रकृते विभक्तिविभाजकप्रथमात्वादिना नतु समानानुपूर्वीकत्वेन सामान्यतो धर्ममात्रेण वा तेन "वेदाः प्रमाण" मित्यत्र समानानुपूर्वीकत्वाभावेऽपि नाव्याप्तिः । नवा "नीलस्य घट" इत्यादौ सुप्त्वादिना सजातीयविभक्तिकसत्त्वेऽपि शाब्दबोधापत्तिः । अत्र स्वप्रकृतिकत्वं स्वाव्यवहितोत्तरत्वेन ज्ञायमानत्वं = प्रतिसन्धीमानत्वम् नतु स्वाव्यवहितोत्तरवृत्तित्वम् । एवं सजातीयविभक्तिकत्वमपि तादृशविभक्त्यव्यवहितपूर्वत्वेन ज्ञायमानत्वं नतु तादृशविभक्त्यव्यवहितपूर्ववृत्तित्वम् । तेन 'दधि सुन्दरम्' 'इदं दधि' इत्यादौ नान्वयानुपपत्तिः । अर्थात् "दधि सुन्दरम्" इत्यादौ विशेष्यानन्तरम्, "इदं दधि" इत्यादौ विशेषणानन्तरं विभक्तेरसत्त्वेऽपि विभक्तेरनुसन्धानाच्छाब्दबोधः । "नीलं घटमानय" इत्यादौ नीलाद्युत्तरविभक्तेस्तु नैरर्थक्यमेव, अभेदो वार्थः । संसर्गमर्यादयाऽभेदभानन्तु समास एव । अस्मिन्पक्षे समासव्यासयोर्न पर्यायता, व्यासेऽभेदस्य प्रकारत्वात् समासे संसर्गत्वाच्च ।

परन्तु "धान्येन धनवान्" इत्यादावभेदान्वयबोधार्थं स्वाव्यवहितोत्तरत्वेना-

---

* उपाधिभिः = धर्मैः ।

‡ अत्र "स्व" पदेन अनुयोगिवाचकपदग्रहणम् । यथा प्रकृते वेदपदम् । तत्प्रकृतिर्विभक्तिः, तत्सजातीयविभक्तिकत्वं प्रमाणपदेऽप्यस्ति, तस्य प्रथमान्तत्वात्, नात्राऽभेदान्वयबोधानुपपत्तिरिति भावः । विवक्षितं साजात्यमाह—साजात्यन्त्विति । नत्वत्रानुपूर्वीलक्षणं

नुसन्धीयमानविभक्तिसमवेतप्रथमात्वादिधर्मशून्याविभक्त्यव्यहितपूर्वत्वेनानुसन्धीयमानत्वमिति यावत्। अभेदस्तादात्म्यम्। तच्च—स्वसमानाधिकरण्यस्वप्रतियोगिवृत्तित्वोभयसम्बन्धेन भेदविशिष्टं यत् तदन्यत्वम्।

किञ्च क्रियाविशेषणस्थलेऽप्यभेदान्वयबोधात् क्रियापदद्वितीयान्तपदयोः समभिहारोऽप्यभेदान्वयबोधप्रयोजकः क्वचिद्वाच्यः। क्रियाविशेषणस्थले द्वितीयातिरिक्तविभक्तिर्नोत्पद्यते "क्रियाविशेषणानां कर्मत्व" मित्युनुशासनात्। क्रियापदेनात्र सार्थकप्रत्ययान्तधातूपस्थापितोऽर्थो विवक्षितो न तु सामान्यतो धात्वर्थः। तथासति भावकृतां प्रयोगसाधुत्वमात्रार्थकत्वात् "स्तोकः पाकः" इत्यादावपि धात्वर्थमात्रस्यैव प्राधान्यात् तद्विशेषणत्वेन स्तोकपदोत्तरं द्वितीया स्यात्।

एवं "घटो घट" इत्यादावभेदान्वयबोधवारणाय अभेदान्वयबोधे विरूपोपस्थितिरपि कारणं वक्तव्यम्। * विशेष्यतावच्छेदकतापर्याप्त्यनुयोगितावच्छेदकधर्मावच्छिन्नप्रतियोगताकभेदप्रतियोगितावच्छेदकविशेषणतावच्छेदकतापर्याप्त्यनुयोगितावच्छेदकत्वमेव विरूपोपस्थितिरित्याद्यन्यत्र विस्तरः।

भेदान्वयबोधश्च प्रातिपदिकार्थधात्वर्थयोः प्रत्ययार्थेन क्वचिन्निपातार्थे च सममेव जायते नत्वन्येन। सत्यपि पदार्थोपस्थितियोग्यताज्ञानादिकारणकलापे "राजा पुरुषः"

---

साजात्यमिष्टं किन्तु प्रथमात्वादिधर्मेण। तथाच सुजसोरुभयोरपि प्रथमात्वेन साजात्यमस्त्येवेति रीत्या वेदप्रमाणपदयोः समानविभक्तिकत्वं, तेनाभेदान्वयबोधे न कोपि दोष इत्यर्थः। **स्वप्रकृतिकत्वमिति**—'स्वं' घटादिपदं तत्प्रकृतिकत्वं विभक्तौ। अर्थात् 'स्वं घटादिपदं तदव्यवहितोत्तरत्वेन प्रतिसन्धीयमानत्वं स्मृतिविषयत्वमेव। तथाच "दधि सुन्दर" मित्यत्र दधिपदोत्तरं विभक्तेरभावेऽपि व्यासस्थले लुप्तविभक्तेः स्मरणस्वीकारात् विभक्तौ दधिपदाव्यवहितोत्तरत्वेन प्रतिसन्धीयमानत्वमस्त्येवेति—आह 'तेन' इत्यादि। **अभेदस्तादात्म्यमिति**—इदञ्च प्रकारतावादिमतेनोच्यते। **तस्यायमाशयः**—विशेषणविभक्तेरभेद एवार्थः। तादात्म्यमेवाभेदः। तथाच "नीलोघट" इत्यत्र घटे नीलतादात्म्यं भासते "नीलतादात्म्यवान् घट" इति बोधः। तादात्म्यस्य स्वरूपमाह—"तच्च" इति। अस्य लापनप्रकारोऽयमस्ति—"स्वं" नीलघटव्यक्तिभेदः तत्समानाधिकरण्यं द्रव्यत्वे, अथच "स्वं" नीलघटव्यक्तिभेदः तत्प्रतियोगिनी, नीलघटव्यक्तिः तद्वृत्तित्वमपि द्रव्यत्वे इत्युभयसम्बन्धेन भेदविशिष्टं द्रव्यत्वमेव, तदन्यत्वं तद्व्यक्तित्वे अर्थात् तद्नीलघटव्यक्तिवृत्तितद्व्यक्तित्वे। अनया रीत्या एकमात्रवृत्तिधर्म एव विशेषणविभक्तेरर्थः।

* **विशेष्यतावच्छेदकतेति**—इदन्तु "तद्धर्मावच्छिन्नाभेदसंसर्गावच्छिन्नप्रकारतानिरूपितधर्मितावच्छेदकसम्बन्धेन शाब्दबुद्धित्वावच्छिन्नम्प्रति तद्धर्मभेदः कारणम्" इति गदाधरभट्टाचार्योक्तस्यैव परिष्करणमिति मे प्रतिभाति इति श्रीस्वामिदण्डिविश्वेश्वराश्रमाः।

इत्यत्र राजपदार्थस्य स्वत्वसम्बन्धेन पुरुषे, एवं "भूतलं घटः" इत्यत्राधेयतासम्बन्धेन भूतलपदार्थस्य घटे, एवं "तण्डुलः पचति" इत्यत्र कर्मतासम्बन्धेन पाकपदार्थस्य तण्डुले एवं "चैत्रः पच्यते" इत्यादौ कर्तृत्वसम्बन्धेन पाकपदार्थस्य चैत्रे यथार्थभेदान्वबोधवारणाय निपातातिरिक्तयोः क्रियाप्रातिपदिकार्थयोः साक्षाद्भेदान्वयस्याव्युत्पन्नत्वमिति नियमोऽनुसन्धेयः। विभक्त्यर्थमन्तरीकृत्य तयोरप्यन्वयबोधात्साक्षादिति निपातातिरिक्तत्वादि विशेषणादित्यर्थः। "भूतले न घटः" "घटो न पट" इत्यादौ घटादेर्नञर्थाभावेन "मुखं चन्द्र" इत्यादौ मुखचन्द्रादीनामिवार्थसादृश्यादिना "न कलञ्जं भक्षयेद्" इत्यादौ नञुपस्थाप्येन बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वादिरूपविध्यर्थत्वाभावेन धात्वर्थभक्षणत्वादेरनुयोगिताऽन्वयेऽपि न क्षतिः। "नञ् पदं विना यत्र धर्मिणि यस्य विशेषणतया भानं यादृशसमभिव्याहाराद् भवति तादृशसमभिव्याहारस्थले तत्र धर्मिणि तदभावः प्रतीयते" इति नियमः। एवञ्च नञर्थाभावेनाऽनुयोगितया घटाद्यन्वयबोधोपपत्तये निपातातिरिक्तत्वविशेषणमावश्यकम्। एवञ्च -"न पचति चैत्रः" "चैत्रस्य न धनम्" इत्यादौ पाककृतिचैत्रस्वत्वाद्यभावस्य नञर्थस्य चैत्रधनादान्वयबोधोपपत्तये च तदाऽवश्यकम्।

"राजपुरुष" इत्यादिसमासस्थले तु पुरुषादिपदार्थेन समं राजादिपदार्थस्य न भेदान्वयबोधः किन्तु तेन समं विभक्त्यन्तार्थविशिष्टलाक्षणिकराजादिपदोपस्थाप्यराजसम्बन्धादेरभेदान्वयबोध एवेति न दोषः। एवं "मुखचन्द्रः" इत्यादिरूपकस्थलेऽपि चन्द्रादिपदस्य चन्द्रादिसदृशलक्षणया चन्द्रादिसदृशाऽभेदान्वयबोध एव नतु सादृश्यादिसम्बन्धेन चन्द्रादेर्मुखादावन्वय इति न तत्र व्यभिचार इत्याधिकं व्युत्पत्तिवादादिषु विलोक्यम्।

**( मु० ) तत्र जातावेव शक्तिर्नतु व्यक्तौ, व्यभिचारादानन्त्याच्च. व्यक्तिं विना च जातिभानस्यासम्भवाद्व्यक्तेरपि भानमिति केचित् तन्न। शक्तिं विना व्यक्तिभानानुपपत्तेः।**

( प्र० टी० ) प्रसङ्गसङ्गतेः परमतनिराकरणपूर्वकं स्वमते जात्यादिविशिष्टे शक्तिं व्यवस्थापयितुमादौ मीमांसकमतमाह—"तत्र" इति। एवं शक्तिग्रहे स्थिते सतीत्यर्थः। जातावेव—घटपटादिपदानां घटत्वपटत्वादिजातावेव शक्तिः अर्थबोधनसामर्थ्यम्, ईश्वरेच्छारूपः सङ्केतो वेत्यन्यदेतत्। नतु—व्यक्तौ कम्बुग्रीवादिमद्व्यक्तौ, आतानवितानात्मकव्यक्तौ वा। नतु--नैवेत्यर्थः। तत्र दोषमाह—व्यभिचारादिति यत्किञ्चिद्धर्मिणि शक्तिस्वीकारे घटादिपदात् शक्तिमत्त्वेनाऽनिर्णीतव्यक्तेरपि शाब्दबोधोदयेन तत्र शक्तिज्ञानकारणतायां व्यभिचारादित्यर्थः। आनन्त्याच्च—व्यक्तिभेदेन शक्तिभेदे शक्त्यानन्त्यादित्यर्थः।

अयमाशयः—*व्यक्तिशक्तिवादी एवं प्रष्टव्यः किं भोः ! यस्यां कस्याञ्चिद्व्यक्तौ शक्तिः ? सर्वासु वा ? । आद्ये व्यभिचारो दोषः । अर्थात्—यस्यां व्यक्तौ शक्तिर्न गृहीता तस्या अपि तेनैव पदेन यदि शाब्दबोधः, तदा विनापि शक्तिग्रहं शाब्दबोधे सति कुतो न व्यभिचारः । तथाच—घटपदात्पटरूपस्याप्यर्थस्य भानप्रसङ्गः शक्तिज्ञानाभावसाम्यात् द्वितीयश्चेद् ? आनन्त्यं दोषः । प्रतिव्यक्ति शक्तिभेदात् शक्त्यानन्त्यमित्यर्थः । इत्थं—

जातिविशिष्टव्यक्तौ शक्तिस्वीकारे जातावपि शक्तिग्रह आवश्यकः । तथा च† "नागृहीतविशेषणा बुद्धि विंशिष्ट उपजायत" इति न्यायेन जातावेव शक्तिर्न्याय्या लाघवात् । तदुक्तं§ "विशेष्यं नाभिधा गच्छेत् क्षीणशक्तिर्विशेषणे" इति । अथ मीमांसकमते व्यक्तिभानं न स्यादिति चेन्न "गामानय" इत्यादौ आनयनकर्मताया अन्वयोपपत्त्यर्थं व्यक्तिभानमर्थापत्तिप्रमाणेन भवति यतः । तथाहि—"उपपादकज्ञान हेतुभूतमुपपाद्यज्ञानमर्थापत्तिः प्रमाणम्" । "उपपाद्यज्ञानेनोपपादककल्पनमर्थापत्तिः प्रमा"। यथा—"पीनो देवदत्तो दिवा न भुङ्क्ते" इत्यत्र रात्रिभोजनमन्तरा पीनत्वस्यासम्भवात् पीनत्वज्ञानमुपपाद्यज्ञानं, तदेव करणम् । रात्रिभोजमज्ञानमुपपादकज्ञान तदेव फलम् । अर्थात्—उक्ते दृष्टे श्रुते वा दिवा अभुञ्जानस्य पीनत्वमुपपाद्यमनुपपन्नं सत् स्वस्योपपादकं रात्रिभोजनं कल्पयति । एवम्प्रकृतेऽपि व्यक्तिमन्तरा केवलाया जातेरानयनासम्भवात् जातिशक्तिज्ञानं करणं सदुपपाद्यं, तत्फलं व्यक्तिज्ञानमुपपादकमित्यनुसन्धेयम् । एतदभिप्रायेणैवाग्रिमो ग्रन्थोऽवतारितः "केचिदि"त्यन्तः ।

व्यक्तिं विनेति—व्यक्तिमविषयीकृत्येति अर्थात् व्यक्तिं विना जातिभानस्यासम्भवात् जातिभासकसामग्र्या एव व्यक्तेरपि भानमित्यार्थिकं व्यक्तिभानं स्वतःसिद्धम् । तत्र व्यक्तिभानार्थं शक्तेरपेक्षानास्तीति सकलमीमांसकसंवादः । तदेतन्मीमांसकमतं जातिशक्तिवादं खण्डयति "तन्न" इत्यादिना । 'शक्तिं विने'ति । व्यक्तौ शक्त्यस्वीकारे । यदि व्यक्तौ पदस्य शक्तिर्न स्यात्तदेत्यर्थः । व्यक्तिभानानुपपत्तेः—व्यक्तेः शाब्दबोधविषयत्वानुपपत्तेः वृत्तिज्ञानसहकृतपदज्ञानजन्यपदार्थोपस्थितेः शाब्दबोधहेतुत्वादित्यर्थः । व्यक्तिप्रतीतेरसम्भव एव स्यादिति भावः ।

अत्र—"व्यक्तिविशेष्यकजातिप्रकारकशाब्दबोधे जातिविषयकशक्तिज्ञानं कार-

---

* यथा—लक्ष्यतावच्छेदके लक्षणां विनैव तत्प्रकारकबोधसम्भवः, तथा शक्यतावच्छेदके शक्तिं विनैव तत्प्रकारकबोधसम्भवाद्व्यक्तावेव शक्तिरिति व्यक्तिशक्तिवादिनो हृदयम्।

† अगृहीतम्—अविषयीकृतं विशेषणं ययेति व्युत्पत्त्या विशेषणीऽविषयिणी बुद्धिर्विशिष्टे नोपजायते, विशिष्टविषयिणी न भवतीत्यर्थः ।

§ अभिधा—शक्तिः विशेष्यं = धर्मिणं न गच्छेत् = बोधयितुं समर्था न भवेत् कुतः विशेषणे = जातिरूपे क्षीणशक्तिः = कुण्ठितशक्तिरित्यर्थः । तथा च—अभिधारूपशक्तेर्विशेषणबोधनमात्रसमर्थत्वेन धर्मिबोधने सामर्थ्याभावात् तत्र = ( व्यक्तौ ) शक्तिस्वीकारो निष्प्रयोजनमिति तेषामभिप्रायः इति प्राचीना प्रभा ।

याम्" । नचोक्ताकारबोधे व्यक्तिशक्तिज्ञानस्यैव कारणत्वमुपगम्य व्यक्तावेव शक्तिरङ्गीक्रियतामिति वाच्यम् । तथासति उक्तानन्त्यव्यभिचारदोषापत्तेरिति मीमांसकस्याशयः ।

"पदजन्यपदार्थोपस्थितिः शाब्दबोधम्प्रति हेतु" रित्यस्ति नियमः । तेन व्यक्तौ शक्तिं विना व्यक्तिभानस्य नैव निर्वाहोऽतस्तत्रापि शक्तिः स्वीकार्येति नैयायिकस्याशयः ।

व्यक्तिशक्तिवादिनोऽभिप्रायस्तु इत्थं बोध्यः—यदि भट्टमते जातिरेव शक्या ( वाच्या ) तदा गोपदात् गोव्यक्तेर्भानं न स्यात् । नच जात्या व्यक्तेराक्षेपसम्भवः उभयोः सामानाधिकरण्याभावेन व्याप्तेरभावात्* तादात्म्यसम्बन्धेन व्याप्तेरभ्युपगमेऽपि व्यक्तौ विभक्त्यर्थसङ्ख्याकर्मत्वादेरन्वयो न स्याद् अपदार्थत्वात् । नह्यपदार्थेन सङ्ख्यादेरन्वयो भवितुमर्हति सुप्विभक्तीनां प्रकृत्यर्थान्वितस्वार्थबोधकत्वव्युत्पत्तेः । प्रकृतितात्पर्यविषये तदन्वयव्युत्पत्तौ लक्षणादृयुच्छेदप्रसङ्गोऽनिवार्यः स्यात् । किञ्च—शक्तिग्राहकानयनादिव्यवहारस्य व्यक्तावेव सम्भवात् जातिशक्तिपक्षे सुतरां तदनुपपत्तिरिति जातिशक्तिवादिभट्टमतमसम्मतम् । गुरुमते तु व्यक्तिं विना जातिग्रहाभावाद् व्यक्तेरपि शक्तिग्रहविषयता स्वीकार्या । अन्यथा जातिमात्रविषयत्वस्य कारणतावच्छेदकत्वे विनिगमनाविरहः स्यात् तद्विषयत्वस्य समानत्वादेव । न्यायादिमतेऽपि जात्यादेः शक्तिविषयत्वे गौरवमिति व्यक्तिपक्षाङ्गीकार एव युक्तिसहो भाति । ग्रन्थगौरवभयान्नाधिकं लिखितम् । वाक्यपदीयादिषु विस्तरो द्रष्टव्यः

**(मु०) न च व्यक्तौ लक्षणा, अनुपपत्तिप्रतिसन्धानं विनापि व्यक्तिबोधात् । नच व्यक्तिशक्तावानन्त्यं, सकलव्यक्तावेकस्या एव शक्तेः स्वीकारात् । नचाननुगमः, गोत्वादेरेवानुगमकत्वात् । किंच गौः शक्तेति**

---

* तादात्म्यसम्बन्धेनेति—"यत्र समवायेन जातिस्तत्र तादात्म्येन व्यक्तिः" इति व्याप्तिस्वीकारेऽपि "गामानय" इत्यादौ व्यक्तौ द्वितीयार्थकर्मत्वादेरन्वयानुपपत्तिरित्युक्तम् । अत्रायं भावः—"पदार्थः पदार्थेनान्वेति नतु पदार्थैकदेशेन" इति व्युत्पत्तिविरोधो मीमांसकमते, जातेश्चैतन्मते पदार्थत्वाद् व्यक्तेस्तु पदार्थैकदेशत्वात् । यदि चेयं व्युत्पत्तिरेव न स्वीक्रियेत तदा नित्यत्वस्य घटत्वेऽन्वयमपेक्ष्य "नित्यो घट" इति स्वारसिकप्रयोगः स्यात् । ननु—पदार्थैकदेशान्वयस्वीकारे चैत्रपुत्रेऽपि "चैत्रस्य गुरु" रिति प्रयोगः स्यात् चैत्रपुत्रस्यापि जन्यजनकभावसम्बन्धेन चैत्रसम्बन्धित्वात्स्वशिष्यस्य च गुरुत्वाच्च "चैत्रसम्बन्धिगुरु" रिति बोधसम्भवात् अतोऽत्र पदार्थैकदेशेऽन्वयः स्वीकर्त्तव्यः । तथा च—चैत्रपुत्रे चैत्रनिरूपितगुरुत्वाभावान्न "चैत्रस्य गुरु" रिति चैत्रपुत्रापेक्षया प्रयोगः ।

अत्र षष्ठ्यर्थो निरूपितत्वम् । "चैत्रनिरूपितं यद्गुरुत्वं तद्वान्" इति चैत्रनिरूपितबोधाभावादिति चेन्न तादृशव्युत्पत्तिसङ्कोचस्वीकारात् । व्युत्पत्तिसङ्कोचस्त्वित्थम्—"ससम्बन्धिकस्थलातिरिक्तस्थले पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेन" इति व्युत्पत्तिस्वरूपं स्वीकरणीयमिति भाव इति दण्डिस्वामिविश्वेश्वराश्रमाः ।

शक्तिग्रहो यदि तदा व्यक्तौ शक्तिः, यदि तु गोत्वं शक्यमिति शक्तिग्रहस्तदा गोत्वप्रकारकपदार्थस्मरणं शाब्दबोधश्च न स्यात् । समानप्रकारकत्वेन शक्तिज्ञानस्य पदार्थस्मरणं शाब्दबोधं प्रति च हेतुत्वात् ॥

(प्र० टी०) ननु लक्षणया व्यक्तिप्रतीतिरास्तां, * वृत्या पदजन्यपदार्थोपस्थितिः शाब्दबोधम्प्रतिहेतुरित्यपि स्वीक्रियतां, जातावेव च शक्तिर्मन्यतामित्याशङ्कायामाह—"नचे"ति। नहीत्यर्थः। लक्षणा=स्वारसिकलक्षणा। "अनुपपत्तिप्रतिसन्धानम्"-इति। अन्वयानुपपत्तिः तात्पर्यानुपपत्तिर्वा लक्षणाबीजमित्यप्यग्रे स्फुटीभविष्यति। "गामानय" इत्यत्र व्यक्तौ लक्षणास्वीकारे यद्यप्यन्वयानुपपत्तिरस्ति लक्षणाबीजम्, आनयनक्रियया सह गोत्वजातेरन्वयस्यानुभवविरुद्धत्वात्। तथापि "गौरस्ति" इत्यादिषु गोत्वजातेरस्तित्वाद्यन्वयस्यानुभवासिद्धत्वात् लक्षणाया नोपयोग इति विनापि लक्षणां व्यक्तिबोध इति भावः।

ननु—व्यक्तौ शक्तिस्वीकारे व्यक्तीनां नानात्वात् शक्तेरप्यानन्त्यमायास्यतीत्यवोचामेत्र इत्याक्षेपं समाधातुमाह—"नचे"ति। सकलासु व्यक्तिषु ईश्वरेच्छारूपाया एकस्या एव शक्तेः स्वीकारान्नोक्तो दोष इत्यर्थः। तथाच—ईश्वरेच्छाविषयत्वस्य शक्तिरूपत्वे विषयरूपतया व्यक्तिभेदेन भिन्नत्वेऽपि भगवदिच्छारूपशक्तेरेकत्वेन व्यक्तिभेदेऽप्यभिन्नतया न गौरवावकाश इति भावः।

ननु—गोघटादिव्यक्तयोऽननुगता ( विभिन्नाकाराः ) तासु विषयतासम्बन्धेन (d) शक्तिज्ञानकारणतायामवच्छेदकधर्माभावरूपोऽननुगमः स्यादित्याशङ्कायामाह—"नचाननुगम" इति। गोव्यक्तीनामननुगततया विषयतासम्बन्धेन शक्तिज्ञानकारणतायां शक्यतावच्छेदकाभावरूपो दोषो नेत्यर्थः। तत्र हेतुमाह—"गोत्वादे"-रिति—एवकार अनुगमकत्वादित्यस्योत्तरं योज्यः। अनुगमकत्वादिति—गोसामान्यनिरूपितसाधारणधर्मत्वात् अर्थात् गोव्यक्तिविषयकशाब्दबोधम्प्रति गोत्वविशिष्टविषयकशक्तिज्ञानं कारणम्। घटव्यक्तिविषयकशाब्दबोधम्प्रति घटत्वविशिष्टविषयकशक्तिज्ञानं कारणमित्येवं नाननुगमरूपो दोष इति भावः।

§प्रकारान्तरेण मीमांसकमते दोषमुद्भावयन् स्वमतमुपसञ्जिहीर्षुराह-"किञ्चे"ति। गौः शक्या="गौर्गोपदशक्या" इत्याकारको यदि शक्तिग्रहोऽभिमत इति शेषः

---

* वृत्तिज्ञानसहकृत पदज्ञानजन्यव्यक्तिस्मरणसम्भवेन व्यक्तेः शाब्दबोधसम्भवादित्याशयेनाह-"वृत्त्या"-इति।

(d) शक्तिज्ञानकारणतायामिति—कारणता च किञ्चिद्धर्मावच्छिन्नाऽवश्यमेव वाच्या निरवच्छिन्नकारणताया असम्भवादिति भावः।

§ मीमांसकदूषितां व्यक्तिशक्तिं साधयित्वा तन्मतसिद्धजातिशक्तिवादमपि खण्डयितुं विकल्पयतीत्यर्थः।

शक्तिग्रहः=शक्तिज्ञानं जातं तदा व्यक्तौ=गोव्यक्तावेव शक्तिः=मुख्यशक्तिःशक्यतावच्छेदकत्वाऽसमानाधिकारणशक्तिरिति यावत्, अनुभवसिद्धा=भवन्मतेऽन्यथाख्यातेरभावादुक्ताकारं विशिष्टं ज्ञानं प्रमात्मकमपीत्यर्थः। यदि तु गोत्वं शक्यम्="गोत्वं गोपदशक्यम्" इत्येव=इत्थकारकमेव शक्तिग्रहः=शक्तिज्ञानं जातं तदा भवन्मते गोत्वप्रकारकपदार्थस्मरणम्=गोत्वप्रकारकञ्च तत्पदार्थस्मरणम् अर्थात् गोव्यक्तिरूपस्य पदार्थस्य स्मरणमुपस्थितिरूपं शाब्दबोधश्च=गोत्वप्रकारकगोव्यक्तिविशेष्यकशाब्दबोधश्च न स्यात् नोत्पत्तुमर्हति। कथमिति चेदित्याह—"समानप्रकारकत्वेने"ति। समानप्रकारकत्वेन शक्तिज्ञानस्य पदार्थस्मरणं प्रति हेतुत्वादित्येका योजना, समानप्रकारकत्वेन पदार्थस्मरणस्य शाब्दबोधम्प्रति हेतुत्वादित्यपरा योजना। एवं सति "अत्रैव शक्ति ज्ञानस्योपयोग" इति पूर्वग्रन्थविरोधोऽपि न। अस्यायमर्थः—"यद् यत्प्रकारकं यद्विशेष्यकं शक्तिज्ञानं भवति तत् तत्प्रकारकं पदार्थस्मरणं, तत्प्रकारकतद्विशेष्यकशाब्दबोधञ्च जनयती"त्यस्ति नियमः। अर्थात् गोत्वे शक्तिग्रहे सति गोव्यक्तिपदार्थस्य कथं स्मरणं, कथञ्च शाब्दबोधे गोव्यक्तिनिष्ठा विशेष्यता भासेत उक्तनियमविरुद्धत्वादिति सूक्ष्मं निरीक्षयतां मीमांसकेन। तथाच—मीमांसकमते शाब्दबोधे व्यक्तिभानानुपपत्तिरेव महद्दूषणमिति भावः।

(मु०) किंच—गोत्वे यदि शक्तिस्तदा गोत्वत्वं शक्यतावच्छेदकं वाच्यम्। गोत्वत्वं तु गवितरासमवेतत्वे सति सकलगोसमवेतत्वम्। तथा च गोव्यक्तीनां शक्यतावच्छेदकेऽनुप्रवेशात्तवैव गौरवम्। तस्मात्तत्तज्जात्याकृतिविशिष्टतत्तद्व्यक्तिबोधानुपपत्त्या कल्प्यमाना शक्तिर्जात्याकृतिविशिष्टव्यक्तौ विश्राम्यतीति॥

(प्र० टी०) जातिशक्तिवादे गौरवमप्याह—"किञ्चे"ति। गोत्वे यदि शक्तिरित्यन्वयः। तव मते इति शेषः। "गोपदाद् गोत्वं बोद्धव्यम्" इत्याकारकेश्वरेच्छारूपा शक्तिर्यदि अभिमतेति शेषः। तदा गोत्वत्वं शक्यतावच्छेदकं=गोत्वत्वं शक्यतावच्छेदकरूपत्वेनावश्यमङ्गीकार्यमित्यर्थः। स्यादेवं ततः किमित्याह—गोत्वत्वन्त्विति—अवधारणार्थकस्तुशब्दः "सकलगोसमवेतत्व" मित्यस्योत्तरं योज्यः। तथाच—"गोत्वत्वं गवितराऽसमवेतत्वे सति सकलगोसमवेतत्वमेव नतु तद्व्यक्तित्वमिति तस्य गोभिन्नत्वेऽपि वर्तमानतयाऽव्यावर्तकत्वादित्यर्थः। एवं स्थिते मीमांसकमते पर्यवसितदोषमाह—तथा चेति। गोव्यक्तीनाम्=सकलानां गोव्यक्तीनामनन्तानामिति यावत्। शक्यतावच्छेदकेऽनुप्रवेशात्=शक्यतावच्छेदककोटौ प्रविष्टस्य शक्यतावच्छेदकत्वाऽवश्यम्भावादित्यर्थः। तवैव गौरवम्=तवैव मीमांसकस्याऽनिवार्यं गौरवमित्यर्थः।

अत्र प्राचीनप्रभाकारा इत्थं भावयन्ति—"तथाच—न्यायनये अनेकव्यक्तिशक्तिकल्पनागौरवस्य मीमांसकमतेऽनेकव्यक्तिषु शक्यतावच्छेदकत्वकल्पनागौरवतुल्यतया एतन्मते गुरुधर्मस्य शक्यतावच्छेदकत्वकल्पनागौरवं परमितिरिच्यते" इति।

सर्वेषां तु—दर्शितरीत्या शक्यतावच्छेदकांशे गोव्यक्तीनामपि प्रवेशे तासाञ्चानन्त्येऽवच्छेदकांशानन्त्यात् शाब्दबोधम्प्रति कारणतावच्छेदककोटौ गौरवं चेत्येवं बोध्यम्। मीमांसकमतखण्डनपूर्वकंस्वमतमुपसंहरति "तस्मादि"त उक्तरीत्या दोषे सति जातिशक्तिस्वीकारानर्हत्वात् अर्थात् केवलायां जातौ अवयवसंस्थानरूपायामाकृतौ व्यक्तौ वा शक्तिस्वीकारे तदितरबोधानुपपत्त्या कल्प्यमाना=तादृशबोधनिर्वाहाय सर्वानुमता शक्तिः=गोपदात्सास्नादिमत्त्वविशिष्टो गौर्बोद्धव्या" "घटपदात् कम्बुग्रीवादिमत्त्वविशिष्टघटादिर्बोद्धव्य" इत्याकारेच्छारूपा शक्तिरित्यर्थः । व्यक्तावेव=तत्तज्जात्याकृतिविशिष्टव्यक्तावेव । विश्राम्यति=पर्यवस्यति। एवञ्च—जात्यादिविशिष्ट एव शक्तिः स्वीकार्या । एतादृशसिद्धान्तमूलन्तु—न्यायशास्त्रस्य द्वितीयाध्यायीयद्वितीयाह्निकस्थात् "तदर्थे"—इत्यादिसूत्रादारभ्य "व्यक्त्याकृतिजातयस्तु पदार्थः" (न्या० २ । २। ६५) इत्यन्तानि सूत्राणि ज्ञेयानि । तत्रैव न्यायसूत्रभाष्ये प्रत्येकशक्तिवादः सदोषोऽपि वर्णितः। मया तु ग्रन्थगौरवभीत्या प्रकृतग्रन्थयोजनैव कृता।

कुब्जशक्तिवादिनस्तु—जातिविशिष्टा व्यक्तिरेव शक्या। परन्तु जातिशक्तिभाने सत्येव पदार्थस्मृत्यनन्तरं वाक्यार्थबोधो जायते नान्यथा । इत्थञ्च व्यक्तौ शक्तिज्ञानस्य नोपयोगः तासामानन्त्यात्। एवञ्च व्यक्तिः स्वरूपसत्येव पदार्थस्मृतिहेतुर्नतु तज्ज्ञानमप्यपेक्षितमित्याहुः। अयमभिसन्धिः—

यद्यपि नागृहीतविशेषणान्यायेन घटपदस्य घटत्वविशिष्टव्यक्तौ शक्तत्वात् जात्याकृती घटपदवाच्ये स्तः तथापि घटे घटत्वजातिज्ञानमेव पदार्थबोधहेतुर्नान्तरीयकं व्यक्तिज्ञानमपि तासामानन्त्यात। "घटपदवाच्ययोर्घटघटत्वयोः शाब्दबोधम्प्रति घटत्वीयं शक्तिज्ञानमेव कारणमिति तु निष्कर्षः।

इदन्तु बोध्यम्—तच्छब्दस्य वक्तृबुद्धिविषयतावच्छेदकीभूतघटत्वाद्यवच्छिन्ने शक्तिः। इदमेतदोः प्रत्यक्षबुद्धिविषयेऽदसः परोक्षबुद्धिविषये शक्तिः। अत एव तेषां विभिन्नार्थकत्वम्। एवं तदोऽपि। किम्पदस्य अनिर्धारितविशेषे जिज्ञासाविषयत्वविशिष्टे शक्तिः। सर्वपदस्य व्यापकत्वे। "सर्वे घटा रूपवन्त" इत्यादौ "घटत्वव्यापकं रूपवत्त्व"मिति बोधात्। त्वम्पदस्य तत्कालीनसम्बोध्यचैत्रत्वादिशक्यतावच्छेदकम्। अहम्पदस्य तत्कालीनस्वतन्त्रोच्चारयितृचैत्रत्वादि । स्वातन्त्र्योक्तया च "वाच्यस्त्वया मद्वचनात् स राजे" त्यादौ न मत्पदात्कवेर्बोधः। किञ्च—धेन्वादिपदञ्च धानकर्मत्वगोत्वोभयादिविशिष्टार्थकम् । यथा—नानाधर्मविशिष्टैकधर्मिवाचकपदप्रवृत्तिप्रमाणो नैकं धर्मं परित्यज्यापरधर्मबोधस्तथा सूर्यत्वचन्द्रत्वरूपनानाधर्मविशिष्टनानाधर्मिवाचकपुष्पवन्तादिपदाच्चन्द्रत्वादिकं परित्यज्य न सूर्यत्वादिप्रकारकबोधः। अत्र शक्तेरैक्याच्च नानार्थता। एवं सर्वनामपदानामपि बुद्धिविषयतावच्छेदकत्वेन शक्तेरैक्यान्न नानार्थता। परन्तु घटत्वादिषु तत्पदजन्यबोधविषयत्वं भासते। तानि विशेषणान्युच्यन्ते। बुद्धिविषयतावच्छेदकत्वन्तु सङ्केते नावगाह्यते तदुपलक्षणमित्युच्यते। युष्मदः

स्वम्बोध्ये । अस्मदः उच्चारणकर्त्तरि । स्वनिजादिपदानां समभिव्याहृतपदोपस्थाप्ये शक्तिः । समभिव्याहारश्चात्रैकवाक्यघटकत्वं बोध्यम् । एवशब्दस्य कैवल्यविशिष्टे शक्तिः । कैवल्यञ्च सजातीयद्वितीयराहित्यमित्येवमाद्यधिकं न्यायप्रदीप-शक्तिवाद-रामरुद्रयादिष्वनुसन्धेयम् ।

इतिशक्तिग्रन्थः

( मु० ) शक्तं पदं, तच्चतुर्विधम्, क्वचिद्यौगिकं क्वचिद्रूढं क्वचिद्योगरूढं क्वचिद्यौगिकरूढम् । तथाहि—यत्रावयवार्थ एव बुध्यते तद्यौगिकम् । यथा पाचकादिपदम् । यत्रावयवशक्तिनैरपेक्ष्येण समुदायशक्तिमात्रेण बुध्यते तद्रूढम् । यथा गोमण्डलादिपदम् । यत्र तु अवयवशक्तिविषये समुदायशक्तिरप्यस्ति तद्योगरूढम् । यथा पङ्कजादिपदम् । तथाहि-पङ्कजपदमवयवशक्त्या पङ्कजनिकर्तृत्वरूपमर्थं बोधयति । समुदायशक्त्या च पद्मत्वेन रूपेण पद्मं बोधयति । नच केवलयाऽवयवशक्त्या कुमुदे प्रयोगः स्यादिति वाच्यं, रूढिज्ञानस्य केवलयौगिकार्थज्ञाने प्रतिबन्धकत्वादिति प्राञ्चः ॥

( प्र० टी० ) "पदज्ञानन्तु करण" मित्युक्तं तत्र किं पदं कतिविधञ्च तदित्याकाङ्क्षायां पदं लक्षयति विभजते च "शक्त" मिति । वाचकतासम्बन्धेन=निरूपकतासम्बन्धेन शक्तिविशिष्टं पदम् । तच्चतुर्विधम् । चतस्रो विधा दर्शयति—A 'क्वचिद्यौगिक' मित्यादिना । प्रत्येकं सोदाहरणं लक्षयितुमाह—"तथाहि" इत्यादिना । यौगिकं लक्षयति—'यत्रे'ति यादृशपद इत्यर्थः । अवयवार्थः = अवयवप्रतिपाद्यार्थः बुध्यते = प्रमितिविषयतावान् भवतीत्यर्थः । 'यथे'ति—पाचकः इत्यत्र "पच्" इत्येकः प्रकृतिरूपोऽवयवः । "ण्वुल्" इत्यपरः प्रत्ययरूपोऽवयवः । पचतीति पाचक इति व्युत्पत्तेः । एवमुभयावयवार्थः "पाककर्त्ता" इति बुध्यते । तस्मात्—"पाचक" इति यौगिकं पदम् । एवमन्यदपि पाठकादि बोध्यम् । रूढं C लक्षयति—'यत्रावयवशक्ती'ति । यादृशे पदे अवयवशक्तिं विनापीत्यर्थः । यथा—गोपदस्य प्रकृतिप्रत्ययसमुदायरूपस्य गोत्वजातौ त्रित्वे वा शक्तिरस्ति । "गमेर्डोः" ( उ० २ । ) इति पाणिनीयानुशासनाद् गोपदव्युत्पत्तेः गमनकर्तृत्वरूपावयवार्थे सत्यपि नात्र "गच्छतीति गौ" रित्येवं व्युत्पत्तिलभ्यावयवार्थो बुध्यते । एवं "मण्डल" पदमपि

---

A उक्तञ्च शब्दशक्तिप्रकाशिकायाम्—

योगलभ्यार्थमात्रस्य बोधकं नाम यौगिकम् ।
समासस्तद्धिताक्तञ्च कृदन्तञ्चेति तत्त्रिधा ॥

C 'रूढं सङ्केतवन्नाम सैव सञ्ज्ञेति कीर्त्यते' इति शब्दशक्तिविवोक्तम् ।

"मण्डं लाती" त्येवमवयवार्थे न शक्तं किन्तु अवयवशक्त्यपेक्षां विनैव सूर्यादिरोधके कुण्डलाकारे परिधौ शक्तम्। * योगरूढं लक्षयति—यत्रत्वि'ति। अर्थः पूर्ववद्बोध्यः उदाहरति-यथे"ति। लक्ष्ये लक्षणं घटयितुमाह-"तथाही"ति। अवयवशक्त्येति "पङ्काज्जायते इति पङ्कजम्" इत्याकारयाऽवयवशक्त्येत्यर्थः। आशङ्क्य समाधत्ते—"नचे"ति। केवलशक्त्या=रूढिज्ञानाऽसहकृतावयवशक्तिज्ञानजन्यार्थस्मृत्येत्यर्थः। प्रयोगः स्यादिति = शाब्दबोधापत्तिरित्यर्थः। रूढिज्ञानस्येति-रूढिप्रकारकज्ञानस्येत्यर्थः इदं समाधानन्तु प्राचां मतानुरोधेन। तेषामयमाशयो यत्समुदायार्थावयवार्थोभयविधस्थले केवलाव्यवयवार्थबोधं रूढिः प्रतिबध्नाति तस्मात्पङ्कजपदं नावयवशक्त्या कुमुदे = रात्रिविकाशिनि पद्मविशेषे शक्तम्। किन्तु अवयवशक्तौ सत्यामपि समुदायशक्तिबलात् पद्म एव शक्तम्। अतो योगरूढमिदम्।

(मु०) वस्तुतस्तु समुदायशक्त्युपस्थितपद्मेऽवयवार्थपङ्कजनिकर्तुरन्वयो भवति सांनिध्यात्। यत्र तु रूढ्यर्थस्य बाधः प्रतिसंधीयते तत्र लक्षणया कुमुदादेर्बोधः। यत्र तु कुमुदत्वेन रूपेण बोधे न तात्पर्यज्ञानं पद्मत्वस्य च बाधस्तत्रावयवशक्तिमात्रेण निर्वाह इत्याहुः। यत्र तु स्थलपद्मादाववयवार्थबाधस्तत्र समुदायशक्त्या पद्मत्वेन रूपेण बोधः। यदि तु स्थलपङ्कजं विजातीयमेव तदा लक्षणयैवेति। यत्रावयवार्थरूढ्यर्थयोः स्वातन्त्र्येण बोधस्तद्यौगिकरूढम्। यथोद्भिदादिपदम्। तत्र—हि उद्भेदनकर्ता तरुगुल्मादि बुध्यते यागविशेषोऽपीति ॥ ८१ ॥

(प्र० टी०) अत्रैव स्वसम्मतं *मणिकारमतमाह—"वस्तुतस्त्व"ति। समुदायशक्त्युपस्थितपद्मे=रूढिज्ञानजन्यस्मृतिविषयपद्म एवेत्यर्थः। अत्रावधारणार्थकस्तुशब्दः पद्मपदोत्तरं योज्यः। अवयवार्थपङ्कजनिकर्त्तुः=योगशक्तिज्ञानजन्यस्मृतिविषयपङ्कजनिकर्तृत्वावच्छिन्नस्य। अन्वयो भवति=शाब्दबोधो जायत इत्यर्थः। सान्निध्यादिति-रूढ्यर्थस्य प्राथमिकोपस्थितिविषयत्वात् †"व्यक्तिवचनानां सन्निहितविशेषपरत्वम्" इति नियमादिति भावः। यत्रत्विति—"यादृशपङ्कजमानय" इति वाक्यघटकपङ्कजपदे। (यत्रत्विति घटकत्वं सप्तम्यर्थः। तस्य रूढावन्वयः। यादृशपङ्कज-

* उक्तञ्च शब्दशक्तिप्रकाशिकायाम्—यन्नाम स्वावयववृत्तिलभ्यार्थेन समं स्वार्थस्यान्वयबोधकृत् तन्नाम योगरूढम्। यथा पङ्कजकृष्णसर्पाधर्मादि। ताद्धि स्वान्तर्निविष्टानां पङ्कादिशब्दानां वृत्तिलभ्येन पङ्कजानकर्त्रादिना समं स्वशक्यस्य पद्मादेरन्वयानुभावकम् "पङ्कज" मित्यतः "पङ्कजनिकर्तृ पद्मम्" इत्यनुभवस्य सर्वसिद्धत्वात्।

* गङ्गेशोपाध्यायमतमित्यर्थः।

† व्यक्तिवचनानां किञ्चिद्व्यक्तितात्पर्यकाणां सन्निहितविशेषपरत्वम्=उपस्थितार्थविशेषपरत्वम्। तथाच पद्मे तात्पर्यसत्त्वात्तदेव पङ्कजनिकर्तृतया योगशक्तिजन्यज्ञानविषयो भवति न कुमुदादि अनुपस्थितत्वादित्यर्थः।

मानयेति वाक्यघटपङ्कजपदनिरूपितरूढिशक्त्याश्रयपदस्येत्यर्थः ) बाधः=समभिव्याहृतपदार्थेन तात्पर्यानुपपत्तिरूपो बाधः प्रतिसन्धीयते-निर्णीयते। अत्र "प्रतिसन्धीयते" इत्यस्यानन्तरं "कुमुदत्वेन च बोधे तात्पर्यम्" इति शेषेण पूरणीयम्। तत्र-तादृशवाक्ये तादृशवाक्यघटकपङ्कजपद इत्यर्थः। लक्षणया=शक्यसम्बन्धरूपया जघन्यया वृत्त्या कुमुदादेर्बोधः—कुमुदत्वादिप्रकारकशाब्दबोधः । यत्र तु—यादृशवाक्यघटकपङ्कजपदे कुमुदत्वेन रूपेण बोधे न तात्पर्यज्ञानम्=कुमुदत्वावच्छिन्नविषयताशालिप्रतीतीच्छयोच्चरितत्वज्ञानाभाव इत्यर्थः। पद्मस्य च-पद्मत्वावच्छिन्नस्य च बाधः—समभिव्याहृतपदार्थेन सहान्वयानुपपत्तिरूपो बाधः अन्वयासम्भवनिर्णय इत्यर्थः । तत्राऽवयवशक्तिमात्रेण=पङ्कजनिकर्तृत्वप्रकारकस्मृत्येत्यर्थः । निर्वाहः=पङ्कजनिकर्तृत्वप्रकारककुमुदविशेष्यकशाब्दबोधसम्भव इति। आहुः—चिन्तामणिकाराः शब्दखण्ड इत्यर्थः। अत्र बहुवक्तव्यमपि ग्रन्थगौरवभयाद् बालानुपयोगाच्च नोक्तम्। यत्र तु स्थलपद्मादाविति—अवयवशक्तिनिरपेक्षपद्मबोधतात्पर्येण प्रयुक्तपङ्कजपदरूढ्यर्थस्थलपद्मादौ । आदिना भित्त्यादिषु लिखितपद्मपरिग्रहः। अवयवार्थस्य=तादृशपङ्कजपदनिरूपितपङ्कजनिकर्तृत्वरूपस्य बाधः=अन्वयानुपपत्तिप्रतिसन्धानम्। "वर्त्तते" इति शेषः । तत्र समुदायशक्त्या=तादृशवाक्ये रूढिशक्त्या पद्मत्वेन रूपेण-बोधः=पद्मत्वप्रकारेणैव शाब्दबोधः नतु पङ्कजनिकर्तृत्वप्रकारेणापीति। यदि त्विति—स्थलपङ्कजं विजातीयमेव "विभाव्यते" इति शेषः । तथाच—स्थलपङ्कजं विजातीयमेवेति यदि विभाव्यते इति योजना । तदा=विजातीयविभावनाकाले लक्षणयैवेति = पद्मसादृश्यप्रकारेण स्थलपद्मबोधः पङ्कजपदेनेत्यर्थः ।

अस्यायं सङ्क्षिप्ताशयः—अवयवशक्त्याऽपि प्रथमं समुदायशक्त्युपस्थितस्यैवार्थस्य बोधो भवति समुदायशक्तेर्बलवत्त्वादिति सर्वसम्मतम् । परन्तु यत्र रूढिशक्त्या मुख्यार्थो न घटते किन्तु तस्य बाधोऽवसीयते तत्र लक्षणाऽऽश्रयणीया। तेन पङ्कजपदेनापि कुमुदादेर्बोधो यदि वक्तुस्तात्पर्यमिष्यते। यत्र तु "कुमुदत्वेन रूपेण बोधो जायता" मिति वक्तुस्तात्पर्यज्ञानं नास्ति पद्मत्वस्य च बाधोऽस्ति तादृशस्थले पङ्कजादिपदं यौगिकमेव। स्थलपङ्कजस्य=स्थलारविन्दस्य वैजात्ये तु पङ्कजपदस्य पङ्कजनिकर्तृरूपमुख्यार्थस्य बाधसत्त्वाल्लक्षणयैवेति शम् । यौगिकरूढं लक्षयति—"यत्रावयवे"ति। यादृशपदनिरूपितावयवशक्त्याश्रयस्य यादृशपदनिरूपितरूढिशक्त्याश्रयस्य च स्वातन्त्र्येण=अर्थान्तरमविषयीकृत्येत्यर्थः। "यथे"ति "ऊर्ध्वं भिनत्ती"ति व्युत्पत्तेरवयवशक्त्या तरुगुल्मादिरूपोऽर्थः। समुदायशक्त्या च यागविशेषः। "उद्भिदा यजेत पशुकाम" इत्यादिश्रुतिविहितः । अधिकन्तु काव्यप्रकाशटीकायां मया प्रपञ्चितम्।

(का०) लक्षणा शक्यसम्बन्धस्तात्पर्यानुपपत्तितः ।

( मु० ) गङ्गायां घोष इत्यादौ गङ्गापदस्य शक्यार्थे प्रवाहरूपे घोषस्यान्वयानुपपत्तिस्तात्पर्यानुपपत्तिर्वा यत्र प्रतिसन्धीयते तत्र लक्षणया तीरस्य बोध इति ॥ सा च शक्यसम्बन्धरूपा ।

(प्र० टी०) शब्दस्यार्थबोधनाय द्वौ व्यापारौ मुख्योऽमुख्यश्च । मुख्यः शक्तिरभिधा वेति सा निरूपिता । यत्र तु मुख्येऽर्थे अन्वयानुपपत्तिः तात्पर्यानुपपत्तिर्वा तत्राऽमुख्यो व्यापारो गृह्यते स एव "लक्षणा" इत्याख्यायते । अतस्तां लक्षयति—परमूले "लक्षणे" ति । शक्यस्य-शक्त्योपस्थापितस्यार्थस्य सम्बन्धः—तत्सम्बन्धिनि सम्बन्धः अर्थात् मुख्यार्थवाचकशब्दस्यामुख्येऽर्थे या वृत्तिः सा लक्षणा ज्ञेया । नच व्यञ्जनायामतिव्याप्तिस्तस्या अनङ्गीकारात् । एतदेव कारिकास्थं वृत्तं घटयितुमाह—मूले "गङ्गायां घोष" इति ।

अस्यायमाशयः—"गङ्गायां घोष" इत्यत्र गङ्गापदस्य शक्यार्थो जलप्रवाहविशेषः । तत्र घोषपदलक्ष्यार्थस्य आभीरपल्लीरूपस्य अन्वयानुपपत्तिरस्ति, नहि जलप्रवाहे ग्रामस्य साक्षात्सम्बन्धः । तथासति तस्यापि प्रवहणापत्तेः । प्रवाहरूपस्य मुख्यार्थस्य तु साक्षात्सम्बन्धस्तीरे गृहीतः, तस्माद्यः प्रवाहस्य तीरे सम्बन्धः स एव गङ्गापदस्य तीररूपार्थबोधाय लक्षणाव्यापारः । "शक्यपरम्परासम्बन्धो लक्षणा" इति निष्कर्ष इत्याशयेनाह—"सा च शक्यसम्बन्धरूपा" इति । किन्तु अन्वयानुपपत्तिः तात्पर्यानुपपत्तिश्च न लक्षणाबीजमिति प्राञ्चः । "यष्टीः प्रवेशय" इत्यत्र अन्वयानुपपत्तेरभावात्सर्वत्रानुगता तात्पर्यानुपपत्तिरेव तद्बीजमिति नव्या इत्याशयेनाह—परमूले "तात्पर्यानुपपत्तित" इति । तात्पर्यन्तु—"गङ्गापदाद् गङ्गातीरबोधो भवतु" इतीच्छारूपं "गङ्गापदाद् तीरबोधो भवतु" इतीच्छारूपं चेति तस्यानुपपत्तिः । अन्वयस्य पदपदार्थसंसर्गस्य अनुपपत्तिरयोग्यतेत्यर्थः । स्पष्टमेतदग्रिमग्रन्थेन स्फुटीभविष्यति ।

( मु० ) तथाहि—प्रवाहरूपशक्यार्थसम्बन्धस्य तीरे गृहीतत्वात्तीरस्य स्मरणम्, ततः शाब्दबोधः । परन्तु यद्यन्वयानुपपत्तिर्लक्षणाबीजं स्यात्तदा यष्टीः प्रवेशयेत्यत्र लक्षणा न स्यात्, यष्टिषु प्रवेशान्वयस्यानुपपत्तेरभावात् । तत्र च यष्टिप्रवेशे भोजनतात्पर्यानुपपत्त्या यष्टिधरेषु लक्षणा ॥ एवं काकेभ्यो दधि रक्ष्यतामित्यादौ काकपदस्य दध्युपघातके लक्षणा सर्वतो दधिरक्षायास्तात्पर्यविषयत्वात् । एवं छत्रिणो यान्तीत्यादौ छत्रिपदस्यैकसार्थवाहित्वे लक्षणा । इयमेवाजहत्स्वार्था लक्षणेत्युच्यते एकसार्थवाहित्वेन रूपेण छत्रितदन्ययोर्बोधात् ।

( प्र० टी० ) स्वोक्तमर्थं स्वयं विवृणोति—"तथाही" त्यादिना । व्याख्यातप्रायमिदमधस्तात्तथापि किञ्चिद् व्याख्यायते—प्रवाहरूपेति । उदाहृतवाक्य-

घटकगङ्गापदशक्यार्थस्याऽनुपपत्तिप्रतिसन्धानानन्तरं पुनःस्मृतगङ्गापदनिरूपितस्य तीरे= तीरत्वावच्छिन्ने **गृहीतत्वात्** = ज्ञातत्वात् **तीरस्य स्मरणम्** = तीरत्वविशिष्टविषयकस्मरणमित्यर्थः । **ततः** = तादृशस्मरणात् **शाब्दबोधः** = तीरत्वविशिष्टशाब्दबोधः। अर्थात् गङ्गापदेन ज्ञातलक्षणावृत्तेः पुरुषस्य तीरोपस्थितिर्भवति । ततश्च दर्शितद्विविधतात्पर्यरीत्या "गङ्गातीरे घोष" इति "तीरे घोष" इति वा यथायथं शाब्दबोधः = वाक्यार्थबोधः । इयञ्च "जहत्स्वार्था" सर्वथा शक्यार्थस्य परित्यागात्। "गङ्गातीरे घोष" इति शाब्दबोधपक्षे तु इदमुदाहरणमपि अजहत्स्वार्थाया एवेति ज्ञेयम् । तात्पर्यानुपपत्तेरेव सर्वत्रानुगततया लक्षणाबीजमिति स्थापयितुं युक्तिमारचयति--*"परन्तु" इत्यादिना । यद्यन्वयानुपपत्तिर्लक्षणाबीजं स्यात् तदा "यष्टीः प्रवेशय" इत्यत्र यष्टिधरबोधतात्पर्येण प्रयुक्ततादृशवाक्यघटकयष्टिपदस्य **लक्षणा न स्यात्** = यष्टिधरे लक्षणा न स्यादित्यर्थः। तत्र हेतुमाह—"**यष्टिषु**" इति । दण्डेष्वित्यर्थः। **प्रवेशान्वयस्य** = गृहप्रवेशसंसर्गस्य **अनुपपत्तेरभावात्** नहि यष्टीनां गृहे प्रवेशसम्बन्धोऽघटित इति कोपि वक्तुं समर्थ इति भावः। किन्त्वत्र वक्तुस्तात्पर्यमेवानुपपन्नं भवति, **तेन**=तात्पर्यानुपपत्तेर्लक्षणाबीजत्वस्वीकारेण **तत्प्रवेशे** = यष्टिमात्रप्रवेशे **भोजनतात्पर्यानुपपत्त्या**–भोजनविषयकवक्तुरिच्छाया † अनुपपत्त्या **यष्टिधरेषु लक्षणा** = भोक्तॄणां प्रवेशस्यैव तात्पर्यविषयत्वादिति भावः। अजहत्स्वार्थालक्षणास्थलेपि तात्पर्यानुपपत्तिमेव स्थापयति—"**एवं काकेभ्यः**" इति। **इत्यादाविति**---इत्यादिवाक्यघटककाकपदस्य । **दध्युपघातके** = दधिनाशकत्वावच्छिन्ने। **लक्षणा** = अजहत्स्वार्थालक्षणेत्यर्थः **सर्वतः** = सर्वेभ्यो दध्युपघातकेभ्यः। **दधिरक्षायाः** = दधिनिष्ठनाशप्रतियोगितायाः । **तात्पर्येति**—एवञ्च तात्पर्यानुपपत्तिरेव लक्षणाबीजमिति भावः। **इदमत्रावधार्यम्**—

"काकेभ्यो दधि"—इत्यत्र "भीत्रार्थानां भयहेतुः" (१।४।२५) इति सूत्रेण अपादानसञ्ज्ञायाम्—"अपादाने पञ्चमी" (२।३।२८) इति सूत्रेण काकपदोत्तरं पञ्चमी। तस्या जन्यत्वमर्थः। व्यापारो नाशानुत्पत्तिश्च धात्वर्थः। एकपदार्थयोरपि व्युत्पत्तिवैचित्र्याद् विशेषणविशेष्यभावेनान्वयः । तथाच—"दध्युप..तकजन्यनाशोत्पत्तिप्रतियोगिकत्वत्कर्तृकव्यापारप्रयोज्याभावाधिकरणं दधि" इत्यन्वयबोधः । अधिकन्त्वन्यतोऽवसेयम् । अजहत्स्वार्थाया उदाहरणान्तरमाह—"**एवं छत्रिण**" इति । अत्र न सर्वथा मुख्यार्थस्य त्यागः। दध्युपघातकत्वस्य मुख्यार्थतावच्छेदकीभूतकाकत्वसामानाधिकरण्येन मुख्यार्थत्वेऽपि विडालादिवृत्तित्वेन अमुख्यार्थत्वात् । यदि तु वक्तुः काकमात्रत एव दधिरक्षायां तात्पर्यं तदा न

---

* एतेन अन्वयानुपपत्तेर्लक्षणाबीजत्वं निराकरोतीत्युक्तं भवति।

† **भोजनतात्पर्य**विषयकाऽनुपपत्तिप्रतिसन्धानेनेत्यर्थः।

लक्षणा । एवमन्यत्रापि बोध्यम् । एवञ्च—" छत्रिणो यान्ती " त्यस्य वाक्यस्य—एकसार्थवाहित्वे = एकसार्थवाहित्वविशिष्टे छत्रिपदातिगजतुरगादिघटितसमुदायत्वावच्छिन्ने इति निष्कर्षः । इयमेवेति—शक्यसाधारणधर्मावच्छिन्नलक्षणैव । " एकसार्थवाहिनो यान्ती "ति शाब्दबोधः ।

( मु० ) यदि चान्वयानुपपत्तिर्लक्षणाबीजं स्यात्तदा क्वचिद्गङ्गापदस्य तीरे क्वचिद्घोषपदस्य मत्स्यादौ लक्षणेति नियमो न स्यात् । इदं तु बोध्यम्—शक्यार्थसम्बन्धो यदि तीरत्वेन रूपेण गृहीतस्तदा तीरत्वेन तीरबोधः । यदि तु गङ्गातीरत्वेन रूपेण गृहीतस्तदा तेनैव रूपेण स्मरणम् ॥ अत एव लक्ष्यतावच्छेदके न लक्षणा, तत्प्रकारकबोधस्य तत्र लक्षणां विनाप्युपपत्तेः । परन्तु एवं क्रमेण शक्यतावच्छेदकेऽपि शक्तिर्न स्यात्तत्प्रकारकशक्यार्थस्मरणं प्रति तत्पदस्य सामर्थ्यमित्यस्य सुवचत्वादिति विभावनीयम् ।

( प्र० टी० ) प्राचां मतं पुनः कटाक्षयति—" यदि चे "ति । चोऽवधारणे । स चान्वयानुपपत्तिरित्यस्योत्तरं योज्यः । चान्वयानुपपत्तिरेवेत्यर्थः । " गङ्गायां घोष " इत्यत्र गङ्गापदशक्ये घोषपदशक्याधारत्वान्वयानुपपत्तिज्ञानमेव लक्षणाबीजम् = लक्षणाया ग्राहकं स्यात् तदा क्वचित् = " तीरवृत्तिर्घोष " इति बोधतात्पर्येण उच्चारिते " गङ्गायां घोष " इति वाक्ये गङ्गापदस्य तीरे लक्षणेति योजना । क्वचित् मत्स्यतात्पर्येण उच्चारिते " गङ्गायां घोष " इति वाक्ये घोषपदस्य मत्स्यादौ लक्षणेति योजना । "इति नियमो न स्यात्"=उक्ताकारा व्यवस्था न भवेत् ।

अयमस्याशयः—" यत्र वाक्ये यत्पदं येन वक्त्रा यदर्थबोधनतात्पर्यबुद्ध्या उच्चारितं तत्पदं तस्मिन्नेवार्थे लाक्षणिकं नेतरत्रेति " नियमः । परन्तु यदि अन्वयानुपपत्तिरेव लक्षणाबीजं स्यात् । तदा क्वचिद् गङ्गापदस्य तीरे घोषपदस्य च मत्स्यादिजलचरजन्तौ लक्षणा न स्यात् यतो यत्र गङ्गापदस्य तीरे तात्पर्यग्रहः घोषपदस्य च मत्स्यादौ तात्पर्यग्रहः तादृशस्थले घोषस्य तीरे मत्स्यादीनाञ्च जलप्रवाहरूपेऽर्थेऽन्वयानुपपत्तिर्नास्ति किन्त्वन्वयोपपत्तिरेव । तथाचान्वयानुपपत्तिवादिनये उक्तनियमस्य भङ्गप्रसङ्गः स्यात् । तस्मात्तात्पर्यानुपपत्तिरेव साधीयसीति नव्यं मतमेव ज्यायः ।

अन्यदपि लक्षणास्थलेऽवश्यं द्रष्टव्यमस्तीति दर्शयति—" इदन्तु " इति । व्याख्यातप्रायमधस्तात् । " अत एवे "ति—तद्धर्मविशिष्टे लक्षणाग्रहस्य तेन रूपेणोपस्थितिं प्रति शाब्दबोधम्प्रति च कारणत्वादेवेत्यर्थः । वृत्तिज्ञान-स्मरण-शाब्दबोधानां समानप्रकारकत्वेन कार्यकारणभावस्वीकारदेवेति तु परमार्थः । लक्ष्यतावच्छेदके = लक्ष्यतावच्छेदकतीरत्वादौ । न लक्षणा = गङ्गापदशक्यप्रवाहसंयुक्तसमवायरूप—लक्षणा न स्वीकार्येत्यर्थः । तीरत्ववृत्तितादृशसमवायस्य प्रयोजनाभावेन लक्षणात्वानभ्युपगमादिति भावः । ननु—कथं तर्हि तीरत्वादिलक्ष्यतावच्छेदकस्य भानमित्याह—

तत्प्रकारकेति । तत्प्रकारकबोधस्य = तीरत्वादिधर्मप्रकारकतीरविशेष्यकबोधस्य लक्षणां विनाऽप्युपपत्तेः = तीरत्वादिप्रकारकशाब्दबोधनिर्वाहसम्भवादित्यर्थः । पदानुपस्थाप्यस्यापि तीरत्वादिलक्ष्यतावच्छेदकस्य शाब्दबोधे भानं सुकरम् । अतिप्रसङ्गस्य तद्धर्मविशिष्टेत्यादिनैव वारणसम्भवादिति भावः । तीरे आश्रयतासम्बन्धेन गङ्गापदतया तीरस्मरणं शाब्दबोधश्च भवतः, एवं तीरत्वेऽप्यवच्छेदकतासम्बन्धेन तादृशलक्षणासद्भावात् तत्प्रकारकस्मरणशाब्दबोधयोरपि नाऽनुपपत्तिरिति परं तात्पर्यम् । तुल्ययुक्त्या उक्तनियमसमतां शक्यतावच्छेदकेऽपि स्मारयति—परन्त्वित्यादिना । एवं क्रमेण=अर्थात् तीरत्वादौ पृथग्लक्षणाभावेऽपि अवच्छेदकतासम्बन्धेन लक्ष्यनिष्ठलक्षणासत्त्वाद् यथा स्मृत्यादिविषयत्वोपपत्तिः तद्वदित्यर्थः । शक्यतावच्छेदकेऽपि = गङ्गात्वादौ गोत्वादौ वा शक्तिर्माऽभूत् = न स्वीकार्येत्यर्थः । तत्र हेतुमाह—तत्प्रकारकेति—लक्षणास्थलवत् तत्प्रकारकशक्यार्थस्मरणं प्रति = घटत्वादिधर्मप्रकारकघटादिविशेष्यकोपस्थितिं प्रति । तत्पदस्य = घटादिपदस्य सामर्थ्य = शक्तिज्ञानद्वारा स्मृत्यादिप्रयोजकत्वम् । इत्यस्य = एतादृशयुक्तिप्रमाणस्य । सुवचत्वात् = वक्तुं शक्यत्वादित्यर्थः । "इति विभावनीय" मिति—सम्यगालोचनीयमित्यर्थः । अर्थात् यथा गङ्गादिपदानां तीरादिरूपव्यक्तिमात्रे लक्षणैव तथोक्तयुक्त्या घटादिपदानां घटादिव्यक्तिमात्रे एव शक्तिरपीति युक्तमुत्पश्यामः । लक्ष्यतावच्छेदके लक्षणा नास्ति शक्यतावच्छेदके तु शक्तिरस्तीति सम्प्रदायचालकैरुक्तमित्यत्र गमकं तु न पश्यामः तद्विद्वद्भिः स्वयमालोच्यमित्याशयो ग्रन्थकारस्य । परन्तु पदानुपस्थाप्यस्यापि संसर्गस्य यथा शाब्दबोधे भानं तथा लक्ष्यतावच्छेदकस्यापि, शक्यतावच्छेदकन्तु पदोपस्थितमेवेत्याभाति । अधिकं रामरुद्रयां द्रष्टव्यम् । " लक्ष्यतावच्छेदके लक्षणा नास्ती " त्यत्रेदमवधार्यम्—यथा शक्यतावच्छेदके शक्तिरस्ति तथा लक्ष्यतावच्छेदके लक्षणा नास्तीत्यत्र किं विनिगमकम् । यदि शक्यतावच्छेदके शक्तिर्न स्वीक्रियेत तर्हि यथा पृथिवीपदात् पृथिवीत्वेन पृथिव्याः शाब्दबोधे भानं तथाऽष्टद्रव्यातिरिक्तद्रव्यत्वेन गन्धवत्त्वेन च शाब्दबोधापत्तिः स्यात् । " पृथिवी पृथिवीपदशक्या " इतिवत् " अष्टद्रव्यातिरिक्तद्रव्यं पृथिवीपदशक्यम् " " गन्धवद्द्रव्यं पृथिवीपदशक्यम् " इति च शक्तिज्ञानस्य सम्भवात् । शक्यतावच्छेदके च शक्तिस्वीकारे पृथिवीत्वपृथिव्योरेव पृथिवीपदस्य शक्ततया तदुभयोरेव शक्यार्थयोः शाब्दबोधे भानमिति नियमः ।

लक्षणाया च भिन्नपदार्थस्यैव भानं, यथा गङ्गापदाल्लक्षणाया तीरस्य भिन्नस्य भानं तथा तीरत्वस्यापि=गङ्गातीरत्वस्यापि च भानं भविष्यत्येव । एवं सति लक्ष्यतावच्छेदके लक्षणास्वीकारस्य न किमपि प्रयोजनं पश्यामः । किञ्च—यथा लक्षणया तीरं गङ्गातीरं वा प्रवाहसंयोगीत्यत्र तीरत्वेन गङ्गातीरत्वेन वा यत्किञ्चिदेकधर्मावच्छिन्नविषयक एव शाब्दबोध इति नियमो नास्ति, कदाचित् तीरत्वेन कदाचिद्गङ्गातीरत्वेन बोधदर्श-

नात्। शक्त्या तु पृथिवीत्वेनैव बोधो नतु अष्टद्रव्यातिरिक्तद्रव्यत्वेन नवा गन्धवत्त्वेन पृथिवीपदस्य पृथिवीपृथिव्योरेव शक्तत्वात्, शक्यतावच्छेदके च शक्तेरस्वीकारे अन्नाप्यनियम एव स्यात्। यथा—घटपदशक्यतावच्छेदकं घटत्वमेव नतु घटवृत्ति सदपि कम्बुग्रीवादिमत्वं द्रव्यत्वं वा तथा पृथिवीपदशक्यतावच्छेदकं पृथिवीत्वमेव नतु गन्धवत्त्वादिकम्। तस्मादुभयस्यैव पृथिवीपृथिवीत्वस्य शाब्दबोधे भानम्। लक्ष्यतावच्छेदकस्थले तु बहूनां पदाऽनुपस्थितानामपि भानमिति न लक्ष्यतावच्छेदके लक्षणास्वीकारस्यावश्यकतेति भाव इति रामरुद्रभट्टाचार्योक्तिसारः।

**(मु०) यत्र तु शक्यार्थस्य परम्परासम्बन्धरूपा लक्षणा सा लक्षितलक्षणेत्युच्यते। यथा द्विरेफादिपदे रेफद्वयसम्बन्धो भ्रमरपदे ज्ञायते। भ्रमरपदस्य च सम्बन्धो भ्रमरे ज्ञायते। तत्र लक्षितलक्षणा॥**

( प्र० टी० ) लक्षितलक्षणायामाधिक्यमाशङ्क्य जहत्स्वार्थायामेव तस्या अन्तर्भावमाह * "यत्रत्वि" ति। **परम्परासम्बन्धरूपा**=स्ववाच्यरेफद्वयघटितपदवाच्यत्वरूपा। अर्थात् "द्विरेफो रौति" इत्यत्र वाक्यश्रोता द्विरेफपदस्य शक्यार्थे रकारद्वये शब्दकर्तृत्वस्यानुपपत्तिं मत्वा लक्षणया मधुपरूपार्थं जानाति। अत्र द्विरेफपदस्य शक्यार्थो रकारद्वयं तस्य मधुपव्यक्तौ न साक्षात्सम्बन्धः किन्तु तयोर्द्वयो रेफयोर्भ्रमरपदे सम्बन्धोऽस्ति, तस्य भ्रमरपदस्य मधुपेन सह सम्बन्ध इत्यनया रीत्या लक्षितलक्षणा। अत्र "स्व" पदेन द्विरेफपदशक्यार्थस्य रेफद्वयस्य ग्रहणम्। ताभ्यां=द्वाभ्यां रेफाभ्यां घटितं पदं "भ्रमर" पदमस्ति। भ्रमरपदवाच्यत्वञ्च मधुपव्यक्तौ इत्यनया रीत्या शक्यार्थपरम्परासम्बन्धरूपा लक्षणा लक्षितलक्षणा।

इदमत्रावसेयम्—"पदीयशक्यसम्बन्धो लक्षणा" इत्युक्तेः पदीयपरम्परासम्बन्ध एव लक्षणा इतीष्टमाभाति। यतः पदस्य साक्षात्सम्बन्धस्तु शक्यार्थेनैव तस्यैव लक्ष्यार्थेन परम्परासम्बन्धो यः सैव लक्षणा। साक्षात्सम्बन्ध एव वाच्यवाचकभावोऽभिधावृत्तिः शक्तिरिति च व्याभाष्यते। परम्परासम्बन्धस्तु लक्षणा वृत्तिः, जघन्यसम्बन्धो वेत्यभिधीयते। यत्र शक्यार्थे वक्तुस्तात्पर्यं नास्ति किन्तु तत्सम्बन्धिनि तद् वर्त्तते तत्रैव लक्षणाश्रीयते नेतरत्रेति राजमार्गः।

साच सामान्यतो द्विविधा केवललक्षणा लक्षितलक्षणा चेति। पदीयशक्यार्थस्य साक्षात्सम्बन्धः केवललक्षणा। यथा "गङ्गायां घोष" इत्यादौ। "गङ्गापदात्तीर बोधो भवतु" इति वक्तुस्तात्पर्यं गङ्गापदस्य शक्यार्थ-( जलप्रवाहरूपमुख्यार्थं )-स्वीकारे नोपपद्यते तत्पदीयशक्यार्थस्य जलविशेषप्रवाहस्य साक्षात्सम्बन्धः संयोगाख्य-

* लक्षितेन लक्ष्यते=ज्ञायते अनेनेति व्युत्पत्त्या लक्षितपदवाच्यत्वं लक्षितलक्षणापदार्थः साच न शक्तिर्नवा लक्षणेति तस्या वृत्त्यन्तरत्वमावश्यकमिति प्राचीनैकदेशिमतं निराकर्तुं लक्षणायामन्तर्भावमाह—**यत्रात्विति** प्राचीना प्रभा।

स्तीरे सोऽर्थनिष्ठः सम्बन्ध एव गङ्गाशब्द आरोपितो लक्षणा। तेन चारोपितेन शब्द-व्यापारेण गङ्गापदाद्विषयभूततीरोपस्थितिर्भवति। तत "स्तीरे घोषो गङ्गातीरे वा घोष" इति शाब्दबोध इत्यधस्तादप्यवोचाम।

तत्पदीयशक्यार्थस्य परम्परासम्बन्धो लक्षितलक्षणा। "यथा—द्विरेफो रौति" इत्यत्र द्विरेफपदस्य शक्यार्थो रेफद्वयं तस्य रवणे च वक्तुस्तात्पर्यं नास्ति, यतो रवणक्रियाया रेफद्वयेन सहान्वयासम्भवः, किन्तु रेफद्वयविशिष्टं भ्रमरपदं, तदीयशक्यार्थो मधुपो जन्तु-विशेषः, तत्रैव द्विरेफपदस्य लक्षणा। सचायं लक्षणासम्बन्धः प्रकृते साक्षान्नार्हति भवितुम्। किन्तु द्विरेफपदस्य शक्यभूतं यद्रेफद्वयं तस्य "अवयवितासम्बन्धो" भ्रमरपदे तिष्ठति। भ्रमरपदस्य शक्तिरूपः अभिधाख्यो वाच्यवाचकभावः सम्बन्धः स्ववाच्ये मधुपे वर्त्तते। तस्मात् स्वसम्बन्धिसम्बन्धरूपत्वादयं शक्यपरम्परासम्बन्धः फलतीत्येवं लक्षितलक्षणोच्यते। एतदभिप्रायेणैव मुक्तावलीपङ्क्तिं विवृण्वता दिनकरभट्टेन "स्ववाच्यरेफ-द्वयघटितपदवाच्यत्वादिरूपा" इत्युक्तम्।

अयमभिसन्धिः—यद्यपि "द्विरेफ" पदस्य न रेफद्वयं शक्यार्थः। किन्तु "द्वौ रेफौ यत्र" इति समासेन "भ्रमर" पदमेव द्विरेफस्य वाच्यभूतोऽर्थः। तस्य "भ्रमर" पदस्य च मधुपे जन्तौ साक्षादेव सम्बन्ध इति नात्र परम्परासम्बन्धरूपा लक्षितलक्षणा भवितुमर्हति, तथापि "समासे खलु भिन्नैव शक्तिः पङ्कजशब्दवत्" इति सिद्धान्तेन वैयाकरणमते "द्विरेफ" पदस्य समुदायरूपस्य शक्यार्थो रेफद्वय-विशिष्टं भ्रमरपदमेवेति नात्र लक्षणाचिन्तावतारः। परन्तु न्यायदिनयेऽत्र समासस्य द्वाववयवौ स्तः। अवयविभूतस्य समासस्य तु नैव क्वचिदर्थे शक्तिः। किन्तु "द्वि" पदस्य द्वित्वसंख्याविशिष्टोऽर्थः। "रेफ" पदस्य रेफत्वजातिविशिष्टो वर्णविशेषोऽर्थः। "अभेद-सम्बन्धश्च संसर्गो वाक्यार्थे" इति दर्शनानुसारेण च "द्वित्वसंख्याविशिष्टौ रेफौ" इत्येष शक्यार्थो भासते। "द्वौ रेफौ यत्र तत्पदं द्विरेफ" इत्याकारकोऽर्थस्तु लक्षणयैव।

एतस्मिन्मते तु "द्विरेफ" समुदायस्य वाक्यभूतस्य रेफद्वयविशिष्टे भ्रमरपदे लक्षणा तल्लक्षितभ्रमरपदस्य च मधुपे लक्षणेति रीत्या लक्षितलक्षणोच्यते। परमियमपि केवललक्षणान्तःपातिनी। न ततः स्वतन्त्रभूता। द्विरेफपदस्य शक्यार्थभूतद्वित्वसङ्ख्या-विशिष्टरेफस्य साक्षात्सम्बन्धो भ्रमरे, भ्रमरपदद्वारा परम्परासम्बन्धश्च मधुपजन्ताविति शक्यसम्बन्धरूपत्वाल्लक्षणैव। व्याकरणनये द्विरेफपदस्य शक्यार्थो रेफद्वयविशिष्टं भ्रमरपदं तस्य च मधुपेन सह साक्षात्सम्बन्धवत्त्वादिति कृत्वा नेदमुदाहरणं लक्षित-लक्षणायाः। किन्तु—"सिंहो देवदत्त" इत्यादीनि तस्या उदाहरणानि बोध्यानि। अत्र "समानविभक्तिकानां पदानामभेदेनान्वय" इति नियमेन "सिंहाभिन्नो देवदत्त" इति वाक्यार्थः शक्त्या प्रतीयते। सचानुपपन्नः पशुत्वमनुष्यत्वजात्योः परस्पर-विरोधात्। तस्माद्बाधितमुख्यार्थं सिंहपदं शौर्यक्रौर्यादिधर्मविशिष्टं पुरुषं लक्षयति।

तत्र पुरुषे सिंहपदीयशक्यार्थस्य साक्षात्सम्बन्धस्तु न प्रतीयते येन केवललक्षणाश्रीयेत । किन्तु शौर्यादिभिः सिंहशक्यार्थस्य "आधेयतासम्बन्धः" । सिंहशक्यसम्बन्धिनां शौर्यादीनाञ्च पुरुषे "आश्रयतासम्बन्धः" तत्रापि सिंहगतशौर्यस्य पुरुषवृत्तिशौर्यस्य-चाभेदपक्षे सिंहवृत्तिशौर्यस्य पुरुषे "अधिकरणतासम्बन्धः" तयोर्भेदपक्षे च सिंहवृत्तिशौर्यस्य "स्वजातीयवृत्ताधिकरणतासम्बन्धः" इति बोध्यम् । अत्र "स्व" पदेन सिंहवृत्तिशौर्यक्रौर्यादेर्ग्रहणम् । एवं दर्शितरीत्या वाक्यियपरम्परासम्बन्ध-तया सिंहपदस्य शौर्यादिगुणविशिष्टे या लक्षणा सा लक्षितलक्षणा । एवञ्चेय-मेव गौणी लक्षणा । गौणी च पृथक् वृत्तिरिति केचित् । उक्तं हि सङ्क्षेपशारीरके-*सर्वज्ञात्ममुनिभिः—

गुणतो गुणवृत्तिरिष्यते ह्यपरा लाक्षणिकी तु सङ्गतेः ।
इति भेदकमस्ति लक्षणागुणवृत्त्योरिति वेदवादिनः ॥

शब्दस्य मुख्यार्थगुणयोगादन्यत्र वृत्तिर्गुणवृत्तिः, मुख्यार्थसम्बन्धादन्यत्र-वृत्तिर्लक्षणावृत्तिरिति विवेकः । गौण्या अपि लक्षितलक्षणायामेवान्तर्भाव इति न तद्वृत्त्यन्तरमिति बहवः । अधिकमाधिकोपयुक्तमपि ग्रन्थगौरवभयान्नोक्तम् ।

इयाँस्तु विशेषः—न्यायवैशेषिकादिमते वाक्ये नास्ति लक्षणा । "शक्य-सम्बन्धो लक्षणे"ति चोच्यते, पदसमुदायरूपवाक्यस्य कस्मिंश्चिदप्यर्थे शक्तिर्नास्तीति कथं तत्र वाक्यीयः शक्यसम्बन्धो लक्षणा घटेत । किन्तु बहुव्रीहिसमासे उत्तरपदमेव लाक्षणिकमिति नयेन प्रकृते रेफपदस्यैव रेफविशिष्टे भ्रमरपदे लक्षणा । "द्वि" पदञ्च तात्पर्यग्राहकम् । मीमांसकादिमते तु वाक्येऽपि सेति नानुपपत्तिः । परन्तु—वाक्ये शक्तिरेव नास्तीति कथं शक्यसम्बन्धरूपा लक्षणेति यदुक्तं तत्रोच्यते—"पदसमुदायो वाक्य" मित्यविप्रतिपन्नम् । "समुदायश्च समुदायिनोऽवयवरूपान्न भिद्यत" इति दर्शने पदसमुदायोऽपि प्रत्येकपदादभिन्न एवेति कृत्वा पदीयशक्यसम्बन्धो वाक्येपि वर्त्तते इति न काप्यनुपपत्तिः ।

अथवा—"बोध्यसम्बन्धो लक्षणा" इत्येवास्तु लक्षणालक्षणम् । यथा पदीयशक्यता शक्तिवृत्तिबोध्या तथा परम्परासम्बन्धविशिष्टः पदार्थरूपो वाक्यार्थः पदार्थानां संसर्गरूपो वा वाक्यार्थोऽपि वाक्यबोध्यो भवति । ततश्च बोध्यसम्बन्धरूपा लक्षणा पदवद् वाक्येपि तिष्ठतीति वाक्यमपि लक्षकम् † ।

---

* एते हि वार्त्तिककाराणां विश्वेश्वराचार्याणां प्रमुखशिष्या अभूवन् ।

† उक्तञ्च तर्कालङ्कारजगदीशभट्टाचार्यैः—

जहत्स्वार्थाजहत्स्वार्थनिरूढाधुनिकादिकाः ।
लक्षणा विविधास्ताभिर्लक्षकं स्यादनेकधा ॥ ( शब्दशक्ति० )

काचिल्लक्षणा शक्यावृत्तिरूपेण बोधकतया "जहत्स्वार्था" इत्युच्यते । यथा—

( मु० ) किन्तु लाक्षणिकं पदं नानुभावकं लाक्षणिकार्थस्य शाब्दबोधे तु पदान्तरं कारणम् । शक्तिलक्षणान्यतरसम्बन्धेनेतरपदार्थान्वितस्वशक्यार्थशाब्दबोधं प्रति पदानां सामर्थ्यावधारणात् ।

( प्र० टी० ) ननु—" तच्छाब्दबोधे तच्छक्तपदज्ञानमेव हेतु " रिति लाक्षणिकपदात्कथं शाब्दबोधः स्यादित्यत आह—" किन्त्व "ति। लाक्षणिकं पदम्=तदर्थलाक्षणिकपदम् । नानुभावकम्=शाब्दबोधजनकं नास्तीत्यर्थः : तथाच लाक्षणिके पदे स्मारिका शक्तिरेव नानुभाविकीति भावः । लाक्षणिकार्थस्य शाब्दबोधे=लक्षणाज्ञानाधीनोपस्थितिविषयार्थविषयकशाब्दबोधे । पदान्तरम्=घोषादिपदम् । कारणं=हेतुः । अत्रार्थे नियममाह—" शक्तिलक्षणान्यतरे "ति । नियमशरीरस्यायमर्थः–शक्तिलक्षणान्यतरसम्बन्धेन=शक्त्या लक्षणया वेत्यर्थः । उपस्थितो यस्तीरादिरितरपदार्थः, तदन्वितो यः स्वशक्यार्थः=स्वपदगृहीतो घोषादिर्यः शक्यार्थः आभीरपल्लयात्मकः, तादृशतीराद्यन्विताभीरपल्लयात्मकशाब्दबोधं प्रति, पदानां=घोषादिपदानां सामर्थ्यावधारणात्=सामर्थ्यस्य निश्चितत्वात् । अर्थात् यत्र लक्षणया तीराद्युपस्थितिः तत्रोपस्थिततीरादिना अन्वितस्य घोषादिशक्तस्यैव लक्ष्यार्थशाब्दबोधं प्रति (अपि) कारणतेति सर्वमनवद्यम् । तथाच––तल्लाक्षणिकपदसमभिव्याहृतं शक्तं पदं तत्स्मारितवाक्यार्थविषयकशाब्दबोधजनकमिति भावः ।कुमतिः पशुरित्यत्र सर्वलाक्षणिकस्थले शाब्दबोधस्यानुभवसिद्धतया लाक्षणिकपदस्याप्यानुभावकत्वमिति नव्याः* ।

---

तीरत्वादिना गङ्गादिपदस्य । काचिच्छक्यलक्ष्योभयवृत्तिना शक्यवृत्तिनैव वा रूपेणानुभावकत्वात् "अजहत्स्वार्था" । यथा—द्रव्यत्वादिना नीलघटत्वादिना च घटपदस्य । काचिल्लक्ष्यतावच्छेदकीभूततत्तद्रूपेण पूर्वपूर्वप्रत्यायकत्वात् "निरूढा" । यथा—आरण्यादिप्रकारेण तदाश्रयद्रव्यानुभावकत्वादरुणादिपदस्य । काचिच्च पूर्वपूर्वतादृप्येणाप्रत्यायकत्वात् "आधुनिकी"। यथा—घटत्वादिना पटादिपदस्य । आदिना शक्यसदृशत्वप्रकारेण बोधकतया गौण्युपगृह्यते । यथा—अग्निर्माणवक इत्यादावग्निसदृशत्वादिना अग्न्यादिपदस्य । तदेवं विविधलक्षणावत्त्वात् "लक्षकं" नामापि जहत्स्वार्थादिभेदादनेकविधमित्यर्थः ।

* कुत्सिता मतिर्यस्य स कुमतिरिति बोधः । इतरपदस्य कुत्सितज्ञानवल्लाक्षणिकतया, पूर्वपदस्य तात्पर्यग्राहकतया निरर्थकत्वम् । तेन कुत्सितपशुत्वस्य बाधितत्वेन पशुपदस्यापि पशुपदलाक्षणिकतया " कुमतिः पशु " रित्यत्र कस्यापि शक्तपदस्याभावात् तत्र शाब्दबोधो न स्यादिति शाब्दबोधोपपत्तये लाक्षणिकपदेऽपि आनुभाविकी शक्तिरवश्यमङ्गीकरणीयेति भावः।

स्यादेतत्—यदि तीरादिलक्षकतया गङ्गादिपदस्य ज्ञानं तीराद्यनुभवे भवेद्धेतुः भवेदप्युक्तक्रमेण लक्षकाणां विभागः नत्वेतदस्ति । तीराद्यन्वयबोधं प्रति तीरादिशक्तपदज्ञानस्य लाघवेन हेतुतया लक्षकाणामननुभावकत्वात्, गुरूणाम् " अग्नौ शैत्यं स्पृशेत " इत्यादौ शक्येन दहनादिनेव " गङ्गायां घोष " इत्यादौ लक्षितेन तीरादिना सार्धमगृहीतासंसर्गकस्यैव सप्तम्यर्था-

(मु०) वाक्ये तु शक्तेरभावाच्छक्यसम्बन्धरूपा लक्षणाऽपि नास्ति । यत्र "गम्भीरायां नद्यां घोष" इत्युक्तं तत्र नदीपदस्य नदीतीरे लक्षणा । गम्भीरापदार्थस्य नद्या सहाभेदेनान्वयः क्वचिदेकदेशान्वयस्यापि स्वीकृतत्वात् । यदि तत्रैकदेशान्वयोऽपि न स्वीक्रियते तदा नदीपदस्य गम्भीरनदीतीरे लक्षणा गम्भीरापदं तात्पर्यग्राहकम् ।

(प्र० टी०) ननु—शक्यसम्बन्धो न लक्षणा तथासति वाक्ये शक्तेरभावाच्छक्याप्रसिद्ध्या लक्षणा न स्यादिति मीमांसकाक्षेपं परिहर्त्तुमिष्टापत्तिं दर्शयति—"वाक्येत्वि"ति । अवधारणार्थकस्तुशब्दः शक्तेरभावादित्युत्तरं योजनीयः । शक्त्यभावादेवेत्यर्थः । शक्यसम्बन्धरूपा लक्षणापीति—वाक्यशक्तेरप्रसिद्ध्या शक्यसम्बन्धरूपाया लक्षणाप्यप्रसिद्धेत्याशयः ।

ननु—यदि वाक्ये न लक्षणा कथं तर्हि "गभीरायां नद्यां घोष" इत्यादौ वाक्यार्थबोधनिर्वाहः । अर्थात् नदीपदस्य नदीतीरे लक्षणास्वीकारे गभीरपदार्थस्यैकदेशान्वयापत्त्या पदलक्षणाया असम्भवः तेन वाक्येपि साऽवश्यमभ्युपेया इत्यत आह—"यत्र गम्भीरायामि" ति । "यत्र तु" इति तुस्तकेषु पाठः । इत्युक्तमिति । इति वाक्यं प्रयुक्तमित्यर्थः । तत्र नदीपदस्य=तादृशवाक्यघटकनदीपदस्यापीत्यर्थः । नदीतीरे = नदीसम्बन्धिनि तीरे, लक्षणा = अजहल्लक्षणा, गम्भीरपदार्थस्य = गाम्भीर्यविशिष्टस्य । नद्या सह = नदीतीरपदार्थैकदेशभूतनद्या सह अभेदेनान्वयः= सामानाधिकरण्येनान्वयः, वाक्यार्थबोध इत्यर्थः । नन्वेवं "पदार्थः पदार्थेनान्वेति नतु पदार्थैकदेशेन" इति व्युत्पत्तिभङ्गःस्याद् अत आह—"क्वचिदेकदेशान्वयस्यापी" ति प्रकृते नदीतीरस्यैकदेशो नदी, तेनान्वय इत्यर्थः ।

अत्राक्षेप्तुर्मीमांसकस्यायमाशयः—"पदार्थःपदार्थेनान्वेति नतु पदार्थैकदेशेन" इति नियमः । यथा—"नीलो घट" इत्यत्र नीलपदार्थस्य घटपदार्थैकदेशेन घटत्वेन नान्वयः, किन्तु घटत्वजात्याकृतिविशिष्टव्यक्तिरूपेण पुष्कलपदार्थेनैव । एवं प्रकृतेऽपि न नदीतीरैकदेशेन नदीपदार्थेन सह, किन्तु नदीतीरेण सहान्वयः । ततश्च नात्र नदीपदे लक्षणा किन्तु पदसमुदायभूते वाक्य एवेति ।

---

धेयत्वादेरन्वयबोधप्रविष्टत्वादिति चेन्न प्रकृत्यर्थावच्छिन्नस्यैव प्रत्ययार्थस्य धर्म्यन्तरेऽन्वयबुद्धेर्व्युत्पन्नतया तीराद्यविशेषितस्य सुबर्थाधेयत्वादेर्घोषादावन्वयबोधायोगात्—

नच शक्तस्यैव पदस्य स्वसाकाङ्क्षपदान्तरोपस्थाप्यार्थान्वितस्वार्थधर्मिकान्वयबोधं प्रति हेतुत्वादन्वयबुद्धौ लक्ष्यार्थस्याप्रवेशः । "कुन्ताः प्रविशन्ति" इत्यादौ लक्ष्यस्य कुन्तधरादेरन्वयविशेष्यत्वानुपपत्तेः । "कुमतिः पशु" रित्यादौ लक्ष्यार्थयोर्मिथोऽन्वयबोधस्याप्यानुभाविकत्वाच्च । तस्माच्छक्तेरिव भक्तेरपि ज्ञानमानुभावकं भवत्येव कार्यतावच्छेदकस्य सङ्कोचान्न व्यभिचार इति शब्दशक्तिप्रकाशिका ।

समाधातुर्नैयायिकस्येदं हृदयम्—"गम्भीरायां नद्यां घोष" इत्यत्र केवलं नदीपदस्यैव नदीतीरे लक्षणा गम्भीरापदार्थस्य च नद्या (पदार्थभूतया) सहाभेदान्वय अर्थात् * "गम्भीराऽभिन्ननदीतीरे घोष" इति वाक्यार्थबोधे सति क्वचित्पदार्थैकदेशेन सहाप्यन्वयबोधः स्वीक्रियते । यथा "चैत्रस्य गुरुकुलम्" इत्यादौ । अत्र चैत्रोत्तरवर्त्ति-षष्ठ्यर्थसम्बन्धस्य गुरुरूपेण पदार्थैकदेशेनाप्यन्वयस्वीकारात् । तथाच—"चैत्रसम्बधिनो गुरोः कुल"मिति बोधः । वस्तुतस्तु—चैत्रपदोत्तरवर्त्तिन्याः षष्ठ्या निरूपितत्वमर्थः । तस्य गुरुपदार्थैकदेशे गुरुत्वेऽन्वयः । तथा च—चैत्रनिरूपितं यद्गुरुत्वं, तद्वत्सम्बन्धि-कुलमिति बोधः । अन्यथा—गुरुपदार्थेन सहान्वयस्वीकारे चैत्रपुत्रतात्पर्येणापि चैत्रस्य गुरुकुलम्" इति प्रयोगः स्यात् । चैत्रपुत्रस्यापि स्वशिष्यस्य गुरुत्वात् चैत्रेणापि जन्यजनकभावसम्भवाच्च । चैत्रसम्बन्धिनो गुरोः (चैत्रपुत्रस्य) कुलमिति बोधसम्भवात् । उक्तरीत्या अन्वयस्वीकारे तु—चैत्रनिरूपितगुरुत्वस्य चैत्रपुत्रे गुराव-भावान्न चैत्रपुत्रतात्पर्येण तादृशप्रयोग इति ध्येयमिति दण्डिस्वामिविश्वेश्वराश्रमाः। एवञ्च पदलक्षणानिर्वाहे सति सुधावाक्यलक्षणायामादरः । एतेनैवाशयेनाह—"स्वीकृतत्वात्" इति । पदभेदेन व्युत्पत्तिभेदात् प्रकृते तथाविधव्युत्पत्तिकल्पन-मन्याय्यमिति भावः † । अस्तु वा तत्रैकदेशान्वयानङ्गीकार इति कल्पान्तरमाह—"यदि तत्रे"ति । "गभीरायां नद्याम्" इत्यत्र । एकदेशेति—दर्शितरीत्या एकदेशान्वयो न स्वीक्रियते = स्वीकर्त्तुं न शक्यत इत्यर्थः । तदेति—"तात्पर्य-ग्राहक"मिति—"नदीपदं गभीरनदीतीरविषयकबोधजनकं भवतु" इत्याकारकव-क्त्रिच्छारूपतात्पर्यग्राहकमित्यर्थः । इति स्वीकार्यमिति शेषः ।

(मु०) बहुव्रीहावप्येवम् । तत्र हि चित्रगुपदादौ यद्येकदेशान्वयः स्वीक्रियते तदा गोपदस्य गोस्वामिनि लक्षणा गवि चित्राभेदान्वयः । यदि त्वेकदेशान्वयो न स्वीक्रियते तदा गोपदस्य चित्रगोस्वामिनि लक्षणा चित्रपदं तात्पर्यग्राहकम् ॥ एवमारूढवानरो वृक्ष इत्यत्र वानर-पदस्य वानरारोहणकर्मणि लक्षणा, आरूढपदं तात्पर्यग्राहकम् । एवमन्य-त्रापि बोध्यम् ॥

---

* गम्भीराऽभिन्ना या नदी तत्तीरे घोष इत्यर्थः ।

† नच विनिगमनाविरहेण गम्भीरपदस्य लक्षणा नदीपदं तात्पर्यग्राहकमित्यस्यापि वक्तुं शक्यत्वात् कथं नदीपदमात्रे लक्षणाभिधानमिति वाच्यम् "प्रत्ययानां प्रकृत्यर्थान्वित-स्वार्थबोधकत्वव्युत्पत्तेः" उत्तरपद एव लक्षणाया उक्तत्वादित्याद्यधिकमन्यत्र । यस्मात् प्रत्ययो विधीयते सा प्रकृतिः, तदर्थेन अन्वितो यः स्वार्थः कर्मत्वादिरूपः तद्बोधकतेति नियमशरीरस्यार्थः । प्रत्ययाश्च पिमक्तिकृत्तद्धिताख्याताः ।

( प्र० टी० ) A "बहुव्रीहावि"ति—बहुव्रीहिसमासस्थलेऽपि वाक्यैकदेशे पद एव लक्षणेति बोध्यम्। एतद् घटयति—"तत्र हि" इति।

अयमाशयः—B "चित्रा गावो यस्ये"ति बहुव्रीहिः। तदत्र यद्येकदेशे गोपदार्थेऽन्वयस्वीकारः तदा गोपदं गोस्वामिनं लक्षयति। चित्रापदार्थस्य गोपदार्थेन सहाभेदान्वयः। "चित्राऽभिन्ना या गाव" इति बोधः। यद्येवं न तदा गोपदस्य चित्रगोस्वामिन्येव लक्षणा चित्रापदं पूर्ववत्तात्पर्यग्राहकं मन्यताम्। "गोपदं चित्रगोस्वामिविषयकबोधजनकं भवत्वि"ति वक्तुस्तात्पर्यमित्यर्थः। बोधस्तु—"चित्राभिन्नगोवृत्तिस्वत्वप्रतियोगी चैत्र" इति ज्ञेयः। "एवमि"ति—"आरूढो वानरो यमसावारूढवानर" इत्यत्रापि पूर्वेव दिगनुसरणीयेति भावः। एवं सर्वत्र बहुव्रीहिसमासे उत्तरपदे लक्षणा पूर्वपदञ्च तात्पर्यग्राहकं बोध्यमित्याशयेनाह—"एवमन्यत्रापी"ति।

अत्रेदमवधार्यम्—आरुहेरूर्ध्वदेशावच्छिन्नसंयोगानुकूला क्रियाऽर्थः। क्तस्याश्रयो द्वितीयायाश्चाधेयत्वमर्थः। तथाच—"वृक्षवृत्त्युपरिदेशावच्छिन्नसंयोगानुकूलक्रियाश्रयो वानर" इत्यन्वयधीः। "आरूढवानर" इति समासे तु—"आरोहणकर्तृवानरसम्बन्धी वृक्ष" इत्यन्वयधीः। स्वकर्तृकारोहणकर्मत्वं सम्बन्धः। "बहुव्रीहिसमासे विग्रहवाक्याद् यादृशविशेषणविशेष्यभावापन्नार्थबोधो भवति समासवाक्यात्तद्विपरीतविशेषणविशेष्यभावापन्नार्थबोध" इति नियमोऽपि न विस्मर्तव्यः।

( मु० ) तत्पुरुषे तु पूर्वपदे लक्षणा। तथाहि—राजपुरुषादिपदे राजपदार्थेन पुरुषादिपदार्थस्य साक्षान्नान्वयो निपातातिरिक्तनामार्थयोर्भेदेनान्वयबोधस्याव्युत्पन्नत्वात्। अन्यथा राजा पुरुष इत्यत्रापि तथान्वयबोधः स्यात्। "घटो न पटः" इत्यादौ घटपटाभ्यां नञः साक्षादेवान्वयान्निपातातिरिक्तेति। "नीलो घट" इत्यादौ नामार्थयोरभेदसम्बन्धेनान्वयाद्भेदेनेति॥

( प्र० टी० ) * तत्पुरुषसमासेऽपि लक्षणाप्रकारं दर्शयितुमाह—"तत्पुरुष-

---

A बहुव्रीहिः स्वगर्भार्थसम्बधित्वेन बोधकः।
निरूढया लक्षणया स्वांशज्ञापकशब्दवान्॥

इत्युक्तेः। "स्वकर्मकारोहणकर्तृवानरसम्बन्धी वृक्ष" इत्यर्थः। अधिकं शब्दशक्तिप्रकाशिकायाम्। "नियमतः समासप्रयुक्तलाक्षणिकोत्तरपदकसमासो बहुव्रीहि"रिति तल्लक्षणं बोध्यम्।

B "चित्राऽभिन्ना गावः चैत्रादिस्वत्वाश्रय" इति विग्रहवाक्याद्बोधः।

* यदीयेन सुबर्थेन युतयद्बोधनक्षमः।
यः समासस्तस्य तत्र स तत्पुरुष उच्यते॥ ( शब्दश० )

यदर्थगतेन सुबर्थेन विशिष्टस्य यदर्थस्यान्वयबोधं प्रति यः समासः स्वरूपयोग्यः स तदर्थस्य तदर्थे तत्पुरुष इत्यर्थः। यथा "राजपुरुष" इत्यत्र राजपदार्थगतेन सम्बन्धिरूपषष्ठ्यर्थेन

त्वि''ति। अवधारणार्थकस्तुशब्दो भिन्नक्रमः पूर्वपद इत्यस्योत्तरं पठनीयः। तेन पूर्वपद एव लक्षणा=निरूढलक्षणेत्यर्थः सम्पद्यते। यथा पूर्वपदे लक्षणा तथा सनियमं वक्तुमाह—''तथाही''ति। राज्ञः पुरुषः ''राजपुरुष'' इत्यत्र षष्ठीतत्पुरुष-समासे राजपदार्थेन सह पुरुषपदार्थस्य न साक्षादन्वयः=प्रकृत्यर्थमद्वारीकृत्य भेदसम्बन्धेन अन्वयो नास्ति। कुत इत्याह—''निपाते''ति। नामार्थश्च नामार्थश्च नामार्थौ तयो र्नामार्थयोरिति। ''अव्ययनिपातातिरिक्तनामार्थयोर्भेदसम्बन्धेन नान्वय'' इति व्युत्पत्तेरर्थः। प्रकृते च भेदे षष्ठी तत्कथं लक्षणां विना निर्वाहः स्यादिति भावः। अन्यथा=यद्येवं न स्वीक्रियते तदा '' राजा पुरुष '' इत्यत्रापि ''राजभिन्नः पुरुषः''= ''राजनिरूपितस्वत्ववान् पुरुषः'' इत्यर्थको भेदसम्बन्धेनान्वयः स्यात्, सच सर्वेषामेवानिष्ट इति भावः। एवञ्च प्रकृते राजपदस्य राजसम्बन्धिनि लक्षणां कृत्वा ''राजसम्बन्ध्यभिन्नः पुरुष'' इत्याकारको बोधो नेतव्यः। वैयाकरणास्तु—'' भेदः संसर्ग उभयञ्चेति वाक्यव्यवस्थितेः'' इति वृत्तिभेदं निरूपयन्तौ भेदपक्षे—राजपुरुष इत्यादौ '' अराजकीयभिन्नः पुरुषः '' संसर्गपक्षे—'' राजसम्बन्धवान् पुरुषः '' उभयपक्षे— ''अराजकीयभिन्नो राजसम्बन्धवांश्च पुरुष'' इति बोध इत्याहुः। उक्तव्युत्पत्तेः पदकृत्यं दर्शयति—''घटोने''ति। नञः=नञर्थान्योन्याभावस्य। ''घटो न पट'' इत्यत्र घट-पटाभ्यां सह नञर्थान्योन्याभावस्य साक्षादेवान्वयो नतु मध्ये यस्य कस्यापि प्रत्ययस्यार्थं द्वारीकृत्य अतो निपातातिरिक्तेत्युक्तम्। नञो निपातत्वात्। परमत्रास्य योगोऽपि भेदसम्बन्धेनैवान्वयो नत्वभेदेन। किञ्च—निपातातिरिक्तनामार्थयोर्भेदसम्बन्धेनान्वयो नार्हति भवितुम्, कुतः '' नीलो घट '' इत्यादौ नामार्थयोरभेदेनान्वयदर्शनात् नियमशरीरे भेदेनेत्युक्तम् अर्थात् निपातातिरिक्तनामार्थयोरभेदेनान्वयस्तु सिद्ध एव किन्तु भेदसम्बन्धेनान्वयोऽव्युत्पन्नः ततश्च '' राजपुरुष '' इत्यादावपि निपातातिरिक्त-नामार्थयोरुपस्थितिस्तु जायत एव, एवमत्रापि भेदेनान्वयबोधो न भविष्यति, इष्टश्चासौ भेदेन, नत्वभेदेन विवक्षितः। तस्मादत्र पूर्वपदे राजपदस्य राजसम्बन्धिनि लक्षणैवोपायान्तरं मृग्यम्।

(मु०) न च राजपुरुष इत्यादौ लुप्तविभक्तेः स्मरणं कल्प्यमिति वाच्यम्, अस्मृतविभक्तेरपि ततो बोधोदयात्। तस्माद्राजपदादौ राजसम्बन्धिनि लक्षणा। तस्य च पुरुषेण सहाभेदान्वयः।

(प्र० टी०) आशङ्क्य समाधत्ते—''नचे''त्यादिना। लुप्तविभक्तेः=''सुपो धातुप्रातिपदिकयोः'' (२।४।७१) इतिपाणिनिसूत्रेणेति शेषः।''स्मरणं कल्प्य''मिति-

---

विशिष्टस्यैव पुरुषपदार्थस्य भेदान्वयबोधम्प्रति यः समासः स्वरूपयोग्यः अर्थबोधोपयोगी स एव तदर्थस्य राजपदार्थस्य तदर्थे पुरुषपदार्थे तत्पुरुषः षष्ठीतत्पुरुष इति लक्षणयोजना।

परेतु—''समासप्रयुक्तलक्षणाशून्योत्तरनामपदकत्वे सति लुप्तद्वितीयादिविभक्तिक-पूर्वपदकसमासत्वं तत्पुरुषत्वम्'' इत्याहुः। प्रपञ्चस्तु—समासवादादिषु द्रष्टव्यः।

तथाचात्रापि प्रत्ययार्थभूतसम्बन्धद्वारैव राजपुरुषयोरन्वयान्नोक्तव्युत्पत्तिविरोध इति शङ्कापक्षः । शङ्काकर्त्तुराशयस्तु लुप्तषष्ठ्यर्थः स्वत्वं, तत्र राजपदार्थान्वयः स्वत्वस्य पुरुषेऽन्वयः। एवञ्च "राजनिरूपितस्वत्ववान् पुरुष" इति वाक्यार्थः। "अस्मृतविभक्ते रिति—प्रकृतिप्रत्ययानभिज्ञस्यापि पुरुषस्य "राजपुरुष" इत्यादितस्तथाविधशाब्द-बोधदर्शनान्नोक्तं युक्तमिति सिद्धान्तः । स्वपक्षमुपसंहरति—"तस्मादि"ति । व्याख्यातप्रायमन्यत् ।

( मु० ) द्वन्द्वे तु—धवखदिरौ छिन्धीत्यादौ धवः खदिरश्च विभक्त्यर्थद्वित्वप्रकारेण बुध्यते। तत्र न ललणा । नच साहित्ये लक्षणेति वाच्यं, साहित्यशून्ययोरपि द्वन्द्वदर्शनात्। नचैकक्रियान्वयित्वरूपं साहित्यमस्तीति वाच्यं, क्रियाभेदेऽपि धवखदिरौ पश्य छिन्धीत्यादौ तद्दर्शनात्साहित्यस्याननुभवाच्च । अत एव राजपुरोहितौ सायुज्यकामौ यजेयातामित्यत्र लक्षणाभावाद् द्वन्द्व आश्रीयते तस्मात्साहित्यं नार्थः किंतु वास्तवभेदो यत्र तत्र द्वन्द्वः॥

(प्र० टी०) इतरेतरद्वन्द्वसमासे लक्षणावादिनो मीमांसकमतं कटाक्षयन्नाह—"द्वन्द्वेत्वि"ति। परस्पराऽनन्वितार्थकानेकपदघटितसमासत्वं द्वन्द्वत्वम्। द्विवचनाद्यन्ततादृशसमासत्वमितरेतरद्वन्द्वत्वम् —इत्येवंलक्षणके इतरेतरद्वन्द्वसमासे । "धवखदिरौ छिन्धि" इत्यादौ धवः खदिरश्च विभक्त्यर्थद्वित्वप्रकारेण=विभक्त्यर्थो यद् द्वित्वम्, तत्प्रकारेण धवखदिरयोरुभयोर्बोध इति तत्र लक्षणाया नावश्यकता। मीमांसकः शङ्कते—"नचे"ति । साहित्ये=धवे खदिरे चोभयस्मिन् वर्त्तमानो यः सहवृत्तित्वरूपो धर्मःसाहित्याख्यः तदाश्रये लक्षणा स्यादिति शङ्काग्रन्थार्थः। समाधत्ते—"साहित्यशून्ययो"रिति। हिमश्च विन्ध्यश्च "हिमविन्ध्या" वित्यत्र सर्वथा सहवृत्तित्वरूपसाहित्यशून्ययोरपि इतरेतरद्वन्द्वसमासदर्शनात्साहित्ये लक्षणाश्रयणमयुक्तमिति सिद्धान्तग्रन्थार्थः।

ननु—धवखदिरावित्यत्र छेदनरूपैकक्रियान्वयित्वात्मकं साहित्यमस्ति तस्मात्तादृशसाहित्याश्रये खदिरपदस्य लक्षणा स्यात् नतु तथा हिमविन्ध्यावित्यत्रेत्याशङ्क्याह—'नचे' ति* । क्रियाभेदेऽपि=एकजातीयक्रियाराहित्येऽपि । यथा—धवखदिराविति । इत्यादिदर्शनात्=इत्यादिवाक्यघटकद्वन्द्वावयवत्वानुभवादित्यर्थः। नहीतरेतरद्वन्द्वयोगात्मके समासे एकक्रियान्वयित्वरूपसाहित्यस्य नियम इति भावः। स्पष्टमन्यत्। अत्रैव गमकमाह-"अत एवे"ति। इतरेतरद्वन्द्वे साहित्यस्याननुभवादेव। राजपुरोहिताविति–एतादृशश्रुतिघटकराजपुरोहिताविति समासे। लक्षणाभावात्=लक्षणानभ्युपगमात्। द्वन्द्व आश्रीयते=द्वन्द्वसमासोऽङ्गीक्रियते । अत्रायमाशयः—

---

* एका या छेदनक्रिया तदन्वयित्वरूपं साहित्यं "धवखदिरौ छिन्धि" इत्यत्राप्यस्तीति भावः।

उक्तवाक्यघटकोक्तपदे—पुरोहितश्च पुरोहितश्च पुरोहितौ, राज्ञः पुरोहितौ राजपुरोहितौ इति षष्ठीतत्पुरुषसमासः अथवा राजा च पुरोहितश्च राजपुरोहितौ इति द्वन्द्वो वेति सन्दिह्य तत्पुरुषपक्षे लक्षणापत्तिभिया द्वन्द्व आश्रितः । स्वपक्षमुपसंहरति—तस्मादिति । साहित्यस्याननुभवादित्यर्थः । साहित्यं नार्थः=द्वन्द्वस्थले साहित्यावच्छिन्ने लक्षणाने त्यर्थः । साहित्यं न कस्यापि पदस्यार्थः किन्तु द्वित्वं, तत्र न लक्षणेत्युक्तम् । यत्र वास्तवो भेदस्तत्रैवायं समास इति भावः । अधिकमन्यतोऽवसेयम् ।

(मु० ) नच नीलघटयोरभेद इत्यादौ कथमिति वाच्यं, तत्र नीलपदस्य नीलत्वे घटपदस्य घटत्वे लक्षणा, अभेद इत्यस्य चाश्रयाभेद इत्यर्थात् । समाहारद्वन्द्वे तु यदि समाहारोऽप्यनुभूयत इत्युच्यते तदाऽहिनकुलमित्यादौ परपदेऽहिनकुलसमाहारे लक्षणा पूर्वपदं तु तात्पर्यग्राहकम् । नच भेरीमृदङ्गं वादयेत्यत्र कथं समाहारस्यान्वयः, अपेक्षाबुद्धिविशेषरूपस्य तस्य वादनासम्भवादिति वाच्यं, परम्परासम्बन्धेन तदन्वयात् । एवं पञ्चमूलीत्यादावपि ।

(प्र० टी० ) उभयपदार्थभेदसत्त्व एव द्वन्द्वसमास इति नियममसहमानः शङ्कते—"नचे"ति । आदिना "शरीरेन्द्रियविषया" इत्यादेः परिग्रहः । नीलघटयोरभेदः=एतद्वाक्यघटकनीलघटपदयोरित्यर्थः । कथमिति=कथं द्वन्द्वावयवत्वं, तादृशपदद्वयघटितद्वन्द्वः कथमित्यर्थः । समाधानमाह—तत्रेति । नीलघटयोरिति समासे अभेदः=वाक्यस्येति शेषः । आश्रयाभेदः=एकव्यक्तिसमवेतत्वमित्यर्थः । इत्यर्थादिति=वाक्यप्रयोक्तृतात्पर्यविषयार्थत्वादित्यर्थः । तथाच प्रकृतवाक्यघटकाऽभेदशब्दस्यैकव्यक्तिसमवेतत्वे लक्षणेति भावः ।

अस्यायमाशयः—"नीलो घट" इत्यत्र वाक्ये " नीलघटयोरभेद " इति बोधो भवति । तत्रोक्तवाक्ये " नीलश्च घटश्च नीलघटौ तयोर्नीलघटयोरभेद " इत्यत्र भेदो नास्ति । अस्ति च इतरेतरयोगो द्वन्द्वः तत्कथमुच्यते यत्र वास्तवो भेदस्तत्र द्वन्द्व इति । समाधत्ते—"तत्रे"ति । नह्यत्र नीलघटयोर्वास्तविकभेदविवक्षायां द्वन्द्वः किन्तु नीलपदस्य नीलत्वे घटपदस्य च घटत्वे लक्षणां स्वीकृत्य तयोरभेद इत्यत्राश्रयाभेदः, अर्थात् *"नीलत्वघटत्वयोराश्रयाभेद" इति वाक्यार्थ इष्टः ।

समाहारद्वन्द्वे व्यवस्थां दर्शयति—"समाहारद्वन्द्व" इति । "समाहारः—परस्परानन्वितार्थकानेकपदघटितैकवचनान्तसमासत्वरूपः समाहारद्वन्द्वसमासः तत्रेत्यर्थः । " अहिनकुल " मिति—अत्र—" येषाञ्चविरोधः शाश्वतिकः " ( पाणि० २ । ४ । ९ ) इति सूत्रेण समासः । एवञ्चाहिनकुलमित्यत्र परपदे=अहिनकुलसमाहारे लक्षणा । पूर्वपदम्=अहिपदम् । एवं "पाणिपाद" मित्या-

* इदं चिन्त्यम्, उभयोराश्रयभेदसत्त्वादिति सूक्ष्मदृशेक्ष्यम् ।

दावपि बोध्यम्। बहुव्रीहौ यथा उत्तरपदे लक्षणा तथा समाहारद्वन्द्वेऽप्युत्तरपदस्य लक्षणेति भाव इत्याशयेनाह—"अहिनकुलसमाहारे लक्षणे"ति। अत्र प्राचीना प्रभा—"इदन्तु प्राचीनैकदेशिमते। वैयाकरणमते उक्तार्थे समाहारद्वन्द्वेऽस्य शक्तिरित्यपि ध्येयम्।

पूर्वपदलक्षणां परिकल्प्य उत्तरपदस्य तात्पर्यग्राहकत्वे तु "प्रकृत्यर्थान्वितस्वार्थबोधकत्वं प्रत्ययानाम्" इति व्युत्पत्तिविरोधापत्तेः, उत्तरपदस्यैव लक्षणायुक्तेत्यभिप्रायेण पूर्वपदन्त्वित्युक्त"मिति।

शङ्कते—"नचे"ति। भेरी च मृदङ्गश्च भेरीमृदङ्गम्। अत्र—"द्वन्द्वश्चप्राणितूर्यसेनाङ्गानाम्" (पाणि० २। ३। २) इति सूत्रेण समासः। उक्तरीत्या मृदङ्गपदस्य भेरीमृदङ्गसमाहारे लक्षणा भेरीपदञ्च तात्पर्यग्राहकम्। समाहारस्तु अनेकैकत्वविषयकापेक्षाबुद्धिविशेषरूपः। अभिघाताख्यसंयोगावच्छिन्ना क्रिया च वादनपदार्थः तत्कथं बुद्धिविशेषस्य वादनक्रियया सहान्वयः स्याद् यदि तत्पदस्य समाहारे लक्षणा स्याद्? इतिशङ्काग्रन्थार्थः। समाधत्ते—"परम्परासम्बन्धेने"ति। "स्वाश्रयवृत्तित्व" रूपपरम्परासम्बन्धद्वारा वादनक्रियायाः समाहारेऽन्वयसम्भव इति नायुक्तमित्यर्थः। अत्र "स्व" पदेन अपेक्षाबुद्धिविशेषरूपसमाहारस्य ग्रहणम्। तस्याश्रयो विषयतासम्बन्धेन भेरीमृदङ्गादि। तद्वृत्तित्वं वादनक्रियाया अस्तीति समाधानग्रन्थार्थः। तदन्वयात्—वादनक्रियाया अन्वयात्। उक्तं लक्षणानियमं द्विग्वर्थसमाहारस्थलेप्यतिदिशति—"एव" मिति। यथा—"अहिनकुलमित्यादावुत्तरपदलक्षणा तथा * पञ्चमूलीत्यादावपि उत्तरपदस्यैव पञ्चमूलसमाहारे लक्षणा, पञ्चदन्तु तात्पर्यग्राहकमित्यर्थः। क्वचित् "पञ्चपूली"ति पाठः।

**(मु०) परे तु अहिनकुलमित्यादौ अहिर्नकुलश्च बुध्यते प्रत्येकमेकत्वान्वयः, समाहारसंज्ञा च यत्रैकत्वं नपुंसकत्वं च प्राणितूर्येत्यादिसूत्रेणोक्तं तत्रैव, अन्यत्रैकवचनमसाध्वित्याहुः। पितरौ श्वशुरावित्यादौ पितृपदे जनकदम्पत्योः श्वशुरपदे स्त्रीजनकदम्पत्योर्लक्षणा। एवमन्यत्रापि। घटा इत्यादौ तु न लक्षणा, घटत्वेन रूपेण नानाघटोपस्थितिसम्भवात्।**

(प्र० टी०) अत्रैव नवीनमतमाह—"परेत्वि"ति। "बुध्यत" इति। तथाच नात्र समाहारस्य बोधः न "प्रत्येकमि"ति। एकवचनबोधिताया एकत्वसङ्ख्याया अहौ नकुले च पृथक् पृथगन्वयः। तथाच नेदं समाहारोदाहरणम्। एकवचनञ्च साधुप्रयोगार्थम्। तथाच—समाहारस्याननुभवात् प्रयोजनाभावाच्च समाहारस्थले समाहारे लक्षणाभ्युपगमो व्यर्थ इति भावः। ननु—"पाणिपाद" मित्यादौ समुदायस्य समाहारबोध-

---

* 'पञ्चमूली'ति। अत्र "तद्धितार्थोत्तरपदसमाहारे च" (२। १। ५१) इति सूत्रेण समासः। "सङ्ख्यापूर्वो द्विगुः" (२। १। ५२) इत्यनेन द्विगुसञ्ज्ञा। "अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्टः" (वा० २।४।१७) इत्यनुशासनेन स्त्रीलिङ्गत्वञ्च।

त्वाभावे कथं समाहारसञ्ज्ञेत्यत आह—"समाहारसञ्ज्ञे"ति । यत्र=यादृशद्वन्द्वे । स्पष्टमन्यत् । "तत्रैवे"ति—तथाच *पारिभाषिक्येव सा सञ्ज्ञा । ननु—तादृशसञ्ज्ञायाः किं फलं यदि समुदायो न समाहारार्थ इत्यत आह—"अन्यत्रे"ति । अन्यत्र= समाहारातिरिक्तद्वन्द्वे **एकवचनमसाधु**=एकवचनं न साध्वित्येव तत्सञ्ज्ञाफलमिति एकवचनान्तत्वं नपुंसकत्वमिति यावदिति भावः । "पितरौ" इति । "चैत्रस्य पितरा" वित्यादौ विरूपैकशेषस्थल इत्यर्थः । "लक्षणे"ति—एकस्यैव चैत्रादेः पितृद्वया-सम्भवेन तत्र विरूपैकशेषं विना गत्यभावादिति भावः । "श्वशुरा"विति—स्त्रीजनकदम्पत्योर्बोधतात्पर्येणोच्चारिते श्वशुराविति वाक्य इत्यर्थः । यथाश्रुते तु द्विभार्यस्यैव तथा बोधे मूलग्रन्थविरोधापत्तेः । केचित्तु—विरूपैकशेषस्थलेऽपि लुप्तमात्रादिपदस्मरणेनैव शाब्दबोधान्न लक्षणेत्याहुः । "एवमन्यत्रापी"ति—"पुमान् स्त्रिया" ( पाणि० १ । २ । ६३ ) इत्येन यत्रैकशेषः तत्र । दम्पतीपूजाप्रकरणे "ब्राह्मणावानय" इत्यादौ "शिवौ नमस्कुर्यादि" त्यादौ च । अर्थात् ब्राह्मणीब्राह्मणो-भयबोधतात्पर्येणोच्चारिते "ब्राह्मणा" विति वाक्यघटकब्राह्मणपदे एवं शिवा शिवो-भयबोधतात्पर्येणोच्चारिते "शिवा" विति वाक्यघटकशिवपदे च । भ्रातरौ पुत्रावित्य-त्रापि प्रमाणान्तरेण स्त्रीपरत्वज्ञाने "भ्रातृपुत्रौ स्वसृदुहितृभ्याम्" ( पाणि० १।२।६८ ) इतिविरूपैकशेषाद् भ्रातृपदे भ्रातृस्वस्रोः पुत्रपदे च पुत्रदुहित्रोर्लक्षणेत्यर्थः । "घटा" इत्यादा विति—बहुवचनान्तघटादिपदे इत्यर्थः । समानरूपैकशेषे न लक्षणा=नैव लक्षणया नाना घटोपस्थितिः किन्तु घटत्वेन मुख्येन रूपेणैवोपस्थिति-सम्भवे जघन्यवृत्तिकल्पनमन्याय्यमिति भावः ।

( मु० ) †कर्मधारयस्थले तु नीलोत्पलमित्यादावभेदसम्बन्धेन नीलपदार्थे उत्पलपदार्थे प्रकारः । तत्र च न लक्षणा । अत एव निषादस्थपतिं याजयेदित्यत्र न तत्पुरुषो लक्षणापत्तेः । किन्तु कर्मधारयो लक्षणाभावात् । न च निषादस्य सङ्करजातिविशेषस्य वेदानधिकाराद्या-जनासम्भव इति वाच्यं, निषादस्य विद्याप्रयुक्तेस्तत एव कल्पनात् । लाघवेन मुख्यार्थस्यान्वये तदनुपपत्त्या कल्पनायाः फलमुखगौरवतया-ऽदोषत्वादिति ॥

---

* शास्त्रसङ्केतसिद्धेत्यर्थः ।

† क्रमिकं यन्नामयुगमेकार्थेऽन्यार्थबोधकम् ।
तादात्म्येन भवेदेष समासः कर्मधारयः ॥ (शब्दशक्ति०)

क्रमिकं यन्नामद्वयं तयोरेकस्य नाम्नोऽर्थे धर्मिणि तादात्म्येनापरनाम्नोऽर्थस्यान्वयबोधं प्रति समर्थं तादृशनामद्वयं कर्मधारयः । "नीलोत्पलम्" इत्यादौ उत्पलादिपदार्थे नीलादिपदार्थस्य तादात्म्येनान्वयः तस्मादयं कर्मधारयः । केचित्तु—तत्पुरुषत्वे सति समस्यमानपदार्थऽभेदबोधक विग्रहकत्वे कर्मधारयत्वम् । बहुव्रीहिवारणाय सत्यन्तम् । "राजपुरुष" इत्यादितत्पुरुष वारणायं विशेष्यदलमित्याहुः । वयन्तु फले विशेषं न पश्यामः ।

( प्र० टी० ) सरूपैकशेषस्थल इव कर्मधारस्थलेऽपि लक्षणाया अनुपयोगमाह— "कर्मधारयस्थल" इति । न लक्षणा=तत्पुरुषबहुव्रीह्योरिव पूर्वोत्तरपदयोर्न निरूढलक्षणा । समासप्रयुक्तताद्दशलक्षणाया अनङ्गीकारेऽपि अभिमतशाब्दबोधनिर्वाहादिति भावः । शिष्टान्यक्षराणि स्पष्टानि । अत एव=कर्मधारयस्थले लक्षणानङ्गीकारादेव । "निषादस्थपति"मिति । अत्र न तत्पुरुषो नापि बहुव्रीहिरित्यर्थः । लक्षणापत्तेः=पूर्वोत्तरपदयोर्निरूढलक्षणापत्तेः ।

अयं भावः—"वास्तुमयं रौद्रं चरुं निर्वपेत्" इति प्रकृत्य श्रूयते "एतया निषादस्थपतिं याजयेत्" इति । उक्ते श्रुतिवाक्ये "निषादानां स्थपति"रिति षष्ठीतत्पुरुषसमासः "निषादश्चासौ स्थपति"रिति वा कर्मधारयः स्यात् ? तत्र किमाश्रयणीयमिति संशयः । तत्पुरुष एवेति युक्तमाभाति । कुतः ? एतस्यामिष्टावधिकारी स्थपतिशब्दवाच्यस्त्रैवर्णिकः निषादानां स्थपतिः अधिपतिरिति षष्ठीसमासस्य त्रैवर्णिके सम्भवात् तस्य चाधीतवेदत्वेन विद्यासम्भवाच्चेति चेत् ? मैवम्—"निषादश्चासौ स्थपतिश्च" इति कर्मधारयसमास्य मुख्यत्वेन=शक्तिवृत्त्यैव निर्वाहकत्वेन सङ्करजातिविशेषस्यैवाधिकारबोधनात् । षष्ठीसमासाश्रयणे तु जातिविशेषवाचिना निषादशब्देन तत्सम्बन्ध उपलक्षयेत ( लक्षणया नीयेत ) नत्वयं कर्मधारये दोषोऽस्ति । शक्तिवृत्त्यैवार्थनिर्वाहे जघन्यवृत्तिर्नाश्रयणीया । अतस्तात्कालिकाचार्योपदेशादिना विद्यां सम्पाद्य धनिको निषादो रौद्रयागं कुर्यात् । एतच्च* "निषादः स्याच्छब्दसामर्थ्याद्" ( जै० सू० ६ । १ । ५१-५२ ) इत्यत्र निर्णीत । प्रपञ्चस्तु शावरभाष्यशास्त्रदीपिकादाववगन्तव्य इति सर्वं हृदि कृत्वा आह—"किंतु कर्मधारय" दति ।

शङ्कते—"नचे"ति । सङ्करजातीयत्वेन=संव्यवहार्यसङ्करत्वेनेत्यर्थः । प्राञ्चस्तु—असंव्यवहार्यसङ्कराणां चण्डालानामसम्भाव्यत्वादिति भाव इत्याहुः । याजनाऽसम्भवः=पुरोहितस्येति शेषः । "वेदानधिकादि"ति । अपशूद्राधिकरणे पूर्वोत्तरमीमांसायां तथैव निर्णीतत्वादिति भावः । समाधत्ते—"निषादस्ये"ति । विद्याप्रयुक्तेः=दर्शितरौद्रेष्टिकल्पोपयोगिवेदविद्याध्ययनस्य प्राप्तेरित्यर्थः । "तत एवे"ति-श्रुतिबोधितयाजनानुपपत्त्यैवेत्यर्थः । ननु-निषादस्य विद्याकल्पेन गौरवमत आह—"लाघवेने"ति । कर्मधारयसमासमाश्रित्य प्रथमं मुख्यार्थेन अन्वयः तदुत्तरं तदनुपपत्तिकल्पनया विद्याकल्पनमिति फलमुखं गौरवं न दोषहेतुरिति भावः । निषादादीनां यागोपयोग्यध्ययनेतराध्ययननिषेधः शूद्रान्तरस्य तु अध्ययनमात्रनिषेध इति विवेकः ।

( मु० ) उपकुम्भमर्धपिप्पलीत्यादौ परपदे तत्सम्बन्धिनि लक्षणा

---

* जैमिनिसूत्रार्थस्तु—यः स्थपतिः स एव निषादः स्यात् शब्दसामर्थ्यात्=शब्दनिष्ठमुख्यवृत्तिसामर्थ्यात् । इत उत्तरं "लिङ्गदर्शनात्" इत्यपरं सूत्रम् । लिङ्गमत्र "कूटं दक्षिणा" इति । कूटं लोहमुद्गर इत्युच्यते, तदावश्यकता प्रायो निषादानामेवास्तीत्यतोऽपि कर्मधारयाङ्गीकारेण निषादस्यात्रैवर्णिकस्याप्यधिकार इति बोध्यमिति कश्चित् ।

पूर्वपदार्थप्रधानतया चान्वयबोध इति। इत्थं च समासे न क्वापि शक्तिः पदशक्त्यैव निर्वाहादिति ॥

( प्र० टी० ) * अव्ययीभावस्थले लक्षणां दर्शयति—"उपकुम्भमि"ति। कुम्भस्य समीपमित्यस्वपदविग्रहः समासः। अव्ययीभावस्य नित्यसमासत्वात्। अविग्रहोऽस्वपदविग्रहो वा नित्यसमासः। "अव्ययं विभक्तिसमीप०—(२।१।६) इति सूत्रेण समासः,। "अर्धपिप्पली" इत्यत्र तु—"अर्धं नपुंसकम्" (२।२।२) इति सूत्रेण समासः। समांशवाच्यर्धशब्दो नित्यं क्लीबे, सचावयववाचिना समस्यते। "अर्धं पिप्पल्या" इति विग्रहः। "परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः" (२।४।६) इति परवल्लिङ्गत्वात्स्त्रीत्वम्। भाष्ये तु—"अर्धं पिप्पली" इति कर्मधारये उक्तम्। "समुदाये दृष्टाः शब्दा अवयवेष्वपि वर्त्तन्ते" इति न्यायात्। परपदे=कुम्भपिप्पल्यादिपदे। तत्सम्बन्धिनि=कुम्भपिप्पल्यादिसम्बन्धिनि। "पूर्वपदार्थे"ति। उपादिपदार्थेत्यर्थः। "अन्वयबोध" इति—तथाच "कुम्भसम्बन्ध्यभिन्नं समीपम्" "पिप्पलीसम्बन्ध्यभिन्नमर्द्धम्" इत्याकारकः पूर्वपदार्थप्रधानतया शाब्दबोध इत्यर्थः। प्रकरणमुपसंहरति—इत्थञ्चे'ति। वैयाकरणमतं दूषयतुमेवाह—इत्थञ्चेति। "पदशक्त्यैवे"ति। समासघटकीभूतपदशक्तिलक्षणाभ्यामित्यर्थः।

(का०) आसत्तिर्योग्यताकाङ्क्षातात्पर्यज्ञानमिष्यते ॥८२॥

( मु० ) आसत्तिरित्यादि। आसत्तिज्ञानं योग्यताज्ञानमाकाङ्क्षाज्ञानं तात्पर्यज्ञानं च शाब्दबोधे कारणम्। यत्पदार्थस्यान्वयोऽपेक्षितस्तयोरव्यवधानेनोपस्थितिः शाब्दबोधे कारणम्। तेन गिरिर्भुक्तमग्निमान्देवदत्तेन इत्यादौ न शाब्दबोधः। "नीलो घटो द्रव्यं पटः" इत्यादावासत्तिभ्रमाच्छाब्दबोधः। आसत्तिभ्रमाच्छाब्दभ्रमाभावेऽपि न क्षतिः।

( प्र० टी० ) शाब्दबोधे सहकारिकारणमाह—"आसत्तिरि"त्यादि।

अत्रेदमवधार्यम्—आसत्तिर्योग्यताकाङ्क्षेति मूलदर्शनादासत्तेः स्वरूपसत्या एव कारणत्वम् नतु योग्यताज्ञानादिवदासत्तिज्ञानस्यापि, ज्ञानपदस्य समासघटकत्वेन समासाऽघटकासत्तिपदार्थेनानन्वयात्, परन्तु तादृश्या आसत्ते "गिरिर्भुक्तमग्निमान्देवदत्तेन" इत्यादौ गिरिपदाग्निमत्पदयोरव्यवधानभ्रमेण शाब्दबोधोदयेन व्यभिचारान्मूलस्थमासत्तिपदमासत्तिज्ञानपरतया व्याचष्टे—"आसत्तिज्ञान"मिति। स्वरूपत आकाङ्क्षादीनां शाब्दबोधहेतुत्वे आकाङ्क्षादिरहितवाक्ये आकाङ्क्षादिभ्रमाच्छाब्दबोधो न स्यादतो भ्रमप्रमासाधारणं तज्ज्ञानमेव हेतुरित्येवं विवृणोति मूले आसत्तिरित्यादिना। तथाच—सामग्र्या भ्रमत्वे शाब्दबोधस्य भ्रमत्वं न सम्भवति। शाब्दबोधस्य

* नियमतः पूर्वपदार्थविशेष्यकबोधजनकसमासत्वमव्ययीभावत्वम्। अत्राब्राह्मणोऽर्धपिप्पलीत्यादिवारणाय "नियमत इति।

भ्रमत्वन्तु विषयाभावादेवेत्यवधेयम् । "न त्वति"रिति । आसत्तिभ्रमस्थले शाब्दप्रमानुत्पत्तिर्नेत्यर्थः ।

(का०) कारणं सन्निधानं तु पदस्यासत्तिरुच्यते ।

( प्र० टी० ) आसत्तिं लक्षयति—परममूले 'कारण' मिति । मूले विवृणोति—'तत्रे'ति ।

यत्पदार्थेन=यत्पदार्थनिष्ठविषयतानिरूपितयत्पदार्थनिष्ठविषयताशालिशाब्दबोध 'अन्वयोऽपेक्षित' इति । अन्वयः=संसर्गः अपेक्षितः=तात्पर्यविषयः । तयोः=तादृशपदयोः । अव्यवधानेन=अव्यवहितपूर्वत्वाऽव्यवहितोत्तरत्वान्यतरत्वेनोपस्थितिरित्यर्थः । तादृशपदयोरव्यवधानमासत्तिस्तदुपस्थितिः कारणमित्यर्थः । तथा च गिरिपदार्थभुक्तपदार्थयोरन्वयो न तात्पर्यविषयः अपितु गिरिपदार्थाग्निमत्पदार्थयोरेवेति तयोरव्यवधानाभावान्नातिव्याप्तिरिति भावः । एवञ्च—"अव्यवधानेन पदजन्यपदार्थोपस्थितिरासत्ति" रित्युक्तं भवति । मानान्तरोपस्थापितपदार्थस्यान्वयबोधाभावात् पदजन्येति । अतएवाश्रुतपदार्थस्थले तत्तत्पदाध्याहारः । 'द्वार' मित्यादौ 'पिधेहि' इति पदाध्याहारः । वेदे 'इषे त्वा' इत्यादिमन्त्रे "छिनद्मि" इत्यादिपदाध्याहार इति सङ्क्षेपः ।

तेन=एतादृशयत्तत्पदगर्भासत्तिनिर्वचनेन । ननु 'नीलो घटः द्रव्यं पटः' इत्यत्र नीलपदार्थपटपदार्थयोर्यत्रान्वयो वक्तुस्तात्पर्यविषयो नतु नीलपदार्थघटपदार्थयोस्तत्र नीलपदघटपदयोरासत्तिर्न स्यात्, तत्तदर्थान्वयस्य तात्पर्यविषयत्वाभावात् अतस्तत्रेष्टापत्तिमाह—'नीलो घटः' इत्यादिना । 'भ्रमादि'ति—तथाच भ्रमाच्छाब्दबोधमात्रं नतु तत्रासत्तिरिति भावः । 'आसत्तिभ्रमादि'ति—आसत्तिभ्रमस्य न शाब्दभ्रम*प्रयोजकत्वं किन्तु योग्यताभ्रमस्येति भावः ।

( मु० ) ननु यत्र छत्री कुण्डली वासस्वी देवदत्त इत्याद्युक्तं तत्रोत्तरपदस्मरणेन पूर्वपदस्मरणस्य नाशादव्यवधानेन तदुत्तरपदस्मरणासंभव इति चेन्न, प्रत्येकपदानुभावजन्यसंस्कारैश्चरमस्य तावत्पदविषयकस्मरणस्याव्यवधानेनोत्पत्तेः । नानासंनिकर्षैरेकप्रत्यक्षस्येव नानासंस्कारैरेकस्मरणोत्पत्तेरपि संभवात् । तावत्पदसंस्कारसहितचरमवर्णज्ञानस्योद्बोधकत्वात् । कथमन्यथा नानावर्णैरेकपदस्मरणम् ॥ परंतु तावत्पदार्थानां स्मरणादेकदैव खले कपोतन्यायेन तावत्पदार्थानां क्रियाकर्मभावेनान्वयबोधरूपः शाब्दबोधो भवतीति केचित् ।

वृद्धा युवानः शिशवः कपोताः खले यथामी युगपत्पतन्ति ।

---

* यथा न्यायनये आसत्तिभ्रमेण शाब्दबोधः प्रमारूपो जायते एवमेवाविद्यकशब्दादिनापि ब्रह्मात्मैक्यसाक्षात्कारः 'प्रमा' रूपो भवितुमर्हतीति न किञ्चिदेतत्पक्षेऽपि क्षुण्णम् ।

**तथैव सर्वे युगपत्पदार्थाः परस्परेणान्वयिनो भवन्ति ॥**

शङ्कते—'नन्वि'ति। यत्र=यादृशबोधे तात्पर्यविषये सतीत्यर्थः। इत्याद्युक्तम्= इत्याद्यनेकविशेषणावाचकपदघटितवाक्यं प्रयुक्तमित्यर्थः। तत्र = तादृशशाब्दबोधाव्यवहित प्राक्क्षणे। उत्तरपदस्मरणेन = इति प्रत्ययान्तकुण्डलपदस्मरणेन। एवमग्रेऽग्रेऽपि व्याप्यम्। शङ्काग्रन्थस्यायमभिसन्धिः—पूर्वपदेन सहोत्तरपदस्य व्यवधानं विना या उपस्थितिः सा शाब्दबोधे कारणमित्युक्तम्। परन्तु यद्वाक्यमनेकैः पदैर्घटितमस्ति यथा—"छत्री कुण्डली'त्यादि, तत्र अव्यवधानेन पदोपस्थितिर्न भवितुमर्हति "कुण्डली" ति पदस्मरणेन "छत्री"तिपदस्मरणस्य नष्टत्वात् तथाच—पूर्वत्र सप्तविंशतिकारिकाव्याख्यायां साधर्म्यवैधर्म्यप्रकरणे "योग्यविभुविशेषगुणानां स्वोत्तरवर्त्तिगुणनाश्यत्वाद्" इत्युक्तम्। तदनेन नियमेन उत्तरपदीयस्मरणेन पूर्वपदीयस्मरणस्य नाशाभ्युपगमात्, अव्यवधानेन उत्तरपदीयस्मरणस्य सर्वथाऽसम्भव एवेति कथमुच्यतेऽव्यवधानेन पदोपस्थितिः कारणमिति।

समाधत्ते—"इति चेन्न" इत्यादिना। प्रत्येकपदजन्येति— तत्पदविषयक प्रत्येकपदानुभवजन्यतत्तत्पदविषयकप्रत्येकसंस्कारैरित्यर्थः। चरमस्य=प्रत्येकसंस्कारविषयसर्वपदानामुद्बोधकसमवधानानन्तरभूतस्य। तावत्पदेति—उद्बुद्धसंस्कारविषयीभूतानि यावन्ति पदानि तावत्पदविषयैकस्मरणस्येत्यर्थः। अव्यवधानेनोत्पत्तेः = व्यवधानं विनापि सम्भवात् "न तस्य हेतुत्वानुपपत्ति"रिति शेषः। एकक्षणावच्छेदेनोत्पत्तौ बाधकाभावादित्यर्थः। समाधानग्रन्थस्येदं रहस्यम्—यद्यप्येवं तत्तत्पदीयस्मरणव्यक्तीनां भेदः, उत्तरपदस्मरणेन पूर्वपदीयस्मरणनाशश्च, तथापि तत्तत्पदविषयकं समूहालम्बनमेकमेव स्मरणं भवति, तत्र समूहालम्बनपदार्थस्मृतेश्च स्वत एव शाब्दबोध इति न शाब्दबोधम्प्रति अव्यवधानेन पदोपस्थितिरूपाया आसत्तेः कारणबाधः। एवञ्च छत्रीत्यादिबहुपदघटितवाक्ये प्रत्येकं यच्छत्रीत्यादिपदं, तत्तत्पदानुभवजन्या ये संस्काराः तैः चरमस्य = अन्तिमस्य तावत्पदविषयकस्मरणस्य = समूहालम्बनरूपसकलपदार्थस्मरणस्य अव्यधानेन = व्यवधानं विनापि उत्पत्तेः सम्भवान्नैव दोष इति भावः।

अत्रार्थे दृष्टान्तविधया युक्तिमाह—"नानासन्निकर्षै'रिति। यथा एकस्मिन्नेव काले घटचक्षुःसंयोगपटचक्षुःसंयोगरूपो नानासन्निकर्षो जायते तत 'इमौ घटपटौ स्त" इत्याकारकमेव प्रत्यक्षं भवति तथा नानासंस्कारैः = छत्र्यादिपदविषयकानेकसंस्कारैः, एकस्मरणोपपत्तेरपि सम्भवात् = समूहालम्बनात्मकरूपैकपदार्थस्मृतेरपि योग्यत्वादित्यर्थः। क्वचित् "चरमम्" इति "एकस्मरणोत्पत्ते" रिति च पाठान्तरम्।

तत्तत्पदविषयकसंस्कारस्य भिन्नविषयत्वरूपेंऽशे कारणत्वेऽपि तत्तत्संस्कारजन्यस्मरणमेकमेव जायते। तथाच नोक्तकार्यकारणभावे बाधकभाव इति भावः। तावत्पद संस्कारेति— समवायघटितसामानाधिकरण्यसम्बन्धेन संस्कारोपलक्षिततादृशचरमवर्णज्ञानव्यक्तेरेव तद्व्यक्तित्वेनोद्बोधकत्वादित्यर्थः।

विपक्षे दण्डमाह—"कथमन्यथे"ति । कथम् = यद्येवं नानासंस्कारैरेकं स्मरणं न स्वीक्रियेत अन्यथा = एवं नानासंस्काराणामेकस्मरणम्प्रति जनकत्वाभावे, नानावर्णैः = नानावर्णानां प्रत्येकसंस्कारैः, एकपदस्मरणम् नानावर्णगोचरमेकपदीयस्मरणम्, कथं स्यात् ? = कथमपि नैव स्यादित्यर्थः । तथा च सर्वत्र शाब्दबोधानुपपत्तिः । तस्मात् पदजन्यपदार्थोपस्थितिः समूहालम्बनात्मिका सत्येव शाब्दबोधमात्रम्प्रति कारणम् ।

इदमाकूतकम्—पदस्मरणवदाशुतरविनाशिनीनां क्रमिकाणां पदजन्यपदार्थोपस्थितीनामपि मेलनासंम्भवः, तस्मात्सर्वत्र पदजन्यपदार्थोपस्थितिः समूहालम्बनात्मिकैव कारणम् । एवञ्च सर्वत्र युगपदेव सकलपदार्थानां "विशेष्ये विशेषणमि"ति न्यायेनैव शाब्दबोधः नतु विशिष्टस्य वैशिष्ट्यमिति रीत्या । तज्जनकविशेषणतावच्छेदकप्रकारकनिर्णयस्य पूर्वमभावादिति दिनकरी ।

प्राचीनमतं दर्शयितुमाह—"परन्त्वि"त्यादिना । तावत्पदार्थानां स्मरणात्= तत्तत्पदजन्पदार्थीयस्मृतेः, एकदैव = एककालावच्छेदेनैव । शिष्टं स्पष्टम् । खलेकपोतन्यायमुदयनाचार्यसम्मत्या दर्शयति—"वृद्धा" इति । सर्वे पदार्थाः = पदद्वयादिव्यवहित पदोपस्थापिताः । एकपदमात्रेण व्यवहितपदोपस्थापिताः, अव्यवहित–पदोपस्थापिताश्च पदार्थाः । परस्परेण = विशेषणविशेष्यभावेनेत्यर्थः । स्पष्टमन्यत् । अत्र वृद्धयुवशिशुभिः कपोतैश्चिरतरचिरसन्निहितकालोक्तानां पदार्थानां साम्यं बोध्यम् । केचिदित्यनेनात्र पक्षे स्वारुचिः प्रकाशिता ।

( मु० ) अपरे तु ।

यद्यदाकांक्षितं योग्यं सन्निधानं प्रपद्यते ।
तेन तेनान्वितः स्वार्थः पदैरेवावगम्यते ॥

तथा च खण्डवाक्यार्थबोधानन्तरं तथैव पदार्थस्मृत्या महावाक्यार्थबोध इत्यप्याहुः ।

( प्र० टी० ) अत्रैव*मतान्तरमाह—"अपरेत्वि"ति । "यद्यदि"ति—आकांक्षितम् = स्वार्थाकांक्षितम्, योग्यम् = स्वार्थयोग्यम् यद्यत् सन्निधानम् = आसत्तिरूपां सन्निधिम्, प्रपद्यते = स्वार्थोपस्थितिविषयो भवति तेन तेनैव = कर्मत्वकरणत्वादिना, अन्वितः = संसर्गवान् स्वार्थः = घटत्वादिरूपोऽर्थः, पदैरेव = घटादिपदैरेव, अवगम्यते = ज्ञायते एवमन्वितः स्वार्थः प्रथमं पदैरनुभाव्यते अनन्तरं च महावाक्यार्थबोधः । एवं सति पूर्वोक्तसमूहालम्बनात्मकं पदार्थस्मरणं विनापि निर्वाह इत्याशयेनाह—"तथा चे"त्यादि "आहु"रित्यन्तग्रन्थम् ।

---

* कणादसूत्रभाष्यकर्तॄणां प्रशस्तपादाचार्याणां मतमित्यर्थः ।
अत्रानयोर्द्वयोर्मतयोः प्राचीनार्वाचीनत्वे पण्डितैरेव विवेच्ये ॥

( मु० ) एतेन तावद्वर्णाभिव्यङ्ग्यः पदस्फोटोऽपि निरस्तः । तत्तद्वर्ण-संस्कारसहितचरमवर्णोपलम्भेन तद्व्यञ्जकेनैवोपपत्तेरिति इदं तु बोध्यम्—

( प्र० टी ) वैयाकरणमतं निरस्यति—"एतेन"ति । पूर्वकथनेन वक्ष्यमाणयुक्त्या चेत्यर्थः । तावद्वर्णाभिव्यङ्ग्यः = तावन्तः एकस्मिन्पदे यावन्तो वर्णास्तैरभिव्यङ्ग्यः प्रकाश्यः, पदस्फोटोऽपि निरस्तः खण्डितो वेदितव्य इत्यर्थः । अत्र युक्तिमाह—"तत्तद्वर्णे"ति । ते ते ये वर्णाः = अर्थात् पूर्वे पूर्वे ये वर्णाः, तेषामनुभवजन्या ये संस्काराः, तैः सहिता यैश्चरमवर्णस्य अन्तिमवर्णस्योपलम्भः उपलब्धिर्ज्ञानम्, अर्थाद् श्रौत्रः साक्षात्कारः, तेनैव तद्व्यञ्जकेन = पदाभिव्यक्तिहेतुभूतेन उपपत्ते = अर्थबोधोपपत्तेः पदार्थज्ञाननिर्वाहादित्यर्थः ।

अयमत्राभिसन्धिः—वैयाकरणास्तावत् कचटतपादिवर्णव्यतिरिक्तं पदं वाक्यं वा वाचकं मन्यन्ते । तत्र तेषामियं युक्तिः—यदि वर्णा वाचकाः स्युः किन्ते प्रत्येकं वाचकाः ? अथवा सम्भूय वाचकाः ? इत्यस्ति विकल्पद्वयम् । आद्यपक्षे—प्रत्येकं वर्णस्य वाचकत्वे एकस्मिन् पदे द्वितीयवर्णोच्चारणं निरर्थकम् । अर्थात् "गौ" रितिपदेन यावान् गोत्वजातिरूपोऽर्थ उच्यते तावतोऽर्थस्य उच्चारणेनैव बोधात् शिष्टानामौकारादिवर्णानामुच्चारणानर्थक्यं प्राप्तम्, तस्माच्च प्रथमः पक्षः क्षोदक्षमः । द्वितीयपक्षेऽपि विवेचनीयम्—यद् वर्णसमुदायवादिनां द्वौ पक्षौ स्तः । उत्पद्यमानसमुदायोऽभिव्यज्यमानसमुदायश्चेति । आद्ये = उत्पत्तिपक्षे युगपद्वर्णानामुत्पत्त्यभावात् समुदायाभावः, उत्पन्नेष्वपि वर्णेषु पूर्वपूर्ववर्णस्य नष्टत्वात् समुदायाभावे नैव सम्भूय वाचकत्वं वर्णानाम् । द्वितीयस्मिन् = अभिव्यक्तिपक्षेऽपि क्रमेणैव वर्णानामभिव्यक्तिर्वक्तव्या । ततश्च सर्वथा समुदायाभावः उत्पन्नाया अभिव्यक्तेर्ध्वंसत्वादेव । एवं पक्षद्वयेपि दोषदर्शनात् वर्णव्यतिरिक्तस्तावद्वर्णाभिव्यङ्ग्यः स्फोट एव जात्याद्यर्थवाचको मन्तव्यः सच वर्णपदवाक्यस्फोटादिभेदेनानेकविधो मञ्जूषादौ स्पष्टो ग्रन्थगौरवभयाच्चेह सविस्तरमवतारितः ।

तदेतन्नैयायिकैर्न सह्यते—पूर्वपूर्ववर्णानुभवजन्यो यः संस्कारः तत्सहितो योऽन्त्यवर्णस्य अनुभवः, तद्धेतुका या स्मृतिः, तदुपारूढा वर्णा एव पदभावं प्राप्ता गोत्वाद्यर्थवाचका इति नाभिव्यक्तिपक्षे वर्णसमुदायवाचकत्वे कश्चिद्दोष इति मधुपदस्फोटादिकल्पना वैयाकरणानाम् । अधिकन्तु काव्यप्रकाशटीकायां मत्प्रणीतायां द्रष्टव्यम् । अयं पक्षो देवताधिकरणे ब्रह्मसूत्रीयशाङ्करभाष्ये भामत्यादावपि विस्तृतः ।

( मु ) यत्र द्वारमित्युक्तं तत्र पिधेहीत्यादिपदस्य ज्ञानादेव बोधो न तु पिधानादिरूपार्थज्ञानात् । पदजन्यपदार्थोपस्थितेस्तच्छाब्दबोधे हेतुत्वात् । किञ्च क्रियाकर्मपदानां तेन तेनैव रूपेण सह साकाङ्क्षत्वात् । तेन क्रियापदं विना कथं शाब्दबोधः स्यात् । तथा पुष्पेभ्य इत्यादौ स्पृहयतीत्यादिपदाध्याहारं विना चतुर्थ्यनुपपत्तेः पदाध्याहार आवश्यकः ॥

(प्र० टी०) लाघवेन पदार्थोपस्थितिमेव हेतुं मन्वानस्य अर्थाध्याहारवादिनः प्रभाकरस्य मतं दूषयति—"इदन्तु बोध्य"मित्यादिना। अत्रायमाशयो ग्रन्थं योजयामः—यत्र "द्वार" मित्येकमेव कर्मपदमुक्तं तदाकाङ्क्षि "पिधेहि" इति क्रियापदं नोपात्तम्। किन्तु तस्यार्थज्ञानमात्रमस्तीति न तदा शाब्दबोधः। परन्तु पदस्य = "पिधेहि" इति पदस्य ज्ञानात् = श्रावणादनुभवात् अर्थादुक्तपदाध्याहारादेव शाब्दबोधो जायते नतु पिधानादिरूपार्थज्ञानात्। "पदजन्ये"ति—पदजन्यपदार्थोपस्थितिरेव शाब्दबोधम्प्रति कारणम् नतु पदार्थोपस्थितिमात्रम्। तथासति प्रत्यक्षादिनोपस्थितस्यापि शाब्दबोधापत्तिः स्यात् तस्मात्तार्थाध्याहारवादपक्षः शोभन इति भावः।

अत्रैव गमकान्तरमाह—"किञ्चे"ति। क्रियाकर्मपदानाम् = "द्वारं पिधेहि" इत्यादिपदानां तेन तेनैव रूपेण=तादृशानुपूर्वीविशिष्टरूपेणैव साकाङ्क्षत्वात् = अर्थात् तादृश्या आकाङ्क्षायाः शाब्दबोधम्प्रति हेतुत्वात्, क्रियापदं विना = क्रियापदोच्चारणं विना कथं शाब्दबोधः स्यात्, कथमपि न स्यादिति भावः।

यद्यर्थज्ञानमात्रमेव शाब्दबोधोपयोगि नतु तादृशानुपूर्वीविशिष्टा पदजन्यपदार्थोपस्थितिस्तदा "द्वारं कर्मत्वं पिधानं कृति" रिति वाक्यादपि द्वारकर्मकपिधानानुकूलान्वयबोधः स्यात्, नत्वयं दृश्यते। तस्मात् "द्वारं पिधेहि" इत्यानुपूर्वीरूपकाङ्क्षाज्ञानस्य हेतुत्वमवश्यं वाच्यम् तथासति तादृशाकाङ्क्षाज्ञानार्थं पिधेहीति पदाध्याहार आवश्यक एवेति सिद्धान्तसारः।

स्वोक्तार्थे उपपत्त्यन्तरमाह—"तथे"ति। यदि "स्पृहयति" इत्यदि क्रियापदं नाध्याहियेत तदा 'पुष्पेभ्य' इति कर्मपदोत्तरं कथं चतुर्थी विभक्तिः स्यात् 'स्पृहेरीप्सित' (१।४।३६) इति पाणिनिः स्पृहयतिपदयोग एव कर्मत्वार्थकचतुर्थीं स्मरति नतु तदर्थज्ञानेऽपीति सर्वत्रैव साकाङ्क्षितस्थले पदाध्याहार आवश्यकः।

(का०) पदार्थे तत्र तद्वत्ता योग्यता परिकीर्त्तिता॥ ८३॥

(मु०) एकपदार्थेऽपरपदार्थसम्बन्धो योग्यतेत्यर्थः। तज्ज्ञानाभावाच्च वह्निना सिञ्चतीत्यादौ न शाब्दबोधः। नन्वेतस्या योग्यताया ज्ञानं शाब्दबोधात्प्राक्सर्वत्र न संभवति वाक्यार्थस्यापूर्वत्वादिति चेन्न, तत्तत्पदार्थस्मरणे सति क्वचित्संशयरूपस्य क्वचिन्निश्चयरूपस्यापि योग्यताया ज्ञानस्य संभवात्।

(प्र० टी०) योग्यतां दर्शयति परममूले 'पदार्थ' इति। तत्र = तस्मिन्प्रक्रान्ते पदार्थे, तद्वत्ता = पदान्तरार्थप्रतियोगिको विविचितसम्बन्धो योग्यता परिकीर्त्तिता = कथितेति कारिकार्थः। मूले 'एकपदार्थ'—इति। अर्थात् कारिकायां प्रथमं तत्पदमेकपदार्थपरं, द्वितीयं तत्पदमपरपदार्थपरम्। तथा च निष्कृष्टं लक्षणस्वरूपम् 'एकपदार्थ' इत्यादि। एवञ्च 'पयसा सिञ्चति' इत्यत्र सेकपदार्थे पयसः करणतया सम्बन्धो

योग्यता। ननु 'वह्निना सिञ्चती' त्यत्र, वह्नेः सेककरणत्वाभावात् द्रवद्रव्यकरणस्यैव सेकपदार्थत्वात्, वह्नौ च तदभावाद् इत्याशयेनाह—'तज्ज्ञानाभावाच्चे'त्यादि। शङ्कते—'नन्वि'ति। 'सर्वत्रे'ति—सर्वत्र शाब्दबोधात्पूर्वमनिश्चितत्वादित्यर्थः। शङ्कापक्षे हेतुमाह—'वाक्यार्थस्ये'ति। सर्वत्रेतिग्रन्थव्याख्यानेन व्याख्यातमिदम्। समाधत्ते—'इति चेन्ने'ति। समाधानग्रन्थस्याक्षराणि सुगमानि। सारस्तु—यद्यपि सर्वत्र वाक्यार्थबोधोऽपूर्वः योग्यतायाः कारणत्वे च साऽपूर्वता नास्तीति सा सर्वत्र शाब्दबोधम्प्रति न कारणं, तथापि तत्तत्पदजन्यतत्तत्पदार्थस्मृतिसत्त्वात् संशयनिश्चयसाधारणं योग्यताज्ञानं सर्वत्रैव कारणम्। तथाच 'शाब्दबुद्धित्वावच्छिन्नम्प्रति योग्यताज्ञानत्वावच्छिन्नं हेतुरिति कार्यकारणभावो बोध्यः। औपनिषदास्तु—तात्पर्यविषयसंसर्गाबाधो योग्यता। 'वह्निना सिञ्चेद्' इत्यादौ तादृशसंसर्गबाधान्नातिव्याप्ति'रित्याहुः। प्रभाकरास्तु—न पदजन्यपदार्थोपस्थितिः शाब्दज्ञानाङ्गम् किन्तूपस्थितिमात्रं लाघवादित्याहुः, विस्तरस्त्वन्यतो ज्ञातव्यः।

**( मु० ) नव्यास्तु, योग्यताया ज्ञानं न शाब्दज्ञाने कारणम्। वह्निना सिञ्चतीत्यादौ सेके वह्निकरणत्वाभावरूपाऽयोग्यतानिश्चयेन प्रतिबन्धान्न शाब्दबोधः। तदभावनिश्चयस्य लौकिकसंनिकर्षाजन्यदोषविशेषाजन्यज्ञानमात्रे प्रतिबन्धकत्वाच्छाब्दबोधं प्रत्यपि प्रतिबन्धकत्वं सिद्धम्, योग्यताज्ञानविलम्बाच्च शाब्दबोधविलम्बोऽसिद्ध इति वदन्ति ॥ ८२ ॥ ८३ ॥**

( प्र० टी० ) अत्रैव नवीनमतमाह—'नाव्यास्त्वि'ति। स्पष्टम्। ननु—अयोग्यतानिश्चयस्य प्रतिबन्धकत्वे तदभावत्वेन कारणत्वं वाच्यम्, तदपेक्षया तु योग्यताज्ञानस्यैव कारणत्वमुचितं लाघवादित्याशंक्याह 'तदभावनिश्चयस्ये'ति। अस्यायमर्थः—'अनाहार्याप्रामाण्यज्ञानानास्कन्दिततद्धर्मिकतदभावनिश्चयः लौकिकसन्निकर्षाजन्यदोषविशेषाजन्यतद्धर्मिकतज्ज्ञानमात्रम्प्रति प्रतिबन्धक' इति नियमः। अत्र नियमवाक्ये प्रथमतत्पदेन प्रकृतधर्मिणो ग्रहणं, द्वितीयतत्पदेन धर्मस्य ग्रहणम्। बाधकालीनेच्छाजन्यं ज्ञानमाहार्यम्। यथा शालग्रामशिलायां विष्णुबुद्धिः, प्रतिमायां वा देवबुद्धिः। तद्भिन्नमनाहार्यम्। अप्रामाण्यज्ञानास्कन्दितं नाम अप्रामाण्यप्रकारकज्ञानविशेष्यं तद्भिन्नमप्रामाण्यज्ञानानास्कान्दितम्। निश्चयत्वञ्च संशयभिन्नज्ञानत्वम्। एवञ्च अनाहार्याप्रामाण्यज्ञानानास्कन्दिततद्धर्मिकतदभावनिश्चयस्य लौकिकसन्निकर्षाजन्यदोषविशेषाजन्यतद्धर्मिकतज्ज्ञानमात्रे प्रतिबन्धकत्वमिति प्रतिबंध्यप्रतिबन्धकभावसिद्धिः। प्रत्यक्षभिन्नं ज्ञानमात्रं लौकिकसन्निकर्षाजन्यम्। तत्र दोषविशेषजन्यं 'पीतः शङ्ख' इत्यादिज्ञानं विहाय यावज्ज्ञानम्प्रति तदभावनिश्चयस्य प्रतिबन्धकत्वात् 'वह्निना सिञ्चति' इत्यत्र सेकेपि वह्निकरणकत्वाभावरूपां योग्यतानिश्चयस्य प्रतिबन्धकत्वं मन्तव्यम् ननु उक्तस्थले शाब्दबोधापत्तिवारणाय योग्यताज्ञानस्य कारणभावः कल्प्य

इत्याशयेनाह—शाब्दबोधम्प्रत्यपि प्रतिबन्धकत्वं सिद्ध'मिति । ननु—यत्र नायोग्यताज्ञानं नवा योग्यताज्ञानं तत्र शाब्दबोधापत्तिरित्यत आह—'योग्यताज्ञानविलम्बाच्चे'ति । तथा चेष्टापत्तिरेवास्माकमिति भावः ।

( मु० ) आकांक्षां निर्वक्ति—

( का० ) यत्पदेन विना यस्याननुभावकता भवेत् ।
आकांक्षा वक्तुरिच्छा तु तात्पर्यं परिकीर्तितम् ॥८४॥

( मु० ) येन पदेन विना यत्पदस्यान्वयाननुभावकत्वं तेन पदेन सह तत्याकांक्षेत्यर्थः । क्रियापदं विना कारकपदं नान्वयबोधं जनयतीति तेन तस्याकांक्षा ॥

( प्र० टी० ) आकाङ्क्षां निर्वक्ति परममूले—'यत्पदेने'ति । येन पदेन विना यस्य पदस्य अननुभावकता अन्वयाननुभावकत्वं नाम अर्थास्मारकत्वं भवेत् तेन सह तस्याकांक्षा । यथा 'घट' मिति कारकपदं 'आनये'ति क्रियापदं विना नान्वयबोधं जनयतीति तेन तस्याकांक्षा । 'गौरश्वः पुरुषो हस्ती'त्यत्र नाकांक्षा । अत एव न शाब्दबोध इति कारिकाशयः । 'येने'ति मूले । उक्तव्याख्यानेन गतार्थमिदम् ।

( मु० ) वस्तुतस्तु क्रियाकारकपदानां संनिधानमासत्त्या चरितार्थम् । परन्तु घटकर्मताबोधं प्रति घटपदोत्तरद्वितीयारूपाकांक्षाज्ञानं कारणम् । तेन घटः कर्मत्वमानयनं कृतिरित्यादौ न शाब्दबोधः ॥ अयमेति पुत्रो राज्ञः पुरुषोऽपसार्यतामित्यादौ तु पुत्रेण सह राजपदस्य तात्पर्यग्रहरूत्वात्तेनैव सहान्वयबोधः । पुरुषेण सह तात्पर्यग्रहे तु तेन सहान्वयबोधः स्यादेव ॥ तात्पर्यं निर्वक्ति । वक्तुरिच्छेति । यदि तात्पर्यज्ञानं कारणं न स्यात्तदा 'सैन्धवमानय' इत्यादौ कचिदश्वस्य कचिल्लवणस्य बोधो न स्यात् ॥

( प्र० टी० ) अत्रत्यं रहस्यं वक्तुमाह—'वस्तुतस्त्वि'ति । अस्यायमर्थः—यद्यप्याकांक्षा कारणं तथापि अस्यां यः क्रियाकारकादिपदानामव्यवधानरूपसन्निध्यंशः तस्यांशस्य लाभस्तु पूर्वोक्ताया आसत्तेः सकाशादेव जायते तेषां पृथगाकांक्षायाः कारणभावो नोपयुज्यते । परन्तु प्रत्यये यदिदं प्रकृत्युत्तररूपाकांक्षाज्ञानं तस्य तु आसत्त्या नैव गतार्थता एवं तादृशाकांक्षाज्ञानन्तु पृथगेव कारणभावं भजते । यथा घटनिष्ठकर्मताबोधम्प्रति घटपदाव्यवहितोत्तरद्वितीयाविभक्तिरूपाकांक्षाज्ञानं कारणम् । तथा च–'घटः कर्मत्वम् आनयनं कृति' रित्यादिवाक्यस्थले 'घटमानय' इत्यादिसाकांक्षावाक्यवत् शाब्दबोधो न भवति । एवञ्च उत्तरत्वमपि क्रियाकारकपदयोर्नापेक्षितम् । 'पचति चैत्रः, चैत्रः पचति' इति वाक्यद्वयादपि शाब्दबोधदर्शनात् ।

ननु—' अयमेति पुत्रो राज्ञः पुरुषोऽपसार्यता' मित्यादौ अजनितान्वयबोधदशायां

राजपदस्य पुत्रपदेनेव पुरुषपदेनाप्याकांक्षासत्त्वाद्राज्ञःपुरुष इत्यन्वयबोधः स्यादित्यत आह—'अयमेती'ति । अस्यायमाशयः 'अयमेती'त्याद्युभयविधाकांक्षावति वाक्ये वक्तृतात्पर्यानुरोधेन शाब्दबोधो भवति । 'राज्ञ' इति सम्बन्धविशेषबोधिका षष्ठी उभयत्रैवान्वेतुं योग्याऽस्ति । यदि पुत्रे अन्वयः स्यात् तदा 'अयं राज्ञः पुत्र आयाति अग्रे पुरुषः = जनसमूहः अपसार्यताम्' यदि पुरुषेऽन्वयः, तदा 'राज्ञः पुरुष आयाति अग्रे पुत्रोऽपसार्यता'मिति शाब्दबोधः वक्तृतात्पर्यरूपेच्छानुसारेण बोध्यः । तात्पर्यस्यापि शाब्दबोधम्प्रति कारणत्वात् ।

ननु—किमिदं तात्पर्यं यस्य कारणभाव उक्त इति तद्दर्शयितुमाह—'तात्पर्यं निर्वक्ति' इति । एतस्य शाब्दबोधम्प्रति कारणभावं समर्थयते—'यदी'त्यादिना । 'घटमानय' इत्यादौ कर्मत्वविशेष्यकाधेयतासंसर्गकघटप्रकारकप्रतीतीच्छा वक्तुस्तात्पर्यम् 'तादृशेच्छयोच्चरितमिदं वाक्य' मित्याकारकं श्रोतुस्तात्पर्यज्ञानं तच्छाब्दबोधे कारणमिति निर्गलितो ऽर्थः । तत्र युक्तिमाह—'सैन्धवे'ति । आदिना 'श्वेतो धावती'त्यादि परिग्रहः । तत्र कदाचित् श्वेतगुणविशिष्टस्य कदाचित् कुक्कुरादेर्बोधस्य तात्पर्यज्ञाननियम्यत्वात् । 'क्वचिल्लवणस्ये'ति क्वचिदुभयोरित्यपि बोध्यम् । 'इति न स्यादि'ति—इति नियमो न स्यादित्यर्थः । इदमुपलक्षणम्—तात्पर्यसंशये व्यतिरेकनिश्चये वा शाब्दबोधानुदयाच्छाब्दबोधे तत्पर्यज्ञानं कारणं तत्संशय इति व्याप्तेरित्यपि बोध्य मिति दिनकरः ।

**(मु०) नच तात्पर्यग्राहकप्रकरणादीनां शाब्दबोधे कारणत्वमस्त्विति वाच्यं, तेषामननुगमात् । तात्पर्यज्ञानजनकत्वेन तेषामनुगमे तु तात्पर्यज्ञानमेव लाघवात्कारणमस्तु इत्थं च वेदस्थलेऽपि तात्पर्यज्ञानार्थमीश्वरः कल्प्यते । नच तत्राध्यापकतात्पर्यज्ञानं कारणमिति वाच्यं, सर्गादावध्यापकाभावात् । नच प्रलय एव नास्तीति कुतः सर्गादिरिति वाच्यं, प्रलयस्यागमेषु प्रतिपाद्यत्वात्, इत्थं च शुकवाक्येऽपीश्वरीयतात्पर्यज्ञानं कारणम् । विसंवादिशुकवाक्ये तु शिक्षयितुरेव तात्पर्यज्ञानं कारणम् । अन्ये तु नानार्थादौ क्वचिदेव तात्पर्यज्ञानं कारणम्, तथा च शुकवाक्ये विनैव तात्पर्यज्ञानं शाब्दबोधः । वेदे त्वनादिमीमांसापरिशोधिततर्कैरेवार्थावधारणमित्याहुः ॥ ८४ ॥**

इति श्रीविश्वनाथन्यायपञ्चाननभट्टाचार्यविरचितायां सिद्धान्तमुक्तावल्यां शब्दखण्डं समाप्तम् ॥

---

(प्र० टी०) शङ्कते—'नचे'ति । 'प्रकरणादीनामि'ति । आदिना संयोग-

वियोगसाहचार्यादीनां * परिग्रहः । विवृतानि चैतानि काव्यप्रकाशादौ मत्प्रणीतकाव्यप्रकाशटीकायाञ्च । प्रकरणादीनां क्लृप्तनियतपूर्ववर्त्तिताकत्वेन अनन्यथासिद्धत्वमात्रकल्पने लाघवमस्तीति शङ्काकर्त्तुराशयः । समाधत्ते—'तेषामि'ति ।' अननुगमादि'ति—प्रकरणादीनामेकरूपेणानुगमाभावादित्यर्थः । तथाच परस्परजन्यशाब्दबोधे परस्परव्यभिचारेण न तेषां हेतुत्वसम्भवः, तात्पर्यस्य तु न क्वचिदपि व्यभिचार इति भावः । ननु—प्रकरणादीन्यपि स्वस्वाधारणस्थले तात्पर्यज्ञानजनकानीति तात्पर्यज्ञानजनकत्वेन तेषामनुगमसम्भव इत्याशङ्कायामाह—'तात्पर्यज्ञाने'ति । सत्यमेव तथापि तथानुगमस्तेषां गुरुभूतः तदपेक्षया तात्पर्यज्ञानकारणतायां लाघवमेवेति भावः । ' इत्थञ्चे'ति—शब्दबोधत्वावच्छिन्नं प्रति तात्पर्यज्ञानस्य हेतुभावे सति । कल्प्यते = अनुमीयेत—तत्प्रकारश्चायम्—' गां मा हिंसीः ' ' स्वर्गकामो यजेत ' इत्यादीनि वेदवाक्यानि वक्तृवाक्यार्थयथार्थज्ञानपूर्वकाणि वाक्यरचनात्वात् ' नदीतीरे पञ्चफलानि सन्ती ' त्यास्मदाद्याप्तवाक्यरचनावत् । एवञ्च वैशेषिकस्य षष्ठाद्ये न्यायस्य द्वितीयाद्ये सप्तपञ्चाशत्तमसूत्रादौ निर्णीतमिति तत एव कणेहत्य निरीक्ष्यम् । मीमांसकः शङ्कते—'नचे'ति । अध्यापकः कठादिः । नैयायिकः समाधत्ते—'सर्गादावि'ति । पुनर्मीमांसकः शङ्कते—'नचे'ति । नैयायिकः समाधत्ते—' प्रलयस्ये'ति । कार्यद्रव्यानाधिकरणकालविशेषात्मकखण्डप्रलयस्येत्यर्थः । 'नाहो न रात्रिर्न नभो न भूमिर्नासीत्तमो ज्योतिरभून्नचान्य' इत्यद्यागमो बोध्यः । ' इत्थञ्चे'ति—तात्पर्यज्ञानस्य कारणत्व इत्यर्थः । 'शुकवाक्येपी'ति—यत्र शुकशारिकादिभिर्गद्यं पद्यं वोच्चारितं तत्र तेषां तात्पर्यं तु न भवितुमर्हति, तज्ज्ञानं विना च शाब्दबोधोऽपि नास्तिं, तदा तेषां वाक्ये ईश्वरीयतात्पर्यज्ञानमेव कारणत्वेन कल्पनीयम् । तेषां विसंवादिवाक्ये = निष्फलप्रवृत्तिजनकमिथ्योच्चारणे तु ईश्वरेच्छाया विसंवादित्वाभावात् शिक्षयितुरेव पुरुषस्य तात्पर्यज्ञानं हेतुरिति समस्तप्रघट्टार्थः । अत्र नैयायिकैकदेशिमतमाह—'अन्ये त्वि'ति । नानार्थादौ = ' सैन्धवमानय ' इत्यादौ मीमांसा = लाघवज्ञानात्मकस्तर्कः ।'परिशोधिते'ति—सहकृतेत्यर्थः । तर्कोऽत्रानुमानम् ।'आहु' रित्यस्वरसः सूचितः एतद्बीजन्तु—गृहीतनानार्थकवृत्तिकपदजन्यानुभवत्वापेक्षया लाघवेन पदजन्यानुभवत्वस्यैव तात्पर्यज्ञानजन्यतावच्छेदकत्वमुचितमिति दिक् ।

इति श्रीपण्डितदेवीदासतनुजनुषा सतीविष्णुदेवीगर्भजेन श्री जैनन्यायविशारद–कवितार्किक –दर्शनाचार्य नृसिंहदेवशास्त्रिणा विरचितायां सिद्धान्तमुक्तावल्याः 'प्रभा ' ख्यायां व्याख्यायां तुरीयं शब्दखण्डं समाप्तम् ।

समाप्ता च शब्दखण्डनाम्नी सप्तमी मुक्ता ।

---

* आदिना विशेषणपरिग्रहः । तथाच 'सशङ्खचक्रोहरिः' इत्यत्र 'हरि' शब्दस्य कपीन्द्राद्यनेकार्थत्वात् हरिशब्देन कस्य ग्रहणमित्याकांक्षायां निर्णायकं सशङ्खचक्र इति विशेषणम् ।

# अथ स्मृतिप्रक्रिया ।

( मु० ) पूर्वमनुभवस्मरणभेदाद्बुद्धेर्द्वैविध्यमुक्तम् । तत्रानुभवप्रकारा दर्शिताः, सुगमतया स्मरणं न दर्शितम् । तत्र हि पूर्वानुभवः कारणम् । अत्र केचित् । अनुभवत्वेन न कारणत्वं किंतु ज्ञात्वेनैव । अन्यथा सकृदनुभवस्थले स्मरणानन्तरं स्मरणं न स्यात्समानप्रकारकस्मरणेन पूर्वसंस्कारस्य विनष्टत्वात् । मन्मते तु तेनैव स्मरणेन संस्कारान्तरद्वारा स्मरणान्तरं जन्यत इत्याहुस्तन्न । यत्र समूहालम्बनोत्तरं घटपटादीनां क्रमेण स्मरणमजनिष्ट, सकलविषयकस्मरणं तु नाभूत्तत्र फलस्य संस्कारनाशकत्वाभावात्कालस्य रोगस्य चरमफलस्य वा संस्कारनाशकत्वं वाच्यम् । तथा च न क्रमिकस्मरणानुपपत्तिः ॥ नच पुनः पुनः स्मरणात् दृढतरसंस्कारानुपपत्तिरिति वाच्यं, झटित्युद्बोधकसमवधानस्य दार्ढ्यपदार्थत्वात् ॥

( प्र० टी० ) अवसरसङ्गत्या अनुभवोत्तरं स्मृतिं निरूपयितुमाह 'पूर्वमि'ति । अनुभवप्रकाराः=प्रत्यक्षानुमित्याद्याः । 'सुगमतये'ति---सुगमस्य स्वयमप्यूहितुं शक्यत्वात् कठिनपदार्थविषयिण्येव जिज्ञासा सुधियामादौ जायत इति भावः । 'तत्र ही'ति—तत्र=स्मृतौ । सामान्यतो ज्ञानं द्विविधं स्मृतिरनुभवश्चेति । तत्र संस्कारमात्रजन्यं ज्ञानं स्मृतिः, स्मृतिभिन्नं ज्ञानमनुभवः । स्मृतिज्ञाने पूर्वानुभवः कारणम् । अन्यथा अननुभूतपदार्थस्यापि स्मृतिः स्यात् । परं स्मृतिम्प्रति अनुभवत्वेन विशेषधर्मेणानुभवस्य कारणता । तथाच स्मृतित्वावच्छिन्नम्प्रति अनुभवत्वावच्छिन्नं कारणम् इत्यनुभवस्मृत्योः कार्यकारणभावः । अस्मिन्विषये मतद्वयमस्ति कश्चित्स्मृतिम्प्रति अनुभवत्वावच्छिन्नं कारणं मन्यते, कश्चित्तु ज्ञानत्वावच्छिन्नं कारणं मन्यते । आद्यो विशेषधर्मावच्छिन्नकारणवादी, द्वितीयः सामान्यधर्मावच्छिन्नकारणवादी इत्युच्यते । सामान्यधर्मावच्छिन्नकारणवादिनो मतं दर्शयति—'अत्र केचिदि'त्यारभ्य 'आहु' रित्यन्तेन 'स्मरणं न स्यादि'ति—अनुभवस्य नष्टत्वादिति भावः । सामान्यधर्मावच्छिन्नकारणवादिनः प्रघट्टस्यायमाशयः—यदि अनुभवत्वेन रूपेण स्मृतिम्प्रति कारणता तदा एकवारं दृष्टस्य=अनुभूतस्य स्मरणोत्तरं स्मरणं न स्यात्, यतो ऽनुभवजन्यसंस्काराः समानप्रकारकस्मरणरूपं फलमुत्पाद्य नष्टाः, अस्ति चैष नियमो यत् समानप्रकारकस्मरणस्य अनुभवजन्यसंस्कारनाशकत्व'मिति । दृश्यते चैतदपि यदेकवारमनुभूतपदार्थानामनेकवारं स्मरणम् । मम पक्षे तु 'स्मृतित्वावच्छिन्नम्प्रति ज्ञानत्वावच्छिन्नं कारणम्, ज्ञानत्वं व्यापको धर्मोऽनुभव इव स्मरणेऽपि वर्त्तते ।

ततः प्रथमसंस्कारेण स्मरणे पूर्वसंस्कारनाशः संस्कारान्तरोत्पत्तिश्चेत्येवमुत्तरोत्तरमनेकस्मरणेनानेके संस्काराः समानप्रकाराश्चानेकाः स्मृतयश्चेति नानुपपत्तिः ज्ञानत्वावच्छिन्नकारणवादनये। एतस्मिन्मते स्मृतिमात्रम्प्रति ज्ञानसामान्यमेव कारणं नतु अनुभवो ज्ञानविशेष इति सारः।

तदेतद्विशेषधर्मावच्छिन्नकारणवादी खण्डयति—'तन्ने'ति। समूहालम्बनोत्तरमिति—नानाधर्म्यवगाह्येकं ज्ञानं समूहालम्बनम्। अस्य ग्रन्थस्यायमभिसन्धिः—यत्र 'इमे रामकृष्णबुद्धा' इत्याकारकः समूहालम्बनरूपोऽनुभवो जातः, ततः संस्कारोद्बोधकादृष्टादिसमवधाने सति रामादीनां क्रमिकं स्मरणं जातं, समूहालम्बनरूपं स्मरणन्तु नाभूत्, तत्र समानप्रकारकस्मरणरूपं यत् फलमस्ति तत् संस्कारनाशकं नैवोपलभामहे तस्मादुक्तो नियमो व्यभिचार्येवास्तीति मन्तव्यम्। एवमेतादृशस्थले कदाचिद्दीर्घरोगः, कदाचिद्दीर्घः कालः कदाचिदन्तिमं फलं (स्मृत्याख्यम्) संस्कारान्नाशयतीत्यवश्यमङ्गीकर्त्तव्यम्, इत्थञ्च यत्र भूयो भूयः स्मरणं तत्रापि संस्कारद्वारा अनुभव एव कारणम्। यदा न स्मरणं भविष्यति तदा त्वन्तिममेव स्मरणात्मकं फलं नाशकं कल्पयिष्यते। तथाच विशेषधर्मावच्छिन्नकारणवादपक्षेऽपि न स्मरणानुपपत्तिरूपो दोषः।

यदि तु विशेषधर्मे व्यभिचारं विना सामान्यधर्मेणैव कारणता मन्येत तदा दण्डोऽपि भ्रमिद्वारा द्रव्यत्वधर्मतया घटं प्रति कारणं स्यात्। अयं भावः—दण्डे द्वौ धर्मौ वर्त्तेते दण्डत्वं द्रव्यत्वञ्चेति। परन्तु घटम्प्रति दण्डत्वरूपविशेषधर्मावच्छिन्नस्यैव कारणता नतु द्रव्यत्वधर्मावच्छिन्नस्येति संक्षेपः। प्रतिपदं तु न व्याख्यातं गौरवभयादनावश्यकत्वाच्चेति।

शङ्कते—'नचे'ति। 'दृढतरसंस्कारानुपपत्ति'रिति। स्मरणस्य संस्कारनाशकत्वादिति भावः। समाधत्ते—'झटिती'ति। तथाच पुनः स्मरणान्न दृढतरसंस्कारोत्पत्तिः किन्तु विद्यमानसंस्कारस्यैव पुनः पुनः स्मरणेन झटित्युद्बोधकसमवधानञ्जायते उद्बुद्धाच्च तस्मात्स्मरणान्तरमित्याशयवानाह—'दार्ढ्यपदार्थत्वादि'ति।

(मु०) नच विनिगमनाविरहादेव ज्ञानत्वेनापि जनकत्वं स्यादिति वाच्यं, विशेषधर्मेण व्यभिचाराज्ञाने सामान्यधर्मेणान्यथासिद्धत्वात्। कथमन्यथा दण्डस्य भ्रमिद्वारा द्रव्यत्वेन रूपेण न कारणत्वम्। न चान्तरालिकस्मरणानां संस्कारनाशकत्वसंशयाद्व्यभिचारसंशय इति वाच्यम्, अनन्तसंस्कारतन्नाशकल्पनापेक्षया लाघवेन चरमस्मरणस्यैव संस्कारनाशकत्वकल्पनेन व्यभिचारसंशयाभावात्॥ इति स्मृतिप्रक्रिया॥

(प्र० टी) पुनः शङ्कते—'नचे'ति। 'विनिगमनाविरहादि'ति। स्मृतिम्प्रति ज्ञानत्वावच्छिन्नं कारणं अनुभवत्वावच्छिन्नं वेत्येकपक्षपातिन्या युक्तेरभावादित्यर्थः।

समाधत्ते—'विशेषधर्मेणे'ति । अनुभवत्वेनेत्यर्थः । व्यभिचाराज्ञाने = व्यभिचारज्ञानाभावे सतीति शेषसामान्यधर्मेण = ज्ञानत्वेन, अन्यथासिद्धत्वात् = कारणलक्षणरहितत्वादित्यर्थः । अयमर्थः—यदि विशेषधर्मेण कार्यकारणभावस्य व्यभिचारो न ज्ञायते तदा सामान्यधर्मेण कार्यकारणभावस्य कल्पनाऽनुचिता । प्रकृते त्वनुभवत्वरूपो विशेषधर्मः प्रत्यक्षादिचतुर्ष्वेव वर्त्तते ज्ञानत्वरूपसामान्यधर्मस्तु स्मृत्यनुभवोभयसाधारणः । 'कथमन्यथे'त्यादिग्रन्थस्तु पूर्वसारप्रदर्शनेनैव व्याख्यातप्रायः । पुनः शङ्कते सामान्यवादी—'नचे'ति । आन्तरालिकस्मरणानाम् = मध्यवर्त्तिनीनां स्मृतीनाम् । 'व्यभिचारसंशय' इति । अनुभवत्वेन हेतुत्वे व्यभिचारसंशय इत्यर्थः । तथाच विशेषधर्मेण व्यभिचारज्ञानमिति भावः । विशेषवादी समाधत्ते—'अनन्तसंस्कारे' ति । स्पष्टमन्यत् । एतच्च 'आत्ममनसोः संयोगविशेषात् संस्काराच्च स्मृतिः, तथा स्वप्नः' ( ९ । ६ । ७ ) इति वैशेषिकमूलकं ज्ञेयम् ।

इति स्मृतिप्रक्रिया ।

( मु० ) इदानीं क्रमप्राप्तं मनो निरूपयितुमाह—

( का० ) साक्षात्कारे सुखादीनां करणं मन उच्यते ।
अयौगपद्याज्ज्ञानानां तस्याणुत्वमिहेष्यते ॥८५॥

( प्र० टी० ) नवमं द्रव्यं मनो निरूपयति—'साक्षात्कार' इति । सुखादीनां =सुखदुःखेच्छाद्वेषादीनां, साक्षात्कारे=प्रत्यक्षे करणं=साधनं मन इति मनसो लक्षणम् । तथाच 'सुखदुःखाद्युपलब्धिसाधनमिन्द्रियं मन' इत्युक्तं भवति । ज्ञानानाम् अयौगपद्यात्=युगपदुत्पत्त्यभावात्, तस्य=मनसः, अणुत्वम्=अणुपरिमाणमिष्यते इति कारिकार्थः । 'अयौगपद्यादि'ति मनसोऽणुत्वे प्रमाणमुक्तं भवति ।

( मु० ) एतेन मनसि प्रमाणं दर्शितम् । तथाहि सुखसाक्षात्कारः सकरणको जन्यसाक्षात्कारत्वात् चाक्षुषसाक्षात्कारवत् इत्यनुमानेन मनसः करणत्वसिद्धिः । नचैवं दुःखादिसाक्षात्काराणामपि करणान्तराणि स्युरिति वाच्यं, लाघवादेकस्यैव तादृशसकलसाक्षात्कारकरणतया सिद्धेः । एवं सुखादीनामसमवायिकारणसंयोगाश्रयतया मनसः सिद्धिर्बोद्धव्या ।

( प्र० टी० ) मनसि किं प्रमाणमिति प्रश्ने उत्तरमाह—'एतेने'ति । लक्षणकथनेनेत्यर्थः । प्रमाणम्=अनुमानं प्रमाणमित्यर्थः । 'जन्यसाक्षात्कारत्वं सकरणकत्वव्याप्य'मिति बोध्यम् । ईश्वरीयसाक्षात्कारे व्यभिचारवारणाय 'जन्ये'ति । शङ्कते—'नचैवमि'ति । समाधत्ते—'लाघवादि'ति । तेनैव सकलेष्टसिद्धेर्वृथाकरणान्तरकल्पनमिति भावः । ननु—अतिलाघवात्त्वगिन्द्रियस्य प्राणस्य वा करणत्वमस्त्वत आह—'एवमि'ति । भावकार्यस्य सासमवायिकारणकत्वनियमादिति भावः । तदा-

कारश्च—सुखदुःखाद्यसमवायिकारणं संयोगः क्वचिदाश्रितः मुख्यसम्बन्धत्वात्समवायवदिति यश्च तस्याश्रयः तदेव मनः ।

( मु० ) तत्र मनसोऽणुत्वे प्रमाणमाह । अयौगपद्यादिति । ज्ञानानां चाक्षुषरासनादीनामयौगपद्यमेककालोत्पत्तिर्नास्तीत्यनुभवसिद्धम् । तत्र नानेन्द्रियाणां सत्यपि विषयसंनिधाने यत्सम्बन्धादेकेनेन्द्रियेण ज्ञानमुत्पद्यते यदसम्बन्धाच्च परैर्ज्ञानं नोत्पद्यते तन्मनसो विभुत्वे चासन्निधानं न सम्भवतीति न विभु मनः ।

( प्र० टी० ) केचिन्मनसो वैभवम्, अन्ये मध्यमपरिमाणत्वमाचक्षते तेषां मतं व्युदस्यन्निव मनसोऽणुत्वे प्रमाणं वक्तुं भूमिकामाह—'तत्रे'ति । 'अयौगपद्यादि'ति मनसोऽणुत्वे हेतुमाह । ज्ञानानामिति कारिकापदं विवृणोति—"चाक्षुषे"त्यादिना । उक्तञ्च परमर्षिणा—"युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गमिति" ( न्या० १ । १ । १६ ) कणादेनापि मुनिना—"तदभावादणु मनः" (वै० ७ । १ । २३) इति । "यत्सम्बन्धादि"ति— श्रुतिरपि—"अन्यत्रमना अभूवम् नाश्रौषम्, अन्यत्रमना अभूवं नाद्राक्ष"मित्याह *। शिष्टं स्पष्टम् ।

( मु० ) नच तदानीमदृष्टविशेषोद्बोधकविलम्बादेव तज्ज्ञानविलम्ब इति वाच्यम्' तथा सति चक्षुरादीनामप्यकल्पनापत्तेः ॥ नच दीर्घशष्कुलीभक्षणादौ नानावधानभाजां च कथमेकदा नानेन्द्रियजन्यज्ञानमिति वाच्यम्, मनसोऽतिलाघवात्त्वरया नानेन्द्रियसम्बन्धान्नानाज्ञानोत्पत्तेः । उत्पलशतपत्रभेदादिवद्यौगपद्यप्रत्ययस्य भ्रान्तत्वात् ॥ नच मनसः संकोचविकाशशालित्वादुभयोपपत्तिरास्त्विति वाच्यम्, नानावयवतन्नाशादिकल्पने गौरवाल्लाघवान्निरवयवस्याणुरूपस्यैव मनसः कल्पनादिति सङ्क्षेपः ॥ ८५ ॥

( प्र० टी० ) शङ्कते—"नचे"ति । तदानीम्=युगपज्ज्ञानानुत्पत्तिकाले । "अदृष्टे"ति । अदृष्टस्यापि कार्यमात्रम्प्रति सामान्यकारणत्वादिति भावः । समाधत्ते —"तथे"ति । "चक्षुरादीनामि"ति प्रकल्पनापत्तेः=कल्पनापरित्यागापत्तेः यथाच चाक्षुषादिज्ञानक्रियायाः चक्षुरादिकरणकल्पनां विना न निर्वाहः तथैव सुखदुःखाद्युपलब्धिक्रियाया अपि अन्तरिन्द्रियं विना न निर्वाह इति भावः । पुनः शङ्कते "नचे"ति दीर्घशष्कुलीभक्षणादौ=दीर्घा लम्बमाना चासौ शष्कुली दीर्घशष्कुली, तस्या भक्षणादौ, आदिना ग्रहणादिपरिग्रहः । "शष्कुली" पूरिकाविशेषः । नानावधानभाजाम्=युगपन्नानाज्ञानोत्पादनशक्तिमतां पुरुषविशेषाणाम् । कथम्=कुत इत्यर्थः । एकदा=युगपत्कालावच्छेदेन नानेन्द्रियजन्यज्ञानम् = चाक्षुषरासनादिप्र-

* ज्ञानानामयौगपद्यमहेत्यर्थः ।

त्यत्वमित्यर्थः समाधत्ते--"मनस" इति अत्यन्तं वेगशालि मनः, तथाच नानुपपत्ति-र्नानावधानभाजां नानाज्ञानोत्पादने इति भावः। ननु--युगपदनेकज्ञानोत्पत्तिस्वीकारे सिद्धान्तविरोध इत्याशङ्क्याह--"उत्पलशतपत्रभेदादि"ति। उत्पलम्=कमलम्। तथा च भ्रान्तोऽसौ यौगपद्यप्रत्ययः, ज्ञानन्त्वेकस्मिन् काले एकमेवोत्पद्यत इति न सिद्धान्तविरोध इति भावः। पुनः शङ्कते--"नचे"ति। "संकोचे"ति--मनसः शङ्कोचे एकेन्द्रियमात्रसम्बन्धादेकमेव ज्ञानम्, विकाशे तु नानेन्द्रियैर्मनसः सम्बन्धा-द्युगपन्नानाज्ञानानामुत्पत्तिरिति भावः। समाधत्ते--"नानावयवे"ति--लाघवेन निर्वाहे सति निष्फलं गौरवं नाद्रियत इति भावः। अधिकमन्यत्रोक्तमित्याह--"सङ्क्षेप" इति।

इति द्रव्यपदार्थो व्याख्यातः।

---

## (का०) अथ द्रव्याश्रिता ज्ञेया निर्गुणा निष्क्रिया गुणाः।

(मु०) द्रव्यं निरूप्य गुणान्निरूपयति—गुणत्वजातौ किं मानमिति चेत्, इदम्-द्रव्यकर्मभिन्ने सामान्यवति या कारणता सा किंचिद्धर्माव-च्छिन्ना निरवच्छिन्नकारणताया असंभवात्। नहि रूपत्वादिकं सत्ता वा तत्रावच्छेदिका न्यूनातिरिक्तदेशवृत्तित्वात्। अतश्चतुर्विंशत्यनुगतं किंचिद्वाच्यं तदेव गुणत्वमिति सिद्धम्।

(प्र० टी०) निरूपितं द्रव्यम्, सम्प्रति गुणनिरूपणावसर इत्याह—"द्रव्य-मि"ति। "द्रव्यनिरूपणोत्तरकालीनद्रव्यनिरूपणसमानकर्तृकगुणकर्मनिरूपणानुकू-लकृतिमान् ग्रन्थकार" इति शाब्दबोधः। "अथे"ति द्रव्यनिरूपणान्तर्यमाह। *'द्रव्याश्रिता' इति। द्रव्याश्रिताः=द्रव्यमात्राधाराः, निर्गुणाः=गुणरहिताः, निष्क्रियाः=कर्महीनाश्च बोध्याः। द्रव्याश्रितत्वञ्च द्रव्यत्वव्यापकतावच्छेदकसत्ता-न्यजातिमत्त्वम्। निर्गुणत्वं सामान्यवत्त्वे कर्मान्यत्वे च सति गुणशून्यत्वम्। निष्क्रियत्वं समान्यवत्त्वे सति कर्मान्यत्वे सति कर्मवदवृत्तिपदार्थविभाजकोपाधिम-त्त्वमिति सामान्यतो गुणस्य लक्षणत्रयं फलितमिति भावः। समष्ट्या एकं लक्षणन्तु —'सामान्यवत्त्वे सति कर्मान्यत्वे च सति निर्गुणत्वं गुणसामान्यलक्षण'मिति बोध्यम्, निर्गुणत्वमात्रोक्तौ कर्मण्यतिव्याप्तिः तद्वारणाय "कर्मान्यत्व" इत्युक्तम्। तावन्मात्रोक्तावपि सामान्येऽतिव्याप्तिवारणाय "सामान्यवत्त्वे सती"त्युक्तम्। निर्गुण-त्वानुक्तौ परिशिष्टोक्तौ द्रव्येऽतिव्याप्तिः स्यात् तद्वारणाय "निर्गुणत्व"मिति।

द्रव्यत्वजाताविव गुणत्वजातौ मानं पृच्छति—"गुणत्वजाता"विति। एतेन "गुणत्वजातिसिद्धिरग्रे वक्ष्यते" इति पूर्वोक्ता प्रतिज्ञापि पालिता भवतीति भावः।

---

* परेपि 'द्रव्याश्रया निर्गुणा गुणा' (तत्त्वार्थसूत्रम् ५।४१) इति लक्षयन्ति।

उत्तरयति—"इदमि"ति । द्रव्यकर्माभिन्नत्वे सतीत्यादिग्रन्थो द्रव्यत्वजातिसाधकग्रन्थवद् व्याख्येयः । क्वचित्—"किञ्चिद्धर्मावच्छेद्या, निरवच्छेद्यकारणताया अभावादिति पाठान्तरम्, फले न विशेषः । तदर्थस्तु—किञ्चिद्धर्मनिष्ठावच्छेदकता निरूपकेत्यादिर्बोध्यः । ननु—रूपत्वस्य सत्ताया वा गुणनिष्ठकारणताया अवच्छेदकत्वमस्तु इत्याशङ्क्याह—"नही"ति । अन्यूनानतिरिक्तवृत्तित्वमवच्छेदकत्वम् । यत्र न्यूनदेशवृत्ति नाप्यधिकदेशवृत्ति किन्तु लक्ष्यताकारणतादिधर्मसमनियतवृत्ति भवति तदेव लक्ष्यतावच्छेदकं कारणतावच्छेदकं वोच्यते । प्रकृते रूपत्वं न गुणनिष्ठकारणतासमनियतम्, न्यूनवृत्तित्वात् । नहि रूपत्वं रसाद्यनुगतो धर्मः, किन्तु शुक्लाद्यनुगत एव । नच सत्ता गुणनिष्ठकारणतासमनियता तस्या द्रव्ये कर्मणि चापि वर्त्तमानाया अधिकदेशवृत्तित्वात्, अतश्चतुर्विंशतिगुणनिष्ठं यत् किमप्यनुगतं तदेव गुणत्वम्=गुणनिष्ठकारणतावच्छेदको धर्म इति भावः । रूपत्वादिकमित्यादिना रसत्वादिपरिग्रहः ।

इदन्तु बोध्यम्—यद्यपि गुणत्वजातौ प्रत्यक्षमेव प्रमाणम् रूपादिषु संयुक्तसमवेतसमवायेन गुणत्वप्रत्यक्षसम्भवात्; तथाप्यतीन्द्रियरूपादौ तत्प्रत्यक्षासम्भवेन तत्साधारण्यं गुणत्वस्य न घटत इत्यनुमानमपि प्रदर्शितम् ।

**( मु० ) द्रव्याश्रिता इति । यद्यपि द्रव्याश्रितत्वं न लक्षणं कर्मादावतिव्याप्तेस्तथापि द्रव्यत्वव्यापकतावच्छेदकसत्ताभिन्नजातिमत्त्वं तदर्थः । भवति हि गुणत्वं द्रव्यत्वव्यापकतावच्छेदकं तद्वत्ता च गुणानामिति ॥ द्रव्यत्वं कर्मत्वं वा न द्रव्यत्वव्यापकतावच्छेदकं गगनादौ द्रव्यकर्मणोरभावत् । द्रव्यत्वत्वं सामान्यत्वदिकं वा न जातिरिति तद्व्युदासः ।**

( प्र० टी० ) कारिकास्थं "द्रव्याश्रिता" इति पदमभिसन्धिमुद्रया व्याख्यातुं प्रतीकमादत्ते—"**द्रव्याश्रिता**" इति । '**कर्मादावि**'ति—आदिना सामान्यपरिग्रहः गुणे कर्मणि च द्रव्याश्रितत्वं समानो धर्म इति भावः । विवक्षयाऽतिव्याप्तिं परिहरति—'**तथापी**'ति । '**द्रव्यत्वे**'ति—द्रव्यत्वनिरूपिता या गुणनिष्ठा व्यापकता, तादृशव्यापकताया अवच्छेदिका या सत्ताभिन्ना जातिः अर्थात् गुणत्वं, तादृशगुणत्वजातिमत्त्वं सर्वेषु रूपादिगुणेष्वेवास्ति नतु कर्मणीति नातिव्याप्तिः । लक्ष्ये लक्षणसत्त्वं प्रतिपादयति—"**भवति ही**" ति । द्रव्यत्वव्यापकतावच्छेदकेप्यस्य फलमाह—"**द्रव्यत्व**"मिति ।

अयमाशयः—द्रव्यत्वरूपःकर्मत्वरूपो वा धर्मो द्रव्यत्वव्यापकतावच्छेदको न भवितुमर्हति । यदि सर्वद्रव्येषु द्रव्यं वा कर्म वा भवेत् तदा द्रव्यत्वनिरूपिता व्यापकता द्रव्येषु, कर्मसु वोन्नीयेत, तथासति तत्र द्रव्ये विद्यमानो द्रव्यत्वरूपो धर्मः, कर्मणि विद्यमानः कर्मत्वरूपो वा धर्मोऽपि व्यापकतावच्छेदको भवेत्, नह्याकाशादिपञ्चद्रव्ये किमपि द्रव्यं समवेतं=समवायसम्बन्धेन वर्त्तमानं भवति, नापि चाकाशादिचतुर्षु किमपि कर्म वर्त्तते "विभौ क्रिया न भवति" इति नियमात्, तस्मात् द्रव्यत्वं

कर्मत्वं वा न द्रव्यत्वनिरूपितव्यापकताया अवच्छेदकम्। द्रव्यत्वे विद्यमानो द्रव्यत्वत्वरूपो धर्मः सामान्ये च वर्त्तमानः सामान्यत्वरूपो धर्मो जातिरूप एव नास्ति किन्तूपाधिरूपोऽस्ति, जातिभिन्नो धर्मं उपाधिरित्यवोचाम। एवं निष्कृष्टलक्षणे जातिपदनिवेशेन द्रव्यत्वत्वसामान्यत्वयोरुभयोरुभयोर्वारणं फलमिति बोध्यम्।

( मु० ) निर्गुणा इति। यद्यपि निर्गुणत्वं कर्मादावपि तथापि सामान्यवत्त्वे सति कर्मान्यत्वे च सति निर्गुणत्वं बोध्यम्। जात्यादीनां न सामान्यवत्त्वं, कर्मणो न कर्मान्यत्वे, द्रव्यस्य न निर्गुणत्वमिति तत्र नातिव्याप्तिः। निष्क्रिया इति स्वरूपकथनं नतु लक्षणं गगनादावतिव्याप्तेः॥

( प्र० टी० ) "निर्गुणा" इत्यस्य तत्त्वं वक्तुमाह—"निर्गुणा" इति। अतिव्याप्तिं शङ्कमानस्तत्परिहाराय विवृणोति—"यद्यपी"त्यादिना। निर्गुणत्वम्=गुणात्यन्ताभाववत्त्वम्। कर्मादावित्यादिना समान्यादिपरिग्रहः। स्वरूपकथनमिति—वस्तुतो गुणे क्रिया नास्तीति स्फुटप्रतिपत्त्यर्थमित्यर्थः। स्पष्टमन्यत्। भवति चात्र पारमर्षं सूत्रम्—"द्रव्याश्रय्यगुणवान् संयोगविभागेष्वकारणमनपेक्ष इति गुणलक्षणम्" इति ( वै० अ० १। आ० १। सू० १६ )

(का०) रूपं रसः स्पर्शगन्धौ परत्वमपरत्वकम्॥ ८६॥
द्रवत्वं स्नेहवेगाश्च मता मूर्तगुणा अमी।

( मु० ) मूर्तगुणा इति। अत्र वेगेन स्थितिस्थापकोऽप्युपलक्षणीयाः। अमूर्तेषु न वर्तन्त इत्यर्थः। लक्षणं तु तावदन्यान्यत्वम्। एवमग्रेऽपि॥

( प्र० टी० ) इदानीं गुणानां साधर्म्यं वक्तुमथवाऽवान्तरविशेषं वक्तुमुपक्रमते "रूप"मित्यादिना। "मूर्त्तगुणा" इतीति। ननु—मूर्त्तगुणत्वं मूर्त्तवृत्तिगुणत्वमित्येवार्थः स्यात्, तथासति तत् सङ्ख्यादावप्यतिव्याप्तमित्याह—"अमूर्त्तेष्वि"ति। तथाच अमूर्त्तावृत्तिगुणत्वं रूपादिवेगान्तानां साधर्म्यमित्यर्थः। "लक्षणन्त्वि"ति—रूपरसाद्यन्यतमत्वं मूर्त्तगुणत्वमित्यर्थः। विभ्ववृत्तिसङ्ख्यादिपञ्चकभिन्नगुणत्वं 'मूर्त्तगुणत्व'मिति निष्कृष्टं लक्षणम्। प्रदर्शितं प्रकारं वक्ष्यमाणग्रन्थेष्यतिदिशति—"एवमि"ति।

(का०) धर्माधर्मौ भावना च शब्दो बुद्ध्यादयोऽपि च॥ ८७॥
एतेऽमूर्तगुणाः सर्वे विद्वद्भिः परिकीर्तिताः।

( मु० ) अमूर्तगुणा इति मूर्तेषु न वर्तन्त इत्यर्थः।

( प्र० टी० ) अमूर्त्तगुणानाह—"धर्माधर्मा"विति। परममूले 'एतेऽमूर्त्तगुणा' इत्यत्राकारप्रश्लेषो बोध्य इत्याशयेनाह मुक्तावल्यां "मूर्त्तेषु न वर्त्तन्त इत्यर्थ" इति। एवञ्च—"मूर्त्ताऽवृत्तिगुणत्वं धर्मादीनां साधर्म्यम्" इत्युक्तं भवति।

निष्कृष्टं लक्षणन्तु—'मूर्त्ताऽवृत्तिसङ्ख्यादिपञ्चकभिन्नगुणत्वममूर्त्तगुणत्व' मिति बोध्यम् ।

(का०) सङ्ख्यादयो विभागान्ता उभयेषां गुणा मताः ॥८८॥

( मु० ) उभयेषामिति । मूर्तामूर्तगुणा इत्यर्थः ॥ ८६–८८ ॥

( प्र० टी० ) मूर्त्ताऽमूर्त्तगुणानाह—परममूले "सङ्ख्यादय" इति । सङ्ख्या-परिमाणे पृथक्त्वसंयोगविभागा मूर्त्ताऽमूर्त्तगुणा इत्यर्थ इत्याशयेनाह—मूले "उभ-येषा"मिति । इदमेव स्पष्टं साधर्म्यम् ।

(का०) संयोगश्च विभागश्च सङ्ख्या द्वित्वादिकास्तथा ।
द्विपृथक्त्वादयस्तद्वदेतेऽनेकाश्रिता गुणाः ॥८९॥

( मु० ) अनेकाश्रिता इति । संयोगविभागद्वित्वादीनि द्विवृत्तीनि । त्रित्वचतुष्ट्वादिकं त्रिचतुरादिवृत्तीति बोध्यम् ॥ ८९ ॥

( प्र० टी० ) अनेकवृत्तिगुणानाह—परममूले "संयोगश्चे"ति । "अनेका-श्रिता" इति । अत्र न एकाश्रिता अनेकाश्रिता इति समासो न साधुः संयोगादीनां द्विवृत्तीनामपि तदन्तर्गतैकाश्रितत्वसत्त्वात् । किन्तु—न एकमनेकं, अनेकमाश्रिता अनेकाश्रिता इति, संयोगादीनां द्विवृत्तित्वात् । "द्विपृथक्त्वादय" इति द्वित्वादिसमा-नाधिकरणं पृथक्त्वमित्यर्थः । तथाच 'अनेकाश्रितगुणत्वं संयोगादीनां साधर्म्य' मिति फलितम् । द्विवृत्तीनि=पदार्थद्वयवृत्तीनि । स्पष्टमन्यत् ।

(का०) अतः शेषगुणाः सर्वे मता एकैकवृत्तयः ।

( मु० ) रूपरसगन्धस्पर्शैकत्वपरिमाणैकपृथक्त्वपरत्वापरत्वबुद्धिसु-खदुःखेच्छाद्वेषप्रयत्नगुरुत्वद्रवत्वस्नेहसंस्काराऽदृष्टशब्दा इत्यर्थः ।

( प्र० टी० ) एकवृत्तिगुणानाह—"अत" इति परममूले । स्पष्टं विवृणोति—"रूपादी"ति । कारिकाक्षरार्थस्तु—अतोऽस्मात् संयोगादिपञ्चकात् शेषा अवशिष्टा ये गुणा रूपादयस्ते एकैकवृत्तयो मता इष्टा इति । "स्वाश्रयान्योन्याभावव्यापकात्य-न्ताभावप्रतियोगित्वमेकैकवृत्तिगुणत्व"मिति फलितलक्षणम् ।

(का०) बुद्ध्यादिषट्कं स्पर्शान्ताः स्नेहः सांसिद्धिको द्रवः ९०॥
अदृष्टभावनाशब्दा अमी वैशेषिका गुणाः

( मु० ) बुद्धिसुखदुःखेच्छाद्वेषप्रयत्ना इत्यर्थः । स्पर्शान्ताः रूपरस-गन्धस्पर्शा इत्यर्थः । द्रवो द्रवत्वम् । वैशेषिका इति । विशेषा एव वैशे-षिकाः । स्वार्थे ठक् । विशेषगुणा इत्यर्थः ॥

( प्र० टी० ) विशेषगुणानाह—'बुद्ध्यादी'ति । एतस्य विवरणं "बुद्धि-सुखे"ति । परममूले "अदृष्टे"ति । अदृष्टं=धर्माधर्मौ । भावना=तदाख्यः संस्कारः "अमी" इति षोडशसङ्ख्याः । 'वैशेषिका' इत्यत्र "विनयादिभ्यष्ठक्"

(५।४।३४) इत्यनेन स्वार्थे ठक्। "भावनान्यो" यो वायुवृत्तिस्पर्शावृत्तिधर्मसमवायी तदन्यत्वे सति गुरुत्वनैमित्तिकद्रव्यत्वान्यगुणत्वमिति विशेषगुणत्वम्। केचित्तु विशेषगुणत्वं नाम "द्रव्यविभाजकोपाधिद्वयसमानाधिकरणावृत्तिद्रव्यकर्माऽवृत्तिजातिमत्त्व" मिति लक्षयन्ति। तत्र द्रव्यस्य विभाजकमुपाधिद्वयम् पृथिवीत्वजलत्वादि, तत्समानाधिकरणः संयोगसङ्ख्यादिः, तत्रावृत्तिः अविद्यमाना तथा द्रव्यकर्मणोरप्यविद्यमाना या रूपादिकतिपयगुणेषु विद्यमाना जातिस्तादृशजातिमत्त्वं पूर्वोक्तविशेषगुणेष्वनुगतमित्याहुः। सर्वोऽयं कठिनो मार्गः। वयन्तु—"विशेषो व्यवच्छेदः तस्मै प्रभवन्ति ये ते "वैशेषिकाः" गुणा रूपादयः। ते हि स्वाश्रयमितरस्माद्व्यवच्छिन्दन्ति न तथा सङ्ख्यादयः तेषां स्वतोविशेषाभावात्, यस्तु तेषां विशेषः स चाश्रयविशेषकृत एवेति" कन्दलीकारमार्गमेव रोचयामहे।

श्रीस्वामि विश्वेश्वराश्रमपादास्तु—विशेषगुणत्वञ्च, भावनाऽन्यो यो वायुवृत्तिस्पर्शावृत्तिधर्मसमवायी तदन्यत्वे सति गुरुत्वाजलद्रवत्वान्यगुणत्वम्, जात्यादावतिव्याप्तिवारणाय विशेष्यदलम् अन्यथा सामान्यत्वधर्मस्य भावनान्यत्वे सति वायुवृत्तिर्योऽनुष्णाशीतस्पर्शस्तदवृत्तित्वात्तत्समवायी सामान्यं नास्तीति तदन्यत्वसत्त्वादतिव्याप्तिः स्यात् सामान्यत्वस्योपाधित्वेन तत्समवायाप्रसिद्ध्या सामान्यं समवायिभिन्नमिति भावः। गुरुत्वाजलद्रवत्वान्यगुणत्वस्य संयोगादावपि सत्त्वादतिव्याप्तिः तद्वारणाय सत्यन्तं विशेषणदलम्, तथाच भावनान्यवायुवृत्तिस्पर्शावृत्तिधर्मः संयोगत्वन्तत्समवायित्वात्संयोगस्य तदन्यत्वाभावान्नातिव्याप्तिः। गुरुत्वनैमित्तिकद्रवत्वयोरतिव्याप्तिः, तयोरपि भावनान्यवायुवृत्तिस्पर्शावृत्तियौ धर्मौ गुरुत्वत्वनैमित्तिकद्रवत्वत्वरूपस्तत्समवायिभिन्नत्वे सतिगुणत्वस्यसत्त्वात्। गुरुत्वत्वऽनैमित्तिकद्रवत्वयोरप्युपाधित्वेन तयोःसमवायाप्रसिद्ध्या - समवायिभिन्नत्वमित्यतस्तन्नातिव्याप्तिवारणार्थं—गुरुत्वाजलद्रवत्वान्येति, अत्रापि सांसिद्धिकद्रवत्वेऽव्याप्तिवारणार्थम् अजलेतिपदम्। भावनान्यत्वानुपादाने भावनायामव्याप्तिः वायुवृत्तिस्पर्शावृत्तियौ धर्मौ भावनात्वरूपस्तत्समवायित्वेन समवायिभिन्नत्वाभावात्। तदुपदानेच भावनात्वसमवायिन्याभावनाया भावनान्यत्वाभावान्नाव्याप्तिः, वायुवृत्तिस्पर्शावृत्तिबुद्धित्वेच्छात्वादिधर्मसमवायिभिन्नत्वसत्त्वादिति भावः। स्पर्शावृत्तिपदानुपादाने स्पर्शेऽव्याप्तिः, वायुवृत्तिसत्तारूपधर्मसमवायित्वेन समवायिभिन्नत्वाभावात्। तदुपादाने चसत्तारूपधर्मस्य स्पर्शावृत्तित्वाभावाद्बुद्धित्वेच्छात्वादिरूपधर्ममादाय लक्षणसमन्वयः। स्पर्शेच तादृशधर्मसमवायिभिन्नत्वसत्त्वादिति भावः। पृथिवीजलतेजस्सु वृत्तयो ये गन्धत्वरसत्वरूपत्वधर्मसमवायिनो गन्धरसरूपात्मकास्तेच समवायिभ्यो भिन्ना न सन्तीतितेष्वव्याप्तिरतो वायुवृत्तीति समवायिविशेषणम् वत्तु स्पर्शविशेषणमिति मेप्रतिभाति, "तथाच भावनान्ये ये वायुवृत्तयः स्पर्शावृत्तिधर्मसमवायिन स्तेभ्योऽन्ये ये गुरुत्वाजलद्रवत्वान्येगुणास्ते विशेषगुणाः। इत्यन्वयः। एवञ्च भावनान्ये, इति धर्मसमवायिनः। इत्यत्र विशेषणम्। फलन्तु वस्य

पूर्वोक्तमेव" केचित्तुमतीयलक्षणे पदकृत्यम् । द्रव्यकर्मणोरवृत्तिगुणत्वजातिरपि साच-संख्यादिसामान्यगुणेपि वर्त्तते तत्रातिव्याप्तिवारणार्थं द्रव्यविभाजकोपाधिद्वयसमानाधिकरणावृत्तीति विशेषणदलम्—तथाच द्रव्यविभाजकोपाधिद्वयस्य पृथिवीत्वजलत्व-स्वरूपस्य समानाधिकरणे गुण स्तत्रवृत्तित्वमेवगुणत्वस्य नावृत्तित्त्वमिति नातिव्याप्ति-रिति भावः । इदन्तु भवत्कृतलक्षणसमन्वयानुसारेण फलम् । मन्मतेतु द्रव्यविभाज कोपाधिद्वयं पृथिवीजलपरमाणुवृत्तिपृथिवीत्वं जलत्वंच तत्समानाधिकरणाणुकरूपं द्रव्यं परमाणुकर्मंच तत्रावृत्तिजातिर्गुणत्वरूपा साच विशेषगुणेषु वर्त्तते, इति लक्षण-समन्वयः । तत्र विशेषणानुपदाने द्रव्यकर्मावृत्तिगुणत्वस्य संख्यादिसामान्यगुणेषु सत्त्वा-दतिव्याप्तिरतस्तदुपात्तम् । तथाच तादृशोपाधिद्वयसमानाधिकरणे यथा द्रव्यकर्मणी तथागुणोपि समानाधिकरणस्तत्र गुणत्वं जातेरवृत्तित्वाभावान्नातिव्याप्तिः । विशेष्या-नुपादाने—द्रव्यविभाजकोपाधिद्वयस्य पृथिवीत्वजलत्वरूपस्य समानाधिकरणे गुणेऽवृ-त्तिजातिर्द्रव्यत्वकर्मत्वंच तद्वतोर्द्रव्यकर्मणोरतिव्याप्तिः । तदुपादानेच तादृशद्रव्यत्व-कर्मत्वयोर्द्रव्यकर्मावृत्तित्वाभावान्न द्रव्यकर्मणोरतिव्याप्तिरिति भावः ।

सामान्यगुणत्वं च—रूपस्पर्शान्यत्वे सति द्रव्यविभाजकोपाधिव्याप्यतावच्छे-दक—संयोगविभागवेगद्रवत्वावृत्तिजातिशून्यगुणत्वम् । द्रव्यविभाजकोपाधिः पृथि वीत्वादिस्तद्व्याप्यतावच्छेदिका—गन्धत्वादिजातिस्तच्छून्यत्वस्य संख्यादिगुणेसत्वाल्ल-क्षणसमन्वयः ।

**(का०) सङ्ख्यादिरपरत्वान्तो द्रवोऽसांसिद्धिकस्तथा ॥९१॥**
**गुरुत्ववेगौ सामान्यगुणा एते प्रकीर्तिताः ।**

( मु० ) सङ्ख्यादिरिति । सङ्ख्यापरिमाणपृथक्त्वसंयोगविभागपर-त्वानीत्यर्थः ॥

( प्र० टी० ) समान्यगुणानाह—'सङ्ख्यादि'रिति । सङ्ख्या आदिर्यस्य अप-रत्वमन्ते यस्येति समासशङ्कया परिमाणपरत्वयोरेव ग्रहणं स्यादिति भ्रमवारणाय आदिपदग्राह्यगुणान् विशिष्य दर्शयति मूले 'सङ्ख्ये'त्यादिना । द्रवो=द्रवत्वम् । असांसिद्धिको=नैमित्तिकः । रूपस्पर्शान्यत्वे सति द्रव्यविभाजकोपाधिव्याप्यता-वच्छेदकसंयोगविभागवेगद्रवत्वाऽवृत्तिजातिशून्यगुणत्वं सामान्यगुणत्वमिति, नव्या-यनयानुसारिणः । ऋजवस्तु—सामान्याय=स्वाश्रयसाधर्म्याय, गुणाः न स्वाश्रयविरो धाय ये ते तथेति विवृण्वते ।

**( का० ) संख्यादिरपरत्वान्तो द्रवत्वं स्नेह एव च ॥ ९२ ॥**
**एते तु द्वीन्द्रियग्राह्याः—**

( मु० ) द्वीन्द्रियेति । चक्षुषा त्वचाऽपि ग्रहणयोग्यत्वात् ।

( प्र० टी० ) द्वीन्द्रियग्राह्यगुणानाह—'सङ्ख्यादि' रिति। बाह्यद्वीन्द्रियमात्रग्राह्यजातिमद्गुणत्वं द्वीन्द्रियग्राह्यगुणत्वमित्यर्थः। अन्वर्था चेयं सञ्ज्ञा द्वाभ्यां चक्षुस्त्वग्भ्यां ग्रहणयोग्यत्वात्।

अथ स्पर्शान्तशब्दकाः।

( का० ) बाह्यैकैकेन्द्रियग्राह्याः—

( मु० ) बाह्येति। रूपादीनां चक्षुरादिग्राह्यत्वात्॥

( प्र० टी० ) बाह्यैकैकेन्द्रियग्राह्यगुणानाह—परममूले "अथे" ति। स्पर्शान्तशब्दकाः = रूपरसगन्धस्पर्शशब्दा इत्यर्थः। "बाह्ये" ति—बाह्यैरेकैकेन्द्रियैश्चक्षुरादिभिरेव ग्राह्याः प्रत्यक्षयोग्याः। तेन नातीन्द्रियरूपादावतिव्याप्तिः। तथाच चक्षुस्त्वगुभयाग्राह्यबहिरिन्द्रियग्राह्यगुणसमवेतजातिमत्त्वं साधर्म्यमिति निष्कर्षः।

( का० ) गुरुत्वादृष्टभावनाः ॥९३॥

अतीन्द्रिया, विभूनां तु ये स्युर्वैशेषिका गुणाः।
अकारणगुणोत्पन्ना एते तु परिकीर्तिताः ॥९४॥

( मु० ) विभूनामिति। बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मभावनाशब्दा इत्यर्थः। अकारणेति। कारणगुणेन कार्ये ये गुणा उत्पद्यन्ते ते कारणगुणपूर्वका रूपादयो वक्ष्यन्ते। बुद्ध्यादयस्तु न तादृशा आत्मादेः कारणाभावत् ॥९०—९४॥

( प्र० टी० ) अतीन्द्रियगुणानाह—परममूले—"गुरुत्वे" ति। गुरुत्वम् = आद्यपतनासमवायिकारणम्, अदृष्टम् = धर्माधर्मौ, भावना = वेगाभिन्नसंस्कारौ अर्थात्—भावनापदमजहत्स्वार्थलक्षणयोभयबोधकम्, तेन स्थितिस्थापकसंस्कारस्यापि ग्रहणम्। एतेऽतीन्द्रियाः = इन्द्रियागोचरा इत्यर्थः। अकारणगुणोत्पन्नगुणानाह—परममूले "बुद्धी" त्यादिना। "अकारणेती" ति। अयमस्यार्थः—कारणगुणाः = समवायिकारणसमवेतगुणैःउत्पन्नाः कारणगुणोत्पन्नाः, न कारणगुणोत्पन्ना अकारणगुणोत्पन्नाः, परिकीर्त्तिताः = उक्ताः। इत्थञ्च* स्वाश्रयसमवायिसमवेतगुणजन्यत्वं कारणगुणोत्पन्नत्वं, तद्भिन्नमकारणगुणोत्पन्नत्वं बुद्ध्यादिशब्दान्तानां साधर्म्यम्। कुतो न बुद्ध्यादयो रूपादिवत् समवायिकारणसमवेतगुणैरुत्पद्यन्त इति शङ्कायां बीजं दर्शयति—"आत्मादे" रिति। बुद्ध्यादीनामाश्रय आत्मादिर्नित्योऽस्ति अत एवैतेऽकारणगुणोत्पन्नाः नत्वेवंरूपाद्या इति भावः। उक्तञ्च महर्षिणा "कारणगुणपूर्वकः कार्यगुणो दृष्ट" इति। ( वै० २।१।२० )॥

---

* स्वं घटरूपं, तदाश्रयो घटः, तत्समवायिनौ कपालौ, तत्समवेतं कपालरूपं, तज्जन्यत्वमित्यर्थः।

(का०) अपाकजास्तु स्पर्शान्ता द्रवत्वं च तथाविधम् ।
स्नेहवेगगुरुत्वैकपृथक्त्वपरिमाणकम् ॥९५॥
स्थितिस्थापक इत्येते स्युः कारणगुणोद्भवाः ।

(मु०) अपाकजास्त्विवति । पाकजरूपादीनां कारणगुणपूर्वकत्वाभावात् अपाकजा इत्युक्तम् । तथाविधमपाकजम् । तथैकत्वमपि बोध्यम् । स्पष्टम् ॥

(प्र० टी०) कारणगुणोत्पन्नगुणानाह—परममूले "अपाकजास्त्व"ति । पाको विलक्षण ( विजातीय ) तेजःसंयोगः । पाकाज्जाताः पाकजाः, न पाकजा अपाकजाः । स्पर्शान्ताः = रूपरसगन्धस्पर्शा इत्यर्थः । तथाविधम् = अपाकजं द्रवत्वं तदाख्यो गुण आद्यस्पन्दनासमवायिकारणं योऽस्तीत्यर्थः । एते अपाकजरूपादयःकारणगुणोद्भवाः स्युः । अत्र "अपाकजा" इति विशेषणं पाकजानां कारणगुणत्वाभावबोधनायेति बोध्यम् । स्पष्टमन्यत् ।

(का०) संयोगश्च विभागश्च वेगश्चैते तु कर्मजाः ॥९६॥

(मु०) कर्मजा इति । यद्यपि कर्मजत्वं न साधर्म्यं घटादावतिव्याप्तेः, संयोगजसंयोगेऽव्याप्तेश्च । तथापि—कर्मजवृत्तिगुणत्वव्याप्यजातिमत्त्वं बोध्यम् । एवमन्यत्राप्यूह्यम् ॥ ९५ ॥ ९६ ॥

(प्र० टी०) कर्मजगुणानाह—परममूले "संयोगश्चे"ति । "कर्मजा" इति कर्म—वक्ष्यमाणलक्षणं तज्जाः कर्मासमवायिकारणका इत्यर्थः । साधर्म्यस्य अव्याप्त्यतिव्याप्ती परिहर्तुमादौ तद्ग्रन्थमवतारयति—"यद्यपी"ति । परिहारप्रकारं दर्शयति—"तथापी"ति । ऊह्यमिति—जातिघटितं लक्षणं कार्यमित्यर्थः ॥ ९५ ॥

(का०) स्पर्शान्तपरिमाणैकपृथक्त्वं स्नेहशब्दके । भवेदसमवायित्वं—

(मु०) स्पर्शान्तेति । [ स्पर्शोऽत्रानुष्णो ग्राह्यः ] एकपृथक्त्वमित्यत्र त्वप्रत्ययस्य प्रत्येकमन्वयादेकत्वं पृथक्त्वं च ग्राह्यम् । पृथक्त्वपदेन चैकपृथक्त्वं विवक्षितम् । भवेदसमवायित्वमिति । घटादिरूपरसगन्धस्पर्शाः कपालादिरूपरसगन्धस्पर्शेभ्यो भवन्ति । एवं—कपालादिपरिमाणादीनां घटादिपरिमाणाद्यसमवायिकारणत्वम् । शब्दस्यापि द्वितीयशब्दं प्रत्यसमवायिकारणत्वम् । एवं स्थितिस्थापकैकपृथक्त्वयोरपि ज्ञेयम् ॥

(प्र० टी०) असमवायिकारणगुणानाह—परममूले "स्पर्शान्ते"ति । स्पर्शोऽन्ते येषां ते स्पर्शान्ताः, एकञ्च पृथक् चैकपृथक् तयोर्भावः एकपृथक्त्वम्, स्पर्शान्ताश्च परिमाणञ्च स्नेहश्च शब्दकश्चेत्येतेषां समाहारः तस्मिन् शब्द एव शब्दक इति स्वार्थे

कः। कार्यगतान् रूपादिगुणान् प्रति कारणगतास्त एव रूपादयः असमवायिनो भवन्ति। यथा घटस्य रूपादिकं प्रति कपालगतरूपादिकमसमवायिकारणमित्याशयेन "स्पर्शान्ते"ति प्रतीकमादाय "ज्ञेय" मित्यन्तं टीकयति। स्पष्टमन्यत्।

(का०)—अथ वैशेषिके गुणे ॥ ९७ ॥

आत्मनः स्यान्निमित्तत्वम्—

(मु०) निमित्तत्वमिति। बुद्ध्यादीनामिच्छादिनिमित्तत्वादिति भावः।

( प्र० टी० ) निमित्तकारणगुणानाह—"अथे"ति। आत्मनः वैशेषिके=विशेषगुणेबुद्ध्यादौ, इच्छादिकम्प्रति निमित्तत्वं=निमित्तकारणत्वं साधर्म्यमित्यर्थः।

(का०)—उष्णस्पर्शगुरुत्वयोः।

वेगेऽपि च द्रवत्वे च संयोगादिद्वये तथा ॥ ९८ ॥

द्विधैव कारणत्वं स्याद्—

( प्र० टी० ) उभयविधगुणानाह—परममूले "उष्णे"ति

( मु० ) द्विधैवेति। असमवायिकारणत्वं निमित्तकारणत्वं च। तथाहि—उष्णस्पर्श उष्णस्पर्शस्यासमवायिकारणं पाकजे निमित्तम्। गुरुत्वं गुरुत्वपतनयोरसमवायिकारणं प्रतिघाते निमित्तम्। वेगो वेगस्यन्दनयोरसमवायी अभिघाते निमित्तम्। द्रवत्वं द्रवत्वस्यन्दनयोरसमवायी संग्रहे निमित्तम्। भेरीदण्डसंयोगः शब्दे निमित्तम्। भेर्याकाशसंयोगोऽसमवायी। वंशदलद्वयविभागः शब्दे निमित्तम्। वंशदलाकाशविभागोऽसमवायीति।

( प्र० टी० ) तदेतत्स्पष्टतया विवृणोति—"असमवायिकारणत्व" मित्यारभ्य "असमवायीति" इत्यन्तेन। संग्रहे=सक्तादिसंयोगविशेषे। सर्वमिदं निगदेनैव व्याख्यातम्।

(का०) अथ प्रादेशिको भवेत्।

वैशेषिका विभुगुणाः संयोगादिद्वयं तथा ॥ ९९ ॥

( मु० ) प्रादेशिकोऽव्याप्यवृत्तिः ॥ ९७ ॥ ९८ ॥ ९९ ॥

( प्र० टी० ) अव्याप्यवृत्तिगुणानाह—"अथे"ति। बुद्ध्यादयः शब्दसंयोगविभागा अव्याप्यवृत्तयः=आश्रयैकदेशवर्त्तिन इत्यर्थः। स्पष्टकम्।

(का०) चक्षुर्ग्राह्यं भवेद्रूपं द्रव्यादेरुपलम्भकम्।

चक्षुषः सहकारि स्याच्छुक्लादिकमनेकधा ॥ १०० ॥

( प्र० टी० ) इदानीं रूपादीन् यथोद्देशं लक्षयति, तत्र तावत् रूपस्य लक्षण-

माह—परममूले 'चक्षुर्ग्राह्यमि'ति । चक्षुर्मात्रग्राह्यजातिमदित्यर्थः । चक्षुर्मात्रग्राह्य-विशेषगुणत्वं रूपस्य लक्षणम् । बुद्ध्यादिवारणाय 'चक्षुर्ग्राह्ये'ति । सङ्ख्यावारणाय 'विशेषे'ति । स्नेहसांसिद्धिकद्रवत्वयोरतिव्याप्तिवारणाय 'मात्र'पदं दत्तम् । द्रव्यादेः= द्रव्यगुणकर्मसामान्यानाम्, उपलम्भकम् = उपलब्धिकारणम् प्रत्यक्षे कारणमित्यर्थः । बहिर्द्रव्यचाक्षुषप्रत्यक्षे रूपस्य कारणतया रूपं विना तत्सर्वमेवाप्रत्यक्षमिति भावः । एतदेवाह—"चक्षुष" इति । चाक्षुषप्रत्यक्षे जननीये चक्षुषः सहकारिकारणत्वमित्यर्थः । तच्च-नानाप्रकारमित्याह—"शुक्लादिक"मिति ।

( मु० ) चक्षुरिति । रूपत्वजातिस्तु प्रत्यक्षसिद्धा । रूपशब्दोल्लेखिनी प्रतीतिर्नास्तीति चेन्मास्तु रूपशब्दप्रयोगस्तथापि नीलपीतादिष्वनुगत-जातिविशेषोऽनुभवसिद्ध एव । रूपशब्दाप्रयोगेऽपि नीलो वर्णः पीतो वर्ण इति *वर्णविशेषोल्लेखिनी प्रतीतिरस्त्येव । एवं नीलत्वादिकमपि प्रत्यक्षसिद्धम् । न चैकैका एव नीलरूपादिव्यक्तय इत्येकव्यक्तिवृत्तित्वा-न्नीलत्वादिकं न जातिरिति वाच्यं, नीलो नष्टो रक्त उत्पन्न इत्यादिप्रतीते-र्नीलादेरुत्पादविनाशशालितया नानात्वात् । अन्यथा एकनीलनाशे जग-दनीलमापद्येत । नच नीलसमवायरक्तसमवाययोरेवोत्पादविनाशविषय-कोऽसौ प्रत्यय इति वाच्यम्, प्रतीत्या समवायानुल्लेखात् । नच स एवायं नील इति प्रत्ययाल्लाघवाच्चैक्यमिति वाच्यम्, प्रत्यक्षस्य तज्जातीय-विषयकत्वात् सैवेयं गुर्जरीति वत् । लाघवं तु प्रत्यक्षबाधितम् । अन्यथा घटादीनामप्यैक्यप्रसङ्गात् । उत्पादविनाशबुद्धेः समवायालम्बनत्वापत्ते-रिति । एतेन रसादिकमपि व्याख्यातम् ।

( प्र० टी० ) कारिकां सिद्धान्तप्रदर्शनेन व्याख्यातुं प्रतीकमादत्ते—"चक्षु" रितीति । यदि रूपत्वजातौ किं मानमिति शङ्का स्यात्तदोत्तरमाह—"रूपत्वजाति" स्त्विति । संयुक्तसमवेतसमवायसम्बन्धेनेति शेषः । "रूपं रूप"मित्यनुगतप्रत्यय एव रूपत्वजातौ प्रत्यक्षं प्रमाणमिति भावः । शङ्कते—'रूपशब्दोल्लेखिनी'ति । उल्लेख आकारः । यथा नीलपीतादिशब्दोल्लेखः सर्वसाधारणः न तथा रूपशब्दोल्लेखः, किन्तु नीलपीतादिव्यक्तय एव प्रतीयन्ते इति शङ्काकर्तुराशयः । समाधत्ते—"तथापी"ति । तदेतच्चिन्त्यम् "नीलो वर्ण" इतिवद् 'नीलरूपशब्दोल्लेखिन्या अपि प्रतीतेरनुभव-सिद्धत्वात् नीलत्वादिजातावपि प्रत्यक्षं प्रमाणमतिदिशति—'एवमि'ति । नीलत्वादिकं न जातिरित्याक्षिपति—"नचे"ति । आमनिक्षिप्ते घटादौ प्रतीतिमादाय परिहरति— "नीलो नष्ट"इत्यादिना । विपक्षे दण्डमाह—"अन्यथे"ति । नीलादीनामेकव्यक्तित्व इत्यर्थः । दुराग्रहमुखः पुनः शङ्कते—'नच नीलेत्यादिना' । 'नीलो नष्टो रक्त उत्पन्न' इति प्रतीतिः समवायस्यैव उत्पत्तिविनाशौ अवगाहते नतु नीलरक्तरूपयोरिति, तथाच

* क्वचित्—"वर्णशब्दोल्लेखिनी" इति पाठः ।

नीलपीतादिव्यक्तिषु नानात्वं नोचितमिति शङ्काग्रन्थार्थः। समाधत्ते--'प्रतीत्ये'ति। समवायस्य नित्यत्वादपीति हृदयम्। स एव लाघवमनुसरन् नीलैक्यमुट्टङ्कयति--"नचे"ति। तत्र प्रत्यभिज्ञारूपां युक्तिमाह--"स एवायं नील"इति। सिद्धान्ती रहस्यमुद्घाटयति--"प्रत्यक्षस्ये"ति। नीलसजातीयविषयिणी सा प्रत्यभिज्ञा नतु नीलैक्यमिति भावः तदेतत् दृष्टान्तेन समीकरोति सिद्धान्ती--"सैवेय"मिति। गुर्जरदेशोद्भवौषधविशेषोगुर्जरीति, मूलचन्द्रिकाकृतः। तत्रत्यानारीति केचित्। ननु लाघवादेवनीलादिव्यक्त्यैक्यं सेत्स्यतिइत्याह-"लाघवन्त्वि"ति। प्रत्यक्षबाधितम्="नीलो नष्टः रक्त उत्पन्न" इति प्रत्यक्षबाधितमित्यर्थः। अन्यथा=बाधितलाघवेनापि ऐक्याभ्युपगमे, घटादिव्यक्तीनामप्यैक्यं प्रसज्येतेति भावः। सिद्धान्ती स्वाभिसन्धिमुद्घाटयति—"उत्पादविनाशबुद्धे"रिति। यथा नीलैक्यं मत्वा तत्समवायस्यैवोत्पत्तिविनाशौ मन्यसे तथा घटैकव्यक्तिवादेऽपि कुतो नाभ्युपगमवानसि। उक्तं सिद्धान्तमन्यत्रापि ातिदिशति--"एतेने"ति। ईदृशजातिसाधकप्रमाणेनेत्यर्थः। रसादिकम्=रसत्वादिकम्। आदिना गन्धत्वादिपरिग्रहः।

(मु०) चक्षुर्ग्राह्यमिति। चक्षुर्ग्राह्यविशेषगुणत्वमित्यर्थः। एवमग्रेऽपे। द्रव्यादेरिति। उपलम्भकमुपलब्धिकारणम्। इदमेव विवृणोति। चक्षुष इति। द्रव्यगुणकर्मसामान्यानां चाक्षुषप्रत्यक्षं प्रति उद्भूतरूपं कारणम्। शुक्लादिकमनेकधेति। तच्च रूपं शुक्लनीलपीतरक्तहरितकपिशकर्बुरादिभेदादनेकप्रकारकं भवति।

(प्र० टी०) चक्षुर्ग्राह्यमितीत्यादि कृतव्याख्यानमधस्तात्। 'एवमग्रेपी'ति-रसस्पर्शलक्षणेऽपि एषैव दिगनुसरणीयेत्यर्थः।

(मु०) ननु कथं कर्बुरमतिरिक्तरूपं भवति। इत्थं, नीलपीताद्यवयवारब्धोऽवयवी न तावन्नीरूपोऽप्रत्यक्षप्रसङ्गात्। नापि व्याप्यवृत्ति नीलादिरूपमुत्पद्यते पीतावच्छेदेनापि नीलोपलब्धिप्रसङ्गात्। नाप्यव्याप्यवृत्तिनीलादिकमुत्पद्यते व्याप्यवृत्तिजातीयगुणानामव्याप्यवृत्तित्वे विरोधात्। तस्मान्नानाजातीयरूपैरवयविनि विजातीयं चित्रं रूपमारभ्यते। अत एवैकं चित्रमित्यनुभवोऽपि। नानारूपकल्पने गौरवात्।

(प्र० टी०) चित्ररूपविषये शङ्कते—"नन्वि"ति। कर्बुरचित्रमित्यर्थः। किन्तु समुदाचरद्वृत्ति नीलपीतादिकमेव चित्रसंज्ञां भजते नातिरिक्तं रूपमस्ति। समाधत्ते—"इत्थमि"ति। अनेन प्रकारेण तदतिरिक्तमेव मन्तव्यं भवतीत्यर्थः। तमेव तस्य अतिरिक्ततासाधकप्रकारं दर्शयति—"नीलपीते"ति। नीलपीताद्यवयवारब्धः=नीलपीताद्यवयवोत्पन्नः न तावन्नीरूपः तत्र हेतुमाह—अप्रत्यक्षत्वप्रसङ्गादि"ति। द्रव्यचाक्षुषप्रत्यक्षंप्रति उद्भूतरूपस्य कारणत्वादिति भावः। व्याप्य-

वृत्ति=सर्वदेशवृत्ति । ननु—चित्रपटादावव्याप्यवृत्ति नीलादिकमेवोत्पद्यतां को दोष इत्याह "नाप्यव्याप्यवृत्ती" ति । तत्र हेतुं विरोधमाह "व्याप्यवृत्ती" ति । सिद्धान्तेनोपसंहरति—"तस्मादि" ति । "विजातीय" मिति—नीलाद्यतिरिक्तमित्यर्थः । अत्रार्थे "एकं चित्ररूपम्" इत्यनुभवमपि प्रमाणयति—"अत एवे" ति । चित्रानङ्गीकारे दोषान्तरमप्याह—"नाने" ति । "गौरवादि" ति—चित्रमित्याकारकप्रतीतिविषये अनेकरूपकल्पनायामुपस्थितिकृतं गौरवमपीति भावः ।

(मु०) इत्थं च नीलादीनां पीताद्यारम्भे प्रतिबन्धकत्वकल्पनादवयविनि न पीताद्युत्पत्तिः । एतेन स्पर्शोऽपि व्याख्यातः । रसादिकमपि नाव्याप्यवृत्ति किन्तु नानाजातीयरसवदवयवैरारब्धेऽवयविनि रसाभावेऽपि न क्षतिः । तत्र रसनयाऽवयवरस एव गृह्यते, रसनेन्द्रियादीनां द्रव्यग्रहे सामर्थ्याभावात्, अवयविनो नीरसत्वेऽपि क्षतेरभावात् । नव्यास्तु तत्राव्याप्यवृत्त्येव नानारूपं, नीलादेः पीतादिप्रतिबन्धकत्वकल्पने गौरवात् । अतएव—

लोहितो यस्तु वर्णेन मुखे पुच्छे च पाण्डुरः ।
श्वेतः खुरविषाणाभ्यां स नीलो वृष उच्यते ॥

इत्यादिशास्त्रमप्युपपद्यते । नच व्याप्याव्याप्यवृत्तिजातीययोर्द्वयोर्विरोधः, मानाभावात् । नच लाघवादेकं रूपम्, अनुभवविरोधात् । अन्यथा घटादेरपि लाघवादैक्यं स्यात् । एतेन स्पर्शादिकमपि व्याख्यातमिति वदन्ति ॥ १०० ॥

(प्र० टी०) "इत्थञ्चे" ति—लाघवेन चित्ररूपसिद्धावित्यर्थः । "प्रतिबन्धकत्वकल्पनादि" ति । अस्यायमाशयः—समवायेन नीलम्प्रति स्वसमवायिसमवेतत्वसम्बन्धेन नीलातिरिक्तरूपत्वेन पीतरूपं प्रति पीतातिरिक्तरूपत्वेन नीलादिरूपव्यक्तीनां प्रतिबन्धकतेतिरीत्या प्रतिबध्यप्रतिबन्धकभावकल्पनात् । अवयविनि=घटादौ न पीताद्युत्पत्तिः । तथाच तेषां प्रत्यक्षत्वाभावः स्यादिति भावः । उक्तन्यायं स्पर्शेऽप्यतिदिशति—"एतेने" ति । कोमलकठिनस्पर्शवदवयवाभ्यामारब्धे घटादौ स्पर्शानङ्गीकारे घटस्य स्पार्शनप्रत्यक्षानापत्तिरित्यादिरीत्या चित्रस्पर्शोऽपि आवश्यक इति भावः ।

ननु—रूपवद्रसादिकमपि चित्रमङ्गीकर्त्तव्यमित्याशङ्कायामाह—"रसादिक" मिति । नाव्याप्यवृत्ति=नहि किञ्चिदवयवावच्छेदेनोत्पत्तिमत् । रूपात् रसस्य वैलक्षण्यमाह—"किन्त्वि" ति । नन्ववयविनि रसो न स्यात्तर्हि रसवद्द्रव्यस्य कथं प्रत्यक्षत्वम्? तत्रोत्तरमाह—"अवयविनी" ति । कथं रसनया रसग्रहणमिति शङ्कायां सिद्धान्तं दर्शयति—"तत्रे" ति । चित्ररसस्य प्रतीतिस्तु अवयवगतैरनेके-

रसैरेव भवतीति भावः । अत्र हेतुमाह—"रसनेन्द्रियादीनामि"ति । आदिपदेन घ्राणश्रोत्रयोर्ग्रहणं ज्ञेयम् । तत्प्रभावमुपसंहरति—"अवयविन" इति ।

अत्र चिन्तामणिकारादिनव्यनैयायिकानां मतमाह—"नव्यास्त्वि"ति । अयमेतेषामभिप्रायः—नानाजातीयरूपवत्कपालारब्धे घटे पीतकपालावच्छेदेन नीलापत्तिवारणाय न पूर्वोक्तः प्रतिबध्यप्रतिबन्धकभावः कल्प्यते, किन्त्ववच्छेदकतासम्बन्धेन नीलादिकं प्रति समवायेन नीलादेः कारणत्वं कल्प्यते । चित्ररूपाङ्गीकारे तु समवायेन नीलादिकं प्रति स्वाश्रयसमवेतत्वसम्बन्धेन नीलत्वादिना हेतुत्वस्य पूर्वोक्तप्रतिबध्यप्रतिबन्धकभावस्य च कल्पनाद्गौरवमेव, तस्मान्न चित्रं रूपं पृथगस्ति । अत्र स्कन्दपुराणवाक्यं प्रमाणयितुमाह—"अत एवे"ति । "लोहितो यस्त्वि"ति । यद्याचार्यैश्चित्रं रूपं पृथगमंस्यत तदा वृषोत्सर्गप्रकरणे "चित्रं वृषमुत्सृजेत्" इत्येवावक्ष्यदिति भावः । शङ्कते—"नचे"ति । परिहरति—"मानाभावादि"ति । व्याप्यवृत्तिस्वभावा रूपाद्या नाव्याप्यवृत्तितावच्छेदेनोत्पद्यन्ते इत्यत्र प्रमाणाभाव इत्यर्थः । विरुद्धमिति क्व नः सम्प्रत्ययो यत्प्रमाणासहिष्णु भवेत्, यत्तु प्रमाणेन यथोपलभ्यते तत्तथा सम्भावितविरोधमपि कथं वस्तुतो विरुद्धं स्यात्? अन्यथासकलप्रमाणव्यवहारानाश्वासप्रसङ्गः स्यादिति भावः । पुनराक्षिप्य प्रतिक्षिपति—"नच" इत्यारभ्य "अनुभवविरोधाद्" इत्यन्तेन । एकरूपम्=चित्रमित्यर्थः । "अयं नीलाद्यनेकवर्णयुक्तोऽवयवी" इत्यनुभवविरोधादित्यर्थः । विपक्षे प्रतिवन्दीमप्याह—"अन्यथे"ति । उक्तन्यायं चित्रस्पर्शादिखण्डनेऽप्यतिदिशति—"एतेने"ति । "वदन्ति" इतिकथनेन नेदं स्वमतमिति सूचितम् ॥ १०० ॥

(का०) जलादिपरमाणौ तन्नित्यमन्यत्सहेतुकम् ॥

(मु०) जलादीति । जलपरमाणौ तेजःपरमाणौ च रूपं नित्यम् । पृथिवीपरमाणुरूपं तु न नित्यं तत्र पाकेन रूपान्तरोत्पत्तेः । नहि घटस्य पाकानन्तरं तदवयवोऽपक्व उपलभ्यते । नहि रक्तकपालस्य कपालिका नीलावयवा भवति । एवं क्रमेण परमाणावपि पाकसिद्धेः । अन्यज्जलतेजःपरमाणुरूपभिन्नं रूपं सहेतुकं जन्यम् ।

(प्र० टी०) "जलादी"तिकारिकांशं व्याख्याति—"जलपरमाणावि"ति । अत्रार्थे पारमर्षे सूत्रे अपि भवतः—"पृथिव्यादिरूपरसगन्धस्पर्शा द्रव्यानित्यत्वादनित्याश्च" ( वै० । अ० ७ । आ० १ । सू० २ ) "अनित्येष्वनित्या द्रव्यानित्यत्वात्" (अ० ७ । आ० १ । सू० ४) इति । ननु—नित्ये द्रव्ये यदि नित्या रूपादयः कथं तर्हि पृथिवीपरमाणौ रूपाद्या अनित्या अङ्गीकृताः? इति शङ्कायां सिद्धान्तबीजं दर्शयति—"पृथिवीपरमाणुरूप" मित्यादि । स्पष्टमन्यत् ।

(का०) रसस्तु रसनाग्राह्यो मधुरादिरनेकधा ॥ १०१ ॥

सहकारी रसज्ञाया नित्यतादि च पूर्ववत् ।

( प्र० टी० ) क्रमप्राप्तं रसं निरूपयति—परममूले "रसस्त्वि"ति । "रसनाग्राह्यो गुणो रस" इति लक्षणम् । रसत्वे रसाभावेचातिव्याप्तिवारणाय "गुण" पदम् । रसज्ञायाः=जिह्वायाः, सहकारी=सहायकः । रासनज्ञाने सहकारिकारणमित्यर्थः । पूर्ववत्=नित्यानित्यत्वे च पूर्ववदित्यर्थः । जलपरमाणौ रसो नित्यः जन्यजलपृथिव्योश्चानित्य इत्यर्थः ।

( मु० ) रसं निरूपयति—रसस्त्विति । सहकारीति । रासनज्ञाने रसः कारणमित्यर्थः । पूर्ववदिति । जलपरमाणौ रसो नित्योऽन्यः सर्वोऽपि रसोऽनित्य इत्यर्थः ॥

"रसस्त्विती"ति—स्पष्टम् ।

[का०] घ्राणग्राह्यो भवेद्गन्धो घ्राणस्यैवोपकारकः ॥१०२॥

( मु० )घ्राणग्राह्य इति । उपकारक इति । घ्राणजन्यज्ञाने कारणमित्यर्थः । सर्वो गन्धोऽनित्य एव ॥ १०१ ॥ १०२ ॥

सौरभश्चासौरभश्च स द्वेधा परिकीर्तितः ।

( प्र० टी० ) गन्धं निरूपयति--"घ्राणग्राह्य" इति । "घ्राणग्राह्यो गुणो गन्ध" इत्यर्थः । गन्धत्वेऽतिव्याप्तिवारणाय "गुण"पदम् । स्पष्टमन्यत् । "सौरभस्त्वि"-ति—स गन्धो द्वेधा द्विप्रकारकः । सौरभः=सुरभिः । "प्रज्ञादिभ्यश्च" ( पाणि० ५ । ४ । ३८ ) इति सूत्रेण स्वार्थेऽण् ।

(का०) स्पर्शस्त्वगिन्द्रियग्राह्यस्त्वचः स्यादुपकारकः ॥१०३॥

( मु० )स्पर्शं निरूपयति—स्पर्श इति । उपकारक इति । स्पार्शनप्रत्यक्षे स्पर्शः कारणमित्यर्थः ॥ १०३ ॥

( प्र० टी० ) "स्पर्शस्त्वि"ति—"त्वगिन्द्रियमात्रग्राह्यो गुणः स्पर्श" इत्यर्थः । स्पर्शत्वेऽतिव्याप्तिवारणाय "गुण"पदम् । संयोगादावतिव्याप्तिवारणाय "मात्र"पदम् ।

(का०) अनुष्णाशीतशीतोष्णभेदात्स त्रिविधो मतः ।

काठिन्यादि क्षितावेव नित्यतादि च पूर्ववत् ॥१०४॥

( मु० ) अनुष्णाशीतेति । पृथिव्यां वायौ च स्पर्शोऽनुष्णाशीतः । जले शीतः । तेजस्युष्णः । काठिन्येति । कठिनसुकुमारस्पर्शौ पृथिव्यामेवेत्यर्थः । कठिनत्वादिकं तु न संयोगगतो जातिविशेषः, चक्षुर्ग्राह्यत्वापत्तेः । पूर्ववदिति । जलतेजोवायुपरमाणुस्पर्शा नित्यास्तद्भिन्नास्त्वनित्या इत्यर्थः ॥ १०४ ॥

( प्र० टी० ) स्पर्शभेदानाह—"अनुष्णाशीते"ति परममूले । "कठिनत्वा-

दिक"मिति—आदिपदात्कोमलश्च स्पर्शः पृथिव्यामेव। "कठिनः संयोग" इति प्रतीतिस्तु कठिनस्पर्शवद्द्रव्यप्रतियोगिकत्वमेवावगाहत इति भावः। स्पष्टमन्यत् ॥१०४॥

[का०] एतेषां पाकजत्वं तु क्षितौ नान्यत्र कुत्रचित्।
तत्रापि परमाणौ स्यात्पाको वैशेषिके नये ॥ १०५ ॥

( मु० ) एतेषामिति। एतेषां रूपरसगन्धस्पर्शानाम्। नान्यत्रेति। पृथिव्यां हि रूपरसगन्धस्पर्शपरावृत्तिरग्निसंयोगादुपलभ्यते। नहि शतधापि ध्मायमाने जले रूपादिकम्पपरिवर्तते। नीरे सौरभमौष्ण्यं चान्वयव्यतिरेकाभ्यामौपाधिकमेवेति निर्णीयते। पवनपृथिव्योः शीतस्पर्शादिवत्। तत्रापि पृथिवीष्वपि मध्ये परमाणावेव रूपादीनां पाक इति वैशेषिका वदन्ति।

( प्र० टी० ) रूपरसादिषु विशेषान्तरमप्याह—"एतेषामि"ति। अन्वयव्यतिरेकाभ्यामिति—पृथिवीसत्त्वे सौरभभानं पृथिव्यभावे सौरभभानाभाव इत्यन्वयव्यतिरेकौ ताभ्यामित्यर्थः। *वैशेषिके नये=पीलुपाकवादिमते। एषामयमाशयः—पाकार्थमपक्वघटो यदा महानसे निधीयते तदा तदन्तःप्रविष्टाभिर्वेगवदग्निज्वालाभिरवयवविभागेन पूर्वावयवसंयोगे विनष्टे "असमवायिकारणविनाशाद्भावकार्यविनाश" इति नियमात् श्यामघटे नष्टे पुनः परमाणुषु रक्तरूपोत्पत्त्या द्व्यणुकादिक्रमेण रक्तघटोत्पत्तिर्भवति इत्याशयेनैव "तेषा मयमाशय" इत्याद्यग्रिमं ग्रन्थमवतारयति। पाको रूपादीनां परावृत्तिः।

( मु० ) तेषामयमाशयः। अवयविनाऽवष्टब्धेष्ववयवेषु पाको न सम्भवति, परन्तु वह्निसंयोगेनावयविषु विनष्टेषु स्वतन्त्रेषु परमाणुषु पाकः। पुनश्च पक्वपरमाणुसंयोगाद्द्व्यणुकादिक्रमेण पुनर्महावयविपर्यन्तमुत्पत्तिः। तेजसामतिशयितवेगवशात्पूर्वव्यूहनाशो झटिति व्यूहान्तरोत्पत्तिश्चेति।

( प्र० टी० ) अधस्ताद्व्याख्यातप्रायमपि किञ्चिद्व्याक्रियते—अवयविना=घटपटादिना, अवष्टब्धेषु=आवृतेपु निरुद्धेषु वा, अवयवेषु=कपालादिषु, पाकः=रूपपरावृत्तिहेतुस्तेजःसंयोगः, न सम्भवति=नार्हत्येव भवितुमित्यर्थः। प्रतिबन्धे सति कथं पाकः स्यात्?। अर्थात् रूपादिनाशं प्रति साक्षात्परम्परया साधारणतः सर्वावयवावच्छेदेन कारणत्वम्, तेनावयविनावरुद्धेपु अवयवेषु अवयविनि पूर्वरूपनाशः कथं स्यात्। कथञ्च तदनाशे रूपान्तरमुत्पद्येत, सर्वावयवावच्छेदेन तेजःसंयोगभावादिति भावः। "अवयविषु विनष्टेष्वि"ति—घटाद्यारम्भककपालादिपरमाणुपर्यन्तेषु अग्नि-

* द्वित्वे च पाकजोत्पत्तौ विभागे च विभागजे।
यस्य न स्खलिता बुद्धिस्तं वै वैशेषिकं विदुः ॥

संयोगेन पूर्वोक्तरीत्या घटादिद्व्यणुकपर्यन्तेषु नाशसम्भवादिति भावः। स्वतन्त्रेषु=कार्यद्रव्यध्वंसविशिष्टेषु। ननु—तत्र संस्थानभेदादिः कथं न प्रतीयते इत्यत आह—"तेजसा"मिति। व्यूहः=संस्थानम्।

( मु० ) अत्र द्व्यणुकादिविनाशमारभ्य कतिभिः क्षणैः पुनरुत्पत्त्या रूपादिमद्भवतीति शिष्यबुद्धिवैशद्यार्थं क्षणप्रक्रिया।

( प्र० टी० ) बुद्धिवैशद्यम्=स्फुटसुबोधः। द्व्यणुकनाशादिरूपाद्युत्पत्तिक्षणनिरूपणं क्रियत इति शेषः।

( मु० ) तत्र विभागजविभागानङ्गीकारे नवक्षणा। तदङ्गीकारे तु विभागः किञ्चित्सापेक्षो विभागं जनयेत्। निरपेक्षस्य तत्त्वे कर्मत्वं स्यात्। संयोगविभागयोरनपेक्षं कारणं कर्मेति वैशेषिकसूत्रम्। स्वोत्तरोत्पन्नभावान्तरानपेक्षत्वं तस्यार्थः। अन्यथा कर्मणोऽप्युत्तरसंयोगोत्पत्तौ पूर्वसंयोगनाशापेक्षणादव्याप्तिः स्यात्।

( प्र० टी० ) "तत्रे"ति—क्षणप्रक्रियायां विचार्यमाणायामित्यर्थः। विभागजविभागानङ्गीकारे=कारणाकारणविभागात् कार्याकार्यविभागवत् कारणमात्रविभागात् कारणाकारणविभागानङ्गीकार इत्यर्थः। द्रव्यारम्भकसंयोगप्रतिद्वन्द्विविभागजनकक्रियायास्तद्नारम्भकसंयोगप्रतिद्वन्द्विविभागाजनकत्वनियमे मानाभावादिति भावः। तदङ्गीकारे=विभागाङ्गीकारे। विभागः किञ्चित्सापेक्षः=स्वसमवायिनिष्ठक्रियासापेक्ष इत्यर्थः। तत्त्वे=विभागजनकत्वे, कर्मत्वं स्यात्=कर्मलक्षणस्यातिव्याप्तिः स्यात्, अर्थात् पदार्थान्तरनिरपेक्षतया विभागजनकत्त्वेकं कर्मैवास्ति नान्यत्। अत्र विषयेऽर्थतः कणादसूत्रं पठति—"संयोगविभागयो"रिति। सूत्रन्तु—एकद्रव्यमगुणं संयोगविभागेष्वनपेक्षकारणमिति कर्मलक्षणम्, (वै० १।१।१६) सूत्रस्थं लक्षणं निष्कर्षयति—"स्वोत्तरोत्पन्ने"ति। "स्व" पदेन कर्मग्रहणम्। यदा कर्म संयोगं वा विभागं वा जनयति तदा स्वोत्तरभाविनः पदार्थान्तरस्यापेक्षां न करोति, तस्मात्पूर्वसंयोगनाशसापेक्षत्वेऽपि नाव्याप्तिरिति भावः।

( मु० ) तत्र यदि द्रव्यारम्भकसंयोगविनाशविशिष्टं कालमपेक्ष्य विभागजविभागः स्यात्तदा दशक्षणा। अथ द्रव्यनाशविशिष्टं कालमपेक्ष्य विभागजविभागः स्यात्तदैकादशक्षणा।

( प्र० टी० ) तत्र=अस्मिन्प्रकरण इति फलितार्थः। "द्रव्यारम्भके"ति—द्व्यणुकादि यद् द्रव्यं, तदारम्भको यः संयोगः, तस्य यो विनाशो ध्वंसः, तेन विशिष्टः उपलक्षित इत्यर्थः, तं कालमपेक्ष्य यदि विभागजविभागः स्यात् तदा दशक्षणा प्रक्रिया भवति। अर्थात् तदा अवयविद्रव्यं पुनर्दशसु क्षणेषु रूपादिमद्भवति। अथ आरम्भकसंयोगध्वंसमनपेक्ष्य तत्स्थाने द्रव्यध्वंसविशिष्टं कालमपेक्ष्य विचारणा स्यात् तदैका-

दशक्षणा प्रक्रिया ।

( मु० ) तथा हि—अथ नवक्षणा । वह्निसंयोगात्परमाणौ कर्म । ततः परमाण्वन्तरेण विभागः । तत आरम्भकसंयोगनाशः । ततो द्व्यणुकनाशः । १ । ततः परमाणौ श्यामादिनाशः । २ । ततो रक्ताद्युत्पत्तिः । ३ । ततो द्रव्यारम्भानुगुणा क्रिया । ४ । ततो विभागः । ५ । ततः पूर्वसंयोगनाशः । ६ । तत आरम्भकसंयोगः । ७ । ततो द्व्यणुकोत्पत्तिः । ८ । ततो रक्ताद्युत्पत्तिः । ९ ।

( प्र० टी० ) तामेतां प्रक्रियां नवादिक्षणप्रक्रमेण वर्णयितुमाह—"तथाही"ति । वह्निसंयोगात्=पाकादित्यर्थः । परमाणौ कर्म=द्व्यणुकारम्भकपरमाण्वोर्मध्ये एकस्मिन् परमाणौ कर्म अथवा परमाणुद्वये कर्म । परमाण्वन्तरेण=द्व्यणुकारम्भकपरमाण्वन्तरेण विभागः । "आरम्भके"ति—द्व्यणुकारम्भकेत्यर्थः । "ततः परमाणावि"ति—परमाणुगतरूपनाशं प्रति द्व्यणुकात्मकद्रव्यस्य प्रतिबन्धकतया तत्पूर्वं श्यामनाशासम्भवादिति भावः । प्रथमक्षणस्य गणना तु सर्वत्र द्व्यणुकनाशमारभ्यैव कर्त्तव्या "द्व्यणुकविनाशमारभ्ये"ति अधस्तात्स्वयमुक्तत्वात् । शिष्टं स्पष्टम् ।

( मु० ) ननु श्यामादिनाशक्षणे रक्तोत्पत्तिक्षणे वा परमाणौ द्रव्यारम्भानुगुणा क्रियास्त्विति चेन्न, अग्निसंयुक्ते परमाणौ यत्कर्म तद्विनाशमन्तरेण गुणोत्पत्तिमन्तरेण च परमाणौ क्रियान्तराभावात्कर्मवति कर्मान्तरानुत्पत्तेर्निर्गुणे द्रव्ये द्रव्यारम्भानुगुणक्रियानुपपत्तेश्च । तथापि परमाणौ श्यामादिनिवृत्तिसमकालं रक्ताद्युत्पत्तिः स्यादिति चेन्न, पूर्वरूपादिध्वंसस्यापि रूपान्तरे हेतुत्वात् । इति नवक्षणा ॥

( प्र० टी० ) शङ्कते—"नन्वि"ति । श्यामादिनाशक्षणे = द्वितीयक्षण इत्यर्थः । रक्तोत्पत्तिक्षणे = तृतीयक्षणे इत्यर्थः । "द्रव्यारम्भे"ति—द्व्यणुकादिद्रव्योत्पत्त्यनुकूला क्रिया = कर्मेत्यर्थः । खण्डयति—"नेति" । "अग्निसंयुक्त" इति । तेजःसंयुक्ते परमाणौ यत्कर्म, तद्विनाशमन्तरेण = तस्य विनाशं विना । द्व्यणुकविनाशोत्पत्तिक्षणोत्पत्तिकोत्तरसंयोगेन श्यामनाशक्षण एव पूर्वक्रियानाश इति भावः । तत्र हेतुमाह—"कर्मवती" ति । कर्मान्तरानुदयेन कर्मोत्पत्तौ कर्मणः प्रतिबन्धकत्वकल्पनादिति भावः । गुणोत्पत्तिमन्तरेण कर्मानुत्पत्तौ हेतुमाह—"निर्गुण" इति । पुनः शङ्कते—"तथापी" ति । समाधत्ते—"नेति" । पूर्वरूपसत्त्वं रूपान्तरोत्पत्तिप्रतिबन्धकमिति भावः । इति नवक्षणा प्रक्रिया ।

( मु० ) अथ दशक्षणा । सा च आरम्भकसंयोगविनाशविशिष्टं कालमपेक्ष्य विभागेन विभागजनने सति स्यात् । तथा हि । वह्निसंयोगाद् द्व्यणुकारम्भके परमाणौ कर्म । ततो विभागः । तत आरम्भकसंयोग-

नाशः। ततो द्व्यणुकनाशविभागजविभागौ। १। ततः श्यामनाशपूर्वसंयोगनाशौ। २। ततो रक्तोत्पत्त्युत्तरसंयोगौ। ३। ततो वह्निनोदनजन्यपरमाणुकर्मणो नाशः। ४। ततोऽदृष्टवदात्मसंयोगाद् द्रव्यारम्भानुगुणा क्रिया। ५। ततो विभागः। ६। ततः पूर्वसंयोगनाशः। ७। तत आरम्भकसंयोगः। ८। ततो द्व्यणुकोत्पत्तिः। ९। ततो रक्तोत्पत्तिः। १०॥

( प्र० टी० ) दशक्षणां प्रक्रियां वक्तुमारभते—"अथे"ति। पूर्वरीत्यैव व्याख्यातव्यम्। स्पष्टञ्च।

[ मु० ] अथैकादशक्षणा। वह्निसंयोगात्परमाणौ कर्म। ततो विभागः। ततो द्रव्यारम्भकसंयोगनाशः। ततो द्व्यणुकनाशः। १। ततो द्व्यणुकनाशविशिष्टं कालमपेक्ष्य विभागजविभागश्यामनाशौ। २। ततः पूर्वसंयोगनाशरक्तोत्पत्ती। ३। तत उत्तरसंयोगः। ४। ततो वह्निनोदनजन्यपरमाणुकर्मनाशः। ५। ततोऽदृष्टवदात्मसंयोगाद् द्रव्यारम्भानुगुणा क्रिया। ६। ततो विभागः। ७। ततः पूर्वसंयोगनाशः। ८। ततो द्रव्यारम्भकोत्तरसंयोगः। ९। ततो द्व्यणुकोत्पत्तिः। १०। ततो रक्ताद्युत्पत्तिः। ११ इति॥

( प्र० टी० ) एकादशक्षणां प्रक्रियां वक्तुमारभते—"अथे"ति। स्पष्टम्।

[ मु० ] मध्यमशब्दवदेकस्मादग्निसंयोगान्न रूपनाशोत्पादौ तावत्कालमेकस्याग्नेरस्थिरत्वात्। किंच नाशक एव यद्युत्पादकस्तदा नष्टे रूपादावग्निनाशे नीरूपश्चिरं परमाणुः स्यात्। उत्पादकश्चेन्नाशकस्तदा रक्तोत्पत्तौ तदग्निनाशे रक्ततरता न स्यात्।

( प्र० टी० ) ननु एकस्मादेव अग्निसंयोगात् पूर्वरूपनाशो रूपान्तरोत्पत्तौ च लाघवमेवानुसर्त्तव्यं मित्याशङ्कायामाह—"मध्यमे"ति। अयमभिसन्धिः। यथा आदिममन्तञ्च शब्दं वर्जयित्वा मध्यमवर्तिनो यावन्तः शब्दाः तेषां स्वपूर्वशब्दनाशं प्रति, स्वोत्तरवर्त्तिशब्दोत्पत्तिं प्रति च हेतुभावोऽस्ति न तथा प्रकृते एकस्यैवाग्निसंयोगस्य पूर्वरूपनाशं रूपान्तरोत्पत्तिंप्रति च कारणता। अत्रार्थे हेतुमाह—"तावत्कालमि"त्यादि। युक्त्यन्तरमप्याचष्टे—"किञ्चे"ति। स्पष्टमन्यत्। "रक्ततरते"ति—रूपनाशकतावच्छेदकं विलक्षणाग्निसंयोगत्वं तदेव यदि उत्पादकतावच्छेदकम्? तदा कार्यतावच्छेदकमपि सामान्यरूपेण पृथिवीपरमाणुरूपत्वं स्वीकर्त्तव्यं भवता, तथासति क्वचिद्रक्ततरता क्वचिद्रक्ततमतेति वैचित्र्यं परमाणौ न स्यात् कार्यवैचित्र्यस्य कारणतावच्छेदकभेदायत्तत्वादिति भावः।

( मु० ) अथ परमाण्वन्तरे कर्मचिन्तनात्पञ्चमादिक्षणेऽपि गुणोत्पत्तिः। तथाहि—एकत्र परमाणौ कर्म। ततो विभागः। तत आरम्भक-

संयोगनाशपरमाण्वन्तरकर्मणी। ततस्तु द्व्यणुकनाशः परमाण्वन्तरकर्मजन्यविभाग इत्येकः कालः १। ततः श्यामादिनाशः। विभागाच्च पूर्वसंयोगनाशश्चेत्येकः कालः। २। ततो रक्तोत्पत्तिर्द्रव्यारम्भकसंयोगश्चेत्येकः कालः। ३। अथ द्व्यणुकोत्पत्तिः। ४ ततो रक्तोत्पत्तिरिति ५॥ पञ्चक्षणा॥

(प्र० टी०) पञ्चक्षणां प्रक्रियां वक्तुमाह—"अथे"ति। परमाण्वन्तरे=द्व्यणुकनाशकक्रियावत्परमाणुभिन्नद्व्यणुकारम्भकपरमाणावित्यर्थः। स्पष्टं शिष्टं पूर्ववज्ज्ञेयम्।

(मु०) द्रव्यनाशसमकालं परमाण्वन्तरे कर्मचिन्तनात्षष्ठे गुणोत्पत्तिः। तथा हि—परमाणुकर्मणा परमाण्वन्तरविभागः। तत आरम्भकसंयोगनाशः। अथ द्व्यणुकनाशपरमाण्वन्तरकर्मणी। १। अथ श्यामादिनाशः। परमाण्वन्तरकर्मजश्च विभागः। २। ततो रक्तोत्पत्तिः परमाण्वन्तरे पूर्वसंयोगः। ४। ततो द्व्यणुकोत्पत्तिः। ५। अथ रक्तोत्पत्तिरिति ६ षट्क्षणा॥

(प्र० टी०) षट्क्षणां प्रक्रियां वक्तुमाह—"द्रव्यनाशे"ति। "परमाणुकर्मणे"ति। अग्निसंयोगजन्यया परमाणुक्रिययेत्यर्थः। स्पष्टम्।

[मु०] एवं श्यामनाशक्षणे परमाण्वन्तरेण कर्मचिन्तनात्सप्तक्षणा। तथा हि। परमाणौ कर्म, ततः परमाण्वन्तरेण विभागः। तत आरम्भकसंयोगनाशः। ततो द्व्यणुकनाशः। १। ततः श्यामादिनाशपरमाण्वन्तरकर्मणी। २। ततो रक्तोत्पत्तिः परमाण्वन्तरे कर्मजविभागश्च। ३। ततः परमाण्वन्तरेण पूर्वसंयोगनाशः। ४। ततः परमाण्वन्तरेण संयोगः। ५। ततो द्व्यणुकोत्पत्तिः। ६। ततो रक्तोत्पत्तिः। ७। इति सप्तक्षणा॥

(प्र० टी०) सप्तक्षणां प्रक्रियां वक्तुमाह—"एव"मिति। पूर्वरीत्यैव व्याख्येयम्।

(मु०) एवं रक्तोत्पत्तिसमकालं परमाण्वन्तरे कर्मचिन्तनादष्टक्षणा। तथाहि—परमाणौ कर्म। ततः परमाण्वन्तरविभागः। तत आरम्भकसंयोगनाशः। ततो द्व्यणुकनाशः। १। ततः श्यामनाशः। २। ततो रक्तोत्पत्तिपरमाण्वन्तरकर्मणी। ३। ततः परमाण्वन्तरकर्मजविभागः। ४। ततः परमाण्वन्तरे पूर्वसंयोगनाशः। ५। ततः परमाण्वन्तरसंयोगः। ६। ततो द्व्यणुकोत्पत्तिः। ७। अथ रक्तोत्पत्तिरित्यष्टक्षणा॥ ८॥ १०५॥

(प्र० टी०) अष्टक्षणां प्रक्रियां वक्तुमाह—"एव"मिति। पूर्ववत्। ननु—यत्रैकस्मिन् परमाणौ अग्निसंयोगसमकालं परमाण्वन्तरे कर्मोत्पत्तिः तदुत्तरक्षणेषु क्रमेण एकत्र क्रियाविभागपूर्वसंयोगनाशद्व्यणुकनाशाः अपरत्र विभागपूर्वसंयोगनाशोत्तरसंयो-

गोत्पत्तिद्व्यणुकोत्पत्तिरूपोत्पत्तयः तत्र द्विक्षणा ( प्रक्रिया वाच्या )। एवं यत्रैकस्मिन् परमाणौ कर्मोत्पत्तिसमकालं परमाण्वन्तरे कर्मोत्पत्तिः तत्र चतुःक्षणापि भवति प्रक्रिया चेति चेन्न द्व्यणुकनाशमन्तरेण परमाणौ श्यामादिनिवृत्तिः तामन्तरेण च रक्तोत्पत्तिर्न सम्भवतीत्युक्तप्रायम्। इत्थञ्च द्व्यणुकनाशक्षणे परमाणुश्यामनाशक्षणे रक्तोत्पत्तिक्षणे वा द्व्यणुकान्तरोत्पत्तौ द्वित्रिचतुःक्षणा प्रक्रिया वाच्या। नचैतेषु क्षणेषु द्व्यणुकान्तरोत्पत्तिः सम्भवति तथासति तत्पूर्वक्षणेषु परमाणोररक्तत्वेन तदारब्धद्व्यणुकस्याप्यररक्तत्वप्रसङ्गादित्यन्यत्र विस्तर इति दिनकरी।

(का०) नैयायिकानां तु नये द्व्यणुकादावपीष्यते।

( मु० ) नैयायिकानामिति । नैयायिकानां मते द्व्यणुकादाववयविन्यपि पाको भवति। तेषामयमाशयः । अवयविनां सच्छिद्रत्वाद्वह्नेः सूक्ष्मावयवैरन्तःप्रविष्टैरवयवेष्ववष्टब्धेष्वपि पाको न विरुध्यते। अनन्तवियावतन्नाशकल्पने गौरवात्। इत्थं च सोऽयं घट इत्यादिप्रत्याभिज्ञापि संगच्छते । यत्र तु न प्रत्यभिज्ञा तत्रावयविनाशोऽपि स्वीक्रियत इति॥

( प्र० टी० ) नैयायिकमतं दर्शयति—परममूले "नैयायिकान"न्त्विति । पिठरपाकवादिनां गोतमानुसारिणां नये = शास्त्रे, द्व्यणुकादौ = अवयविन्यपि पाकः इष्यते = इष्टोऽस्तीत्यर्थः । तदेतद् विवृणोति—"नैयायिकानामिती"ति। अपि शब्दात्परमाणावपि चरमावयवे । एतेषामयमाशयः—अवयविनः सच्छिद्राः सन्ति तस्मात्तदन्तराग्निप्रवेशो निष्प्रतिबन्धः ततः अवयविनमारभ्य परमाणुपर्यन्तं पाको जायते। एवं निर्वाहे सति असङ्ख्यावयव्युत्पत्तिकल्पनायां गौरवमेव पीलुपाकमते। आमघटान्तर्निक्षिप्तस्य जलस्य बहिर्भागे क्षतिरेव सच्छिद्रतायां मानमिति। अस्मिन्पक्षे गमकमप्याह—"इत्थञ्चे"ति। अवयविनाशानङ्गीकार इत्यर्थः। "यत्र त्वि"ति—अवयवसंयोगनाशस्य अवयविनाशं प्रति कारणत्वादिति भावः।

सङ्ख्या निरूपयितुमाह—

(का०) गणनाव्यवहारे तु हेतुः संख्याभिधीयते ॥ १०६ ॥

( मु० ) गणनेति । गणनाव्यवहारासाधारणकारणं सङ्ख्येत्यर्थः । १०६ ॥

( प्र० टी० ) सङ्ख्यां निरूपयति—परममूले "गणने"ति । गणना = एकः द्वौ त्रय इत्यादि। व्यवह्रियतेऽनेनेति "व्यवहारो" ज्ञानम्। लौकिकप्रत्यक्षं प्रति हेतुरसाधारणं कारणमित्याशयेनाह—मूले "गणने"ति ।

(का०) नित्येषु नित्यमेकत्वमनित्येऽनित्यमिष्यते ।

द्वित्वादयः परार्धान्ता अपेक्षाबुद्धिजा मताः ॥१०७॥

( मु० ) नित्येष्विति । नित्येषु परमाण्वादिषु एकत्वं नित्यम् । अनित्ये घटादावेकत्वमनित्यमित्यर्थः । द्वित्वादयो व्यासज्यवृत्तिसङ्ख्या अपेक्षाबुद्धिजन्याः ॥ १०७ ॥

( प्र० टी० ) सा चेयं सङ्ख्या एकत्वमारभ्य परार्धपर्यन्ता । तत्रैकत्वं द्विविधं नित्यमनित्यञ्च । अन्या सर्वा सङ्ख्याऽनित्यैवेति दर्शयितुमाह—परममूले "नित्येष्वि"-ति । तदेवं विवृणोति—नित्येष्वि'त्यादिना स्पष्टम् । अपेक्षाबुद्धिजाः = अपेक्षाबुद्धिजन्या अत एवानित्याः । अपेक्षाबुद्धिः क्षणत्रयं तिष्ठति, चतुर्थक्षणे अपेक्षाबुद्धिनाशात् तत्प्रतीत्यधीनप्रतीतीनां नाशस्तत एव तेषामनित्व मिति भावः ।

इदन्तु बोध्यम्—सङ्ख्यात्वसामान्यवती सङ्ख्या । साच अव्यासज्यवृत्तिः व्यासज्यवृत्तिरिति द्विधा । तत्रैकत्वमव्यासज्यवृत्ति । द्वित्वादिकन्तु व्यासज्यवृत्ति । व्यासज्यवृत्तिधर्माणां पर्याप्तिसम्बन्धेन वृत्तित्वमिति नियमः ।

प्राभाकरास्तु--द्वित्वादिकं नित्ये नित्यमनित्ये कारणगुणपूर्वकमाश्रयनाशनाश्यमपेक्षाबुद्धिव्यङ्ग्यमाचक्षते तन्न सम्यक् । समानदेशानां समानेन्द्रियग्राह्याणां प्रतिनियतव्यञ्जकव्यङ्ग्यतायाा असम्भवेन द्वित्वप्रत्यक्षकाल एव त्रित्वादेरपि प्रत्यक्षापत्तेरिति पदार्थरत्नमाला ।

(का०) अनेकाश्रयपर्याप्ता एते तु परिकीर्तिताः ।
अपेक्षाबुद्धिनाशाच्च नाशस्तेषां निरूपितः ॥१०८॥

( प्र० टी० ) एते = द्वित्वादयः परार्धान्ताः, अनेकेष्वाश्रयेषु पर्याप्ताः = नानाधिकरणालम्बनाः । एतेषां नाशे हेतुमाह—"अपेक्षाबुद्धिनाशाच्चे"ति ।

( मु० ) अनेकेति । यद्यपि द्वित्वादिसमवायः प्रत्येकं घटादावपि वर्तते तथाप्येको द्वाविति प्रत्ययाभावात् एको न द्वाविति प्रत्ययसम्भवाच्च द्वित्वादीनां पर्याप्तिलक्षणः कश्चन सम्बन्धोऽनेकाश्रयोऽभ्युपगम्यते । प्रथममपेक्षाबुद्धिः, ततो द्वित्वोत्पत्तिः, ततो विशेषणज्ञानं द्वित्वत्वविशिष्टप्रत्यक्षम्, अपेक्षाबुद्धिनाशश्चेति । ततो द्वित्वनाश इति ।

( प्र० टी० ) व्याख्यातुं प्रतीकमादत्ते—"अनेकेती"ति । "प्रथममि"ति —"अयमेकः अयमेक" इत्याकाराऽपेक्षाबुद्धिः प्रथमक्षणे जायते इत्यर्थः । "विशेषणज्ञान"मिति—द्वित्वत्वरूपस्य विशेषणस्य निर्विकल्पकं ज्ञानमित्यर्थः । तच्च "इमे द्वित्वाद्वित्वत्वे" इत्याकारकं ज्ञेयम् । "द्वित्वत्वे"ति--अत्र प्रत्यक्षं लौकिकम् । "ततो द्वित्वनाश इती"ति--पञ्चमे क्षणे द्वित्वस्य नाश इत्यर्थः ।

( मु० ) यद्यपि ज्ञानानां द्विक्षणमात्रस्थायित्वं योग्यविभुविशेषगुणानां

स्रोत्तरवर्तिगुणनाश्यत्वात् । तथाप्यपेक्षाबुद्धेस्त्रिक्षणावस्थायित्वं कल्प्यते । अन्यथा निर्विकल्पकालेऽपेक्षाबुद्धिनाशानन्तरं द्वित्वस्यैव नाशः स्यात् न तु द्वित्वप्रत्यक्षं, तदानीं विषयाभावत्। विद्यमानस्यैव चक्षुरादिना ज्ञानजननोपगमात् । तस्माद् द्वित्वप्रत्यक्षादिकमपेक्षाबुद्धेर्नाशकं कल्प्यते । नचापेक्षाबुद्धिनाशात्कथं द्वित्वनाश इति वाच्यम्, कालान्तरे द्वित्वप्रत्यक्षाभावात् । अपेक्षाबुद्धिस्तदुत्पादिका तन्नाशात्तन्नाश इति कल्पनात् ।

( प्र० टी० ) ननु—ज्ञानत्वाविशेषादपेक्षाबुद्धिरपि द्विक्षणमात्रं तिष्ठत्वित्याशङ्क्य तस्यास्त्रिक्षणस्थायित्वे मानमाह—"यद्यपि" इत्यारभ्य "कल्प्यते" इत्यन्तेन । इयञ्च वैशेषिकप्रक्रिया "तस्याः खलु एकत्वेभ्याऽनकविषयबुद्धिसहितेभ्यो निष्पत्तिरपेक्षाबुद्धिविनाशाच्च विनाश" इत्यादिप्रशस्तग्रन्थादवसेया ।

अन्यथा = अपेक्षाबुद्धेस्त्रिक्षणावस्थायित्वानङ्गीकारे । द्वित्वप्रत्यक्षादिकम् = द्वित्वद्वित्वत्वयोर्निर्विकल्पकं प्रत्यक्षमित्यर्थः । आदिना त्रित्वद्विपृथक्त्वादिपरिग्रहः । योग्यविभुविशेषगुणत्वस्य स्वत्वस्य चानुगतस्याभावेन स्वोत्तरोत्पन्नगुणत्वस्यानुगतस्याभावात् तद्व्यक्तित्वेनैव नाश्यनाशकभावस्य वाच्यतया द्वित्वत्वरूपविशिष्टप्रत्यक्षकार्यानुरोधेन द्वित्वद्वित्वत्वनिर्विकल्पकप्रत्यक्षस्यैव तद्व्यक्तित्वेनापेक्षाबुद्धिनाशकत्वं कल्प्यते न तु द्वितीयक्षणोत्पन्नस्मरणादेरिति भावः । शङ्कते—"नचे"ति । समाधत्ते—"कालान्तरे"ति । स्पष्टमन्यत् ।

( मु० ) अत एव तत्पुरुषीयापेक्षाबुद्धिजन्यद्वित्वादिकं तेनैव गृह्यत इति कल्प्यते । न चापेक्षाबुद्धेर्द्वित्वप्रत्यक्षे कारणत्वमस्त्विति वाच्यम्, लाघवेन द्वित्वं प्रत्येव कारणत्वस्यैवोचितत्वात् । अतीन्द्रिये द्व्यणुकादावपेक्षाबुद्धिर्योगिनाम् । सर्गादिकालीनपरमाण्वादावीश्वरीयापेक्षाबुद्धिर्ब्रह्माण्डान्तरवर्तियोगिनामपेक्षाबुद्धिर्वा द्वित्वादिकारणमिति ॥ १०८ ॥

( प्र० टी० ) उक्तयुक्त्या अपेक्षाबुद्धेर्द्वित्वोत्पादकत्वं स्वीकृतं यस्मात् तस्मादाह—"अत एवे"ति । चैत्रीयापेक्षाबुद्धिजन्यद्वित्वादिकं चैत्रेणैव गृह्यत इत्यर्थः । ननु—कालान्तरे द्वित्वप्रत्यक्षवारणाय द्वित्वप्रत्यक्षं प्रत्येवापेक्षाबुद्धेर्हेतुत्वमस्तु नतु द्वित्वं प्रतीत्याशङ्कते—"नचे"ति । समाधत्ते "लाघवेने"ति । द्वित्वप्रत्यक्षत्वापेक्षया द्वित्वत्वस्य कार्यतावच्छेदकस्य लघुत्वादिति भावः । द्व्यणुकस्यास्मदीयप्रत्यक्षागोचरत्वेनापेक्षाबुद्ध्यसम्भव इत्याशङ्कायामाह—"अतीन्द्रिय" इति । आदिना परमाणुपरिग्रहः । सर्गादौ योगिनामभावादाह—"ईश्वरीये"ति । ईश्वरस्य निरतिशयसार्वज्ञ्यबीजवत्त्वादिति भावः ।

(का०) अनेकैकत्वबुद्धिर्या साऽपेक्षाबुद्धिरिष्यते ।

( मु० ) अपेक्षाबुद्धिः केत्यत आह—अनेकेति । अयमेकोऽयमेक इत्याकारिका इत्यर्थः । इदं तु बोध्यम् । यत्रानियतैकत्वज्ञानं तत्र त्रित्वादिभिन्ना बहुत्वसङ्ख्योत्पद्यते यथा सेनावनादाविति कन्दलीकारः । आचार्यास्तु त्रित्वादिकमेव बहुत्वं मन्यन्ते । तथा च त्रित्वत्वादिव्यापिका बहुत्वत्वजातिर्नातिरिच्यते । सेनावनादावुत्पन्नेऽपि त्रित्वादौ त्रित्वत्वाद्यग्रहो दोषात् । इत्थं चेतो बहुतरेयं सेनेति प्रतीतिरुपपद्यते । बहुत्वस्य सङ्ख्यान्तरत्वे तु तत्तारतम्याभावान्नोपपद्येतेत्यवधेयम् ॥

( प्र० टी० ) प्रसङ्गादपेक्षाबुद्धिं निरूपयति—"अनेकत्वे" ति-परममूले । तद्विवरीतुमाह-"अनेकेती" ति परिमाणं निरूपयति-अयमेक" इत्यभिनीय दर्शयति । तत्तद्व्यक्तिमात्रनिष्ठेदन्त्वावच्छिन्नविशेष्यतानिरूपितैकत्वप्रकारताशालिनी बुद्धिरपेक्षाबुद्धिपदार्थ इति भावः ।

(का०) परिमाणं भवेन्मानव्यवहारस्य कारणम् ॥ १०९ ॥

( मु० ) परिमाणमिति । परिमितिव्यवहारासाधारणं कारणं परिमाणमित्यर्थः ॥ १०९ ॥

( प्र० टी० ) परिमाणं लक्षयति—परममूले "परिमाणमि" ति । कारिकास्थं लक्षणं निष्कर्षयति—"परिमिती" ति । परिमाणत्वसामान्यवत् परिमाणमित्यर्थः ।

(का०) अणु दीर्घं महद्ध्रस्वमिति तद्भेद ईरितः ।

( मु० ) तच्चतुर्विधं अणु महद् दीर्घं ह्रस्व चेति—

(का०) अनित्ये तदनित्यं स्यान्नित्ये नित्यमुदाहृतम् ॥ ११० ॥

सङ्ख्यातः परिमाणाच्च प्रचयादपि जायते ।

( प्र० टी० ) "अणिव"*ति—स्पष्टम् । चतुर्विधमपि परिमाणं सामान्यतो द्विविधं नित्यमनित्यञ्चेति । नित्यं परमाणौ । तदेव "पारिमाण्डल्य" मित्युक्तं प्राक् † अनित्यमपि त्रिविधं सङ्ख्याजन्यं, परिमाणजन्यं, प्रचयजन्यञ्चेति, इत्याशयवानाह— परममूले "सङ्ख्यात" इति ।

( मु० ) तत्परिमाणम् । नित्यमित्यत्र परिमाणमित्यनुषज्यते । जायत

---

* अणुत्वं जातिविशेषस्तद्वदणु । भाट्टास्तु परमाणुद्व्यणुकयोरभावान्नास्त्यणुत्वम् । गगनादौ प्रमाणाभावान्नास्त्येव परममहत्वमिति वदन्ति । लीलावतीकारस्तु ह्रस्वत्वदीर्घत्वे न परिमाणान्तरे किन्त्वणुत्वमहत्वयोरेवावान्तरविशेषाविलाह । अधिकं पदार्थरत्नमालायामुक्तम् ।

† प्राक्—प्रत्यक्षपरिच्छेदे "पारिमाण्डल्यभिन्नाना" मिति १५ कारिकायां व्याख्यायाञ्चेति ।

इत्यत्रापि परिमाणमित्यनुवर्तते । अनित्यमिति पूर्वेणान्वितम् । तथा चानित्यपरिमाणं सङ्ख्याजन्यं परिमाणजन्यं प्रचयजन्यं चेत्यर्थः ॥

( प्र० टी० ) तत्परिमाणमित्यादि व्याख्यातमिव ।

(का०) अनित्यं द्व्यणुकादौ तु सङ्ख्याजन्यमुदाहृतम् ॥१११॥

[ मु० ] तत्र सङ्ख्याजन्यमुदाहरति--अनित्यमिति । द्व्यणुकस्य त्रसरेणोश्च परिमाणं प्रति परमाणुपरिमाणं द्व्यणुकपरिमाणं वा न कारणं परिमाणस्य स्वसमानजातीयोत्कृष्टपरिमाणजनकत्वात् । द्व्यणुकस्याणुपरिमाणं तु परमाण्वणुत्वापेक्षया नोत्कृष्टम् । त्रसरेणुपरिमाणं तु न सजातीयम् । अतः परमाणौ द्वित्वसङ्ख्या द्व्यणुकपरिमाणस्य, द्व्यणुके त्रित्वसङ्ख्या च त्रसरेणुपरिमाणस्यासमवायिकारणमित्यर्थः ॥ ११० ॥ १११ ॥

( प्र० टी० ) सङ्ख्याजन्यमुदाहरति "द्व्यणुकादा"विति । सङ्ख्यामात्रजन्यमित्यर्थः । द्व्यणुकपरिमाणं परमाणुगतद्वित्वसङ्ख्याजन्यं, त्रसरेणुगतं महत्परिमाणं द्व्यणुकगतत्रित्वसङ्ख्याजन्यमित्यर्थः । ननु—द्व्यणुकपरिमाणं प्रति परमाणुपरिमाणं, त्र्यणुकपरिमाणं प्रति द्व्यणुकपरिमाणं वा कारणमस्त्वित्याशङ्क्याह—मूले "द्व्यणुकस्ये"ति । "स्वसमानजातीये"ति । विस्तृतं व्याख्यातं प्रत्यक्षखण्डे । स्पष्टमन्यत् ।

( का० ) परिमाणं घटादौ तु परिमाणजमुच्यते ।
प्रचयः शिथिलाख्यो यः संयोगस्तेन जन्यते ॥११२॥
परिमाणं तूलकादौ—

( मु० ) परिमाणजन्यं परिमाणमुदाहरति--परिमाणं घटादाविति । घटादिपरिमाणं कपालादिपरिमाणजन्यम् ॥ प्रचयजन्यमुदाहर्तुं प्रचयं निर्वक्ति प्रचय इति ॥ ११२ ॥

( प्र० टी० ) परिमाणजन्यम् = परिमाणमात्रजन्यमित्यर्थः । शिथिलत्वं संयोगत्वव्याप्यो जातिविशेषः । अवयवानां परस्परमदृढतया योगः शिथिलसंयोगः तज्जन्यः "प्रचय" इत्यर्थः । तदुदाहरति—तृतीयं "तूलकादा"विति । तूलकादिपरिमाणं समुच्छ्रायलक्षणं प्रचयजन्यमित्यर्थः । तच्चानित्यम् ।

(का०) नाशस्त्वाश्रयनाशतः ।

( मु० ) परिमाणस्याश्रयनाशादेव नश्यतीत्याह । नाश इति । अर्थात्परिमाणस्यैव । नचावयवनाशः कथं परिमाणनाशकः सत्यप्यवयविनि त्रिचतुरादिपरमाणुविश्लेषे तदुपचये चावयविनः प्रत्यभिज्ञानेऽपि परि-

मानान्तरस्य प्रत्यक्षसिद्धत्वादिति वाच्यम्, परमाणुविश्लेषे हि द्व्यणुकस्य नाशोऽवश्यमभ्युपेयस्तन्नाशे च त्रसरेणुकनाशः एवं क्रमेण महावयविनो नाशस्यावश्यकत्वात् । सति च नाशकेऽनभ्युपगममात्रेण नाशस्यापलपितुमशक्यत्वात् । शरीरादाववयवोपचयेऽसमवायिकारणनाशस्यावश्यकत्वादवयविनाश आवश्यकः ।

( प्र० टी० ) परिमाणस्य नाशकमाह—"नाशस्त्वि"ति । आश्रयस्य= परिमाणाधारस्य द्रव्यस्य नाशतो नाशात् परिमाणस्य नाश इति कारिकांशार्थः । तद्विवृणोति—"परिमाण"मित्यादिना मूले । अत्र शङ्कते—"नचे"ति । समाधत्ते —"परमाणुविश्लेषेही"ति । बाल्यशरीरस्य यौवने विनाशः, यौवनशरीरस्य वार्धक्ये विनाश इति तस्यानित्यत्वेनानात्मत्वं पूर्वमुक्तं स्पष्टीकुर्वन्निवाह—"शरीरादावि"ति ।

( मु० ) नच पटादिविनाशेऽपि तन्त्वन्तरसंयोगात्परिमाणाधिक्यं न स्यादिति वाच्यम्, तत्रापि वेमाद्यभिघातेनासमवायिकारणतन्तुसंयोगनाशात्पटनाशस्यावश्यकत्वात् । किञ्च तन्त्वन्तरस्य तत्पटावयवत्वे पूर्वं तत्पट एव न स्यात्तन्त्वन्तररूपकारणाभावात् । तन्त्वन्तरस्यावयवत्वाभावे च न तेन परिमाणाधिक्यं संयुक्तद्रव्यान्तरवत् । तस्मात्तत्र तन्त्वन्तरसंयोगे सति पूर्वपटनाशस्ततः पटान्तरोत्पत्तिरित्यवश्यं स्वीकार्यम् । अवयविनः प्रत्यभिज्ञानं तु साजात्येन दीपकलिकादिवत् । नच पूर्वतन्तव एव तन्त्वन्तरसहकारात्पूर्वपटे सत्येव पटान्तरमारभन्तामिति वाच्यम् । मूर्तयोः समानदेशताविरोधात्तत्र पटद्वयासम्भवादेकदा नानाद्रव्यस्य तत्रोपलम्भस्य बाधितत्वाच्च । तस्मात्पूर्वद्रव्यस्य प्रतिबन्धकस्य विनाशे द्रव्यान्तरोत्पत्तिरित्यवश्यमभ्युपेयत्वात् ॥

( प्र० टी० ) शङ्कते—"नचे"ति । समाधत्ते—"तत्रापी"ति । वेमा=वायदण्डः, तस्याभिघातेन अभिघाताख्यसंयोगेन । शब्दनिमित्तकारणं संयोगिनोः परस्परविभागहेतुक्रियाजनकः संयोगोऽ"भिघात" इत्यवोचाम । अत्रैव युक्त्यन्तरं दर्शयति—"तन्त्वन्तरस्ये"ति । यदा तन्त्वन्तरसंयोगस्तदा न पूर्वपटः किन्तु ततोऽन्य एव । गूढाभिसन्धिमानाह—"तन्त्वन्तरस्ये"ति । सिद्धान्तमुपसंहरति—"तस्मादि"ति । ननु—"स एवायं पट" इति कथं प्रत्यभिज्ञा? यदि पूर्वपटनाश इत्यत आह-- "अवयविन" इति । "सैवेयंदीपकलिके"तिवत् प्रत्यभिज्ञानं न विरुध्यत इति भावः । मूर्तयोः समानदेशे सहानवस्थानलक्षणं विरोधमनाकलय्य भ्रान्तः शङ्कते— "नच पूर्वतन्तव" इति । सिद्धान्ती विरोधं विद्वान् उत्तरयति—"मूर्त्तयो"रिति । युक्त्यन्तरमाह—"एकदे"ति । प्रकरणमुपसंहरति—"तस्मादि"ति ।

(का०) सङ्ख्यावत्तु पृथक्त्वं स्यात्पृथक्प्रत्ययकारणम् ॥११३॥

अन्योन्याभावतो नास्य चरितार्थत्वमिष्यते ।
अस्मात्पृथगिदं नेति प्रतीतिर्हि विलक्षणा ॥११४॥

( प्र० टी० ) "पृथक्प्रत्यये"ति—पृथक्प्रत्ययासाधारणं कारणं पृथक्त्वमित्यर्थः । अन्योन्याभावेऽन्तर्भाववादिनो मतं खण्डयति—"अन्योन्याभावत"इति ।

( मु० ) पृथक्त्वं निरूपयति—सङ्ख्यावदिति । पृथक्प्रत्ययासाधारणं कारणं पृथक्त्वम् । तन्नित्यतादिकं सङ्ख्यावत् । तथाहि—नित्येष्वेकत्वं नित्यम् । अनित्येष्वनित्यम् । अनित्यमेकत्वं तु आश्रयद्वितीयक्षणे चोत्पद्यते आश्रयनाशान्नश्यति । तथैकपृथक्त्वमपि द्वित्वादिवच्च द्विपृथक्त्वादिकमपीत्यर्थः । नन्वयमस्मात्पृथगित्यादावन्योन्याभावो भासते तत्कथं पृथक्त्वं गुणान्तरं स्वीक्रियते, न चास्तु पृथक्त्वं, न त्वन्योन्याभाव इति वाच्यम्, रूपं न घट इति प्रतीत्यनापत्तेः । नहि रूपे घटावधिकं पृथक्त्वं गुणान्तरमस्ति न वा घटे घटावधिकं पृथक्त्वमस्ति येन परम्परासम्बन्धः कल्प्यत इत्यत आह । अस्मादिति । ननु शब्दवैलक्षण्यमेव न त्वर्थवैलक्षण्यमिति चेन्न, विनार्थभेदं घटात्पृथगितिवद्घटो न पट इत्यत्रापि पञ्चमीप्रसङ्गात् । तस्माद्यदर्थयोगे पञ्चमी सोऽर्थो नञर्थान्योन्याभावतो भिन्नो गुणान्तरं कल्प्यत इति ॥११३॥ ॥११४॥

( प्र० टी० ) कारिकां व्याख्याति—"संख्यावदिती"ति । शङ्कते—"नन्वि"-ति । "अयमस्मात्पृथक्" अर्थात् "घटः पटात्पृथक्" इतिपृथक्त्वप्रतीतेः "अयमसौ न" अर्थात् "घटःपटो न" इत्यन्योन्याभावप्रतीते नैवार्थभेदं पश्यामः तस्मात् पृथक्त्वस्यान्योन्याभावेऽन्तर्भावो भवतु किं तस्य पृथक्स्वीकारेण इति शङ्काकर्तुराशयः । अस्य समाधानग्रन्थः—"अस्मात् पृथक्" "इदं नेति" परममूलम् । अर्थात् उभयाकारा प्रतीतिर्विलक्षणा विषयभेदं विना नार्हति भवितुं, तेन नान्योन्याभावे पृथक्त्वस्यान्तर्भावः । पुनः शङ्कते—"नन्वि,"ति । समाधत्ते—"ने"ति । अत्र नव्याः—अन्योन्याभाव एव पृथक्त्वं नतु गुणान्तरम् ॥ ११४ ॥

( का० ) अप्राप्तयोस्तु या प्राप्तिः सैव संयोग ईरितः ।
कीर्तितस्त्रिविधस्त्वेष आद्योऽन्यतरकर्मजः ॥११५॥

( मु० ) संयोगं निरूपयति--अप्राप्तयोरिति । तं विभजते । कीर्तित इति । एष संयोगः ॥११५॥

( प्र० टी० ) अप्राप्तयोः=असम्बद्धयोः प्राप्तिः=सम्बन्धः संयोगः । संयोगत्वं जातिविशेषो लक्षणम् । अथवा "इमौ संयुक्तौ" इति संयुक्तप्रत्ययासाधारणं कारणं

संयोगः। स्पष्टमन्यत्। "तार्किकरक्षाया"न्तु कर्माविरोधी गुणः संयोगः, युतसिद्धयोः संश्लेषः संयोगः। युतसिद्धिश्चासम्बद्धयोर्विद्यमानतेति केचित्। संयोगाविरोधी गुणो विभाग इत्युक्तम्॥ ११५॥

(का०) तथोभयक्रियाजन्यो भवेत्संयोगजोऽपरः।
आदिमः श्येनशैलादिसंयोगः परिकीर्तितः ॥११६॥
मेषयोः सन्निपातो यः स द्वितीय उदाहृतः।

(मु०) सन्निपातः संयोगः। द्वितीय उभयकर्मजः॥

(का०) कपालतरुसंयोगात्संयोगस्तरुकुम्भयोः॥ ११७॥
तृतीयः स्यात्कर्मजोऽपि द्विधैव परिकीर्तितः।
अभिघातो नोदनं च शब्दहेतुरिहादिमः॥ ११८॥
शब्दाहेतुर्द्वितीयः स्याद्—

(मु०) तृतीय इति। संयोगजसंयोग इत्यर्थः। तृतीयः स्यादिति पूर्वेणान्वितम्। आदिमः अभिघातः। द्वितीयो नोदनाख्यः संयोग इति॥

(प्र० टी०) अन्यतरकर्मजोभयकर्मजसंयोगजसंयोगभेदात् त्रिविधः संयोग इत्यर्थः। तत्र श्येनशैलादिसंयोग आदिमः=प्रथमोऽ"न्यतरकर्मजः" श्येनमात्रक्रियाजन्यत्वात्। यत्र उभयोर्मेषयोः क्रियाया जन्यः स "उभयकर्मजः" उभयक्रियाजन्यत्वात्। तृतीयस्तु "संयोगजसंयोगो" यथा कपालतरुसंयोगजन्यो घटतरुसंयोगः। कर्मजसंयोगस्तु द्विप्रकारो भवति—अभिघातो नोदनञ्चेति। "अभिघातो" वेण्वादेर्ढक्कादेर्वादनम्। सचायं शब्दकारणमित्यत आह--"शब्दहेतु"रिति। "नोदनं" चक्रककर्त्तर्यादिना काष्ठादेः कर्त्तनं, तस्य शब्दानुत्पादकत्पादकत्वादाह—"शब्दाहेतु"रिति। स्पष्टमन्यत्।

(का०) विभागोऽपि त्रिधा भवेत्।
एककर्मोद्भवस्त्वाद्यो द्वयकर्मोद्भवोऽपरः॥ ११९॥
विभागजस्तृतीयः स्यात्तृतीयोऽपि द्विधा भवेत्।
हेतुमात्रविभागोत्थो हेत्वहेतुविभागजः॥ १२०॥

(प्र० टी०) विभागं निरूपयति—"विभागोऽपि त्रिधे"ति। विभक्तप्रत्ययाऽसाधारणं कारणं विभाग" इति लक्षणमित्यर्थः। असावपि पूर्ववत् त्रिविधः—अर्थात् अन्यतरकर्मजोभयकर्मजविभागजविभागभेदात् त्रिधा विभागः।

(मु०) विभक्तप्रत्ययकारणं विभागं निरूपयति--विभाग इति। एककर्मेति। तदुदाहरणं तु श्येनशैलविभागादिकं पूर्ववद्बोध्यम्। तृतीयोऽ

पि विभागजविभागः, कारणमात्रविभागजन्यः कारणाकारणविभागजन्यश्चेति । आद्यस्तावत् । यत्र कपाले कर्म ततः कपालद्वयविभागः । ततो घटारम्भकसंयोगनाशः । ततो घटनाशः । ततस्तेनैव कपालविभागेन सकर्मणः कपालस्याकाशविभागो जन्यते । तत आकाशसंयोगनाशः । तत उत्तरदेशसंयोगः । ततः कर्मनाश इति । नच तेन कर्मणैव कथं देशान्तरविभागो न जन्यत इति वाच्यम्, एकस्य कर्मण आरम्भकसंयोगप्रतिद्वन्द्विविभागजनकत्वस्यानारम्भकसंयोगप्रतिद्वन्द्विविभागजनकत्वस्य च विरोधात् । अन्यथा विकसत्कमलकुड्मलभङ्गप्रसङ्गात् । तस्माद् यदीदमनारम्भकसंयोगप्रतिद्वन्द्विविभागं जनयेत्तदारम्भकसंयोगप्रतिद्वन्द्विविभागं न जनयेत् । नच कारणविभागेनैव द्रव्यनाशात्पूर्वं कुतो देशान्तरविभागो न जन्यत इति वाच्यम्, आरम्भकसंयोगप्रतिद्वन्द्विविभागवतोऽवयवस्य सति द्रव्ये देशान्तरविभागासम्भवात् । द्वितीयस्तावत् । यत्र हस्तक्रियया हस्ततरुविभागस्ततः शरीरेऽपि विभक्तप्रत्ययो भवति तत्र शरीरतरुविभागे हस्तक्रिया न कारणं व्यधिकरणत्वात् । शरीरे तु क्रिया नास्त्येव अवयविकर्मणो यावदवयवकर्मनियतत्वात् । अतस्तत्र कारणाकारणविभागेन कार्याकार्यविभागो जन्यत इति । अत एव विभागो गुणान्तरम् । अन्यथा शरीरे विभक्तप्रत्ययो न स्यात् । अतः संयोगनाशेन विभागो नान्यथासिद्धो भवति ॥ ११६---१२० ॥

( प्र० टी० ) विवृणोति—"विभाग इती"ति । "श्येनशैले"ति—यत्र श्येनक्रियया शैलविभागः सोऽन्यतरकर्मजः । यत्र द्वयोर्मेषयोः क्रियया विभागः असावुभयकर्मज उच्यते । तृतीयस्तु द्विविध इत्याह—"तृतीयोपी"ति । तृतीय आद्यमुदाहरति—"आद्यस्तावदि"ति । कपालद्वयविभागात् घटनाशोत्तरं कपालस्य देशान्तरेण विभाग इति सारः ।

"कपालस्याकाशविभागो जन्यत" इति । इदमत्राकूतकम्—यदि कपालस्याकाशविभागो न स्यात् तदा तन्नाशकाभावेन तस्य नित्यत्वापत्तिरेव । कपालाकाशसंयोगस्य प्रतिबन्धकस्य सत्त्वेनोत्तरसंयोगानुत्पत्त्या कर्मणोऽपि नित्यत्वापत्तिः, उत्तरसंयोगस्यैव स्वजनककर्मनिवर्त्तकत्वात् तस्मादस्ति कपालस्याकाशविभागः । अमुमर्थं हृदि निधायोक्तम् "तत उत्तरदेशसंयोगनाशस्ततः कर्मनाश" इति । शङ्कते--"नचे"ति । "तेन कर्मणैवे"ति--कपालद्वयविभागजनककर्मणैवेत्यर्थः । देशान्तरविभागः = कपालाकाशादिविभागः । समाधत्ते--"एकस्ये"ति । "आरम्भके" त्यादि । आरम्भकसंयोगः = कपालद्वयसंयोगः, तत्प्रतिद्वन्द्वी = तद्विरोधी तन्नाशक

इति यावत्। "अन्यथे"ति--आरम्भकसंयोगप्रतिद्वन्द्विविभागजनककर्मणोऽनारम्भकसंयोगप्रतिद्वन्द्विविभागजनककर्मणश्चैक्ये इत्यर्थः। "विकसदि"ति—तत्रावच्छेदेन अनारम्भकसंयोगप्रतिद्वन्द्विविभागजनककर्मणः सत्त्वात् तेन कर्मणा मूलावच्छिन्नारम्भकसंयोगविरोधिविभागोत्पत्तिः, तेन चारम्भकसंयोगनाशः, तेन कमलनाशः स्यादिति भावः। अवान्तरमुद्रया प्रकरणमुपसंहरति--"तस्मादि"ति। शङ्कते—"नचे"ति। कारणविभागेनैव = घटादिकारणीभूतकपालद्वयादिमात्रविभागेनैवेत्यर्थः। 'द्रव्यनाशादि"ति—घटादिद्रव्यनाशादित्यर्थः। पूर्वम् = घटाद्यात्मकद्रव्यनाशात्पूर्वम्। तथाच पूर्वोक्तं "ततो घटनाशः ततः कपालस्याकाशविभागो जन्यत" इत्यसङ्गतमिति भावः। समाधत्ते—"आरम्भकसंयोगे"ति। सति द्रव्ये = द्रव्यनाशं विना देशान्तरविभागासम्भवादिति। अन्यथा कारणमात्रविभागे कर्मलक्षणस्यातिव्याप्त्यापत्तेः। कारणाकारणविभागजन्यं विभागं दर्शयितुमाह—"द्वितीयस्तावदि"ति। "यावदवयवकर्मनियतत्वादि"ति। क्रियाया व्याप्यवृत्तित्वनियमादिति भावः। अतएव = वक्ष्यमाणयुक्तेरेवेत्यर्थ। "शरीरे विभक्तप्रत्ययो न स्यादि"ति--यत्र हस्तक्रियया हस्ततरुविभागः तत्र शरीरे विभक्तप्रत्ययः सर्वानुभवसिद्धः, सच विभागं विना नोपपद्यत इति भावः। "अत" इति—वस्तुतस्तु--'संयोगाभावो विभागो विभागाभावो वा संयोग'' इत्यत्र विनिगमनाविरहेणोभयोरप्यतिरिक्तत्वम्। अत एव "घटात् पटो विभक्त" इति प्रत्यय उपपद्यत इत्यन्यत्र विस्तरः॥ १२०॥

[का०] परत्वं चापरत्वं च द्विविधं परिकीर्तितम्।
दैशिकं कालिकं चापि मूर्त एव तु दैशिकम् ॥१२१॥
परत्वं मूर्तसंयोगभूयस्त्वज्ञानतो भवेत्।
अपरत्वं तदल्पत्वबुद्धितः स्यादितीरितम् ॥१२२॥

(प्र० टी०)परत्वापरत्वे प्ररूपयितुं विभजते-परममूले "परत्व'मित्यादिना। दैशिकं = दिक्कृतं कालिकं = कालकृतम्। दैशिकपरत्वापरत्वयोर्विषयतामाह--"मूर्त एवे"ति। क्षित्यप्तेजोवायुमनःसु केवलं वर्त्तते नान्यत्रेत्यर्थः। तयोर्निमित्तमाह--"परत्वमि"ति। दैशिकपरत्वे मूर्त्तसंयोगभूयस्त्वज्ञानं हेतुः। दैशिकापरत्वे मूर्त्तसंयोगाल्पत्वज्ञानं हेतुरित्यर्थः॥

(मु०) परापरव्यवहारनिमित्ते परत्वापरत्वे निरूपयति—परत्वं चेति॥ दैशिकपरत्वं बहुतरमूर्तसंयोगान्तरितत्वज्ञानादुत्पद्यते। एवं तदल्पीयस्त्वज्ञानादपरत्वमुत्पद्यते। अवधित्वार्थं पञ्चम्यपेक्षा। यथा पाटलिपुत्रात्काशीमपेक्ष्य प्रयागः परः। पाटलिपुत्रात्कुरुक्षेत्रमपेक्ष्य प्रयागोऽपर इति॥ १२१॥ १२२॥

( प्र० टी ) कारिकां व्याख्याति—"परत्वञ्चेती"त्यादिना । दैशिकपरत्वस्य निमित्तकारणमाह—बहुतरेति । दैशिकापरत्वस्य निमित्तकारणमाह—"एवं तदल्पीयस्त्वे"ति । अर्थात् बहुतरसंयोगान्तरितत्वं यद्विप्रकृष्टत्वं तद्विषयिण्येवापेक्षाबुद्धिर्दैशिकपरत्वं प्रति निमित्तम् । अल्पसंयोगान्तरितत्वरूपसन्निकृष्टत्वविषयिण्येवापेक्षाबुद्धिर्दैशिकापरत्वं प्रति निमित्तमित्यर्थः ।

( का० ) तयोरसमवायी तु दिक्संयोगस्तदाश्रये ।

( मु० ) तयोर्दैशिकपरत्वापरत्वयोः । असमवायी असमवायिकारणम् । तदाश्रये दैशिकपरत्वापरत्वाश्रये ।

( प्र० टी० ) "तयो"रिति--तयोर्दैशिकपरत्वापरत्वयोः आश्रये = समवायिनि पिण्डे दिक्संयोगोऽसमवायिकारणमित्यर्थः ।

( का० ) दिवाकरपरिस्पन्दभूयस्त्वज्ञानतो भवेत् ॥१२३॥
परत्वमपरत्वं तु तदीयाल्पत्वबुद्धितः ।
अत्र त्वसमवायी स्यात्संयोगः कालपिण्डयोः ॥१२४॥

( प्र० टी० ) कालिकपरत्वापरत्वायोः कारणं वक्ति--"दिवाकरे"ति । अत्र कालिकपरत्वापरत्वयोः कालेन सह पिण्डस्य संयोगः = ज्येष्ठकनिष्ठयोः शरीरस्य यः सम्बन्धः सोऽत्रासमवायी असमवायिकारणमित्यर्थः ।

( मु० ) दिवाकरेति । अत्र परत्वापरत्वं कालिकं ग्राह्यम् । यस्य सूर्यपरिस्पन्दापेक्षया यस्य सूर्यपरिस्पन्दोऽधिकः स ज्येष्ठः । यस्य न्यूनः स कनिष्ठः । कालिकपरत्वापरत्वे जन्यद्रव्य एव । अत्र कालिकपरत्वापरत्वयोः ॥१२३॥ ॥१२४॥

( प्र० टी० ) व्याख्याति—"अत्रे"ति । तदेतत्कृतप्रपञ्चं कालग्रन्थे प्रत्यक्षखण्डे ।

[ का० ] अपेक्षाबुद्धिनाशेन नाशस्तेषां निरूपितः ।

( मु० ) तेषां कालिकदैशिकपरत्वापरत्वानाम् ॥

( प्र० टी० ) तेषां नाशहेतुमाह--"अपेक्षे"ति । अपेक्षाबुद्धिनाशो दैशिककालिकपरत्वापरत्वानां नाशक इत्यर्थः ।

[ का० ] बुद्धेः प्रपञ्चः प्रागेव प्रायशो विनिरूपितः ॥१२५॥
अथाविशिष्टोऽप्यपरः प्रकारः परिदर्श्यते ।
अप्रमा च प्रमा चेति ज्ञानं द्विविधमिष्यते ॥१२७॥
तच्छून्ये तन्मतिर्या स्यादप्रमा सा निरूपिता ।
तत्प्रपञ्चो विपर्यासः संशयोऽपि प्रकीर्तितः ॥१२७॥

( मु० ) क्रमप्राप्तां बुद्धिं निरूपयितुमाह-बुद्धेरिति । तत्राप्रमां निरूपयति । तच्छून्य इति । तदभाववति तत्प्रकारकं ज्ञानं भ्रम इत्यर्थः तत्प्रपञ्चोऽप्रमाप्रपञ्चः ॥१२५॥ ॥१२६ ॥ ॥१२७॥

( प्र० टी० ) बुद्धेः = ज्ञानस्य प्रपञ्चः = विस्तारः भेदप्रभेदादिः, अनुभूतिः स्मृतिश्चेति, अनुभूतिश्चतुर्विधा इत्येवमाकारः प्रायशो = बाहुल्येन, प्रागेव = आत्मनिरूपणानन्तरमेव निरूपितो = वर्णितः तथापि प्रमाऽप्रमादिभेदेनावशिष्टः प्रकारः, अथ = अपेत्ताद्बुद्धिनिरूपणानन्तरं परिदृश्यते = विविच्योच्यते इत्यर्थः । प्रतिज्ञानुसारं बुद्धिं विभजते—"अप्रमे"ति । प्रमाऽप्रमाभेदेन ज्ञानं द्विविधमित्यर्थः । तत्र यथार्थानुभवः "प्रमा" । अयथार्थानुभवोऽ"प्रमा" । ननु—"बुद्धेरवशिष्टः प्रपञ्चः" इति प्रतिज्ञाय ज्ञानविभजने कः प्रसङ्ग इति चेद् ? बाढम् = परन्तु "बुद्धिरुपलब्धिर्ज्ञानमित्यनर्थान्तरम्" ( न्या० १।१।१५ ) इति गोतमसूत्रेण तयोः पर्यायताप्रतिपादने ज्ञानविभागे बुद्धेरेव विभाग इति शब्दान्तरोपादानं न दोषावहम् । अप्रमां लक्षयति——"तच्छून्य"इति । शून्यपदमत्यन्ताभाववदर्थकम्, तथाच फलितमाह—मूले "तदभाववती"ति । अप्रमां विभजते—"तत्प्रपञ्च" इति । विपर्यासो विपर्ययो विरुद्धज्ञानमिति यावत् । संशयः सन्देहोपि, तत्पूञ्चः = अप्रमाप्रपञ्चः अप्रमाभेद इति यावत् । कश्चिदत्र तर्कोऽपि सङ्गृहीतः । तथाच संशयविपर्ययतर्कं भेदादप्रमा त्रिधेत्यर्थ इत्याह । जैनास्तु-"किमित्यालोचनमात्रमनध्यवसायः" यथा पथि गच्छतस्तृणस्पर्शादिज्ञानम् । इदं हि नानाकोट्यनवलम्बनाभावान्न संशयः, विपरीतैककोटिनिश्चयाभावान्न विपर्यय इति पृथगेव, तदप्यप्रमैवेत्याहुः । १२५, १२६, १२७ ।

[का०] आद्यो देहेष्वात्मबुद्धिः शङ्खादौ पीततामतिः ।
भवेन्निश्चयरूपा या—

( मु० ) आद्य इति । विपर्यास इत्यर्थः । शरीरादौ निश्चयरूपं यदात्मत्वप्रकारकं ज्ञानं गौरोऽहमित्याकारकम् एवं शङ्खादौ पीतः शङ्ख इत्याकारकं यज्ज्ञानं निश्चयरूपं तद् भ्रम इति ॥ १२८ ॥

( प्र० टी० ) विपर्यासादिभेदेषु प्रत्येकमुदाहरति—परममूले "आद्य" इति । अनात्मभूतं देहे आत्ममतिर्या स्वभावतः, शुक्ले शङ्खे "पीतः शङ्ख" इति ज्ञानञ्च निश्चयात्मकं विपर्ययो बोध्यः । एवमेव रज्जौ "अयं सर्प" इति सर्पज्ञानं, शुक्तौ "इदं रजत"मिति रजतज्ञानञ्च पिपर्ययस्थलम् । एतदभिप्रायेणैव मूले "शरीरादावि"ति । व्याख्याति । स्पष्टम् ।

[का०] संशयोऽथ प्रदर्श्यते ॥ १२८ ॥
किंस्विन्नरो वा स्थाणुर्वेत्यादिबुद्धिस्तु संशयः ।

तदभावाप्रकारा धीस्तत्प्रकारा तु निश्चयः ॥१२९॥

( मु० ) किंस्विदिति। किंस्विदिति वितर्के। निश्चयस्य लक्षणमाह। तदभावेति। तदभावाप्रकारं तत्प्रकारं ज्ञानं निश्चयः ॥ १२९ ॥

( प्र० टी० ) संशयमुदाहरति—"किंस्विदि"ति । दूरादुच्चैस्तरत्वं स्थाणुपुरुषसाधारणं धर्मं दृष्ट्वा "किमयं स्थाणुः पुरुषो वे"ति उभयकोट्यवगाहिज्ञानं जायते स संशयः। प्रसङ्गान्निश्चयं लक्षयति परममूले-"तदभावाप्रकारे"ति। तद्विवृणोति—मूले "तदभावाप्रकारकमि"ति । संशयेऽतिव्याप्तिवारणाय "तदभावाप्रकारकमि"ति। निर्विकल्पकेऽतिव्याप्तिवारणाय "तत्प्रकारकमि"ति।

(का०) स संशयो मतिर्या स्यादेकत्राभावभावयोः।
साधारणादिधर्मस्य ज्ञानं संशयकारणम् ॥ १३० ॥

( मु० ) संशयं लक्षयति—स संशय इति । एकधर्मिकविरुद्धभावाभावप्रकारकं ज्ञानं संशय इत्यर्थः। साधारणेति । उभयसाधारणो यो धर्मस्तज्ज्ञानं संशयकारणम् । यथोच्चैस्तरत्वं स्थाणुपुरुषसाधारणं ज्ञात्वाऽयं स्थाणुर्न वेति संदिग्धे। एवमसाधारणधर्मज्ञानमपि कारणम् । यथा शब्दत्वस्य नित्यानित्यव्यावृत्तत्वेन शब्दे गृहीतत्वाच्छब्दो नित्यो न वेति सदिग्धे। विप्रतिपत्तिस्तु शब्दो नित्यो न वेत्यादिशब्दात्मिका न संशयकारणं, शब्दव्याप्तिज्ञानादीनां निश्चयमात्रजनकत्वस्वभावात्। किन्तु तत्र शब्देन कोटिद्वयज्ञानं जन्यते, संशयस्तु मानस एवेति। एवं ज्ञानप्रामाण्यसंशयाद्विषयसंशय इति। एवं व्याप्यसंशयादपि व्यापकसंशय इत्यादिकं बोध्यम्। किन्तु संशये धर्मिज्ञानं धर्मीन्द्रियसन्निकर्षो वा कारणमिति ॥ १३० ॥

( प्र० टी० ) संशयं लक्षयति--परममूले "स संशय" इति। कारिकास्थं लक्षणं सामञ्जस्येन दर्शयति—मूले "एकधर्मिके"ति। "एकधर्मिविशेष्यक विरुद्धकोटिद्वयप्रकारकज्ञानत्वसंशयत्वं मित्यर्थः । ह्रदपर्वतौ वह्नितदभाववन्तौ इति ज्ञानेऽतिव्याप्तिवारणाय एकधर्मिकेति । एकधर्मितावच्छेदकविशिष्टविशेष्यकत्वावच्छिन्नेत्यर्थः । अथवा "क्षितिजले गन्धतदभाववती" इत्याद्याकारकज्ञानवारणाय एकधर्मिकेति। वृक्षः कपिसंयोगी तदभाववांश्चे'त्यादिवारणाय "विरुद्धे"ति । घटः क्षितिर्जलं चेति समुच्चयवारणाय "भावाभावे"ति। संशये हेतुमाह—"साधारणादिधर्मस्ये"ति परममूले । तद्व्याख्याति मूले--"उभयसाधाण"इति । आदिपदाद् असाधारणधर्मस्य ग्रहणम्, तज्ज्ञानमपि संशयस्य कारणम् । तत्र साधारणधर्मजन्यसंशयो यथा—"स्थाणुर्वा पुरुषो वे"ति। अत्र उच्चैस्तरत्वं धर्मः स्थाणुपुरुषसाधारणः। असाधारणधर्मजन्यो यथा—"शब्दो नित्योऽनित्योवे" त्यत्र

शब्दत्वमसाधारणो धर्मः । संशयमुदाहरति—मूले "यथोच्चैस्तरत्व"मिति । असाधारणधर्मज्ञानजन्यं संशयमनुमनुते—"एवमि"ति । तदुदाहरति—यथा "शब्दत्वस्ये"ति । नित्यानित्यव्यावृत्तत्वेन = शब्दत्वं नित्यपरमाण्वादिभ्यावृत्तं, अनित्यघटादिभ्यावृत्तञ्च शब्दमात्रवृत्तित्वादसाधारणो धर्मः । विप्रतिपत्तिमप्येके गौत्तमीयाः संशयहेतुं मन्यन्ते—तन्मतं कटाक्षयन्नाह—"विप्रतिपत्तिस्त्वि"ति । विरुद्धकोटिद्वयोपस्थापकः शब्दविशेषो विप्रतिपत्तिरित्याशयेनाह—"इत्यादिशब्दात्मिके"-ति । आदिना "अस्ति आत्मा इत्येके, नास्त्यात्मेत्यपरे" इति श्रुत्वा मध्यस्थस्य संशय आत्माऽस्ति नवेत्यादिपरिग्रहः । "न संशयकारणमि"ति । तत्र हेतुमाह—"शब्दव्याप्तिज्ञानादीनामि"ति । आदिनाऽतिदेशवाक्यार्थज्ञानपरिग्रहः । ननु—तर्हि गौत्तमसूत्रस्थपञ्चम्यनुपपत्तिरित्यतआह—"किन्त्वि"ति । संशयप्रसङ्गादाह—"एवमि"ति । उपलब्ध्यनुपलब्ध्यव्यवस्थे अपि न संशयकारणमित्यर्थः । अत्रार्थस्तु—ज्ञाने="इदं जल"मित्याकारके ज्ञाने, प्रामाण्यसंशयात्="इदं जलत्वप्रकारकं ज्ञानं प्रमा न वा" इत्याकारकप्रमाण्यसंशयात् विषयसंशयः="इदं जल न वेति" संशयो भवति ।

अयमभिसन्धिः—एकदा जले जलज्ञानमुत्पन्नं तदा सम्यक् जातम्, अन्यदा मरुमरीचिकायां मिथ्या जलज्ञानमुत्पन्नम्, तदनु कदाचिद्वनङ्गतस्य दूरतो लिङ्गदर्शनाज्जायमाने वृक्षसङ्घेषु जलज्ञाने "किमिदं ममोत्पन्नं जलज्ञानं सम्यङ् मिथ्यावे"तियः संशयः स आन्तरविषयः संशयः । ततः "इदं जलं न वे"ति यः संशयो भवति सः प्रामाण्यसंशयजन्यो विषयसंशयः । एवमन्यत् । "एवं व्याप्यसंशयादपी"ति । व्याप्यो धूमादिः । तत्र "पर्वतो धूमवान्नवा" इत्याकारकसंशयात् "पर्वतो वह्निमान्नवेति" यः संशयः स व्यापकसंशयः वह्नेर्व्यापकत्वात् । ननु—साधारणधर्मज्ञानादेरिव धर्मिज्ञानस्यापि संशयहेतुत्वात् तत्कृतो विभागः कुतो न प्रदर्शित इत्याह—"संशये धर्मिज्ञानमि"ति । संशये=संशयमात्रे धर्मिज्ञानस्य कारणतेति भावः । उक्तञ्च वैशेषिके—"सामान्यप्रत्यक्षाद्विशेषाप्रत्यक्षाद् विशेषस्मृतेश्च सशयः" । ( वै० अ० २ । आ० २ । सू० १७ ) सूत्रार्थस्तु—सामान्यवतो धर्मिणः प्रत्यक्षात् विशेषस्य परस्परव्यावर्त्तकस्य धर्मस्य वक्रकोटरादेः शिरःपाण्यादेश्चाप्रत्यक्षात् विशेषस्य कोटिद्वयस्य स्थाणुत्वपुरुषत्वलक्षणस्य स्मरणात् संशयो भवतीति भावः ।

( का० ) दोषोऽप्रमाया जनकः प्रमायास्तु गुणो भवेत् ।
पित्तदूरत्वादिरूपो दोषो नानाविधः स्मृतः ॥१३१॥

( मु० ) दोष इति अप्रमां प्रति दोषः कारणम् । प्रमां प्रति गुणः कारणम् । तत्रापि पित्तादिरूपा दोषा अननुगताः । तेषां कारणत्वमन्वयव्यतिरेकाभ्यां सिद्धम् । गुणस्य प्रमाजनकत्वं तु अनुमानात्सिद्धम् ।

यथा प्रमा ज्ञानसाधारणकारणभिन्नकारणजन्या जन्यज्ञानत्वात् अप्रमावत्। नच दोषाभाव एव कारणमस्त्विति वाच्यम्, पीतः शङ्ख इति ज्ञानस्थले पित्तदोषसत्त्वाच्छङ्खत्वप्रमानुत्पत्तिप्रसङ्गात्। विनिगमनाविरहादनन्तदोषाभावकारणत्वमपेक्ष्य गुणस्य कारणताया न्याय्यत्वात्। नच गुणसत्त्वेऽपि पित्तेन प्रतिबन्धाच्छङ्खे न श्वैत्यज्ञानमतः पित्तादिदोषाभावानां कारणत्वमवश्यं वाच्यं तथा च किं गुणस्य हेतुत्वकल्पनयेति वाच्यम्, तथाप्यन्वयव्यतिरेकाभ्यां गुणस्यापि हेतुत्वसिद्धेः। एवं भ्रमं प्रति गुणाभावः कारणमित्यस्यापि सुवचत्वम्। तत्र दोषाः के इत्याकाङ्क्षायामाह। पित्तेति। क्वचिच्चन्द्रादेः स्वल्पपरिमाणभ्रमे दूरत्वं दोषः। क्वाचिच्च वंशोरगभ्रमे मण्डूकवसाऽञ्जनमित्येवंरूपा दोषा अननुगता भ्रान्तिजनका इत्यर्थः॥२३१॥

(प्र० टी०) दोषादप्रमोत्पद्यत इत्याह परममूले "दोषोऽप्रमाया"इति। अप्रमायाः = अयथार्थज्ञानस्य "पीतः शङ्खः" रज्जौ "अयं सर्प" इत्याकारस्य, जनकः = कारणम्। प्रमायाः = यथार्थज्ञानस्य तद्वति तत्प्रकारकत्वरूपस्य, गुणो = विशेषणं जनकः = कारणं भवेदित्यर्थः। "स्वविशेषणविशिष्टविशेष्यदर्शनादेव प्रमोत्पत्ति"रिति भावः। दोषं दर्शयति—"पित्ते"ति। पित्तं = चिकित्साशास्त्रप्रसिद्धो दोषविशेषः। दूरत्वम् = दूरता। आदिना मण्डूकवासाञ्जनचाकचिक्यादिपरिग्रहः। तदादीनि तत्प्रभृतीनि रूपाणि = स्वरूपाणि यस्य स तथोक्तः दोषः नानाविधः = अनेकप्रकारः स्मृतो = मत इत्यर्थः। शङ्खगतपीतिमभ्रमे पित्तं दोषः। चन्द्रमसः स्वल्पतायां दूरत्वं दोषः। वंशोरगे मण्डूकवसाञ्जनं दोषः। रज्जौ या सर्पधीः तत्र अन्धकारादिर्विषयगतो, भयादिश्च प्रमातृगतो दोषः। एवमन्ये यथायथमूह्याः। उक्ताशयेन विवृणोति—"अप्रमां प्रति दोषः कारण" मित्यादिग्रन्थेन मुक्तावल्याम्।

दोषाणामनैयत्यादाह—"तत्रापी"ति। अननुगताः=कुत्रचित्कश्चिद्दोषः कुत्रचित्कश्चिद्दोषः कारणमित्यर्थः। "तेषां कारणत्वमि"ति। "पित्तादिदोषसत्त्वे अप्रमासत्त्वम्, पित्तादिदोषाभावे अप्रमाभाव" इत्यन्वयव्यतिरेकौ बोध्यावित्यर्थः। नन्वेवं प्रमां प्रति गुणस्याप्यन्वयव्यतिरेकौ स्त इत्यत आह—"गुणस्य प्रमाजनकत्व"मिमि। प्रमाहेतुत्वमित्यर्थः। अनुमानात् सिद्धमित्युक्तं तत्रानुमानं दर्शयति—"यथे"ति। ज्ञानसाधारणकारणमिन्द्रियसन्निकर्षादिः, तद्भिन्नं कारणं विशेषणविशिष्टविशेष्यसन्निकर्षादिः। अग्रेऽनुपदं वक्ष्यमाणः। अर्थान्तरं निराकुरुते—"नचे"त्यादिना। "कारणमस्त्वि"ति। प्रमां प्रति हेतुरस्त्वित्यर्थः। "पीत शङ्ख" इत्यादि सिद्धान्तिग्रन्थः। "शङ्खत्वप्रमे"ति—शङ्खत्ववद्विशेष्यकशङ्खत्वप्रकारकं ज्ञानं स्यात्, तव कथनानुसारमत्र दोषाभावरूपं कारणन्तु नास्ति किन्तु पित्तरूपो दोषो वर्त्तते एव। ननु—पित्तात्मकदोषाभावः श्वैत्यप्रमायामेव कारणं न शङ्खत्वप्रमायामत आह—"विनिग-

मनाविहादि''ति । प्रमायां दोषाभावः कारणं गुणो वा कारणमित्येकपक्षपातिन्या युक्तेरभावादिति भावः । वस्तुतो गुणहेतुतायामेव लाघवं विनिगमकमस्तीत्याह—''अनन्ते''ति । ''न्याय्यत्वादि''ति--अनुगतगुणत्वस्य अग्रे वक्ष्यमाणत्वान्न तद्धेतुत्वमतोऽयं दोष इति भावः ।

प्रमाम्प्रति दोषाभावकारणवादी शङ्कते—''नचे''ति । प्रमाम्प्रति गुणकारणतावादी समाधत्ते—''तथापी''ति । तथाच पित्तादिदोषाभावसत्त्वेऽपि विशेषणवद्विशेष्यसन्निकर्षरूपगुणाभावसत्त्वान्न शङ्खे पीतत्वप्रमेति दोषाभावेन न गुणस्यान्यथासिद्धत्वमिति भावः । सिद्धान्ती प्रतिवन्दीमप्याह—''एवमि''ति । गुणाभाव एव नतु दोषः कारणं स्यादिति भावः । ''तत्र दोषाः के'' इत्यादि सुगममन्यत् ॥ २३१ ॥

( मु० ) अथ के गुणा इत्याकाङ्क्षायां प्रत्यक्षादौ क्रमशो गुणान्दर्शयति--

(का०) प्रत्यक्षे तु विशेष्येण विशेषणवता समम् ।
सन्निकर्षो गुणस्तु स्यादथ त्वनुमितौ गुणः ॥१३२॥
पक्षे साध्यविशिष्टे तु परामर्शो गुणो भवेत् ।
शक्ये सादृश्यबुद्धिस्तु भवेदुपमितौ गुणः ॥१३३॥
शाब्दबोधे योग्यतायास्तात्पर्यस्याथ वा प्रमा ।
गुणः स्याद्भ्रमभिन्नं तु ज्ञानमत्रोच्यते प्रमा ॥१३४॥

( मु० ) प्रत्यक्षे त्विति । प्रत्यक्षे विशेषणवद्विशेष्यसन्निकर्षो गुणः । अनुमितौ साध्यवति साध्यव्याप्यवैशिष्ट्यज्ञानं गुणः । एवमग्रेऽपि ज्ञेयम् ॥ प्रमां निरूपयति । भ्रमभिन्नमिति ॥ १३२—१३४ ॥

( प्र० टी० ) प्रमाभेदे गुणभेदं दर्शयितुमाह—''अथ के गुणा'' इति । प्रत्यक्षे=प्रत्यक्षप्रमायां विशेषणवता=घटत्वादिमता, विशेष्येण=घटादिना सह, सन्निकर्षः=चक्षुरादेरिन्द्रियस्य संयोगादिर्यः स एव गुणस्तां प्रति कारणमित्यर्थः । ''अथानुमितौ त्वि''ति—साध्यं=वन्ह्यादि तद्विशिष्टे=तद्युक्ते पक्षे पर्वतादौ परामर्शो=व्याप्यवत्ताज्ञानं गुणः । उपमितौ शक्ये गवयादौ सादृश्यबुद्धिः=गवादिसादृश्यज्ञानं गुणः । शाब्दबोधे=शाब्दप्रमायां, योग्यतायाः=उक्तलक्षणायाः, तात्पर्यस्य=वक्त्रभिप्रायस्य वा प्रमा=यथार्थज्ञानं गुणः । ''भ्रमभिन्नमि''ति--अत्र=न्यायशास्त्रे अन्यस्य अन्यथादर्शनं भ्रमः अतस्मिंस्तद्बुद्धिरिति यावत् । तद्भिन्नं भ्रमभिन्नं ज्ञानं प्रमेति । एवञ्च ''भ्रमभिन्नत्वं सति ज्ञानत्वे'' प्रमालक्षणम् । भ्रमसंभिन्ने शुक्तिकायां ''रजतमिद''मित्येवमात्मके ज्ञानेऽतिव्याप्तिवारणाय ''भ्रमभिन्नत्वे सति'' इत्युक्तम् । पटादावतिव्याप्तिवारणाय विशेष्यदलम् ॥ १३२—१३४ ॥

(का० ) अथवा तत्प्रकारं यज्ज्ञानं तद्वद्विशेष्यकम् ।
तत्प्रमा न प्रमा नापि भ्रमः स्यान्निर्विकल्पकम् ॥१३५॥
*प्रकारतादिशून्यं हि सम्बन्धानवगाहि तत् ।

(मु० ) ननु यत्र शुक्तिरजतयोरिमे रजते इति ज्ञानं जातं तत्र रजतांशेऽपि प्रमा न स्यात् तज्ज्ञानस्य भ्रमभिन्नत्वाभावादत आह—तद्वद्विशेष्यकत्वे सति तत्प्रकारकं ज्ञानं प्रमेत्यर्थः । अथैवं स्मृतेरपि प्रमात्वं स्यात् । ततः किमिति चेत्तथा सति तत्करणस्यापि प्रमाणान्तरत्वं स्यादिति चेन्न, यथार्थानुभवकरणस्यैव प्रमाणत्वेन विवक्षितत्वात् । इदं तु बोध्यम् । येन सम्बन्धेन यद्वत्ता तेन सम्बन्धेन तद्वद्विशेष्यकत्वं तेन सम्बन्धेन तत्प्रकारकत्वं वाच्यम् । तेन कपालादौ संयोगादिना घटादिज्ञाने नातिव्याप्तिः । एवं सति निर्विकल्पकं प्रमा न स्यात्तस्य सप्रकारकत्वाभावादत आह । न प्रमेति । ननु वृक्षे कपिसंयोगज्ञानं भ्रमः प्रमा च स्यादिति चेन्न, प्रतियोगिव्यधिकरणकपिसंयोगाभाववति संयोगज्ञानस्य भ्रमत्वात् । नच वृक्षे संयोगाभावावच्छेदेन भ्रमो न स्यात्तत्र संयोगाभावस्य प्रतियोगिसमानाधिकरणत्वादिति वाच्यम्, तत्र संयोगाभावावच्छेदेन संयोगज्ञानस्य भ्रमत्वाल्लक्षणस्यानुगमाल्लक्षणाननुगमेऽपि न क्षतिः ।

(प्र टी ) दर्शितलक्षणस्य रङ्गरजतयोः "इमे रजते" इत्यत्र रजतांशे रजतज्ञानस्य प्रमात्मकस्यापि रङ्गांशे रजतज्ञाने भ्रमरूपेण सम्भिन्नतया = सम्मिश्रतया अर्थाद् भ्रमभिन्नत्वाभावेन प्रमात्वाभावादव्याप्तिरित्यतो लक्षणान्तरमाह—"अथवे"ति परममूले । तन्मूले विशदीकरोति—"तद्वद्विशेष्यकत्वे सती"ति । तद्वद्विशेष्यकत्वावच्छिन्नतत्प्रकारकत्ववज्ज्ञानं प्रमेत्यर्थः । सति सप्तम्या अवच्छिन्नार्थकत्वात् । तत्प्रकारकभ्रमेऽतिव्याप्तिवारणाय "तद्वद्विशेष्यके"ति । "रजत एव द्रव्यम्" इति ज्ञाने रजतत्वप्रमात्वापत्तिरतः—"तत्प्रकारके"ति । "ज्ञान" पदञ्च तथाविधेच्छायामतिव्याप्तिवारणाय बोध्यम् । ननु—उक्तं लक्षणं स्मृतावतिव्याप्तमिति सापि प्रमा स्यादित्याशयवान् शङ्कते—"अथै"ति । सिद्धान्ती आशयमविद्वान् पृच्छति—"ततः किमिति चेदि"ति । आक्षेप्ता स्वाभिसन्धिमुद्घाटयति—"तत्करणस्यापी"-

---

* यत्तु "ज्ञानं यन्निर्विकल्पाख्यं तदतीन्द्रियमिष्यते" इति प्राक् निर्विकल्पस्य इन्द्रियागोचरत्वमुक्तम्, अथच प्रत्यक्षस्यैव निर्विकल्पकं भेदमाचक्षते नैयायिकाः, तद्व्याहतमिति केषाञ्चित्कुचोद्यं तदभिप्रायाज्ञानमूलकमेव, इन्द्रियागोचरत्वकथनस्य सांसर्गिकविषयताशून्यतायां पर्यवसायित्वादिति मे भाति । परत्र पण्डिताः प्रमाणम् ।

ति। यथा प्रत्यक्षादिप्रमायाः चक्षुरादि करणं तथा स्मृतिरूपायाः प्रमाया अपि पूर्वानुभवः संस्कारो वा करणान्तरं कल्प्यमिति भावः। आक्षेप्तुराशयं ज्ञात्वा सिद्धान्ती रहस्यं प्रकटयितुमाह—"ने"ति। "यथार्थानुभवे"ति—यथार्थानुभवः प्रमा, प्रमाकरणञ्च प्रमाणमित्याचक्ष्महे। स्मृतिर्नयथार्थानुभवस्वरूपा तस्मान्न तस्याः करणान्तरम्। किन्तु प्रमासंस्कारजन्या सा यथार्था। अप्रमासंस्कारजन्या सा अयथार्थेति व्यवह्रियते। अन्यत्स्मृतिग्रन्थेऽधस्तादवोचाम।

स्थलान्तरे उक्तप्रमालक्षणातिव्याप्तिं शङ्कमानस्तद्वारणाय रहस्यमुपदिशन्नाह—"इदन्त्वि"ति। यस्य पदार्थस्य येन सम्बन्धेन = यत्सम्बन्धावच्छेदेन, यद्धर्मवत्ता = यद्धर्मनिष्ठाधेयतानिरूपिताधिकरणत्ववत्ता भासते, तेनैव सम्बन्धेन = तत्सम्बन्धावच्छेदेनैव, तद्वद्विशेष्यकत्वं तथा तत्प्रकारकत्वञ्च प्रमालक्षणे बोध्यम्। "एवं सती"ति। एवं सति "संयोगेन कपालवन्तौ घटा" वित्याकारकभ्रमज्ञाने प्रमालक्षणस्य नातिव्याप्तिः। तत्र समवायसम्बन्धस्यैव तद्धर्मवत्तावच्छेदकत्वादिति भावः।

अथ निर्विकल्पकं निष्प्रकारकं ज्ञानं कथं प्रमा? तस्याः सप्रकारकत्वनियमादत आह—परममूले "न प्रमे"ति। तद्व्याख्यया स्पष्टीकरोति—मुक्तावल्याम् "एवं सती"त्यादिना। प्रकारतादिशून्यं विशेषणविशेष्यभावरहितं, सम्बन्धानवगाहि = संयोगाद्यपरामर्शि च निर्विकल्पकमिति तत्रालक्ष्यत्वान्नाव्याप्तिसम्भावनापीति भावः।

प्रासङ्गिकं शङ्कते—"नन्वि"ति। "वृक्षः कपिसंयोगी" इत्याकारकं ज्ञानं प्रमापि स्याद् भ्रमोऽपि स्यात् शाखावच्छेदेन कपिसंयोगस्य सत्त्वान्मूलावच्छेदेन तदभावस्यापि विद्यमानत्वादिति शङ्कार्थः। समाधत्ते—"ने"ति। विरुद्धमधिकरणं व्यधिकरणं, प्रतियोगिनो व्यधिकरणं यस्य सः प्रतियोगिव्यधिकरणः सचासौ संयोगः यदि तदभाववति संयोगज्ञानं तदा तद्भ्रमरूपं नान्यथेति उत्तरार्थः।

पुनः शङ्कते—"नच वृक्ष" इति। मूलावच्छेदेन संयोगाभाववति संयोगज्ञानं भ्रमो न स्यात् तस्य = संयोगाभावस्य प्रतियोगिनः संयोगस्य समानाधिकरणत्वादिति शङ्कार्थः। इष्टापत्त्या परिहरति—"तत्रे"ति। मूले कपिसंयोगज्ञानं भ्रम इतीष्यत एवेति भावः। नन्वेवं प्रमालक्षणाननुगमः स्यादत आह—"लक्ष्यस्ये"ति। अस्माकं लक्ष्यमेव नास्ति तत्र यदि लक्षणमसङ्गतं, तदा नास्ति कश्चिद्दोष इति भावः।

एतादृशस्थलन्तु—सामान्यलक्षणलक्ष्यमेव नास्तीति, किन्तु एतादृशस्थलार्थं प्रतियोगिव्यधिकरणाद्यघटितं विशेषलक्षणम्। तच्चेत्थम्—मूलावच्छेदेन (संयोगाभावावच्छेदेन) संयोगाभाववति संयोगज्ञानं भ्रम इति स्वामिनः।

(का०) प्रमात्वं न स्वतो ग्राह्यं संशयानुपपत्तितः ॥१३६॥

(मु०) प्रमात्वमिति। मीमांसका हि प्रमात्वं स्वतो ग्राह्यमिति

वदन्ति। तत्र गुरूणां मते ज्ञानस्य स्वप्रकाशत्वात्तज्ज्ञानप्रामाण्यं तेनैव गृह्यते इति। भट्टानां मते ज्ञानमतीन्द्रियम्। ज्ञानजन्या ज्ञातता प्रत्यक्षा तया च ज्ञानमनुमीयते। मुरारिमिश्राणां मतेऽनुव्यवसायेन ज्ञानं गृह्यते। सर्वेषामपि मते तज्ज्ञानविषयकज्ञानेन तज्ज्ञानप्रामाण्यं गृह्यते। विषयनिरूप्यं हि ज्ञानम्। अतो ज्ञानवित्तिवेद्यो विषयः।

(प्र० टी०) "प्रमात्वं न स्वतो ग्राह्य" मिति मूलेन स्वतोग्राह्यत्वं निषिध्यते तत्र स्वतस्त्ववादिनः के सन्तीत्याकाङ्क्षायामाह—"मीमांसका ही"ति। अत्र त्रयो मीमांसकाः सन्ति। प्राभाकराः भाट्टाः मुरारिमिश्रमतानुयिनश्च। त्रयाणामपि मते ज्ञानगतं प्रामाण्यम् अर्थात् सत्यत्वं स्वतो गृह्यते इति ते स्वतःप्रामाण्यवादिनो भण्यन्ते। तत्रापि तेषामस्ति किञ्चिद्वैलक्षण्यं तद्दर्शयति—"गुरुणां मत"इति। गुरुः प्रभाकरः बहुवचनमादरार्थम्। ज्ञानस्य स्वप्रकाशत्वात्=स्वविषयकत्वात्, अर्थात् यथा ज्ञानं घटपटाद्यर्थं विषयीकरोति तथैव स्वात्मानमपि प्रकाशयति (विषयीकरोति) इति तत्त्वात्। ज्ञानप्रामाण्यं=स्वनिष्ठः प्रमात्वधर्मः स्वनिष्ठज्ञानत्वादिवत् तेनैव गृह्यते=स्वेनैव प्रकाश्यत इत्यर्थः एतस्मिन्मते सर्वस्मिन्नेव ज्ञाने मितिमातृमेयैतत्त्रयं भासते। तन्मते "घटत्वेन घटमहं जानामि" इत्याकारक एव व्यवसायः सच स्वयंप्रकाशः, तेनैव च स्वगतप्रामाण्यग्रह इति भावः।

भाट्टमतमाह—"भट्टानां मतेत्वि"ति। सर्वं ज्ञानमतीन्द्रियम्=इन्द्रियागोचरः। ज्ञानजन्या ज्ञातता=घटादिविषयनिष्ठो धर्मविशेषः "ज्ञातो घट" इत्याकारकप्रतीतिसिद्धः, प्रत्यक्षा=इन्द्रियगोचरः, तयाच=ज्ञाततयेत्यर्थः, ज्ञानमनुमीयते। अनुमानप्रकारश्च—"इयं घटनिष्ठा ज्ञातता घटत्ववद्विशेष्यकघटत्वप्रकारकज्ञानजन्या घटवृत्तिघटत्वप्रकारकज्ञाततावत्त्वात्"। "या यद्वृत्तिर्यत्प्रकारिका ज्ञातता सा तद्वद्विशेष्यकतत्प्रकारकज्ञानसाध्या यथा पटे पटत्वप्रकारिका ज्ञाततेति प्रतिबन्धसिद्धिः। एवञ्च ज्ञातताळिङ्गेनानुमानेन ज्ञानं गृहीतं तेनैव तत्प्रामाण्यस्यापि ग्रह इति प्रामाण्यस्वतस्त्वम्। मुरारिमिश्रमतमाह—"मुरारिमिश्राणामि"ति। अस्मिन्मते "अयं घट" इत्याकारकज्ञानानन्तरं "घटत्वेन घटमहं जानामि" इति ज्ञानविषयकमलौकिकभानमनुव्यवसायनामकमुत्पद्यते तेनैव ज्ञानगतप्रामाण्यग्रहः। अन्येषामपि स्वतःप्रामाण्यवादिनां मतं समीकरोति—"सर्वेषामपी"ति। तज्ज्ञानविषयकज्ञानेन=ज्ञानविषयकज्ञानेन अनुव्यवसायात्मकेनेत्यर्थः, तज्ज्ञानप्रामाण्यम्=व्यवसायात्मकज्ञाननिष्ठं प्रमात्वमित्यर्थः।

ननु—ज्ञानज्ञानस्य विषयाविषयकत्वात् कथं विषयघटितप्रामाण्यं तस्य विषय इत्यतो ज्ञानज्ञानस्य विषयविषयकत्वे प्रमाणमाह—"विषयनिरूप्यमि"ति। "ज्ञानवित्ती"ति—ज्ञानस्य वित्तिः अर्थात् ज्ञानज्ञानं, तद्वेद्यो घटादिविषयः।

नहि निर्विषयं ज्ञानमस्तीति भावः। अत्रानुमानस्यायमाकारः—ज्ञानं सविषयं भवितुमर्हति प्रकाशकत्वात् दीपवद्" इति।

(मु०) तन्मतं दूषयति। न स्वतो ग्राह्यमिति। संशयेति। यदि ज्ञानस्य प्रामाण्यं स्वतो ग्राह्यं स्यात्तदाऽनभ्यासदशोत्पन्नज्ञाने प्रामाण्यसंशयो न स्यात्। तत्र हि यदि ज्ञानं ज्ञातं तदा त्वन्मते प्रामाण्यं ज्ञातमेवेति कथं संशयः। यदि तु ज्ञानं न ज्ञातं तदा धर्मिज्ञानाभावात्कथं संशयः। तस्माज्ज्ञाने प्रामाण्यमनुमेयम्। तथा हि। इदं ज्ञानं प्रमा संवादिप्रवृत्तिजनकत्वात् यन्नैवं यन्नैवं यथाऽप्रमा। इदं पृथिवीत्वप्रकारकं ज्ञानं प्रमा गन्धवति पृथिवीत्वप्रकारकज्ञानत्वात्। एवमिदं जलत्वप्रकारकं ज्ञानं प्रमा स्नेहवति जलत्वप्रकारकज्ञानत्वात्। नच हेतुज्ञानं कथं जातमिति वाच्यम्, पृथिवीत्वप्रकारकत्वस्य स्वतोग्राह्यत्वात्। तत्र गन्धग्रहेण गन्धवद्विशेष्यकत्वस्यापि सुग्रहत्वात्। तत्प्रकारकत्वावच्छिन्नतद्वद्विशेष्यकत्वं परं न गृह्यते संशयानुरोधात्।

(प्र० टी०) "तन्मतमि"ति—स्वतःप्रामाण्यवादिनां मतं खण्डयतीत्यर्थः। "न *स्वतोग्राह्यमि"ति। तत्र युक्तिमाह—"संशयानुपपत्ति" इति। "अनभ्यासदशोत्पन्ने"ति—अनवधृतप्रामाण्यसजातीयेत्यर्थः। ज्ञातमेव=निश्चितमेव। "यदि" इत्यारभ्य "संशयः" इत्यन्तग्रन्थस्यायं सारः—यदि ज्ञानप्रामाण्यं स्वतो ग्राह्यं स्यात् तर्हि बालकस्य बाल्ये जलज्ञाने जाते "ममेदं जातं जलज्ञानं प्रमा नवे"ति संशयो न भवेत, कुतः—तत्र यदि ज्ञानं ज्ञातं तदा तद्गतं प्रामाण्यं=सत्यत्वमपि ज्ञातमेव। यदि ज्ञानं नैव ज्ञातं तदापि धर्मिज्ञानाभावान्नैव संशयः, संशये धर्मिज्ञानस्य कारणत्वात्, तस्मात्सफलप्रवृत्तिजनकतालिङ्गकानुमानगम्यमेव प्रामाण्यम्। इदमेव प्रामाण्यस्य परतोग्राह्यत्वं नमेत्याशयेनाह—"तस्माज्ज्ञाने प्रामाण्यमनुमेयमि"ति। धर्मिसामान्यज्ञानोत्तरमेव धर्मसंशयो भवति नान्यथा, तस्माज्ज्ञानप्रामाण्यमनुमानगम्यमेवेत्यर्थः। तत्प्रकारं दर्शयितुमाह—"तथाही"ति। स्पष्टम्। शङ्कते—"नच हेतुज्ञानमि"ति। समाधत्ते—"पृथिवीत्वप्रकारत्वस्ये"ति। पृथिवीत्वप्रकारावगाहिनो ज्ञाननिष्ठधर्मस्य तथा गन्धवद्विशेष्यकत्वावगाहिनो ज्ञाननिष्ठधर्मस्य च कामं भवतु स्वतोग्रहः किन्तु दर्शितरीत्या संशयानुरोधात् पृथिवीत्वप्रकारकत्वावच्छिन्नपृथिवीत्ववद्विशेष्यकत्वस्य धर्मस्य न स्वतोग्रहः। विशकलितयोः विशेष्य विशेषणयोः स्वतोग्रहे नास्ति दोष इत्यर्थः।

(मु०) नच प्रमात्वस्य साध्यस्य प्रसिद्धिः कथमितिवाच्यम् इदं ज्ञान-

* स्वतस्त्वञ्च—स्वाश्रयग्राहकातिरिक्ताग्राह्यत्वम्। स्वं=तद्वति तत्प्रकारकत्वरूपं प्रमात्वम्, तदाश्रयो ज्ञानम्, तद्ग्राहकमनुव्यवसायादि, तदतिरिक्तमनुमानादि, तदग्राह्यत्वं प्रमात्वे।

प्रमात्वस्य स्वतोग्राह्यत्वात् ।

( प्र० टी० ) शङ्कते—"नचे"ति । "इदं ज्ञानं प्रमा" इति प्रतिज्ञायां साध्यं यत्प्रमात्वं तस्य कुत्र पूर्वं प्रसिद्धिरिति भावः । समाधत्ते—"इदमि"ति । इदन्ताज्ञाने "इदमनिदं वा" इत्याकारकः सन्देहः कदापि नोद्भवति अत "इदंज्ञानप्रमात्वं" स्वतोग्राह्यमेवेति भावः ।

( मु० ) नच प्रकारभेदेन प्रामाण्यभेदाद् घटत्वप्रकारकत्वादेः कथं प्रसिद्धिरिति वाच्यम्, घटत्वप्रकारत्वस्य स्वविशेष्यकत्वस्य च स्वतोग्राह्यत्वात् । घटस्य च पूर्वमुपस्थितत्वात् घटविशेष्यकं घटत्वप्रकारकमिति ज्ञाने प्रामाण्यस्य बाधकाभावः । व्यवसायपरन्तु प्रामाण्यं न गृह्यते तत्र संशयसामग्रीसत्त्वे संशयस्यैवोपपत्तेः ।

( प्र० टी० ) स्वतस्त्ववादी प्रकारान्तरेण शङ्कते—"नच प्रकारभेदेने"ति । प्रकारभेदेन=विशेषणभेदेन धर्मभेदेनेति यावत् । घटत्वप्रकारकत्वादेः = घटत्वप्रकारावगाहिज्ञाननिष्ठधर्मस्येत्यर्थः । परतस्त्ववादी समाधत्ते—"घटत्वे"ति । स्पष्टं पूर्वं व्याख्यातप्रायञ्च । अत्र युक्तिमाह—"घटस्य चे"ति । "घटविशेष्यके"ति—घटनिष्ठविशेष्यतावगाहिज्ञाननिष्ठप्रमात्वग्रहे घटत्वनिष्ठप्रकारतावगाहिज्ञाननिष्ठप्रमात्वग्रहे च न किञ्चिद्बाधकं पश्याम इति भावः ।

विशकलितविशेष्यविशेषणावगाहिज्ञानगतप्रमात्वधर्मस्य स्वत एव ग्रहणं मन्यामहे, न तत्र विवदामहे, किन्तु विशेष्यविशेषणोभयविशिष्टावगाहिज्ञाननिष्ठं प्रमात्वं न स्वतो गृह्यते । अत्र हेतुमाह—"संशयसामग्रीसत्त्व" इति । तथा च—घटत्ववद्विशेष्यकं घटत्वप्रकारकत्वरूपव्यवसायज्ञाने प्रमात्वसंशयसामग्रीसत्त्वे संशयोपपत्तेरतस्तादृशसंशयानुपपत्त्या विशिष्ट ज्ञाने प्रमात्वमनुमेयमिति भावः ।

[ मु० ] किञ्चाभ्यासदशायां तृतीयानुव्यवसायादिना प्रामाण्यस्य स्वत एव ग्रहसम्भवात् प्रथमानुव्यवसायपरं न तद्ग्राहकमिति कल्प्यते संशयानुरोधात् ।

( प्र० टी० ) स्वसिद्धान्तं प्रकारान्तरेण स्पष्टीकरोति परतस्त्ववादी—"किञ्चे"ति । स्पष्टम् ।

( मु० ) अथ प्रामाण्यानुमितौ प्रामाण्यग्रहेण तस्या विषयनिश्चयरूपत्वार्थं तत्र प्रामाण्यग्रहो वाच्यः, सोऽप्यनुमित्यन्तरेणेति फलमुखी कारणमुखी वानवस्थेति चेत् ?—

( प्र० टी० ) स्वतस्त्ववादी परतस्त्ववादिनो मते अनवस्थामुद्भावयति—"अथे"-ति । अस्यायमाशयः—प्रमात्वग्रहोऽनुमानेनेति ते मतम् । तत्र प्रथमानुमितौ अर्थात् प्रथमप्रामाण्यानुमितौ प्रमात्वग्रहाय द्वितीयानुमित्यपेक्षा, तत्रापि तृतीयानुमित्यपेक्षा,

एवमुत्तरोत्तरं फलमुखी = प्रमात्वग्रहफलप्रधाना । कारणमुखी = प्रथमानुमितिज्ञानरूपकारणपुष्ट्यै द्वितीयानुमितिकारणापेक्षा, एवं द्वितीयानुमितिज्ञानकारणसिद्धौ तृतीयानुमितिज्ञानकारणापेक्षेत्येवमनुमितिज्ञानात्मककारणप्रधाना अनवस्थैवापतेत्, नत्वेवं स्वतोग्रहवादे दोष इति ।

( मु० ) न, अगृहीताप्रामाण्यग्रहकस्यैव निश्चयरूपत्वात् । यत्र च प्रामाण्यसंशयस्तत्रैव परं प्रामाण्यानुमितेरपेक्षा, यावदाशङ्कं प्रामाण्यानुमितिरिष्यत एव ।

( प्र० टी ) परतोग्रहवादी समाधत्ते—"ने"ति । नैवानवस्थेत्यर्थः । तत्र हेतुमाह—"अगृहीते"ति । "इदं ज्ञानमप्रमा" इत्याकारकोऽप्रमात्वग्रहो यत्र न जातः तदेव ज्ञानं निश्चयरूपं मन्यामहे, यत्र ज्ञाननिष्ठप्रमात्वस्य संशयः तत्रैव प्रामाण्यग्राहकानुमितिसामग्र्यपेक्षा नत्वन्यत्र । यावदाशङ्कमनुमितिरिष्टा * "शङ्काचेदनुमा-

---

* शङ्काचेदनुमास्त्येव नचेच्छङ्का ततस्तराम् ।
व्याघातावधिराशङ्का तर्कः शङ्कावधिर्मतः ॥
( कुसु० ३ ये स्तवके, ७मी० का० )

अस्यायमाशयः—यद्यनुपलम्भमात्रं नाभावं साधयेत्, तदा अयोग्योपाधिशङ्कया धूमादावपि व्यभिचारशङ्का समुन्मिषेत् अर्थात् भविष्यति कश्चिद्वह्निर्धूमव्यभिचारी विशिष्य सकलवह्निव्यक्तीनां ज्ञातुमशक्यत्वात्, तथाच तस्यां शङ्कायां विद्यमानायां न स्याद्व्याप्तिनिश्चय इति गतमनुमानेन इत्याक्षेपे सत्याह—"शङ्काचे"दिति । यदि तद्देशतत्कालयोर्व्यभिचाराभावनिश्चयात् कालान्तरस्थदेशान्तरस्थयोर्वह्निधूमयोर्व्यभिचारशङ्का स्यात् तदा कालान्तरदेशान्तरस्थज्ञानमनुमानादेवेति सिद्धमनुमानम् । "शङ्का न चेत्"=ततः शङ्काया अभावे तराम्=सुतरामनुमानं जातमेव, तदा वह्निधूमयोः प्रत्यक्षाभावात् शङ्कानिवृत्तेश्च प्रमाणान्तरानपनोद्यत्वे सति अनुमानैकापनोद्यत्वात्, अर्थात् विपक्षबाधकतर्केण शङ्काया निवर्त्यत्वात् । नच तर्कस्यापि व्याप्तिमूलकत्वेनानवस्था स्यादिति वाच्यम् यतो "व्याघातावधिराशङ्का"=व्याघातात्मकस्तर्क एव शङ्काया अवधिः तत उत्तरं शङ्काविरहदर्शनात् । अयं भावः—तर्कमूलव्याप्तौ न शङ्का व्याघातात् । क्लृप्तकारणं विनाऽपि यदि कार्यमाशङ्क्यते तदा तृप्त्यर्थं भोजनादौ परप्रत्ययजननार्थं च शब्दप्रयोगादौ कोऽपि न प्रवर्तेत । एवञ्च तर्कानवतारे शङ्कितोपिधिरेवाप्रयोजक इत्युच्यते । तदुक्तम्—

यावच्चाव्यतिरेकित्वं शतांशेनापि शङ्क्यते ।
विपक्षस्य कुतस्तावद्धेतोर्गमनिकाबलम् ॥

विस्तरस्तु कुसुमाञ्जल्यादौ द्रष्टव्यः । शतांशेनापि=येनकेनापि साधारणधर्मदर्शनादिना अनुत्कटापि यावच्छङ्का स्यादित्यर्थः । विपक्षे हेतोरव्यतिरेकित्वम्=सत्त्वं यावच्छङ्क्यते न तावद्धेतोर्गमकत्वमिति भावः ।

स्त्येव" इत्याचार्योक्तेः । तस्मान्नानवस्थासम्भावना अन्ततः क्वचिन्निश्चयसत्त्वात् ।

**( मु० ) सर्वत्र तु न संशयः । क्वचित्कोट्यनुपस्थितेः, क्वचिद्विशेषदर्शनादितः, क्वचिद्विषयान्तरसञ्चारादिति सङ्क्षेपः ।**

( प्र० टी० ) स्वोक्तार्थे युक्तिमाह सिद्धान्ती—"सर्वत्रे"ति । "परस्परविरुद्धनानाधर्मावगाहि ज्ञानं संशय" इत्यवोचाम । यत्र तु विरोधिधर्मोपस्थितिर्नास्ति, न तत्र संशयः । यत्र विषयस्य स्थाण्वादेर्विशेषदर्शनं नाम स्थाणुत्वादिज्ञानं जातं तत्रापि न संशयः । क्वचित् विषयान्तरे = अर्थात् एकविषयकज्ञानानन्तरं क्षिप्रमेव ज्ञानसन्ततेः तदन्यविषये सञ्चारो जातस्तत्रापि न संशयः । एवमनेकत्र संशयाभावसत्त्वात् उक्तरीत्याऽनवस्थोद्भावनं वादिनः साहसमात्रमेवेति भावः ।

**अयमत्र प्रामाण्यवादस्य सरलसङ्ग्रहः—**

प्रत्यक्षानुमित्यादियथार्थानुभवात्मकप्रमायां यत्तद्वति तत्प्रकारकज्ञानत्वरूपं प्रमात्वं प्रामाण्यशब्देनापि व्यवह्रियमाणं तत्र मीमांसका वेदान्तिनश्च स्वतस्त्वमभ्युपेयन्ते नैयायिकास्तु परतस्त्वमिति तत्प्रदर्श्यते—

तत्र तावत्स्वतस्त्वं द्विविधं उत्पत्तिज्ञप्तिभेदात्, तथैव परतस्त्वम् ।

तथाहि——दोषाभावसहकृतज्ञानसामान्यसामग्रीप्रयोज्यत्वमुत्पत्तिस्वतस्त्वम्, ज्ञानसामन्यसामग्री तु आत्मा, आत्ममनःसंयोगः, इन्द्रियमनुमानादिकञ्चेत्यादि । अप्रमायामतिव्याप्तिवारणाय दोषाभावसहकृतेति विशेषणम्, दोषाभावसहकृतयावत्स्वाश्रयग्राहकसामग्रीग्राह्यत्वं ज्ञप्तिस्वतस्त्वम् । "स्व" शब्दग्राह्यं प्रमात्वं, तदाश्रयभूतं प्रमाज्ञानं, तद्ग्राहिका यावती सामग्री=प्रमात्वाश्रयभूतप्रमाज्ञानविषयिणी यावती दोषाभावसहकृता ज्ञानोत्पादिका सामग्री तद्ग्राह्यत्वं नाम पूर्वोक्तसामग्रीजन्यज्ञानविषयत्वं प्रमात्वनिष्ठं ज्ञप्तिस्वतस्त्वम् । अयं भावः—दोषाभावसहकृतज्ञानसामग्रीजन्यानि यावन्ति ज्ञानानि प्रमात्वाश्रयभूतप्रमाविषयकानि तावन्त्येव प्रमात्वविषकानीत्यपि, एतदेव प्रमात्वे "स्वतो ग्राह्यत्वं" तदेव ज्ञप्तिस्वतस्त्वम् ।

यथा दोषवशात् प्रमाज्ञाने "इदं ज्ञानमप्रमा" अथवा "इदं ज्ञानं प्रमा नवे"ति असम्भावितं विपरीतभावितं वा, तत्र प्रमाज्ञानवृत्ति प्रमात्वे स्वाश्रयग्राहकयावज्ज्ञानग्राहकसामग्रीग्राह्यत्वं नास्ति, किन्तु अप्रमात्वविषयकेन संशयनिश्चयसाधारणज्ञानेन प्रमात्वाश्रयभूतं ज्ञानं विषयीक्रियते नतु ज्ञानवृत्तिप्रमात्वमपि । अतोऽतिव्याप्तिवारणाय लक्षणे "दोषाभावसहकृते"ति । विशेषणम् । तत्र भ्रमसंशयजनकसामग्र्या दोषाभावसहकृतत्वाभावात् ।

सिद्धसाधनदोषवारणाय लक्षणे "यावत्पद"निवेशः । तथाहि—परतः प्रामाण्यवादिनैयायिकनये प्रामात्वाश्रयविषयकानुमानादिसामग्र्या एव प्रमात्वग्रहः तन्नैयायिकाभिमतार्थसाधनान्मीमांसकानां सिद्धसाधनदोषापत्तिरिति कृत्वा सामग्रीपदस्य=

सामग्रीजन्यज्ञानपदस्य यावदितिविशेषणम् । तार्किकनये ऽनुव्यवसायज्ञानं प्रमात्वाश्रयभूतप्रमाज्ञानं विषयीकुर्वदपि प्रमात्वं न विषयीकरोति । एवं तार्किकसिद्धान्ते प्रमात्वनिष्ठं यावत्स्वाश्रयग्राहकसामग्रीग्राह्यत्वं नास्ति तस्मादुक्तदोषोऽपि नास्त्येव । इत्थञ्च स्वतःप्रामाण्यवादिनां त्रीणि मतानि । तत्र प्रभाकारः—"घटादिविषये यद्यत्प्रमारूपं व्यवसायज्ञानं तद् 'घटत्वेन घटमहञ्जानामि" इत्याकारकं भवति तस्मात्सर्वत्र व्यवसायज्ञाने मितिमातृमेयाकारा त्रिपुटी भासते । व्यवसायज्ञाने मितिः, तदाश्रय आत्मा माता, घटादिकं मेयमिति । इत्थं व्यवसायज्ञानं स्वरूपं विषयीकुर्वत्स्वनिष्ठं प्रमात्वमपि विषयीकरोति तेन प्रमात्वे यावत्स्वाश्रयग्राहकसामग्रीग्राह्यत्वं स्पष्टमेव ।

मुरारिमिश्रास्तु—"अयं घट" इति व्यवसायज्ञानानन्तरं "घटत्वेन घटमहञ्जानामि" इत्याकारकं मानसं प्रत्यक्षमनुव्यवसायात्मकं जायमानं व्यवसायं तद्वृत्ति प्रमात्वञ्च विषयीकरोतीति स्वतोग्राह्यत्वं सुस्पष्टम् ।

भाट्टास्तु—सर्वं ज्ञानमतीन्द्रियम्, तस्माज्ज्ञानं न प्रत्यक्षं किन्तु "अयं घट" इति ज्ञानान्तरं घटादौ ज्ञेये "ज्ञातताख्यो" धर्म उत्पद्यते तदनन्तरं "ज्ञातो घट" इत्येवञ्जातीयकं ज्ञातताविषयकं प्रत्यक्षं भवति, ततो ज्ञाततारूयाद्धेतोस्तज्ज्ञानमनुमीयते। अनुमानप्रकारश्च यथा—"घटो घटत्ववद्विशेष्यकघटत्वप्रकारकज्ञानविषयो घटत्वप्रकारकज्ञाततावत्त्वात् यन्नैवं तन्नैवम् यथाऽप्रमा"इति। तथा चेदमनुमानम् "अयं घट" इतिज्ञानं तद्वृत्ति प्रमात्वञ्च गृह्णाति तदेव प्रमात्वे यावत्स्वाश्रयग्राहकसामग्रीग्राह्यत्वं स्वतोग्राह्यत्वं नाम । वेदान्तिनस्तु "अयं घट" इत्याकारकं वृत्तिज्ञानमेव प्रमात्वाश्रयभूतं, तद्ग्राहकं तु साक्षिचैतन्यं, तच्च वृत्तिज्ञानं तन्निष्ठं प्रमात्वं च विषयीकुर्वदेव राजत इति नोक्तलक्षणासङ्गतिः ।

अत्र नैयायिकः—प्रमात्वस्य स्वतोग्राह्यत्व नोपपद्यते संशयानुपपत्तेः । यदि तत्स्वतः स्यात्तदाऽनभ्यासदशोत्पन्नजलज्ञाने "इदं जलज्ञानं प्रमा नवेति" संशयो न स्यात् । तत्र यदि अनुव्यवसायादिना ज्ञानं ज्ञातं, तदा तेन ज्ञानप्रामाण्यमपि ज्ञातमेवेति कुतः संशयः ? निश्चयस्य तत्प्रतिबन्धकत्वात् । संशयश्चानभ्यासदशापन्नज्ञाने सर्वानुभवसिद्धो नापलपितुं शक्यः । एवञ्च "इदञ्जल" मिति व्यवसायानन्तरं जायमानं "जलमहञ्जानामि" इत्यनुव्यवसायज्ञानं विषयीकरोतु नाम ? कुतस्त्यन्तु तस्य तन्निष्ठप्रमात्वविषयीकरणम् पूर्वोक्तसंशयानुरोधात् । ततश्च पूर्वं जलज्ञानं, ततस्तद्विषयिणी इच्छा, ततो जलप्रवृत्तिः, ततः प्रवृत्त्या जलप्राप्तिः । एवं संवादिप्रवृत्त्या जलज्ञाननिष्ठं प्रमात्वमनुमीयते । प्रयोगश्च भवति—"पूर्वोत्पन्नं जलज्ञानं प्रमा सफलप्रवृत्तिजनकत्वात् यन्नैवं तन्नैवं यथा शुक्ताविदं रजतमित्यप्रमा" एवम्प्रकारानुमानेनयाद् विषयीक्रियते प्रमात्वं तदेव प्रमात्वे परतस्त्वम् ( ज्ञप्तिपरतस्त्वम् ) ।

लक्षणन्तु—"ज्ञानमात्रग्राहकसामग्रीभिन्नसामग्रीग्राह्यत्वं ज्ञप्तिपरतस्त्वम् । इदं जल" मिति व्यवसायज्ञानविषयकं "जलमहञ्जानामी"ति मानसप्रत्यक्षमनुव्यवसायज्ञानम्भवति । तदनुव्यवसायज्ञानमात्मानमपि विषयीकरोति व्यवसायविषयकं जलमपि विषयीकरोति, तत्र प्रत्यक्षस्येन्द्रियार्थसन्निकर्षजन्यत्वनियमान्मनोरूपेन्द्रियेण समं तेषां सम्बन्धो वाच्यः। तत्र आत्ममनसोर्द्रव्यतया "द्रव्ययोरेव संयोग" इति न्यायेन तयोः संयोगः सम्बन्धः, व्यवसायज्ञानेन सह मनसः संयुक्तसमवायः सम्बन्धः, बाह्यपदार्थेन साकं मनसः संयोगादिरूपः लौकिकः सम्बन्धो भवितुं नार्हति तेन तस्य जलविषयेण सह कश्चित्सम्बन्धोवाच्यः, सच "ज्ञानलक्षणाख्यो"ऽलौकिकः । "इदं जल" मित्याकारकं व्यवसायात्मकं ज्ञानमेव बाह्यजलेन मनसः सम्बन्धः इत्यर्थः । नच वाच्यं तद्व्यवसायज्ञानमात्मनि समवायसम्बन्धेन वर्त्तमानमपि मनसि नैव वर्त्तते तस्य ज्ञानानधिकरणत्वादिति तस्मिञ्ज्ञाने मनःसम्बन्धोपि नास्त्येवेति, ज्ञानलक्षणापदेन "स्व संयुक्तसमवेतज्ञानस्यैव" विवक्षितत्वात् । "स्व" शब्दग्राह्यं मनः, तत्संयुक्त आत्मा, तत्रात्मनि "इदंजल" मित्याकारकं व्यवसायज्ञानं, तच्च विषयतासम्बन्धेन जलनिष्ठं, समवायसम्बन्धेनात्मनिष्ठं, स्वसंयुक्तसमवेतसम्बन्धेन मनोनिष्ठमपीति भावः ।

अनया रीत्या अनुव्यवसायज्ञानोत्पत्तिहेतुभूता या मनःसंयोगादिरूपा सामग्री सा ज्ञानमात्रग्राहकसामग्रीपदेनाभिलप्यते, तया प्रमात्वं न ज्ञायते, किन्तु तद्भिन्ना याऽनुमानादिरूपा सामग्री तयैव प्रमात्वमनुमीयते, एतदेव प्रमात्वे परतोग्राह्यत्वरूपं ज्ञप्तिपरतस्त्वम् । ज्ञानमात्रग्राहकसामग्रीभिन्नसामग्री "पर" शब्दार्थः ।

ज्ञानमात्रग्राहकसामग्र्यतिरिक्तकारणप्रयोज्यत्वमुत्पत्तिपरतस्त्वम् । तत्र ज्ञानमात्रोत्पादिका सामग्री आत्मा, मनःसंयोगः इन्द्रियमनुमानादिकञ्च । यदि ज्ञानमात्रोत्पत्तिहेतुभूतसामग्रीत एव ज्ञाने प्रमात्वं स्यात्, तदा सर्वं ज्ञानम्प्रमैव स्यात्, इन्द्रियादिसामग्रीतो जायमानमपि "शुक्ताविदं रजत" मिति ज्ञानन्त्वप्रमैव तस्मादुक्तसामग्रीभिन्नकारणादेव प्रमात्वमुत्पद्यते । तद्भिन्नकारणञ्च गुणः, तद्गुणजन्यत्वम्प्रमात्वे उत्पत्तिपरतस्त्वम् । तथाचोक्तं परममूले—

प्रत्यक्षे तु विशेष्येण विशेषणवता समम्
सन्निकर्षो गुणस्तु स्यादथत्वनुमितौ गुणः ।
पक्षे साध्यविशिष्टे च परामर्शो गुणो भवेत् ॥
शक्ये सादृश्यबुद्धिस्तु भवेदुपमितौ गुणः ।
शाब्दबोधे योग्यतायास्तात्पर्यस्याथवा प्रमा ॥ इति ।

एवञ्चाप्रमाया अपि द्विविधं परतस्त्वञ्च बोध्यम् । "दोषोऽप्रमाया जनकः प्रमायान्तु गुणो भवेद्" इत्युक्तेः । ज्ञानमात्रकारणातिरिक्तदोषरूपकारणप्रयोज्यत्वमप्रमाया मुत्पत्तिपरतस्त्वम् । ज्ञानमात्रग्राहकसामग्रीभिन्नसामग्रीग्राह्यत्वमप्रमायां ज्ञप्तिप-

रतस्त्वम् । अनुमानप्रकारश्चायम्--पूर्वोत्पन्नरजतज्ञानमप्रमा निष्फलप्रवृत्तिजनकत्वाद् यन्नैवं तन्नैवं यथा प्रमेति सङ्क्षेपः ।

**( मु० ) ननु सर्वेषां ज्ञानानां यथार्थत्वात्प्रमालक्षणे तद्विशेष्यकत्वं विशेषणं व्यर्थम्, नच रङ्गे रजतार्थिनः प्रवृत्तिर्भ्रमजन्या न स्यात् तव मते भ्रमस्याभावादिति वाच्यम्, तत्र हि दोषाधीनस्य पुरोवर्तिनि स्वतन्त्रोपस्थितरजतभेदाग्रहस्य हेतुत्वात्, सत्यरजतस्थले तु विशिष्टज्ञानस्य सत्त्वात्तदेव कारणम्, अस्तु वा तत्रापि भेदाग्रहः स एव कारणमिति, नचाऽन्यथाख्यातिः सम्भवति, रजतप्रत्यक्षकारणरजतसन्निकर्षस्याभावात्, रङ्गे रजतबुद्धेरनुपपत्तेरिति चेन्न ।**

( प्र० टी० ) उक्तं प्रमालक्षणमसहमानोऽख्यातिवादी "प्रभाकरः" शङ्कते— "नन्वि"ति । "यथार्थत्वादि"ति—संवादिप्रवृत्तिजनकत्वादित्यर्थः । प्रमालक्षणे "तद्विशेष्यकत्वे सति" इति विशेषणं व्यर्थम्=निष्फलं व्यावर्त्याया अन्यथाख्यातेरभावादित्यर्थः ।

इदमाकूतकम्-भ्रमस्थले नैयायिकोऽन्यथाख्यातिं मन्यते । यदि "तत्प्रकारकं ज्ञानं प्रमे"ति लक्षणं स्यात् तदान्यथाख्यातिरूपे भ्रमस्थले ( शुक्तिरजतादौ ) उक्तलक्षणातिव्याप्तिः स्यात् तद्वारणायोक्तं विशेषणं दत्तम् । परमन्यथाख्यातिरेव नास्ति नाम कश्चित्पदार्थः, अर्थात् "ख्यानं=कथनं भानं वा ख्यातिः अन्यथा=प्रकारान्तरेण ख्यातिः प्रतीतिरन्यथाख्याति" रिति समाख्याबलात् अन्यप्रकारवतो वस्तुनोऽन्यप्रकारेण प्रतीतिरेवान्यथाख्यातिरित्युक्तं भवति । परन्तु यद् वस्तु यथा भवति तत्तथैव प्रतीयते नान्यप्रकारेण तस्य प्रत्ययः, ज्ञानमात्रस्य यथार्थत्वात् तस्मादुक्तं प्रमालक्षणे विशेषणं व्यर्थमेवेति वदति प्रभाकरः ( पूर्वपक्षी ) । नैयायिकः प्रभाकरम्प्रति शङ्कते-"नन्वि" ति । रजतार्थिनः=रजतसंस्कारवतः, प्रवृत्तिः या इष्टसाधनताज्ञानजन्या सा भ्रमजन्या न स्यात् । तत्र हेतुमाह—"तव मत" इत्यादि । भ्रमस्य=अन्यथाख्यातेः । प्रभाकरः समाधत्ते—"तत्र ही"ति । तत्र=रङ्गगोचरविसंवादिरजतार्थिप्रवृत्तौ । अर्थात् पुरोवर्त्तिनि रङ्गे इदं रजतम्" इतिज्ञानवतो रजतार्थिनः पुरुषस्य या निष्फला प्रवृत्तिर्जाता, न तत्र भवदभिमतो भ्रमो हेतुः, किन्तु तमोलोभादिदोषकारणात् स्वतन्त्रसंस्कारोपस्थितानां रजतादिपदार्थानां यः भेदाग्रहः=विवेकज्ञानाभावः स तत्र=विसंवादिप्रवृत्तौ कारणम् ।

प्रमातृगता लोभादिदोषाः, प्रमाणगताः पित्तादिदोषाः, प्रमेयगताः सादृश्यादि दोषाः, एते त्रयो दोषा यत्र भवन्ति तत्रैव रङ्गादिषु पदार्थेषु रजतादिरूपा बुद्धिर्भ्रमात्मिका जायत इति तव मतम् । वस्तुतस्तु "ज्ञेयाधीनं ज्ञान" मिति परो नियमोऽस्ति । तदनेन नियमेन विसंवादिस्थले ज्ञानं ज्ञेयाधीनमेव स्यात्, परमेतादृशस्थले पूर्वोक्त

दोषाः रङ्गरजतयोर्भेदाग्रहमात्रम्प्रति हेतवः । नतु वस्तुनोऽन्यथाभावम्प्रत्यपि, तेनैव भेदाग्रहेण पुरुषस्य निष्फला प्रवृत्तिर्जायत इति न रङ्गे रजतार्थिप्रवृत्त्यर्थमन्यथाख्यातिः स्वीकरणीयेति प्रभाकराद्यख्यातिवाद्याशयः ।

अत्र भ्रमस्थलेऽख्यातिवादिनामियं प्रक्रिया—"इदं रजत" मित्यादौ सर्वत्रैव भ्रमस्थले तिमिरादिप्रमाणदोषदूषितलोचनस्य पुरोवर्त्तिनि विशेष्यांशस्याग्रहात् सामान्यांशविषयकमिदमाकारं सन्निकर्षमात्रजन्यमेकं प्रत्यक्षात्मकं ज्ञानं भवति, लोभादिप्रमातृदोषसचिवसादृश्यादिदोषोद्बुद्धरजतादिसंस्कारमात्रजन्यञ्च द्वितीयं ज्ञानं सत्यरजविषयकमेव स्मृतिरूपं जायते । परन्तु उभयोर्ज्ञानयोर्विवेको न भवति यन्मे ज्ञानद्वयं जातमिति । तत्र विभिन्नविषयविवेकप्रतिस्पर्धी योऽयमेकं ज्ञानमित्यविवेकः स एवातद्रूपप्रतिष्ठो भेदाग्रहः, तेनैवान्यत्रान्यबुद्धिः । वस्तुतस्तु न काचिद्भ्रान्तिरस्ति, प्रातिस्विकविषये सर्वेषां ज्ञानानां सत्यत्वात्। तेन "नेदं रजत" मित्यादिबाधानुसन्धानेन कान्ताकरादौ वर्त्तमानस्य सत्यस्य रजतस्य न स्वरूपतो बाधः किन्तु पुरोवर्त्तिनि संसर्गतो बाध इष्यते । एवमविवेकः=अर्थात् प्रत्यक्षात्मकस्मरणात्मकज्ञानद्वयविवेकाभाव एव भ्रमकारणम् । अत एव पुरोवर्त्तिदेशावच्छेदेन शुक्तिरजतादिपदार्थेषु पुंसां निष्फला प्रवृत्तिरिति अख्यातिवादिनः प्राभाकराः साङ्ख्याश्चाहुः ।

"सत्यरजतस्थले त्वि"ति—सत्यरजतविषयकप्रवृत्तौ । विशिष्टज्ञानस्य=रजतत्वप्रकारकरजतविशेष्यकस्य "इदं रजतम्" इत्याकारस्येत्यर्थः । कार्यकारणभावद्वयकल्पनापेक्षया लाघवात् कल्पान्तरमाह—"अस्तुवे"ति । तत्रापि=सत्यरजतगोचरप्रवृत्तावपि । अपिना रङ्गगोचरप्रवृत्तिपरिग्रहः । भेदाग्रहः=रङ्गरजतयोः प्रत्यक्षस्मरणात्मकज्ञानद्वयविवेकाभावो यथा विसंवादिप्रवृत्तौ हेतुः तथैव सत्यरजतस्थलेऽपि भेदज्ञानाभावः कारणमस्तु, अर्थात् स्वस्मिन् स्वस्य भेदाभावादेव रजते रजतभेदाग्रहः सत्यरजतस्थलीयप्रवृत्तिम्प्रति कारणम् । "नचान्यथाख्याति"रिति । स्पष्टम् । तत्र हेतुमाह —"रजतप्रत्यक्षकारणस्ये"त्यादि । रजतेन सह चक्षुःसन्निकर्षो रजतप्रत्यक्षकारणं भ्रमस्थले रजतमेव नास्ति कुतः सन्निकर्षः कुतस्तराञ्च प्रत्यक्षं कुतस्तमाञ्च रङ्गे रजतबुद्धिरिति भावः। ज्ञानलक्षणायाः प्रत्यासत्तेः कल्पनन्तु गौरवदोषदुष्टमित्यभिमानः। इति पूर्वपक्षः ।

( मु० ) सत्यरजतस्थले प्रवृत्तिं प्रति विशिष्टज्ञानस्य हेतुतायाः क्लृप्तत्वादन्यत्रापि तत्कल्पनात् । नच संवादिप्रवृत्तौ तत्कारणं विसंवादिप्रवृत्तौ च भेदाग्रहः कारणमिति वाच्यम्, लाघवेन प्रवृत्तिमात्रे तस्य हेतुत्वकल्पनात् । इत्थं च रङ्गे रजतत्वविशिष्टबुद्ध्यनुरोधेन ज्ञानलक्षणप्रत्यासत्तिकल्पनेऽपि न क्षतिः फलमुखगौरवस्यादोषत्वात् । किञ्च यत्र रङ्गरजतयोरिमे रजते रङ्गे वेति ज्ञानं जातं तत्र न कारणबाधोऽपि । अपि च

यत्र रङ्गरजतयोरिमे रजतरङ्गे इति ज्ञानं तत्रोभयत्र युगपत्प्रवृत्तिनिवृत्ती स्यातां, रङ्गे रङ्गभेदग्रहे रजते रजतभेदग्रहे चान्यथाख्यातिभयात्, त्वन्मते दोषादेव रङ्गे रजतभेदाग्रहस्य रजते रङ्गभेदाग्रहस्य च सत्त्वात्। किञ्चानुमितिं प्रति भेदाग्रहस्य हेतुत्वे जलह्रदे वह्निव्याप्यधूमवद्भेदाग्रहादनुमितिर्निराबाधा। यदि च विशिष्टज्ञानं कारणं तदाऽयोगोलके वह्निव्याप्यधूमज्ञानमनुमित्यनुरोधादापतितम्। इयमुभयतःपाशा रज्जुः। इत्थं चान्यथाख्यातौ प्रत्यक्षमेव प्रमाणं रङ्गं रजतत्वेनावेदिषमित्यनुभवादिति सङ्क्षेपः ॥ १३५ ॥ १३६ ॥

नैयायिको निराकरोति "इतिचेन्न" इति। सत्यरजतस्थले प्रवृत्तिम्प्रति = संवादिप्रवृत्तिम्प्रतीत्यर्थः। विशिष्टज्ञानस्य = तद्वद्विशेष्यकत्वे सति तत्प्रकारकत्वरूपस्य, क्लृप्तत्वात् = स्पष्टसिद्धत्वात्। अन्यत्रापि = रङ्गगोचररजतार्थिप्रवृत्तावपि। तत्कल्पनात् = विशिष्टज्ञानहेतुत्वकल्पनात्। न चात्र मानाभाव इति वाच्यम् "रङ्गे रजतार्थिप्रवृत्तिः इष्टप्रवृत्तिविषयविशिष्टज्ञानसाध्या प्रवृत्तित्वात् रजते रजतत्वप्रकारकप्रवृत्तिवत्" इत्यनुमानस्यैव तत्र मानत्वात्। अप्रयोजकत्वमाशङ्कते—"नचे"ति। परिहरति—"लाघवेने"ति। संवादिविसंवादिभेदेन कार्यकारणभावद्वयमपेक्ष्य प्रवृत्तिमात्रे विशिष्टज्ञानस्यैव हेतुत्वकल्पनालाघवेनेत्यर्थः। रजतांशेऽपि सन्निकर्षाभावान्नान्यथाख्यातिः सम्भवतीति प्राभाकरोक्तं दूषणमुद्धरति—"इत्थञ्चे"ति प्रवृत्तिमात्रम्प्रति विशिष्टज्ञानस्य हेतुत्वसिद्धौ चेत्यर्थः। अर्थात् रङ्गे रजतत्वबुद्ध्यनुरोधेन रजतेन सह ज्ञानलक्षणाप्रत्यासत्तिरूपोऽलौकिकः सन्निकर्षः "चक्षुःसंयुक्तमनःसंयुक्तात्मसमवेतस्मृतिविषयत्वरूपोऽवश्यकल्पनीयः।

अयमभिसन्धिः—यत्रेन्द्रिययोग्यपदार्थेन सहेन्द्रियसन्निकर्षकाल एवायोग्यपदार्थस्यापि स्मरणं जायते तत्रेन्द्रियसम्बद्धपदार्थस्य स्मृतिगोचरपदार्थस्य चाभिन्नं (एकमेव) ज्ञानं जायते इति नियमः, तेन स्मरणांशे तज्ज्ञानमलौकिकसन्निकर्षजन्यं इन्द्रियसम्बन्धांशे च लौकिकमिति व्यवस्था। तथाच प्रकृतेऽपि पूर्वानुभवजन्यं "रजतम्" इत्याकारकं प्रत्यक्षं जायते तत्राप्यन्वयव्यतिरेकौ स्तः, अत एव रङ्गे "इदं रजतम्" इत्याकारकचाक्षुषज्ञानम्प्रति रजतानुभवजन्यसंस्कारजन्या स्मृतिरेव कारणम्। अनया रीत्या एवंविधस्थले "चक्षुःसंयुक्तमनःसंयुक्तात्मसमवेतस्मृतिज्ञानविषयत्वाख्यरूपा" ज्ञानलक्षणाख्या प्रत्यासत्तिरवश्यमेवाङ्गीकार्या यथा च "सुरभिचन्दन" मित्यादौ। अन्यथा विशिष्टबुद्धिर्नोदीयात्, एवञ्चान्यथाख्यातौ न किञ्चिद्बाधकं पश्यामः इत्याशयेनाह—"ज्ञानलक्षणाप्रत्यासत्तिकल्पनेऽपि न क्षति"रिति। "फलमुखे"ति। कार्यकारणभावग्रहात्मकफलात्पूर्वं गौरवस्यानिर्णयात् गौरवसन्देहस्य चाप्रतिबन्धकत्वादिति भावः।

प्रकारान्तरेण भ्रमज्ञानस्यावश्यकतां दर्शयति—"किञ्चे"ति। "न कारणबा-

धेऽपी"ति । भ्रमज्ञानकारणीभूतज्ञानलक्षणाप्रत्यासत्तिबाधोपि नेत्यर्थः ।

अयं भावः—यत्र रङ्गरजतयोः युगपदुभयसन्निकर्षे सति "इमे रजते रङ्गे वा" इत्याकारकं ज्ञानं जातम्, तत्र न रजते रजतभेदग्रहो नवा रङ्गे रङ्गभेदग्रहोऽस्ति तत्र सति युगपदिन्द्रियसन्निकर्षे उक्ताकारे ज्ञाने न किञ्चिद्बाधकम् । रजतत्वेन रङ्गत्वेन वा समं संयुक्तसमवायस्य सत्वात् । तादृशञ्च ज्ञानं नोभयांशे प्रमात्मकं विशेषणवद्विशेष्य-सन्निकर्षरूपप्रमासामग्र्यभावात् । किन्त्वांशिकमेव प्रमात्वम्, तस्मादेतादृशस्थले निर्वा-ह्यावश्यमन्यथाख्यातिरेष्टव्या । स्वसिद्धान्तस्य पुष्ट्यै अख्यातिवादं निरकुर्वन् अन्यथाख्यातिवादी विचारान्तरमुत्थापयति—"अपिचे"ति । "इति ज्ञानमिति । उभयत्रैव विपरीतं ज्ञानं जातमित्यर्थः । युगपत्प्रवृत्तिनिवृत्ती=एककालावच्छेदेनैव रजते रङ्गे च प्रवृत्तिनिवृत्ती स्यातामित्यर्थः । तत्र हेतुं दर्शयति—"रङ्गे रङ्गभेदग्रह" इत्यादि। "दोषादेवे"ति । त्वन्मते न्यायाभिमतभ्रमस्थलाभिपिक्तभेदाग्रहं प्रति दोषस्य हेतु-त्वादिति भावः ।

ननु—रङ्गे रजतभेदाग्रहप्रयोजकदोषस्य प्रतिबन्धकत्वान्न रङ्गे निवृत्तिः, एवं रजते रङ्ग*भेदाग्रहप्रयोजकदोषस्य प्रतिबन्धकत्वान्न रजते प्रवृत्तिरिति कथमख्यातिवादनये युगपत्प्रवृत्तिनिवृत्त्योरापादनमित्यत आह—"किञ्चे"ति । भेदाग्रहस्य = व्याप्यवद्भे-दाग्रहस्येत्यर्थः । अनुमितेर्निराबाधा = अन्यथाख्यातिरूपानुमितिर्निराबाधेत्यर्थः । भेदाग्रहरूपकारणसत्त्वादिति भावः ।

अयमभिप्रायः—भो ! अख्यातिवादिन् ! भवन्मते अनुमितिज्ञानम्प्रति व्याप्यवद्भे-दाग्रहो हेतुरस्ति ? विशिष्टज्ञानं वेति विकल्पद्वयम् । आद्ये पक्षे वह्निव्याप्यधूमवत्पर्वतभे-दाग्रहात् "ह्रदो वह्निमान्" इत्याकारा ऽन्यथाख्यातिरूपानुमितिः स्यात् । यद्येतद्दोष-परिजिहीर्षया द्वितीयः पक्षः स्वीक्रियते तदा "अयोगोलकं वह्निमत्" इत्याकारानु-मित्यनुरोधात् अर्थात् "वह्निव्याप्यधूमवदयोगोलकम्" इत्याकारकान्यथाख्यातिरूपप-रामर्शात्मकविशिष्टज्ञानवश्यमेवाङ्गीकर्त्तव्यं भविष्यतीति सेयमुभयतःपाशा रज्जुः । विस्तरस्तु मत्प्रणीते † "अनादितत्त्वे" द्रष्टव्यः । उपसंहरति—"इत्थञ्चे"ति ।

---

* भेदाग्रहः, असंसर्गाग्रहः, असम्बन्धाग्रह इति पर्यायाः ।

† तत्रत्य एष सारः—यत्र रज्ज्वादौ सर्पादिभ्रान्तिधियः समुत्पद्यन्ते तत्र वादिनामनेके पक्षाः सन्ति । शून्यवादिमाध्यमिकानामसत्ख्यातिः । क्षणिकवादियोगाचाराणामात्मख्यातिः । नैयायिकानामन्यथाख्यातिः । साङ्ख्यानां प्रभाकराणाञ्च अख्यातिः, औपनिषदानामनिर्वचनी-यख्यातिः ।

**शून्यवादिनामयमाशयः**—यच्छून्यमेवैकं तत्त्वम् भावस्य विनाशाविनाभावित्वात्, तदत्यन्तासत एव सर्पस्य रज्जुदेशे प्रतीतिर्नतु सतोऽन्यत्रान्यप्रकारा प्रतीतिः । **विज्ञानवा-दिनस्तु** क्षणिकं विज्ञानमेव तत्तद्विषयाकारमवभासते तदेव चात्मा । तस्यैव बाह्यघटपटाद्याका-

प्रत्यक्षमेव प्रमाणम्=''रङ्गं रजततयाऽवेदिषम्'' इत्याकारकं प्रत्यक्षमनुव्यवसायात्मकमित्यर्थः। ''सङ्क्षेपः'' इति। विद्यमानेऽपि भेदग्रहे आहार्यप्रत्यक्षोत्पादादिच्छाया उत्तेजकत्वं वाच्यम्। इच्छानामुत्तेजकत्वानुरोधेन चानुमितित्वादीनामेव कार्यतावच्छेदकत्वात्। प्रवृत्तित्वावच्छिन्नम्प्रति भेदग्रहाभावत्वेन पृथक्कारणत्वे गौरवापत्त्या विशिष्टज्ञानत्वेन हेतुता कल्पनीयेति विसंवादिप्रवृत्त्यनुरोधेनान्यथाख्यातिर्दुर्वारेति भावः ॥ १३५,१३६ ॥

(का०) व्यभिचारस्याग्रहोऽपि सहचारग्रहस्तथा।
हेतुर्व्याप्तिग्रहे तर्कः क्वचिच्छङ्कानिवर्तकः ॥ १३७ ॥

(मु०) पूर्वं व्याप्तिरुक्ता तद्ग्रहोपायस्तु न दर्शित इत्यतस्तं दर्शयति—व्यभिचारस्येति। व्यभिचाराग्रहः * सहचारग्रहश्च व्याप्ति-

---

रवत् रज्जौ सर्पाकारतयावभासनमित्यात्मभूतस्य विज्ञानस्यैव ख्यातिर्भानं कथनं वेत्येवमात्मख्यातिमाहुः।

**नैयायिकाना**मन्यथाख्यातिवादः। स च द्विप्रकारः—बिलादिप्रदेशे सत्यस्यैव सर्पस्य दोषसामर्थ्यात् पुरोवर्त्तिनि प्रदेशे भानमित्येकः पक्षः। नच वाच्यं दोषाः सामर्थ्यं निघ्नन्ति नतूद्दीपयन्ति पित्तकफादिदोषैर्जाठराग्नेर्मान्द्यदर्शनात् तन्निर्दोषान्नेत्राद्व्यवहितविप्रकृष्टपदार्थस्यापि भानं न भवति, किमु वक्तव्यं तिमिरादिदोषाक्रान्तातिविप्रकृष्टदेशवर्त्तिसर्पादिपदार्थानां पुरोवर्त्तिनि देशे भानमिति, ? क्वचिद्दोषेण सामर्थ्याधिक्यस्यापि दर्शनात्। यथा भसन्तकादिरोगेषु पित्ताधिक्येन जाठराग्नेर्दीप्तिं पश्यामः, तस्माद्विप्रकृष्टदेशस्थितस्यैव सत्यसर्पादेः पुरोवर्त्तिरज्ज्वादिदेशे भानमित्येकविधान्यथाख्यातिः।

**चिन्तामणिकारा**दिनव्यनैयायिकाः तद्धर्माभाववति पदार्थे दोषादिसाचिव्यात् तद्धर्मवत्तया भानमेवान्यथाख्यातिरित्याहुः। अख्यादिवादिनां मतं मूले दर्शितप्रायम्। **वेदान्तिनस्तु**—यदि रज्जुदेशेऽत्यमसन् सर्पः तर्हि वन्ध्यापुत्रवन्न भातिपथमवतरेत्, यदि च बिलादिप्रदेशवत्सन्नेव तर्हि अधिष्ठानभूतरज्जूसाक्षात्कारोत्तरं ''नायं सर्प'' इति ज्ञानेन तस्य बाधो न भवेत् नहि सत्यवस्तुनो ज्ञानबाधो दृष्टचरः, नापि च रज्जूसर्पस्य सदसत्त्वे धर्मौ, एकस्मिन्धर्मिणि तयोर्द्वयोर्विरोधात्, तस्मात्सत्त्वेनासत्त्वेन सदसत्त्वाभ्याञ्च वक्तुमशक्यतया प्रतीतिबाधान्यथानुपपत्त्या अनिर्वचनीयस्यैव सर्पादेर्भानं ख्यातिरित्यनिर्वचनीयख्यातिरित्याहुः। ख्यातीनां काठिनाः साधकबाधकयुक्त्योऽ**द्वैतसिद्ध्यादिग्रन्थेषु** मत्प्रणीतायां ''**वेदान्त**तत्त्वसमीक्षाया''ञ्च बाहुल्येन प्रपञ्चिताः। अन्यथाख्यातिवादस्तु **अन्यथाख्यातिवादे गदाधरभट्ट**प्रणीते सविस्तरं निरूपितोऽस्ति। मयात्र केवलं बालबुद्धिवृद्धये परिचयमात्रं दत्तमिति शिवम्।

* **केचित्तु** अविनाभावं ( व्याप्तिसम्बन्धम् ) तादात्म्यतदुत्पत्तिनिबन्धनमानाङ्गमाहुः अर्थात् यस्य येन तादात्म्यं, यस्य वा यत उत्पत्तिस्तयोरेवाऽविनाभावो नतु सहचरितमात्रयोः।

ग्रहे कारणम्। व्यभिचारग्रहस्य व्याप्तिग्रहे प्रतिबन्धकत्वात्तदभावः कारणमित्यर्थः। एवमन्वयव्यतिरेकाभ्यां सहचारग्रहस्यापि हेतुता। भूयोदर्शनं तु न कारणं व्यभिचारास्फूर्तौ सकृद्दर्शनेऽपि क्वचिद्व्याप्तिग्रहात् क्वचिद्व्यभिचारशङ्काविधूननद्वारा भूयोदर्शनमुपयुज्यते। यत्र तु भूयोदर्शनादपि शङ्का नापैति तत्र विपक्षबाधकतर्कोऽपेक्षितः। तथाहि। वह्निविरहिण्यपि धूमः स्यादिति यद्याशङ्का भवति तदा स वह्निधूमयोः कार्यकारणभावस्य प्रतिसन्धानान्निवर्तते। यद्ययं वह्निमान्न स्यात्तदा धूमवान्न स्यात्कारणं विना कार्यानुत्पत्तेः। यदि च क्वचित्कारणं विना कार्यं भविष्यति तदाऽहेतुक एव भविष्यतीति तत्राप्याशङ्का भवेत्तदा सा व्याघातादपसारणीया। यदि कारणं विना कार्यं स्यात्तदा धूमार्थं वह्नेस्तृप्त्यर्थं भोजनस्य वा नियमत उपादानं तवैव न स्यादिति। यत्र स्वत एव शङ्का नावतरति तत्र न तर्कापेक्षापीति तादिदमुक्तं तर्कः क्वचिच्छङ्कानिवर्तक इति ॥ १३७ ॥

---

द्विविधो ह्यर्थः प्रत्यक्षः परोक्षश्च। तत्र यो बुद्धौ साक्षादात्मीयंरूपं निवेशयति स प्रत्यक्षः, परोक्षस्तु बुद्धौ साक्षात्स्वरूपोपधानसामर्थ्यरहितोऽयुक्तप्रतिपत्तिश्च। नत्वन्यदर्शनेऽन्यकल्पना युक्ताऽतिप्रसङ्गात्। नच वाच्यं नान्तरीयकत्वेनान्योपि अन्यं गमयेदिति, यतः स प्रतिबद्धस्वभावो यद्रूपो ज्ञातः तथाविधसन्निधानं सूचयेत्। प्रतिबन्धश्च दर्शनमात्रादवसेयः स्यात्, तथा सति 'स श्यामो मित्रातनयत्वात् परिदृश्यमानमित्रातनयस्तोमवद्" इत्यप्यनुमानं स्यात्। इहापि वर्त्तेते दर्शनादर्शने। तस्मात् तादात्म्यतदुत्पत्तिनिबन्धन एव प्रतिबन्धः। उक्तञ्च—

कार्यकारणभावाद्वा स्वभावाद्वा नियामकात्।
अविनाभावनियमोऽदर्शनान्न न दर्शनात् ॥ इति।

अत्र ब्रूमः—सत्यं यत्किञ्चित्क्वचिद् दृष्टं तस्य यत्र प्रतिबन्धः तद्विदः ( प्रमातुः ) तस्य तद्गमकं तत्रेत्यनुजानीमः। परं स एव तु प्रतिबन्धो न तावदुत्पत्तिमात्राधीनः। अनुमिमते ह्यनुमातारो रसादन्यद्रूपं रससमानकालं नचानयोरस्ति कार्यकारणभावः तादात्म्यं वा, तस्मादव्यभिचरितसम्बन्ध एव प्रतिबन्धः। सोऽयं कार्यकारणयोर्वा स्यात् तादात्म्यवतोर्वा स्यादन्ययोर्वा ययोः कयोश्चिदिति न तन्मात्रग्रहो युक्तः। **अयमभिसन्धिः**—यस्य हि येन तादात्म्यम्, स तस्य हेतुरिति नायं नियमः वृक्षोऽयं शिंशपा शिंशपेयं वृक्ष इति वृक्षत्वशिंशपात्वयोस्तादात्म्ये समानेऽपि वृक्षत्वस्य शिंशपात्वाहेतुत्वात्। नापि यस्य यत् कार्यं तस्य तल्लिङ्गमिति नियमः, धूमवर्त्तिपार्थिवत्वस्य वन्हिकार्यत्वेऽपि धूमवत्तदहेतुत्वात्। नाप्यर्थान्तरमर्थान्तरस्य हेतुरिति नियमः धूमस्यार्थान्तरत्वेऽपि रासभादिहेतुत्वाभावात्। किन्तु "वस्तुस्वभावात् यो हि येन प्रतिबद्धः सन् तद्भावे भवति, तदभावे च न भवति स एव तस्य हेतुः, तस्यैव च सहचारग्रहो व्याप्तिग्रहोपाय" इति सार्वत्रिको नियमः, न तत्र कार्यत्वकारणत्वसंयोगसमवायतादात्म्यादेः प्रवेशः। तावतैव सर्वत्र निर्वाहसम्भवे तत्प्रवेशस्याकिञ्चित्करत्वात्। उक्तञ्च **प्रशस्तपादसङ्ग्रहे**—

( प्र० टी० ) अनुमितिप्रकरणे व्याप्तिरुक्ता तद्ग्रहोपायमत्राह—परममूले "व्यभिचारस्ये"ति । हेतुलक्षे साध्याभावो व्यभिचारः तस्य ग्रहो ज्ञानम्, सहचारः=हेतुना सह साध्यसामानाधिकरण्यं तस्य ग्रहो ज्ञानम्, एतद्द्वयं व्याप्तिग्रहे हेतुः कारणमित्यर्थः। व्यभिचारो हि व्याप्तिविघटको भवति अतः कारणकोटौ तदभावस्यादरः। व्यभिचारग्रह इव व्यभिचारशङ्कापि व्याप्तिग्रहं प्रतिबध्नातीत्यतस्तन्निराकरणोपायमाह—"तर्क" इति । शङ्कानिवर्तकः—व्यभिचारशङ्कानिवर्तक इत्यर्थ इति व्याख्याता कारिका।

व्यभिचाराग्रहस्य व्याप्तिग्राहकतामुपपादयति—मूले "व्यभिचाराग्रहस्ये"ति। सहचारग्रहस्यापि तामुपपादयति—"एवमि"ति "अन्वयव्यतिरेकाभ्याम"िति। "तत्तद्वन्ह्यादिसत्त्वे तत्तद्धूमादिसत्त्वम्, तत्तद्वन्ह्याद्यभावे तत्तद्धूमाद्यभाव" इत्याकारकान्वयव्यतिरेकद्वारा सहचारज्ञानस्यापि व्याप्तिग्राहकत्वमिति भावः।

यद्यप्यत्र—धूमादिसत्त्वे वह्न्यादिसत्त्वम्, वह्न्याद्यभाव धूमाद्यभावे इत्येवं सहचारः प्रदर्श्यः तथापि समव्याप्तिज्ञानाय तत्तद्वह्न्यादेस्तत्तद्धूमादेरुपादानमिति बोध्यम्।

केचित्तु भूयोदर्शनं व्याप्तिज्ञानम्प्रति कारणं मन्यन्ते तद्दूषयति—"भूयोदर्शनन्त्वि"ति । व्यतिरेकव्यभिचारमाह—"सकृद्दर्शनेपी"ति । कथं तर्हि प्राक्तनैर्भूयोदर्शनस्योपयोगो मत इत्यत आह—"क्वचिद्व्यभिचारशङ्के"ति । भूयोदर्शनस्याहेतुत्वेऽपि क्वचित्प्रयोजकतया तदादर इति भावः।

"यत्र यत्र पार्थिवत्वं तत्र तत्र लोहलेख्यत्वम्" इति भूयोदर्शनेऽपि क्वचिद्वज्रहीरकादौ व्यभिचारशङ्कोदयात्तथोक्तिरिति ज्ञेयम्।

कार्यमात्रम्प्रति प्रतिबन्धकाभावस्य कारणत्वमिति नियमात् यत्रैकवारं सहचारज्ञाने व्यभिचारशङ्का नापैति तत्र भूयोदर्शनस्योपयोग इति तु रहस्यम्।

परन्तु यदि भूयोदर्शनादपि दोषमाहात्म्यात् शङ्का नापगच्छति तत्र तर्कस्याप्यपेक्षा इत्याह—"बाधकतर्कोऽपेक्षित"इति । तदेतद्दर्शयति—"तथाही"ति । शङ्काकारं दर्शयति—"क्वचिद्वह्निविरहिण्यपी"ति । प्रतिसन्धानात्=ज्ञानात् विचारादिति यावत्। "यद्ययमि"ति—अयम्=धूमवान् पर्वतः। तथाच "धूमो यदि वह्निव्यभिचारी स्यात् वह्निजन्यो न स्यादि"ति तर्कस्य परिनिष्ठित आकारः। उक्तमर्थं विशदयति—"यदिचे"ति । अयं भावः—यदि प्रथमशङ्कानिवृत्तौ पुनः कश्चिच्छङ्केत "यत्कारणं विनैव कार्यं कुतो न मन्येत" इति, तदा सा व्याघातरूपेण तर्केण वारणीया। प्रथमा तु कार्यकारणभावभङ्गप्रसङ्गात्मकेन तर्केण वारिता। द्वितीया व्याघाताख्येन बाध्येति भावः। व्याघाताख्यतर्काकारं दर्शयति—"यदि ही"ति।

---

अनुमेयेन सम्बद्धं प्रसिद्धञ्च तदन्विते।
तदभावे च नास्त्येव तल्लिङ्गमनुमापकम् ॥ इति।

प्रपञ्चस्तु न्यायवार्त्तिकतात्पर्यटीकादिभ्योऽवसेयः।

ननु तर्कं प्रति व्याप्यापादकवत्ताज्ञानं कारणम्, तत्र व्याप्तिज्ञानप्रतिबन्धकव्यभिचार-शङ्कानिवर्त्तकस्तर्कोऽपेक्षितः, एवं पुनरप्यनवस्थैव स्यादत आह—"यत्र"ति । स्वत एव=शङ्कासामग्रीविरहादेव । "न तर्कापेक्षा" इत्यनन्तरम् "अतो नानवस्थे" त्युपरिष्टाद्योज्यम् । एवञ्च सर्वत्र न तर्कापेक्षेति भावः ।

इदमत्र बोध्यम्—व्याप्यारोपेण व्यापकारोपस्तर्कः । एवमाहार्यारोपविशेषः "तर्कयामि" इत्यनुभवाज्जिज्ञासाविशेषनिवर्त्तको मानसत्वव्याप्यो जातिविशेषस्तर्कः । सच सामान्यतो द्विविधो विषयपरिशोधकः व्याप्तिग्राहकश्चेति । आद्यो यथा—"निर्वह्निः स्यान्निर्धूमोऽपि स्यात्" अर्थात् पर्वते यदि वह्निर्न स्यात्तर्हि धूमोऽपि न स्यात् । अनेन तर्केण पर्वते वह्निरूपविषयस्य परिशुद्धिः यतोऽत्र वन्ह्यभावो व्याप्यः, धूमाभावश्च व्यापकः । जलहृदे वन्ह्यभावो वर्त्ततेऽत एव तत्र धूमाभावोपि, न चैवं पर्वते । यदि तत्र जलहृद इव वन्ह्यभावो भवेत् तदा धूमाभावः स्यान्नत्वेवं तस्माद् धूमदर्शनेन अत्रा-ग्निरस्तीति वादी तर्केण जययो भवति । द्वितीयो यथा—"धूमो यदि वह्निव्यभि-चारी स्यात् तर्हि वह्निजन्यो न स्यात्" । एवं व्यभिचारशङ्कानिवृत्तिद्वारा अनुमान-प्रमाणानुग्राहकस्तर्कः । तथाच पारमर्षं सूत्रम्—अविज्ञाततत्त्वेऽर्थे कारणोपपत्ति-तस्तत्त्वज्ञानार्थमूहस्तर्कः (न्या० १ । १ । ४०)

सचायं तर्कः पञ्चविधः—आत्माश्रयान्योन्याश्रयचक्रकानवस्थातदन्यबाधितार्थ-प्रसङ्गभेदात् । स्वस्य स्वापेक्षितत्वेऽनिष्टप्रसङ्ग आत्माश्रयः । सचोत्पत्तिस्थितिज्ञप्तिद्वारा त्रेधा । यथा—(क्रमशः) यद्ययं घट एतद्घटजन्यः स्यात् एतद्घटानधिकरणोत्तरक्षणवर्त्ती न स्यात् । यद्ययं घट एतद्घटवृत्तिः स्यात् एतद्घटव्याप्यो न स्यात् । यद्ययं घट एतद्घटज्ञानाभिन्नः स्यात् ज्ञानसामग्रीजन्यः स्यात् इति सर्वत्रापाद्यम् ।

तदपेक्षापेक्षितत्वनिबन्धनोऽनिष्टप्रसङ्गोऽन्योन्याश्रयः । सोऽपि पूर्ववत्त्रेधा । तदपेक्ष्यापेक्ष्यापेक्षितत्वनिबन्धनोऽनिष्टप्रसङ्गश्चक्रकम् । अस्यापि पूर्ववत्त्रैविध्यम् । अनवस्थितपरम्परोपाधीनामनिष्टप्रङ्गोऽनवस्था । तदन्यबाधितार्थप्रसङ्गस्तु व्याप्ति-ग्राहक एव । प्रथमोपस्थितत्वोत्सर्गविनिगमनाविरहित्वरूपसाधर्म्यात्तथा व्यवहार इति सङ्क्षेपः ॥ १३७ ॥

(का०) साध्यस्य व्यापको यस्तु हेतोरव्यापकस्तथा ।
स उपाधिर्भवेत्तस्य निष्कर्षोऽयं प्रदर्श्यते ॥१३८॥

(प्र० टी०) प्रसङ्गसङ्गत्योपाधिं निरूपयति—परममूले "साध्यस्ये"ति । यः साध्यस्य धूमादेर्व्यापकः "यत्र यत्र धूमस्तत्र तत्रार्द्रेन्धनसंयोग" इति व्याप्तेः । तथा हेतोः साधनस्य वन्ह्यादेरव्यापकः "यत्र यत्र वह्निस्तत्र सर्वत्रार्द्रेन्धसंयोग" इति नियमस्याभावात् स उपाधिः=उपाधिनामको व्याप्तिप्रतिबन्धको धर्मः । तथाच—"साध्यव्याकपत्वे सति साधनाव्यापकत्व" मुपाधेर्लक्षणमुक्तं भवति ।

(मु०) इदानीं परकीयव्याप्तिग्रहप्रतिबन्धार्थमुपाधिं निरूपयति—साध्यस्येति। साध्यत्वाभिमतव्यापकत्वे सति साधनत्वाभिमताव्यापकत्वमुपाधिरित्यर्थः। ननु स श्यामो मित्रातनयत्वादित्यत्र शाकपाकजन्यत्वं नोपाधिः स्यात्तस्य साध्यव्यापकत्वाभावाच्छ्यामत्वस्य घटादावपि सत्त्वात्, एवं वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वादित्यत्रोद्भूतरूपवत्त्वं नोपाधिः स्यात्प्रत्यक्षत्वस्यात्मादिषु सत्त्वात्तत्र च रूपाभावात्, एवं ध्वंसो विनाशी जन्यत्वादित्यत्र भावत्वं नोपाधिः स्याद्विनाशित्वस्य प्रागभावेऽपि सत्त्वात्तत्र च भावत्वाभावादिति चेन्न, यद्धर्मावच्छिन्नसाध्यव्यापकत्वं तद्धर्मावच्छिन्नसाधनाव्यापकत्वमित्यर्थे तात्पर्यात्। मित्रातनयत्वावच्छिन्नश्यामत्वस्य व्यापकं शाकपाकजत्वं तदवच्छिन्नसाधनाव्यापकं च। एवं पक्षधर्मबहिर्द्रव्यत्वावच्छिन्नप्रत्यक्षत्वस्य व्यापकमुद्भूतरूपत्वम् बहिर्द्रव्यत्वावच्छिन्नसाधनस्याव्यापकं च, एवं ध्वंसो विनाशी जन्यत्वादित्यत्र जन्यत्वावच्छिन्नसाध्यव्यापकं भावत्वम्। सद्धेतौ तु एतादृशो धर्मो नास्ति यदवच्छिन्नस्य साध्यस्य व्यापकं तदवच्छिन्नस्य साधनस्य चाव्यापकं किञ्चित्स्यात्। व्यभिचारिणि तु साध्याधिकरणं यत्साध्याधिकरणं यच्चोपाधिशून्यं साध्यव्यभिचाराधिकरणं तदन्यतरत्वावच्छिन्नस्य साध्यस्य व्यापकत्वं साधनस्य चाव्यापकत्वमुपाधेरन्ततः संभवतीति॥ १३८॥

(प्र० टी) सिद्धिविषयत्वरूपस्य साध्यस्य सिद्धिजनकत्वरूपस्य च साधनत्वस्य सोपाधावभावान्मूलकारिकालक्षणे त्रुटिं मत्वा तत्राभिमतपदनिवेशं करोति—"साध्यत्वाभिमते"ति। उक्तलक्षणस्याव्याप्तिमाशङ्कते—"नन्वि"ति। "स श्याम" इति। काचिन्मित्रा नाम्नी कल्याणी स्त्री पुत्रद्वयमजीजनत्, एकदा क्षीरादिशुभ्रभोजना गौरवर्णम्, अन्यदा शाकभोजना सती श्यामवर्णम्। तदत्र गौरवर्णस्तत्पदार्थः पक्षः। दिनकरभट्टस्तु—काकः श्यामो मित्रातनयत्वादित्यादावित्यर्थ इति व्याकरोत् तच्चिन्त्यम्, तत्र मित्रातनयत्वहेतोः स्वरूपासिद्धेः उपाधिलक्षणबहिर्भूतत्वात्। परन्तु काकात्मके पक्षे स्वरूपासिद्धोऽप्ययं हेतुः श्यामत्वरूपसाध्याभाववति मित्राया अष्टमे पुत्रे वर्तमानत्वान्मित्रातनयत्वव्यभिचार्यपीत्यादि * विज्ञैः स्वयं विवेच्यम्।

साध्याव्यापकत्वमुपपादयति—"श्यामत्वस्ये"ति। अयमाशयः—यत्र यत्र श्यामत्वं तत्र तत्र शाकपाकजन्यत्वं न घटते, घटादौ कोकिलादिषु च श्यामत्वस्य सत्त्वेऽपि शाकपाकजन्यत्वाभावात्। एवं साधनावच्छिन्नसाध्यव्यापकोपाधावव्याप्तिं निरूप्य पक्षधर्मावच्छिन्नसाध्यव्यापकोपाधावव्याप्तिमाह—"एवं वायुरि"ति। "यत्र यत्र

* स्वरूपाऽसिद्धिसङ्कीर्णव्यभिचारी, सङ्कीर्णबाधादिवदिति भावः।

प्रत्यक्षत्वं तत्र तत्र उद्भूतरूपवत्त्व" मिति न घटते आत्मादिषु प्रत्यक्षत्वसत्त्वेऽपि उद्भूतरूपवत्त्वाभावात् । स्थलान्तरे उपाधावव्याप्तिं दर्शयति—"**एवं ध्वंस**"इति । "यत्र यत्र विनाशित्वं तत्र तत्र भावत्व" मिति न घटते प्रागभावे विनाशित्वसत्त्वेऽपि भावत्वं नास्ति यतः, इत्युपाधिलक्षणाव्याप्तिरेषु स्थलेषु बोध्येति शङ्काग्रन्थार्थः । विवक्षितार्थं प्रदर्शयन् अव्याप्तीः परिहरति—"**इति चेन्न**" इत्यादिना ।

"**यद्धर्मावच्छिन्ने**"ति—यादृशधर्मविशिष्टसाध्येन सहोपाधेः सहचारः तादृशधर्मविशिष्टहेतुना सह व्यभिचारोऽवश्यम्भावी उपाधित्वप्रयोजकोऽस्तीतीष्टमस्माकम् । एतदेव स्वयं स्पष्टीकरोति मूले "**मित्रातनयत्वावच्छिन्नश्यामत्वस्ये**" त्यादिना । सामानाधिकरण्येन मित्रातनयत्वावच्छिन्नश्यामत्वस्य व्यापकं शाकपाकजन्यत्वम्, तादात्म्येन मित्रातनयत्वावच्छिन्नमित्रातनयत्वरूपसाधनस्याव्यापकञ्चेति नैवाव्याप्तिः । एवमेव "**एवं पक्षधर्मबहिर्द्रव्यत्वावच्छिन्ने**" त्यादावपि परिहारप्रकारो बोध्यः । शुद्धसाध्यव्यापकस्थले तु नाव्याप्तिलेशोऽपि । तथाहि—"धूमवान्वन्हे" रित्यत्र "आर्द्रेन्धनसंयोग" उपाधिः । कथमिति चेत् ? उच्यते—आर्द्रेधनसंयोगो हि "यत्र यत्र धूमस्तत्र तत्रार्द्रेन्धनसंयोग" इति साध्यस्य व्यापको भूत्वापि "यत्र यत्र वह्निः तत्र तत्रार्न्द्रेन्धनसंयोग" इति साधनसहचारव्यभिचारी भवति तप्तायःपिण्डे वह्निसत्त्वेपि आर्द्रेन्धनसंयोगाभावात् ।

सर्वश्चायमुपाधिः साध्यसमव्याप्तः । कदाचित् कुत्रचित्साध्यादधिकदेशवृत्तितया विषमव्याप्तोऽपि भवति । "यत्र यत्र धूमस्तत्र तत्र आर्द्रेन्धनसंयोगः यत्र यत्र आर्द्रेन्धनसंयोगः तत्र तत्र धूम" इति साध्यसमव्याप्तः । "भावत्व" श्चोपाधिर्विषमव्याप्तः । एवं यथायथमूह्यम् ।

उपाधिस्थलवैशद्यायाह—"**सद्धेताव**"ति । "वह्निमान् धूमात्" इत्यादिसद्धेतावित्यर्थः । स्पष्टमन्यत् । "**व्यभिचारिणि त्वि**"ति—"धूमवान् वह्ने" रित्यादौ उपाध्यधिकरणं=पर्वतमहानसादि यत् साध्याधिकरणं=धूमादेरधिकरणं, यच्चोपाधिशून्यं=आर्द्रेन्धनसंयोगरूपोपाधिरहितं अयोगोलकादि, साध्यव्यभिचाराधिकरणं=साध्यस्य धूमादेर्योहेतुना वन्ह्यादिना सह व्यभिचारः अर्थात् साध्यं विहायापि वन्ह्यादेरयोगोलकादाववस्थितिः तदन्यतरावच्छिन्नस्य साध्यस्य=पर्वतायोगोलकान्यतरत्वविशिष्टस्य धूमादेः साध्यस्य, व्यापकत्वं=साध्यसमानाधिकरणात्यन्ताभावाप्रतियोगित्वं, साधनस्य=वन्ह्यादेश्च अव्यापकत्वं=साधनवन्निष्ठात्यन्ताभावप्रतियोगित्वं, अन्ततः=तादृशधर्मान्तरस्यास्फूर्तौ उपाधेः सम्भवतीत्यत एवैतादृश उपाधिः "शुद्धसाध्यव्यापक" इति उच्यत इति शेषः ।

इदन्तु बोध्यम्—यत्र यत्रोपाधिरापतेत् तत्र सर्वत्र तत्परिशुद्ध्यर्थमुपाधिव्यतिरेकेण साध्यव्यतिरेकोऽनुमातव्यः । तस्मिन्ननुमीयमाने चेत् पुनरपि कश्चिदुपाधिराग-

च्छेत् तदा पूर्वोद्भावितःसोऽनुपाधिर्मन्तव्यः, हेतुश्च निरुपाधिकः साध्यसाधनक्षमः। अत्रोदाहरणम्—"विवादाध्यासितं जगत् कर्त्तृजन्यं कार्यत्वाद् घटवत्" इत्यास्तिकानां वैदिकानामीश्वरसाधकानुमानम्। अत्र नास्तिका "शरीरजन्यत्वमुपाधि" रित्याचक्षते। स च सपक्षे साध्यव्यापकः पक्षे च साधनाव्यापकः। अर्थात् "यत्र यत्र कर्त्तृजन्यत्वं तत्र शरीरजन्यत्व" मित्यस्ति साध्यव्यापकता घटादौ, यत्र यत्र कार्यत्वं तत्र शरीरजन्यत्वमिति वक्तुं न शक्यते। पक्षे जगति कार्यत्वसत्त्वेऽपि शरीरजन्यत्वाभावादित्यस्ति साधनाव्यापकता। एतत्परीक्षार्थम् "विमतं ( जगत् ) कर्त्तृजन्यं न भवति शरीरजन्यत्वाभावाद् व्योमवत्" इति नास्तिकमतानुरोधेन उपाध्यभावेन साध्याभावानुमाने क्रियमाणे "प्रागभावाप्रतियोगित्व" मुपाधिः। स च यत्र यत्र कर्त्तृजन्यत्वाभावः तत्र तत्र (प्रागभावाप्रतियोगित्वं) शरीरजन्यत्वाभाव इत्याकाशे सर्वसम्मतत्वात् साध्यस्य व्यापकः, पक्षे च जगति शरीरजन्यत्वाभावे सत्यपि कर्त्तृजन्यत्वाभावाभावात् ( प्रागभावाप्रतियोगित्वाभावात् ) साधनस्याव्यापक इति। तस्माद्वैदिकानुमाने दीयमानः "शरीरजन्यत्व" मित्युपाधिरनुपाधिरेव मन्तव्यः। एवमन्यत्राप्यूह्यम्॥ १३८॥

( का० ) सर्वे साध्यसमानाधिकरणाः स्युरुपाधयः।
हेतोरेकाश्रये येषां स्वसाध्यव्यभिचारिता॥ १३९॥

( मु० ) अत एव लक्ष्यमप्यूपाधिस्वरूपमेतदनुसारेण दर्शयति—सर्वेइति। स्वमुपाधिः स्वं च साध्यं च स्वसाध्ये तयोर्व्यभिचारितेत्यर्थः॥ १३९॥

( प्र० टी० ) "अत एवे"ति। यद्धर्मावच्छिन्नत्वघटितनिष्कृष्टलक्षणस्य तात्पर्यविषयत्वादेव। एतदनुसारेण उपाधेर्निष्कर्षमाह—परममूले "सर्वे" इति। येषामुपाधीनां हेतोः साधनस्य एकाश्रये यस्मिन्कस्मिंश्चिदप्यधिकरणे स्वसाध्यव्यभिचारिता = स्वस्य साध्यस्य च व्यभिचारिता नाम साधनवन्निष्ठात्यन्ताभावप्रतियोगित्वं, ते सर्वे उपाधयः साध्यसमानाधिकरणाः साध्यवद्वृत्त्यन्ताभावाप्रतियोगिनः स्युः, साध्याधिकरणवृत्तयो भवन्तीत्यर्थः। स्वस्य साध्यमिति षष्ठीतत्पुरुषभ्रमं व्यावर्त्तयितुमाह—मुक्तावल्यां "स्वञ्चे"ति*।

---

* यद्व्यावृत्त्या यस्य साधनस्य साध्यं पक्षे व्यावर्तते स धर्मस्तत्र हेतावुपाधिः। स च धर्मः कतमो भवति? यस्य व्यावृत्तिः साध्यसाधनसम्बन्धविरोधिनी। यथा आर्द्रेन्धनसंयोगवत्त्वं वह्निमत्त्वे। व्यावर्त्तते हि तद्व्यावृत्त्या धूमवत्त्वं तप्तायःपिण्डे। व्यावर्त्तते च भावत्वव्यावृत्त्या ध्वंसे जन्यत्वानित्यत्वसम्बन्धः। शाकपाकजत्वव्यावृत्त्या श्यामत्वमैत्रातनयत्वयोः सम्बन्धश्च। पक्षधर्मताबलाच्च अनित्यत्वश्यामत्वाभावयोः पर्यवसानम्। तथा वायावुद्भूतरूपवत्त्वं व्यावर्त्तमानं द्रव्यत्वे सति प्रत्यक्षत्वं निवर्त्तयत् प्रत्यक्षत्वाभावमादाय सिद्ध्यतीति सर्वत्र पक्षे साध्याभावसिद्ध्या

(का०) व्यभिचारस्यानुमानमुपाधेस्तु प्रयोजनम् ।

(मु०) उपाधेर्दूषकताबीजमाह—व्यभिचारस्येति । उपाधिव्यभिचारेण हेतौ साध्यव्यभिचारानुमानमुपाधेः प्रयोजनमित्यर्थः । तथाहि । यत्र शुद्धसाध्यव्यापक उपाधिस्तत्र शुद्धेनैव उपाधिव्यभिचारेण साध्यव्यभिचारानुमानम् । यथा धूमवान् वह्नेरित्यादौ वह्निर्धूमव्यभिचारी, तद्व्यापकार्द्रेन्धनसंयोगव्यभिचारित्वादिति । व्यापकव्यभिचारिणो व्याप्यव्यभिचारावश्यकत्वात् । यत्र तु किञ्चिद्धर्मावच्छिन्नसाध्यव्यापक उपाधिस्तत्र तद्धर्मवति उपाधिव्यभिचारेण साध्यव्यभिचारानुमानम् । यथा स श्यामो मित्रातनयत्वादित्यादौ मित्रातनयत्वं श्यामत्वव्यभिचारि, मित्रातनये शाकपाकजत्वव्यभिचारित्वादिति । बाधानुन्नीतपक्षेतरस्तु साध्यव्यापकताग्राहकप्रमाणाभावात्स्वव्याघातकत्वाच्च नोपाधिः । बाधोन्नीतस्तूपाधिर्भवत्येव । यथा वन्हिरनुष्णः कृतकत्वादित्यादौ प्रत्यक्षेण वह्नावुष्णत्वग्रहे वन्हीतरत्वमुपाधिः । यत्र तूपाधेः साध्यव्यापकता सन्दिह्यते स सन्दिग्धोपाधिः। पक्षेतुरस्तु सन्दिग्धोपाधिरपि नोद्भावनीयः कथकसम्प्रदायानुरोधात् । केचित्तु सत्प्रतिपक्षोत्थापनमुपाधिफलम् । तथाहि । अयोगोलकं धूमवद्वह्नेरित्यादावयोगोलकं धूमाभाववदार्द्रेन्धना-

---

साध्यसाधनसम्बन्धाभावोऽस्ति । अत एव साधनावच्छिन्नादौ साधनव्यापकोऽप्युपाधिः यत्र पक्षावृत्तिहेतुः। यथा—"कारका पृथिवी कठिनसंयोगवत्त्वात्" इत्यत्रानुष्णशीतस्पर्शवत्त्वमुपाधिः। नच स्वरूपासिद्धिरेव तत्र दोषः, सर्वत्रोपाधेर्दूषणान्तरसङ्करात् । एतेन बाधानुन्नीतपक्षेतरत्वस्योपाधित्वं निरस्तम्, स्वव्याघातकत्वेन तद्व्यतिरेकस्य साध्याव्यावर्त्तकत्वादिति **कुसुमाञ्जलिप्रकाशः** । अत एव कुसुमाञ्जलावपि तृतीयस्तबके "तद्धर्मभूता हि व्याप्तिर्जवाकुसुमरक्ततेव स्फटिके साधनाभिमते चकास्तीत्युपाधिरसावुच्यते । तदिदमाहुः—

अन्ये परप्रयुक्तानां व्याप्तीनामुपजीवकाः ।
तैर्दुष्टैरपि नैवेष्टा व्यापकांशावधारणा ॥ इति ।

एवञ्च "तद्धर्मे"त्यादिना आचार्येणोपाधेरन्वर्थत्वमुक्तम् । यद्धर्मोऽन्यत्र भासते स एवोपाधिपदवाच्या भवति, यथा जवाकुसुमं ( लौहित्यं ) स्फटिके । तथा यद्वृत्तिव्याप्यत्वं साधनत्वाभिमते भासते स धर्मस्तत्र हेतावुपाधिरिति समव्याप्ते उपाधिपदं मुख्यं विषमव्याप्ते तु साध्यव्यापकत्वादिगुणयोगाद्गौणमित्यर्थः । "अन्येति"ति कारिकायाः "ये सोपाधयस्ते परप्रयुक्तानामुपाधिप्रयुक्तानां व्याप्तीनामुपजीवकाः, तैः सोपाधिभिर्हेतुभिः पक्षे निश्चितैरपि न साध्यव्यापकस्य सिद्धि'रित्यर्थसारः ।

भावादिति सत्प्रतिपक्षसम्भवात् । इत्थं च साधनव्यापकोऽपि क्वचिदुपाधिः । यथा कारका पृथिवी कठिनसंयोगवत्त्वादित्यादावनुष्णाशीतस्पर्शवत्त्वम् । न चात्र स्वरूपासिद्धिरेव दूषणमिति वाच्यम्, सर्वत्रोपाधेर्दूषणान्तरसाङ्कर्यात् । अत्र च साध्यव्यापकः पक्षावृत्तिरुपाधिरित्याहुः ॥

( प्र० टी० ) उपाधिफलमाह—कारिकायां "व्यभिचारस्ये"ति । तद्विवृणोति—मुक्तावल्यां "उपाधिव्यभिचारेणे"ति । यथा चैतत्तथा घटयित्वा दर्शयितुमाह—"यत्रे"ति । उदाहरति—"यथे"ति । नियमशरीरमाह—"व्यापकव्यभिचारिणी"इति । शुद्धसाध्यव्यापकोपाधेः फलं दर्शयित्वा धर्मान्तरावच्छिन्नसाध्यव्यापकोपाधिव्यभिचारद्वारा साध्यव्यभिचारप्रकारं प्रतिजानीते—"यत्रत्वि"ति । उदाहरणेन दर्शयति—"यथे"ति । "मित्रातनयत्वादि"ति—मित्रानाम्नी काचिद् योषिदासीत् तस्यां विपत्पातादुत्तमाहारालाभेन शाकाद्याहारपरिणतिवशात् सप्त सुताः श्यामवर्णाः सञ्जाताः पश्चात्सुदिष्टोदये सम्पदुपगमादुत्तमाहारलाभेन अष्टमो गौरवर्णः पुत्र उत्पन्नः । तस्मिञ्शाकपाकजत्वाभावात् साधनाव्यापकत्वं सुस्पष्टमेवेति । अनया रीत्याऽन्यत्रापि बोध्यम् ।

नन्वनुमानमप्रमाणं सर्वत्र "पक्षेतरत्व" रूपोपाधेः सत्त्वात् । तथाहि—पक्षे साध्यसन्देहात् पक्षातिरिक्ते सर्वत्र साध्यव्यापकत्वस्य सत्त्वाचेत्याशङ्कायां सिद्धान्तमाह—"बाधानुन्नीते"ति । बाधदोषासहकृतपक्षेतरत्वरूपधर्मस्य तु न क्वचिदप्युपाधित्वम् । तत्र हेतुमाह"साध्यव्यापकते"ति । अयं भावः-यद्धर्मावच्छिन्नपदेन पक्षमात्रवृत्तिपर्वतत्वादीनां ग्रहणं स्यात् परन्तेषां पर्वतेतरत्वादिसामानाधिकरण्यं नास्ति तस्मान्न पक्षेतरत्वमुपाधिः । हेत्वन्तरमाह—"स्वव्याघातकत्वादि"ति उपाधिमात्रस्य दूषकत्वव्याघातकत्वादित्यर्थः । पक्षेतरत्वस्योपाधित्वे सर्वत्रानुमाने पक्षेतरत्वस्योपाधेः सम्भवादनुमानमात्रोच्छेदापत्त्या व्यभिचारानुमानाधीनस्योपाधेर्दूषकत्वासम्भवादिति भावः ।

ननु—यत्र साध्यव्यापकताग्राहकं प्रमाणमस्ति तत्र पक्षेतरत्वे लक्षणातिव्याप्तिर्दुर्वारेत्यत आह—"बाधोन्नीतस्त्वि"ति । बाधेन पक्षे साध्याभाववत्तया उन्नीतः साध्यव्यापकत्वेन निश्चित इत्यर्थः । उदाहरति—"यथे"ति । "वन्हिरनुष्ण" इति । बाधस्थलमेतदिति ततोऽत्र वन्हीतरत्वस्योपाधित्वे न दोषः । सन्दिग्धोपाधिमाह—"सन्दिग्धोपाधि"रिति । पक्षे साध्यसन्देहेन साध्यव्यापकतासन्देहस्य पक्षेतरत्वे सम्भवादितिभावः । "पक्षेतरस्त्वि"ति—पक्षेतरे सन्दिग्धोपाधिमुद्भावयन्तौ वादिप्रतिवादिनावुभावपि निगृहीतौ मन्तव्याविति भावः । किमत्र बीजमित्यत आह—"कथके"ति ।

सत्प्रतिपक्षोन्नायकत्वेनोपाधेर्दूषकतावादिनां मतमाह—"केचित्त्वि"ति । यथा चैतत्तथा दर्शयति—"तथाही"त्यादिना । स्पष्टम् "इत्थञ्चे"ति । सत्प्रतिपक्षो-

त्थापकतया दूषकत्वे चेत्यर्थः । साधनव्यापकमुपाधिमुदाहरति—"यथा करके"ति । यत्र यत्र कठिनसंयोगत्वं तत्र तत्र अनुष्णाशीतस्पर्शवत्त्वं यथा पाषाणादावित्यस्ति साधनव्यापकता । विरोधिहेतोरुत्थापकत्वे सत्येवोपाधेर्दूषकतायां "करका पृथिवीत्वाभाववती कठिनसंयोगव्यापकीभूतानुष्णाशीतस्पर्शवत्त्वाभावादि"ति सत्प्रतिपक्षोत्थापकत्वं यदा तदैवानुष्णाशीतस्पर्शवत्त्वस्य उपाधित्वं भवितुमर्हतीति भावः । शङ्कते—"नचे"ति । करकायां कठिनसंयोगवत्त्वस्याभावात्स्वरूपासिद्धिरेव किमुपाधिकथनेनेति भावः । समाधत्ते—"सर्वत्रे"ति । "पक्षावृत्ति"रिति—पक्षवृत्तित्वे तु * पक्षे तदभावेन साध्याभावासाधनादिति भावः ।

(का०) शब्दोपमानयोर्नैव पृथक्प्रामाण्यमिष्यते ॥१४०॥
अनुमानगतार्थत्वादिति वैशेषिकं मतम् ।
तन्न सम्यग्विना व्याप्तिबोधं शब्दादिबोधतः ॥१४१॥

( प्र० टी० ) प्रमाणं प्रत्यक्षादिभेदाच्चतुर्विधमित्युक्तं, तत्र वैशेषिकमतमपाकर्तुमुत्थापयति—"शब्दोपमानयो"रिति । प्रत्यक्षानुमाने द्वे एव प्रमाणे शब्दोपमानयोस्तु पृथक् प्रामाण्यं=प्रमाणान्तरत्वं, नैवेष्यते=निश्चयेन न स्वीक्रियतेऽस्माभिरित्यर्थः । तत्र हेतुमाह—"अनुमानगतार्थत्वादि"ति अनुमानप्रमाणान्तर्भावादिति वैशेषिकमतम्, । तन्न सम्यक्=युक्तियुक्तं नास्ति, व्याप्तिबोधम्=व्याप्तिज्ञानं विना शब्दादिबोधतः=शब्दमात्रज्ञानात् । आदिना सादृश्यमात्रज्ञानादुपमानप्रमाणस्य सिद्धेः सम्भवादित्यर्थः ।

( मु० ) शब्दोपमानयोरिति । वैशेषिकाणां मते प्रत्यक्षमनुमानं च प्रमाणम् । शब्दोपमानयोस्त्वनुमानविधयैव प्रामाण्यम् । तथा हि । दण्डेन गामानयेत्यादिलौकिकपदानि यजेतेत्यादिवैदिकपदानि वा तात्पर्यविषयस्मारितपदार्थसंसर्गप्रमापूर्वकाणि आकाङ्क्षादिमत्पदकदम्बत्वाद् घटमानयेति पदकदम्बवत् । यद्वा एते पदार्था मिथः संसर्गवन्तो योग्यतादिमत्पदोपस्थापितत्वात् तादृशपदार्थवत् । दृष्टान्तेऽपि दृष्टान्तान्तरेण साध्यसिद्धिरिति । एवं गवयव्यक्तिप्रत्यक्षानन्तरं गवयपदं गवयत्वप्रवृत्तिनिमित्तकम्, असति वृत्त्यन्तरे वृद्धैस्तत्र प्रयुज्यमानत्वात् । असति च वृत्त्यन्तरे वृद्धैर्यत्र यत्प्रयुज्यते तत्र तत्तत्प्रवृत्तिनिमित्तकम् । यथा गोपदं गोत्वप्रवृत्तिनिमित्तकम् । यद्वा गवयपदं सप्रवृत्तिनिमित्तकं साधुपदत्वादित्यनुमानेन पक्षधर्मताबलाद्गवयत्वप्रवृत्तिनिमित्तकत्वं सिद्ध-

---

* पक्षे=करकायाम् । तदभावेन=अनुष्णाशीतस्पर्शवत्त्वाभावेन साध्याभावस्य=पृथिवीत्वाभावस्य असाधनात् । हेतोरुपाध्यभावस्य पक्षवृत्तित्वादिति पक्षावृत्तित्वस्वीकारः ।

यति । तन्मतं दूषयति । तन्न सम्यगिति । व्याप्तिज्ञानं विनापि शाब्दबोधस्यानुभवसिद्धत्वात् । नहि सर्वत्र शब्दश्रवणानन्तरं व्याप्तिज्ञाने प्रमाणमस्तीति । किञ्च सर्वत्र शाब्दस्थले यदि व्याप्तिज्ञानं कल्प्यते तदा सर्वत्रानुमितिस्थले पदज्ञानं कल्पयित्वा शाब्दबोध एव किं न स्वीक्रियतामिति ध्येयम् ॥ १४० ॥ १४१ ॥

( प्र० टी० ) कारिकार्थं व्याख्यातुमाह—"शब्दोपमानयो" रितीति । शब्दस्यानुमानेऽन्तर्भावं दर्शयति—"दण्डेन" इत्यादिना । "तात्पर्ये"ति—वक्तृतात्पर्यस्य विषयभूतो यः स्मारितः शक्तिलक्षणान्यतरसम्बन्धात्मकवृत्त्या उपस्थापितः पदार्थानां परस्परसंसर्गः तस्य या प्रमा यथार्थज्ञानं तत्पूर्वकत्वमित्यर्थः । कल्पान्तरमाह-"यद्वे"ति । दृष्टान्ते साध्यासिद्ध्यभावात् कथं व्याप्तिग्रह इत्यत आह "दृष्टान्तेऽपी"ति । उपमानस्यान्तर्भावं दर्शयति—"एवमि"ति कल्पान्तरमाह—"यद्वे"ति । तत्खण्डयति—"तन्ने"ति । गवये गोसादृश्यस्य दर्शनादेवातिदेशवाक्यार्थस्मरणे व्यतिरेकव्याप्तिप्रतिसन्धानं विनापि "अयं पुरोवर्त्तिपिण्डः गोशब्दवाच्य" इति ज्ञानोदयादित्यर्थः । एवं शब्दार्थयोर्व्याप्त्यभावात् शब्दस्याप्यनुमानेऽन्तर्भावो नास्ति । कथं तयोर्व्याप्त्यभाव इति चेत् ? शृणु-गवयादिशब्दो गुणत्वादाकाशे तिष्ठति व्यक्तिविशेषपिण्डो वने तिष्ठति तद् "यत्र शब्दस्तत्रार्थ" इति नास्ति व्याप्तिः । सर्वदा व्याप्तिज्ञानसापेक्षेऽनुमाने व्याप्तिनिरपेक्षयोःशब्दोपमानयोः कदाचिदप्यन्तर्भावो भवितुं नार्हति । ननु—सर्वत्र शब्दश्रवणानन्तरमनुमितिरूपकार्यान्यथानुपपत्त्या व्याप्तिज्ञानं कल्पनीयमित्यत आह—"किञ्चे"ति । "पदज्ञान"मिति—पदस्मरणं कल्पयित्वेत्यर्थः । प्रतिवन्दीतर्कोऽयम् ।

इदमत्राकूतकम्—अस्ति तावत् "गौरस्ति" "गामानय" इत्यादिसाकाङ्क्षशब्देभ्यः स्वस्ववृत्त्या पदार्थानामुपस्थितिः, तदुत्तरं गवादेरस्तित्वादेः अन्वयवगाही ( संसर्गावगाही ) विलक्षणो बोधो यत्रान्वयव्यतिरेकाभ्यामाकाङ्क्षादिमत्तया शब्दस्यावगमो हेतुरिति राजमार्गः । यत्तु "गौरस्तितावान् स्वधर्मिकास्तित्वान्वयबोधानुकूलाकाङ्क्षाश्रयपदस्मारितत्वाद्वा घटवत्, अथवा अस्तिपदसमभिव्याहृतो गौः पदस्मारितत्वात् चक्षुर्वत्" इत्यनुमानत एव संसर्गधीसिद्धिः पदानामेकवाक्यतापन्नस्वरूपसमभिव्याहृतत्वनिश्चयं विना न्यायनयेऽप्यन्वयबोधस्याऽनुत्पत्त्या पूर्वं तस्याऽवश्यकत्वात्" इत्याहुर्वैशेषिकाः तन्न, गवादेः पदस्मारितत्वाद्यभावग्रहदशायामुत्पन्नस्य "गौरस्ती"त्याद्यन्वयबोधस्योक्तहेतुत्वेनाप्यनिष्पत्तेः । पदजन्या हि पदार्थस्मृतिः स्वरूपसत्येवान्वयबुद्धावुपयुज्यते न तु ज्ञाता प्रमाणाभावात्, पदैरस्मारितस्यापि तत्स्मारितत्वग्रहदशायामन्वयधीप्रसङ्गाच्च । वाक्यार्थस्यापूर्वत्वेन तद्घटकसाध्यस्य प्रायशः प्रागनुपस्थित्याऽनुमानायोगात् । वस्तुतो वाक्यार्थबोधस्यानुमितित्वे सत्येव साकाङ्क्षपदत्वादिलिङ्गकमनुमानं

कल्प्यं तदेवत्वसिद्धं प्रमाणाभावात्। "अस्तित्वेन गामनुमिनोमि" इत्यादिरनुव्यवसायस्य तत्रासत्त्वात्। प्रत्युत "गौरस्ती"तिवाक्यात् "अस्तित्वेन गौः श्रुतो नत्वनुमित" इत्यनुभवाच्च। "श्रोतव्यो मन्तव्य" इत्यादिप्रयोगदृष्ट्या शाब्दत्वस्यापि शृणोतेः शक्यतावच्छेदकत्वात् शाब्दबोधो नानुमितिः किन्तु पदज्ञानात्मकप्रमाणजन्यः स्वतन्त्रोऽनुभव इति दिक्॥ १४०, १४१॥

(का०) त्रैविध्यमनुमानस्य केवलान्वयिभेदतः।
द्वैविध्यं तु भवेद्व्याप्तेरन्वयव्यतिरेकतः॥१४२॥
अन्वयव्याप्तिरुक्तैव व्यतिरेकादथोच्यते।

(मु०) त्रैविध्यमिति। अनुमानं हि त्रिविधं केवलान्वयिकेवलव्यतिरेक्यन्वयव्यतिरेकिभेदात्। तत्रासद्विपक्षः केवलान्वयी। यथा घटोऽभिधेयः प्रमेयत्वादित्यादौ। तत्र हि सर्वस्यैवाभिधेयत्वाद्विपक्षासत्त्वम्। असत्सपक्षः केवलव्यतिरेकी। यथा पृथिवी इतरेभ्यो भिद्यते गन्धवत्त्वादित्यादौ। तत्र हि जलादित्रयोदशभेदस्य पूर्वमनिश्चिततया निश्चितसाध्यवतः सपक्षस्याऽभावात्। सत्सपक्षविपक्षोऽन्वयव्यतिरेकी। यथा वन्हिमान्धूमादित्यादौ। तत्र सपक्षस्य महानसादेर्विपक्षस्य जलह्रदादेश्च सत्त्वादिति॥

(प्र० टी०) प्रसङ्गादनुमानं विभज्य व्याप्तिं विभजते परममूले—"द्वैविध्य"मिति। अन्वयव्यतिरेकतः=अन्वयव्यतिरेकभेदाद् व्याप्तिर्द्विविधा। तत्र अन्वयव्याप्तिः अनुमानप्रकरणे उक्ता सम्प्रति व्यतिरेकव्याप्तिरुच्यते इत्यस्याग्रिमेण सम्बन्धः। मुक्तावल्याम्—"अनुमान" मित्यारभ्य "सत्त्वादिति" इत्यन्तो ग्रन्थो निगदव्याख्यातः। जलादित्रयोदशभेदस्य = अष्टौ जलाद्याः, पञ्च गुणाद्या इति त्रयोदश। यद्यपि जलादिचतुर्दशभेद इति वक्तुं योग्यं तथापि परमतेऽभावस्याधिकरणात्मकतया तथोक्तिः।

(का०) साध्याभावव्यापकत्वं हेत्वभावस्य यद्भवेत्॥१४३॥

(मु०) तत्र हि व्यतिरेकिणि व्यतिरेकव्याप्तिज्ञानं कारणं तदर्थं व्यतिरेकव्याप्तिं निर्वक्ति—साध्याभावेति। साध्याभावव्यापकीभूताभावप्रतियोगित्वमित्यर्थः।

(प्र० टी०) हेत्वभावस्य यत्साध्याभावव्यापकत्वं सैव "व्यतिरेकव्याप्ति"रित्यर्थः। तदेतन्निष्कृष्याह—मूले "साध्याभावे"ति। वन्ह्यादिसाध्याभावस्य व्यापकीभूतो योऽभावो धूमाभावः, तादृशाभावप्रतियोगित्वमेव धूमहेतोः शिरसि व्यतिरेकव्याप्तिः।

एवमेव "पृथिवी इतरेभ्यो भिद्यते गन्धवत्त्वात् यदितरेभ्यो न भिद्यते न तद्ग-

न्धवत्" । अत्र पृथिवीत्वावच्छिन्नं पक्षः, पृथिवीतरजलाद्यष्टभेदः साध्यः, गन्धवत्वं हेतुः, इत्यत्रापि व्यतिरेकव्याप्तिर्बोध्या । अत्र साध्यस्य पृथिवीतरजलाद्यष्टभेदस्य व्यापकीभूतो योऽभावो गन्धाभावः तत्प्रतियोगित्वं गन्धेऽस्तीति लक्षणसमन्वयः। "धूमवान् वह्ने" रित्यादौ वन्ह्यभावस्यापि धूमाभावसमानाधिकरणत्वेन तत्प्रतियोगित्वस्य च वन्हौ सत्त्वादतिव्याप्तिः अतः सामानाधिकरण्यमपहाय लक्षणे व्यापकत्वं निविष्टम्। साध्याभावश्च——साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताको बोध्यः, तेन समवायेन वन्ह्यभावाधिकरणे पर्वतादौ धूमाभावासत्त्वात् धूमाभावस्य च व्यापकत्वविरहेऽपि न क्षतिः, नवा वह्निघटोभयाभावाधिकरणपर्वतादिवृत्त्यभावप्रतियोगित्वेऽपि धूमाभावस्य "पर्वतो वह्निमान् धूमाद्" इत्यादावतिव्याप्तिः । व्यापकीभूताभावश्च हेतुतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकः तेन समवायेन धूमाभावस्य वन्ह्यभावव्यापकत्वविरहेऽपि न क्षतिरिति सङ्क्षेपः। *

( मु० ) अत्रेदं बोध्यम् । यत्सम्बन्धेन यदवच्छिन्नं प्रति येन सबन्धेन येन रूपेण व्यापकता गृह्यते तत्सम्बन्धावच्छिन्नप्रतियोगिताकतद्धर्मावच्छिन्नाभाववत्ताज्ञानात्तत्सम्बन्धावच्छिन्नप्रतियोगिताकतद्धर्मावच्छिन्नाभावस्य सिद्धिरिति । इत्थं च यत्र विशेषणतादिसम्बन्धेनेतरत्वव्यापकत्वं गन्धाभावे गृह्यते तत्र गन्धाभावाभावेनेतरत्वात्यन्ताभावः सिध्यति । यत्र तु तादात्म्यसम्बन्धेनेतरव्यापकत्वं गन्धाभावस्य गृह्यते तत्र दातात्म्यसम्बन्धेनेतरस्याभावः सिध्यति। स एवान्योन्याभावः। एवं यत्र संयोगसम्बन्धेन धूमं प्रति संयोगसम्बन्धेन वह्नेर्व्यापकता गृह्यते तत्र संयोगसम्बन्धावच्छिन्नप्रतियोगिताकवह्न्यभावेन जलह्रदे संयोगसम्बन्धावच्छिन्नप्रतियोगिताकधूमाभावः सिध्यति। अत्र च व्यतिरेकव्याप्तिग्रहे व्यतिरेकसहचारज्ञानं कारणम्।

( प्र० टी० ) अत्यन्ताभावान्योन्यभावप्रकारं साध्यांशे दर्शयितुं ग्रन्थान्तरमवतारयति—"अत्रेद"मिति । "यत्सम्बन्धेने"ति—यत्सम्बन्धावच्छिन्नयद्रूपावच्छिन्नव्याप्यतानिरूपितव्यापकता गृह्यत इत्यर्थः। अस्य प्रघट्टकस्यायमाशयः—यत्र गन्धात्यन्ताभावे पृथिवीतरवृत्तीतरत्वधर्मनिष्ठा या व्याप्यता, तन्निरूपिता या व्यापकता, सा यदि विशेषणता ( स्वरूप ) सम्बन्धेन गृह्यते तत्र गन्धाभावाभावेन = गन्धेन इतरत्वधर्मात्यन्ताभावः सिद्ध्यति । अर्थात् यत्र गन्धोस्ति तत्र जलादीतरभेदः जलादिनिष्ठेतरत्वधर्मात्यन्ताभावश्च वर्त्तते। धर्मिभेदो धर्मात्यन्ताभावश्चैतदुभयमपि समानाधिकरणवृत्ति भवतीत्यर्थः। तादात्म्यसम्बन्धावच्छिन्ना या इतरनिष्ठा व्याप्यता, ताद-

---

* वह्न्यभावो धूमावयवे, तत्र समवायेन धूमाभावो नास्तीति व्यापकत्वाभावो धूमाभावे इति भावः।

शब्व्याप्यतानिरूपिता व्यापकता गन्धाभावे गृह्यते चेत् तदा तादात्म्यसन्धेनैव जलादीतराभावः सिद्धो भवति स एवान्यान्योभावः ।

एवन्तु बोध्यम्—यत्रेतरभेदाभावः तत्र गन्धाभावः, यत्र गन्धाभावा भावः तत्रेतरभेदाभावाभावः, अर्थात्–इतरत्वात्यन्ताभावः । इतरभेदाभावस्येतरत्वरूपत्वात् । भेदाभावस्य प्रतियोगितावच्छेदकरूपत्वादिति भावः ।

धर्मिभेदो धर्मात्यन्ताभावश्चैकः । यथा—घटभेदो घटं विहाय सर्वत्राऽस्ति तथा घटत्वात्यन्ताभावोऽपि घटं विहाय सर्वत्रास्तीति समनियताभावयोरैक्यादित्युक्तग्रन्थस्याशयो भातीति स्वामिविश्वेश्वराश्रमदण्डिनः ।

ननु—साध्यसाधनसहचारज्ञानाभावात् कथं व्यतिरेकव्याप्तिज्ञानमित्यत आह—"अत्रचे"ति । यत्र यत्र साध्याभावः तत्र तत्र हेत्वभाव" इत्याकारकव्यतिरेकसहचारज्ञानादित्यर्थः । तथाच व्यतिरेकव्याप्तिग्रहान्नान्वयसहचारज्ञानापेक्षेति भावः ।

(मु०) केचित्तु व्यतिरेकसहचारेणान्वयव्याप्तिरेव गृह्यते नतु व्यतिरेकव्याप्तिज्ञानं कारणम् । यत्र व्यतिरेकसहचाराद्व्याप्तिग्रहस्तत्र व्यतिरेकीत्युच्यते । साध्यप्रसिद्धिस्तु घटादावेव ज्ञायतां पश्चात्पृथिवीत्वावच्छेदेन साध्यत इति वदन्ति ॥१४२॥१४३॥

(प्र० टी०) उदयनाचार्यमतमाह--"केचित्त्व"ति । व्यतिरेकसहचारेण= अन्वयसहचारनिरपेक्षव्यतिरेकसहचारेण । कथं तर्हि व्यतिरेक्यनुमितिरत आह—"नत्वि"ति । नन्वन्वयव्याप्तिज्ञानस्यैव हेतुत्वे कथं व्यतिरेकीति व्यवहार इत्यत आह —"यत्रे"ति । ननु—"पृथिवीतेरभ्यो भिद्यते" इत्यादौ साध्यस्येतरभेदादेरप्रसिद्धत्वात् कथं व्यतिरेकसहचारग्रह इत्यत आह—"साध्यप्रसिद्धिस्त्वि"ति । ननु—घटादौ साध्ये निर्णीते कथं तत्रेतरभेदानुमितिरत आह—"पश्चादि"ति । अवच्छेदकावच्छेदेनानुमितौ सामानाधिकरण्येन साध्यसिद्धेरप्रतिबन्धकत्वादिति भावः। प्रपञ्चितञ्चैतत्पूर्वं पक्षताग्रन्थे ॥ १४२,१४३ ॥

(का०) अर्थापत्तिस्तु नैवेह प्रमाणान्तरमिष्यते ।
व्यतिरेकव्याप्तिबुद्ध्या चरितार्था हि सा यतः ॥१४४॥

(प्र० टी०) भाट्टा औपनिषदाश्च अर्थापत्तिं पृथक् प्रमाणत्वेन स्वीकुर्वन्ति तन्मतं निराकुरुते परममूले—"अर्थापत्तिस्त्वि"ति । अत्र युक्तिमाह—"व्यतिरेके"ति । यतः सापि व्यतिरेक्यनुमानेनैव चरितार्था अत एव नातिरिक्ता ।

(मु०) अर्थापत्तिरिति । अर्थापत्तिः प्रमाणान्तरमिति केचन मन्यन्ते । तथाहि—यत्र देवदत्तस्य शतवर्षजीवित्वं ज्योतिःशास्त्रादवगतं जीविनो गृहासत्त्वं च प्रत्यक्षादवगतं तत्र शतवर्षजीविनो गृहासत्त्वं बहिःसत्त्वं विनाऽनुपपन्नमिति बहिःसत्त्वं कल्प्यत इति । तदनुमानेन

गतार्थत्वान्नेष्यते। तथाहि। यत्र जीवित्वस्य बहिःसत्त्वगृहसत्त्वान्यतरव्याप्यत्वं गृहीतं तत्रान्यतरसिद्धौ जायमानायां गृहसत्त्वबाधाद्बहिःसत्त्वमनुमितौ भासते। एवं पीनो देवदत्तो दिवा न भुङ्क्ते इत्यादौ पीनत्वस्य भोजनव्याप्यत्वावगमाद्भोजनसिद्धौ दिवा भोजनबाधे रात्रिभोजनं सिध्यतीति। अभावप्रत्यक्षस्यानुभविकत्वादनुपलम्भोऽपि न प्रमाणान्तरम्। किञ्चानुपलम्भस्याज्ञातस्य हेतुत्वे ज्ञानाकरणकत्वात्प्रत्यक्षत्वम् ज्ञातस्य हेतुत्वे तु तत्राप्यनुपलम्भान्तरापेक्षेत्यनवस्था। एवं चेष्टापि न प्रमाणान्तरं तस्याः सङ्केतग्राहकशब्दस्मारकत्वेन लिप्यादिसमशीलत्वाच्छब्द एवान्तर्भावात्। यत्र च व्याप्त्यादिग्रहस्तत्रानुमितिरेवेति ॥ १४४ ॥

( प्र० टी० ) अर्थापत्तिवादिनां मतं निराकर्त्तुं पक्षमुत्थापयति "अर्थापत्तिः प्रमाणान्तर"मिति। केचन=पूर्वोत्तरमीमांसकाः। उपपादकज्ञानहेतुभूतमुपपाद्यज्ञानमर्थापत्तिः प्रमाणम्। उपपादकज्ञानमर्थापत्तिः प्रमा फलम्। यथा "पीनो देवदत्तो दिवा न भुङ्क्ते" इत्यत्र पीनत्वं रात्रिभोजनाऽनुपपत्त्याऽसम्भवीति रात्रिभोजनं कल्पयति। अत्रोपपादकज्ञानहेतुभूतं पीनत्वज्ञानमुपपाद्यं सद् अर्थापत्तिः प्रमाणम्। रात्रिभोजनज्ञानमुपपादकं सत् अर्थापत्तिः प्रमेत्येवमेवान्यत्राप्यूह्यम्। तत्र योऽर्थोऽन्येन केनचित्कल्पनीयेन विना नोपपद्यते सोऽर्थ "उपपाद्य" इति। यस्य च कल्पनीयार्थस्याभावे सत्युपपाद्यं नोपपद्यते सोऽर्थ "उपपादक" इत्यपि न विस्मर्त्तव्यम्।

अत्रतु—जीवतो देवदत्तस्य बहिःसत्त्वज्ञानमुपपादकमित्यर्थापत्तिः प्रमा। शतवर्षजीवित्वविशिष्टगृहासत्त्वज्ञानमुपपाद्यमित्यर्थापत्तिः प्रमाणम्। अत्रोपपाद्योपपादकभाव एवं लापनीयः। योऽर्थः=गृहासत्त्वरूपोऽर्थः, येनान्येन=बहिःसत्त्वरूपेण कल्पनीयेनार्थेन विना नोपपद्यते स गृहाऽसत्त्वरूपोऽर्थः उपपाद्य इत्युच्यते। यस्य च=बहिःसत्त्वरूपस्य कल्पनीयस्यार्थस्याभावे सति उपपाद्यं गृहाऽसत्त्वं नोपपद्यते सच बहिःसत्त्वरूपोऽर्थः उपपादक इत्युच्यते। अर्थापत्तिरित्येक एव शब्दः प्रमाणप्रमित्योर्बोधकः। तथाहि—अर्थस्य बहिसत्त्वस्य आपत्तिः कल्पना यस्मादिति समासेनार्थापत्तिशब्द उपपाद्यज्ञानरूपकरणपरत्वेन प्रमाणवाचकः। अर्थस्यापत्तिरिति समासेन चोपपादकज्ञानरूपार्थापत्तिप्रमितिपरः। उपपाद्यज्ञानप्रभवमुपपादकज्ञानमर्थापत्तिः प्रमेति भावः।

तदेतत्खण्डयति—"अनुमानेन गतार्थत्वादि"ति। "यत्र जीवित्वस्ये"ति, "जीवतो जीवित्वं बहिःसत्त्वगृहसत्त्वान्यतरव्याप्यम्" इत्याकारकं ज्ञानं जातमित्यर्थः। "तत्र"ति। तत्रैककोटिसाक्षात्कारे गृहसत्त्वस्य प्रत्यक्षेण बाधात् जीविनो देवदत्तस्य बाह्यसत्त्वमनुमानगम्यमिति नार्थापत्तेः प्रमाणान्तरत्वम्। तथाहि—"देवदत्तो बहिःसत्त्ववान् जीवित्वे सति गृहाभावदर्शनात्" इति। स्थलान्तरेऽपि अर्थापत्तिमनुमानेऽन्तर्भावयति—"एवमि"ति। "भोजनव्याप्यत्वावगमादि"ति—"यत्र यत्र

पीनत्वं तत्र भोजन''मित्याकारकन्याहेर्बहुशोग्रहणात् । दिवा च प्रत्यक्षेण भोजनबाधात "देवदत्तो रात्रिभोजी दिवाभुञ्जानत्वे सति पीनत्वात्" इत्याकारकानुमानेनैव रात्रिभोजनानुमितिरिति नार्थापत्तिः पृथक् प्रमाणम् । तथाच पारमर्षं सूत्रम् *"शब्द ऐतिह्यानर्थान्तरभावादनुमानेऽर्थापत्तिसम्भवाभावानर्थान्तरभावाच्चाप्रतिषेधः" ( न्या० २ । २ । २ ) इति । भाष्यकारोऽप्याह—"अर्थापत्तिरनुमानमेवेति इति । अनुपलब्धिरपि पृथक् प्रमाणमिष्यते मीमांसकैस्तद्दूषयति—"अभावप्रत्यक्षस्ये"ति विशेषणतादिसम्बन्धेन अभावसाक्षात्कारः प्रपञ्चितः प्रत्यक्षखण्डे तदर्थं प्रमाणान्तरापेक्षा नास्तीति भावः । अत्रादन्यदप्याह—सिद्धान्ती "किञ्चे"ति । उपलम्भाभावोऽनुपलम्भः अनुपलब्धिः तस्येत्यर्थः । प्रतियोग्युपलम्भाभावः स्वयमज्ञातः अभावप्रमाहेतुः ? ज्ञातो वा इति विकल्पद्वयम् । तत्राद्ये पक्षे दोषमाह—"अज्ञातस्य हेतुत्व"इति । ज्ञानकरणकं ज्ञानं प्रत्यक्षमित्यवोचामैवेति भावः । द्वितीये दोषमाह —"ज्ञातस्य हेतुत्व"इति । "अनवस्थे"ति—प्रथमानुपलम्भस्य ज्ञानं द्वितीयायत्तं द्वितीयस्यापि तृतीयायत्तमित्येवमुत्तरोत्तरं पश्चाल्लग्ना कारणमुखी अनवस्थेति भावः ।

तान्त्रिकाश्चेष्टामपि प्रमाणान्तरं मन्यन्ते तन्मतं निरस्यति—"एवं चेष्टापी"ति । युक्तिमाह "तस्या" इत्यादिना । "यत्रत्वि"ति—मूकबधिरादिषु । "अनुमिति रेव"ति । अयमत्र प्रयोगः—"अयं मूकबधिकरो भोजननाभिलाषी मुखप्रसारणादिविलक्षणचेष्टावत्त्वात् यन्नैवं तन्नैवं यथा तदितरः ।

अयमभिप्रायः—कृतसङ्केता अकृतसङ्केता इति द्विविधा चेष्टा । आद्या सङ्केतग्राहकशब्दस्मारिकेतिलिप्यादिवत् शब्दप्रमाणेऽन्तर्भवति । द्वितीया व्याप्तिग्रहद्वाराऽनुमानान्तर्भूतेति न सापि पृथक्प्रमाणम् । अत्र बहुवक्तव्यं ग्रन्थगौरवभिया नोक्तम् ॥१४४॥

**( का० ) सुखं तु जगतामेव काम्यं धर्मेण जायते ।**

**( मु० ) सुखं निरूपयति—सुखं त्विति । काम्यमभिलाषविषयः । धर्मेणेति । धर्मत्वेन सुखत्वेन कार्यकारणभाव इत्यर्थः ॥**

( प्र० टी० ) सुखमिति स्पष्टम् । धर्मस्य लक्षणं वक्ष्यति । जगतां जनानामित्यर्थः । "धर्मत्वेने"ति—इदन्तु प्राचां मतानुरोधेन । नवीनमतें तु—नित्यं विज्ञानमानन्दं ब्रह्मेतिश्रुत्या भगवति नित्यसुखसिद्धौ धर्मत्वेम जन्यसुखत्वेन च कार्यकारणभावो बोध्यः सुखत्वावान्तरजातिर्वेति । धर्ममात्रासाधारणकारणकोगुणः सुख"मिति तल्लक्षणमितिभावः । धर्मसुखयोः सामान्यकार्यकारणभावस्तु प्राचां मतानुरोधेन । नव्यमते तु "नित्यं विज्ञानमानन्दम्ब्रह्म"—इति श्रुत्या भगवति नित्यसुखसिद्धौ धर्मस्य कार्यतावच्छेदकं जन्यसुखत्वं बोध्यम् ।

---

* इदं सिद्धान्तसूत्रम् । न प्रमाणचतुष्टयस्य प्रतिषेध इत्यर्थः । तत्र हेतुमाह "शब्द" इत्यादि ।

( का० ) अधर्मजन्यं दुःखं स्यात्प्रतिकूलं सचेतसाम् ॥ १४५ ॥

( मु० ) दुःखं निरूपयति—अधर्मेति । अधर्मत्वेन दुःखत्वेन कार्यकारणभाव इत्यर्थः । प्रतिकूलमिति । दुःखत्वज्ञानादेव सर्वेषां स्वाभाविकद्वेषविषय इत्यर्थः ॥ १४५ ॥

( प्र० टी० ) अधर्मेत्यादि सर्वं स्पष्टम् । "अधर्ममात्रासाधारकारणो गुणो दुःख"मिति दुःखलक्षणम् । उक्तञ्चर्षिणा—'इष्टानिष्टकारणविशेषाद्विरोधाच्च मिथः सुखदुःखयोरर्थान्तरभावः" ( वै० १० । १ । १ ) इत्येवं कारणभेदात्सुखदुःखयोरर्थान्तरत्वं बोध्यम् तेन सुखाभावो दुःखं दुःखाभावः सखमिति वा वदन्तः परास्ताः ॥ १४५ ॥

( का० ) निर्दुःखत्वे सुखे चेच्छा तज्ज्ञानादेव जायते ।
इच्छा तु तदुपाये स्यादिष्टोपायत्वधीर्यदि ॥ १४६ ॥

( मु० ) इच्छां निरूपयति—निर्दुःखत्वे इति । इच्छा द्विविधा फलविषयिणी उपायविषयिणी च । फलं तु सुखं दुःखाभावश्च । तत्र फलेच्छां प्रति फलज्ञानं कारणम् । अत एव पुरुषार्थः सम्भवति, "यज्ज्ञातं सत् स्ववृत्तितयेष्यते स पुरुषार्थ" इति तल्लक्षणात् । इतरेच्छानधीनेच्छाविषयत्वं फलितोऽर्थः उपायेच्छां प्रतीष्टसाधनताज्ञानं कारणम् ॥१४६॥

( प्र० टी० ) निर्दुःखत्वे सुखेचेति इच्छाया विषयो दर्शितः । लक्षणन्तु—"इच्छात्वजातिमत्त्वम्" तज्ज्ञानात्=फलत्वप्रकारकज्ञानादेव जायत इत्यर्थः । तदेतदाह—"फलेच्छाम्प्रती"ति इच्छाम्प्रति विषयज्ञानस्य कारणत्वादिति भावः । "इष्टोपायत्वधी"रित्यस्य व्याख्यानम् "इष्टसाधनताज्ञान"मिति ।

कारिकाया उत्तरार्धार्थस्तु—तदुपाये=तयोर्दुःखाभावसुखयोः साधने इच्छा तदा स्यात् यदा इष्टोपायत्वधीः स्यात्, अर्थात् फलेच्छायां फलज्ञानं, उपायेच्छायामिष्टसाधनताज्ञानं च कारणमित्यर्थः ।

(का०) चिकीर्षा कृतिसाध्यत्वप्रकारेच्छा च या भवेत् ।
तद्धेतुः कृतिसाध्येष्टसाधनत्वमतिर्भवेत् ॥१४७॥

( मु० ) चिकीर्षेति । कृतिसाध्यत्वप्रकारिका कृतिसाध्यक्रियाविषयिणीच्छा चिकीर्षा पाकं कृत्या साधयामीति तदनुभवात् । चिकीर्षां प्रति कृतिसाध्यताज्ञानमिष्टसाधनताज्ञानं च कारणम् । तद्धेतुरिति । अत एव वृष्ट्यादौ कृतिसाध्यताज्ञानाभावान्न चिकीर्षा ॥१४७॥

( प्र० टी० ) इच्छाविशेषः चिकीर्षा तस्याः स्वरूपमभिदधत् कारणप्रतिबन्धकावप्याह—परममूले "चिकीर्षे"ति । कृतिसाध्ये क्रियाविषयिणीच्छा चिकीर्षेत्यर्थः ।

कृतिसाध्येष्टसाधनत्वमतिः=कृतिसाधनत्वमतिः कृतिसाध्यताज्ञानम् इष्टसाधनत्वमतिः इष्टसाधनताज्ञानं, तद्धेतुः तस्यां चिकीर्षायां कारणमित्यर्थः । बलवदनिष्टसाधनताज्ञानं तत्र प्रतिबन्धकम् । मुक्तावल्यां चिकीर्षास्वरूपमाह—"कृतिसाध्यत्वप्रकारिके"ति । "पाकं कृत्या साधयामि" इति चिकीर्षायाः परिचायकोऽनुभवः । "इदं मत्कृतिसाध्यम्" इत्याकारकं कृतिसाध्यत्वप्रकारकं ज्ञानम्, "इदं मदिष्टसाधनम्" इत्याकारकमिष्टसाधनताज्ञानञ्च उक्तस्वरूपायां चिकीर्षायां निमित्तकारणमित्यर्थः । चिकीर्षाम्प्रति कृतिसाध्यत्वप्रकारकज्ञानस्य कारणतायाः फलमाह—"अत एवे"ति । कृत्यसाध्यत्वप्रकारकज्ञानस्य प्रतिबन्धकत्वमनुक्त्वा कृतिसाध्यत्वप्रकारकज्ञानस्य हेतुत्वस्वीकारादेवेत्यर्थः ।

"न चिकीर्षे"ति—उक्तोभयप्रकारकं ज्ञानं चिकीर्षामात्रम्प्रति हेतुरित्यन्यतरस्याभावे चिकीर्षैव न स्यादिति भावः ॥ १४७ ॥

**(का०) बलवद्द्विष्टहेतुत्वमतिः स्यात्प्रतिबन्धिका ।**
**तदहेतुत्वबुद्धेस्तु हेतुत्वं कस्यचिन्मत ॥१४८॥**

(मु० ) बलवदिति । बलवद्द्विष्टसाधनताज्ञानं प्रतिबन्धकम । अतो मधुविषसम्पृक्तान्नभोजने न चिकीर्षा । बलवद्द्वेषः प्रतिबन्धक इत्यन्ये । तदहेतुत्वेति । बलवदनिष्टाजनकत्वज्ञानं कारणमित्यर्थः ॥१४८॥

( प्र० टी० ) चिकीर्षायाः प्रतिबन्धकमाह—"बलवदि"ति । बलवद्द्वेषविषयतावच्छेदकधर्मावच्छिन्ननिरूपितसाधनत्वप्रकारकज्ञानमित्यर्थः । बलवत्वञ्च वैजात्यमेव । तच्च नान्तरीयकदुःखविषयकद्वेषव्यावृत्तम् । "बलवद्द्वेष" इति । बलवद्द्विष्टसाधनत्वज्ञानाधीनद्वेष इत्यर्थः । मतान्तररीत्या प्रतिबन्धकमाह—"तदहेतुत्वबुद्धेस्त्वि"ति । "कस्यचिन्मत" इत्यनेनास्वरसः सूचितः । अत्र बीजन्तु—कृतिसाध्यताज्ञानादिमतो बलवदनिष्टसाधताज्ञानशून्यस्य बलवदनिष्टाजनकत्वज्ञानं विनापि चिकीर्षायां विलम्बाभावः ।

**(का०) द्विष्टसाधनताबुद्धिर्भवेद् द्वेषस्य कारणम् ।**

द्वेषं निरूपयति—द्विष्टसाधनतेति । दुःखोपायविषयकं द्वेषं प्रति बलवद्द्विष्टसाधनताज्ञानं कारणमित्यर्थः। बलवदिष्टसाधनताज्ञानं प्रतिबन्धकम् । तेन नान्तरीयदुःखजनके पाकादौ न द्वेषः ॥

( प्र० टी० ) क्रमप्राप्तं द्वेषं निरूपयति—"द्विष्टे"ति । द्विष्टसाधनताज्ञानजन्यगुणत्वं "द्वेष्टि" इत्यनुभवसिद्धद्वेषत्वजातिमत्त्वं वा द्वेषलक्षणम्। द्विविधो द्वेषः। दुःखविषयः, तदुपायविषयश्च। आद्ये दुःखज्ञानं हेतुः। द्वितीये द्विष्टसाधनताज्ञानं दुःखोपायविषयद्वेषम्प्रति कारणमिति। शिष्टं स्पष्टम् । "यज्जातीयस्यार्थस्य सन्निकर्षाद्-

दुःखमात्मोपलब्धवान्, तज्जातीयमेवार्थं पश्यन् हातुमिच्छति, सेयं हातुमिच्छा द्वेष" इति वात्स्यायनादिभाष्यादिसम्मतोऽर्थः ।

(का०) प्रवृत्तिश्च निवृत्तिश्च तथा जीवनकारणम् ॥१४९॥
एवं प्रयत्नत्रैविध्यं तान्त्रिकैः परिकीर्तितम् ।

( मु० ) प्रयत्नं निरूपयति--प्रवृत्तिश्चेति । प्रवृत्तिनिवृत्तिजीवनयोनियत्नभेदात्प्रयत्नास्त्रिविधि इत्यर्थः ।

( प्र० टी० ) "प्रयत्न निरूपयति" इति । "प्रयत्नत्वसामान्यवान् उत्साहरूपः प्रयत्न" इति प्रयत्नलक्षणमित्यर्थः । तथाचोक्तं तार्किकरक्षायाम्—"प्रयत्नस्त्वात्मधर्मः स्यादुत्साहो भावना च स" इति ।

(का०) चिकीर्षा कृतिसाध्येष्टसाधनत्वमतिस्तथा ॥१५०॥
उपादानस्य चाध्यक्षं प्रवृत्तौ जनकं भवेत् ।

चिकीर्षेत्यादि । मधुविषसम्पृक्तान्नभोजनादौ बलवदनिष्टानुबन्धित्वेन चिकीर्षाभावान्न प्रवृत्तिरिति भावः । कृतिसाध्यताज्ञानादिवद्बलवदनिष्टाननुबन्धित्वज्ञानमपि स्वतन्त्रान्वयव्यतिरेकाभ्यां प्रवृत्तौ कारणमित्यपि वदन्ति ।

( प्र० टी० ) प्रसङ्गात् प्रवृत्तिरूपं प्रयत्नं प्रति कारणमाह—"चिकीर्षे" त्यादि । चिकीर्षा पूर्वमुक्ता या सा, कृतिसाध्यताज्ञानम्, इष्टसाधनताज्ञानम्, उपादानस्य = समवायिकारणस्य अध्यक्षम् = प्रत्यक्षम् एतच्चतुष्टयं मिलित्वा प्रवृत्तौ जनकं = कारणमित्यर्थः । मेरुशृङ्गोत्पाटने कृतिसाध्यताज्ञानाभावात्, समुद्रमजने इष्टसाधनताज्ञानाभावात्, द्व्यणुकादिनिर्माणे तदुपादानप्रत्यक्षाभावान्न प्रवृत्तिरिति निर्गलितोऽर्थः । तन्तुवायस्य पटे, कुलालस्य घटे तच्चतुष्कस्यैव सत्त्वात्प्रवृत्ति । एवमन्यत्राप्यूह्यम् । अत्र मतान्तरमाह—"कृतिसाध्यताज्ञानादिवदि"ति । यथोक्तचतुष्टयं चिकीर्षांप्रति हेतुः । तथा बलवदनिष्टाजकत्वज्ञानमपि स्वतन्त्रकारणम्, तत्र हेतुमाह–"अन्वयव्यतिरेकादि"ति । किञ्चिदद्वारकान्वयव्यतिरेकज्ञानसहकृतमनःसन्निकर्षादित्यर्थः ।

( मु० ) कार्यताज्ञानं प्रवर्तकमिति गुरवः । तथाहि—ज्ञानस्य प्रवृत्तौ जननीयायां चिकीर्षातिरिक्तं नापेक्षितमस्ति । अर्थात् यद्वस्तुविषयिणीच्छा सा नियमेन तद्विषयकज्ञानजन्या । सा च कृतिसाध्यताज्ञानसाध्या, इच्छायाः स्वप्रकारप्रकारकधीसाध्यत्वनियमात् । चिकीर्षा हि कृतिसाध्यत्वप्रकारिकेच्छा । तत्र कृतिसाध्यत्वप्रकारस्तत्प्रकारताज्ञानं चिकी-

र्षायां तद्द्वारा च प्रवृत्तौ हेतुर्नत्विष्टसाधनताज्ञानं तत्र हेतुः । कृत्यसाध्येऽपिचन्द्रमण्डलानयनादौ प्रवृत्त्यापत्तेः । ननु कृत्यसाध्यताज्ञानं प्रतिबन्धकमिति चेन्न, तदभावापेक्षया कृतिसाध्यताज्ञानस्य लघुत्वात् । नच द्वयोरपि हेतुत्वं गौरवात् । ननु त्वन्मतेऽपि मधुविषसम्पृक्तान्नभोजने चैत्यवन्दने च प्रवृत्त्यापत्तिः कार्यताज्ञानस्य सत्त्वादिति चेन्न, स्वविशेषणवत्ताप्रतिसन्धानजन्यकार्यताज्ञानस्य प्रवर्तकत्वात् । काम्ये हि यागपाकादौ कामना स्वविशेषणम् । ततश्च बलवदनिष्टाननुबन्धिकाम्यसाधनताज्ञानेन कार्यताज्ञानम् । ततश्च प्रवृत्तिः । तृप्तश्च भोजने न प्रवर्तते तदानीं कामनायाः पुरुषविशेषणत्वाभावात् । नित्ये च शौचादिकं पुरुषविशेषणम् । तेन शौचादिज्ञानाधीनकृतिसाध्यताज्ञानात्तत्र प्रवृत्तिः । ननु तदपेक्षया लाघवेन बलवदनिष्टाननुबन्धीष्टसाधनताविषयककार्यताज्ञानत्वेनैव हेतुत्वमस्तु बलवदनिष्टाननुबन्धित्वं द्वेष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःखाजनकत्वं बलवद्द्वेषविषयदुःखाजनकत्वं वेति चेन्न ।

( प्र० टी ) प्राभाकरमतमाह—"कार्यताज्ञानमि"ति । ( चिकीर्षा द्वारा ) प्रवृत्तिम्प्रति केवलं "कृतिसाध्यताज्ञानमेव हेतु" रिति गुरोर्मीमांसकस्य मतमित्यर्थः । यथाचैतस्मिन्विषये तेषामुपपत्तिस्तथा दर्शयति—"तथाहि" इत्यारभ्य "इति चेवम्" इत्यन्तेन । "ज्ञानस्ये"ति—"इदं मत्कृतिसाध्यम्" इत्याकारककृतिसाध्यत्वप्रकारकज्ञानस्य ( कार्यताज्ञानस्य । प्रवृत्तौ जननीयायाम्=प्रवृत्त्युत्पत्तावित्यर्थः चिकीर्षातिरिक्तं नापेक्षितमस्ति । साच=चिकीर्षा चेत्यर्थः । कृतिसाध्यताज्ञानसाध्या =कृतिसाध्यत्वप्रकारकज्ञानजन्या । अत्रार्थे नियमं दर्शयति—"इच्छाया" इति । चिकीर्षाया इत्यर्थः "स्वप्रकारे"ति—"स्वम्" इच्छा = चिकीर्षा प्रकारो विशेषणमेव प्रकारो यस्या एवम्भूता या धीः तत्साध्यत्वनियमात्, अर्थात् "या यद्विशेष्यकयत्प्रकारिकेच्छा, सा नियमेन तद्विशेष्यकतत्प्रकारकज्ञानजन्या" भवति । निरुक्तां चिकीर्षां स्मारयति—"चिकीर्षा ही"ति । हि = यतः । तथाच यतः चिकीर्षा कृतिसाध्यत्वप्रकारकेच्छारूपेत्यर्थः । "तत्रे"ति । तस्यामिच्छायां = चिकीर्षारूपायामित्यर्थः । कृतिसाध्यत्वं यो धर्मः स एव प्रकाररूपेण भासते । तत्प्रकारकं = तादृशकृतिसाध्यत्वप्रकारकं ज्ञानं चिकीर्षायां साक्षाद्धेतुः । तद्द्वारा = चिकीर्षाद्वारा च प्रवृत्तौ ( परम्परया ) हेतुरिति विभज्यान्वयः । स्वमतमुपपाद्य न्यायमतं खण्डयति—"नत्वि"ति । तत्र हेतुः = प्रवृत्तिम्प्रति कारणमित्यर्थः । अत्रार्थे युक्तिमाह—"कृत्यसाध्येपी"ति । पुरुषप्रयत्नासाध्य इत्यर्थः ।

नैयायिकः प्राभाकरम्प्रति शङ्कते—"नन्वि"ति । "कृत्यसाध्यताज्ञानमि"ति । "चन्द्रमण्डलानयनं मत्प्रयत्नासाध्यम्" इत्याकारकं ज्ञानं प्रतिबन्धकं

तेन चन्द्रमण्डलानयनादौ न प्रवृत्तिरिति नैयायिकाशयः। तद्दूषयति प्राभाकरः—"ने"ति । "तदभावापेक्षये"ति—प्रतिबन्धकाभावापेक्षया कृतिसाध्यत्वप्रकारकज्ञाने कारणतायां लाघवमित्यर्थः। तादृशप्रतिबन्धकाभावविशिष्टकृतिसाध्यत्वप्रकारकज्ञानस्य प्रवृत्तिं प्रति कारणत्वे गौरवं, केवलं प्रवृत्तिम्प्रति कृतिसाध्यत्वप्रकारकज्ञानस्य कारणतायां लाघवमिति भावः। शङ्कते नैयायिकः—"नचे"ति । द्वयोः = कृतिसाध्यत्वप्रकारकज्ञानस्य इष्टसाधनत्वप्रकारकज्ञानस्य चेत्यर्थः। समाधत्ते प्राभाकरः—"गौरवादि"ति। निरुक्ताभावत्वस्य गुरुरूपत्वादित्यर्थः। पुनः शङ्कते—"नन्वि"ति। त्वन्मतेपि = तव प्राभाकरस्य सिद्धान्तेपीत्यर्थः। मधुविषसम्पृक्तान्नभोजने चैत्यवन्दनादौ बुद्धप्रतिमादिनमस्कारे पुरुषस्य प्रवृत्तिः स्यात्। अत्रार्थे हेतुमाह—"कार्यताज्ञानस्ये"ति । "विषसम्भिन्नमधुरान्नभोजनं, बुद्धप्रतिमादिवन्दनञ्च मत्कृतिसाध्यम्" इत्याकारकज्ञानस्य विद्यमानत्वादित्यर्थः। तथाच समैवावयोरापत्तिरिति कथमहमेव दूष्य इति भावः। एतत्खण्डयति प्राभाकरः—"इति चेन्न" इति । "स्वविशेषणवत्ते"ति—"स्वं" प्रवर्त्तमानः पुरुषः तद्विशेषणं काम्ये पुत्रेष्टियागादौ कामना, नित्ये सन्ध्यावन्दनादौ तात्कालिकशौचादि, तद्वत्तायाः = एतादृशविशेषणवत्ताया यदा पुरुषे प्रतिसन्धानं ( स्वस्मिन् ) ज्ञानं जायते तदा तादृशकार्यताविशेषज्ञानस्यैव प्रवर्त्तकत्वात् = प्रवृत्तिं प्रति हेतुत्वात् । तथाच न वयं कार्यतामात्रज्ञानं प्रवर्त्तकं ब्रूमः। अपितु निरुक्तकार्यताविशेषज्ञानं प्रवर्त्तकत्वेनाङ्गीकुर्म इति भावः।

इदन्तु बोध्यम्—उक्तविशेषणवत्ताज्ञानमपि लिङ्गविधया कार्यताज्ञानकारणम्। तथाहि—"पाको मत्कृतिसाध्यः मत्कृतिं विनाऽसत्त्वेसति मदिष्टसाधनत्वात्" इत्यनुमानजन्यं कार्यताज्ञानं काम्यस्थले प्रवृत्तिं प्रति हेतुः। एवम् "अहमिदानीन्तनकृतिसाध्यसन्ध्यावन्दनकः ब्राह्मणत्वे सति विहितसन्ध्याकालिकशौचादिमत्त्वात्" इत्यनुमानगम्यं कार्यताज्ञानं नित्यकर्मणि प्रवृत्तिम्प्रति कारणमिति।

स्वविशेषणवत्तेत्यादिग्रन्थं दर्शिताशयं स्वयं मूल एव विवृणोति—"काम्ये ही"ति। एवं सति फलितमाह—"ततश्चेति, प्रवृत्तिरि"त्यन्तम्। व्यतिरेकेणाप्येतदेव साधयति—"तृप्तश्चे"ति । अत्र हेतुमाह—"कामनाया"इति। नित्यस्थलेऽपि घटयति—"नित्येचे"ति। सन्ध्यावन्दनादावित्यर्थः। व्याख्यातप्रायमिदम्। नैयायिकः शङ्कते—"नन्वि"ति । तदपेक्षया = बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनताज्ञानजन्यकृतिसाध्यताज्ञानापेक्षया । लाघवेन "बलवदनिष्टे"ति—बलवत् प्रबलं यत् अनिष्टम् = द्वेषविषयः, तदननुबन्धि = तदसम्बन्धि यदिष्टसाधनम् = पाकादीष्टसाधनमिन्धनादि, स्वर्गादीष्टसाधनं यागादि वा, तद्विषयकं यत्कार्यताज्ञानं = कृतिसाध्यताज्ञानं, तत्त्वेनैव हेतुत्वं = प्रवृत्तिम्प्रति कारणत्वमस्त्वित्यर्थः। इष्टसाधनताविशेषणं बलवदनिष्टाननुबन्धित्वं स्वयं निर्वक्ति—"बलवदनिष्टाननुबन्धित्व"

मिति। इष्टम् = पाकादि, तदुत्पत्तिः = तत्सिद्धिः, तस्या नान्तरीयकम् = अव्यभिचारि अवश्यम्भावि यद् दुःखम् = आयासधनव्ययादि, तदधिकं यद् दुःखम् = प्राणपीडादि, तदजनकत्वमेव। अथवा बलवद्द्वेषविषयदुःखाजनकत्वं बोध्यम्। एतेन मधुविषसम्पृक्तान्नभोजने प्रवृत्त्यापत्तिरपास्ता।

( मु० ) इष्टसाधनत्वकृतिसाध्यत्वयोर्युगपज्ज्ञातुमशक्यत्वात्साध्यत्वसाधनत्वयोर्विरोधात्। असिद्धस्य हि साध्यत्वं सिद्धस्य च साधनत्वम्। नचैकमेकेनैकदा सिद्धमसिद्धं चेति ज्ञायते, तस्मात्कालभेदादुभयं ज्ञायत इति। मैवम्; लाघवेन बलवदनिष्टाननुबन्धीष्टसाधनत्वे सति कृतिसाध्यताज्ञानस्य हेतुत्वात्। नच साध्यत्वसाधनत्वयोर्विरोधो यदा कदाचित्साध्यत्वसाधनत्वयोरविरोधादेकदा साध्यत्वसाधनत्वयोश्च ज्ञानात्।

( प्र० टी० ) मीमांसको निराकुरुते—"इष्टसाधनत्वे"ति। युगपद् = एककालावच्छेदेनेत्यर्थः। अत्रार्थे युक्तिमाह—"साध्यत्वसाधनत्वयो"रिति। पूर्वविशेषघटितयोस्तयोरित्यर्थः। स्वयं विवृणोति—"असिद्धस्ये"ति। प्रथमचरणवृत्तिपाकादि साध्यं तस्येत्यर्थः। सिद्धस्य = आद्यचरणान्यचरणवृत्तित्वविशिष्टस्यैवेत्यर्थः। यत्तु स्वरूपसम्पन्नं तत्साधनं,यथा अपक्वावस्थापन्नं परिष्कृततण्डुलादि। यच्च न स्वरूपसम्पन्नं तत्साध्यं यथौदनादि, एवञ्चानयोर्युगपद् विरोधः। एतमर्थं स्पष्टीकरोति—"नचैक"मिति।

इदमत्राकूतम्—यद्येकं वस्तु सिद्धासिद्धोभयरूपेण ज्ञातं स्यात् तदा "असिद्धः पाकः कृतिसाध्यः सिद्धश्चेष्टसाधन" मित्याकारकसमूहालम्बनात्मकज्ञानेनैव विषयीकृतं स्यादिति मन्तव्यम्, तत्तु न सम्भवति एकदैकत्र तयोः सहानवस्थानलक्षणविरोधात्। कालभेदेन तूभयं ज्ञानं नानुचितमिति तस्मादुपस्थितिकृतं गौरवं भवन्मते।

प्राभाकरमतं दूषयति नैयायिकः "मैव" मित्यादिना। साध्यत्वसाधनत्वयोर्विरोधं दूषयति— "नचे"ति। नहीत्यर्थः। "यदाकदाचिदि"ति—यत्किञ्चित्कालीनस्य साध्यत्वस्य यत्किञ्चित्कालीनेन साधनत्वेन सह विरोधाभावादित्यर्थः। निर्विशेषितयोः कृतिसाध्यत्वेष्टसाधनत्वयोर्ज्ञानस्यैव प्रवृत्तिम्प्रति हेतुत्वाङ्गीकारादिति भावः।

( मु० ) नव्यास्तु ममेदं कृतिसाध्यमिति ज्ञानं न प्रवर्तकमन्यागते तस्य ज्ञातुमशक्यत्वात्, किन्तु यादृशस्य पुंसः कृतिसाध्यं यद्दृष्टं तादृशत्वं स्वस्य प्रतिसन्धाय तत्र प्रवर्तते। तेनौदनकामस्य तत्साधनताज्ञानवतस्तदुपकरणवतः पाकः कृतिसाध्यस्तादृशश्चाहमिति प्रतिसन्धाय

पाके प्रवर्तत इत्याहुस्तन्न, स्वकल्पितलिप्यादिप्रवृत्तौ यौवने कामोद्रेकादिना सम्भोगादौ च तदभावात् ।

( प्र० टी० ) प्राभाकरानुयायिनो नवीनस्य मतमाह—"नव्यास्त्वि"ति । "इदं मत्कृतिसाध्यम्" इत्याकारकं ज्ञानं प्रवृत्तिम्प्रति न कारणमित्यर्थः । तत्र हेतुमाह—"अनागत"इत्यादि । "ज्ञातुमशक्यत्वा"दिति—उक्तरीत्या भविष्यत्पाकस्य ज्ञानासम्भवेन तद्विशेष्यककृतिसाध्यत्वप्रकारकज्ञानस्य सुतरामसम्भवादित्यर्थः । सामान्यलक्षणाप्रत्यासत्त्यनङ्गीकारे प्रत्यक्षस्य पक्षज्ञानाभावेन अनुमितेश्चासम्भवादिति भावः । किन्तर्हि प्रवर्त्तकमित्यत आह—"किन्त्वि"ति । तादृशश्चाहम्=अर्थात् "ओदनकामनावान् ओदनसाधनताज्ञानवान् तथौदनोपकरणवांश्चाह"मित्याकारकं ज्ञानं प्रवर्त्तकम् । एतत्खण्डयति नैयायिकः—"तन्ने"ति । स्वकल्पित ( संकेतित ) लिप्यादौ तादृशप्रतिसन्धानाभावेपि प्रवृत्तिदर्शनात् तादृशं ज्ञानम्प्रवृत्तिम्प्रति व्यभिचारीति भावः । अत्रैव युक्त्यन्तरमाह—"यौवन" इति । सम्भोगादिसतः पुरुषस्य कृतिसाध्यदर्शनमन्तरैव कामवेगेन स्वत एव तत्र प्रवृत्तिदर्शनादपि त्वदुक्तं व्यभिचारीति भावः ।

( मु० ) इदं तु बोध्यम् । इदानीन्तनेष्टसाधनत्वादिज्ञानं प्रवर्तकं तेन भावियौवराज्ये बालस्य न प्रवृत्तिस्तदानीं कृतिसाध्यत्वाऽज्ञानात् । एवं तृप्तश्च भोजने न प्रवर्तते तदानीमिष्टसाधनत्वाज्ञानात् । प्रवर्तते च रोषदूषितचित्तो विषादिभक्षणे तदानीं बलवदनिष्टानुबन्धित्वाज्ञानात् । नचास्तिकस्यागम्यागमनशत्रुबधादिप्रवृत्तौ कथं बलवदनिष्टाननुबन्धित्वबुद्धिर्नरकसाधनत्वज्ञानादिति वाच्यम्, उत्कटरागादिना नरकसाधनताधीतिरोधानात् वृष्ट्यादौ तु कृतिसाध्यताज्ञानाभावान्न चिकीर्षाप्रवृत्ती, किन्त्विष्टसाधनताज्ञानादिच्छामात्रम् । कृतिश्च प्रवृत्तिरूपा बोध्या । तेन जीवनयोनियत्नसाध्ये प्राणपञ्चकसञ्चारे न प्रवृत्तिः । इत्थं च प्रवर्तकत्वानुरोधाद्विधेरपीष्टसाधनत्वादिकमेवार्थः ।

( प्र० टी० ) नन्विष्टसाधनताज्ञानस्य प्रवर्त्तकत्वे भावियौवराज्येऽपि प्रवृत्त्यापत्तिरिति शङ्कायामाह—"इदन्तु बोध्यमि"ति । "इदानीन्तने"ति । इष्टसाधनत्वे इदानींकालस्यापि विशेषणत्वान्न तत्र प्रवृत्तिः अर्थात् "वर्त्तमानकालविशिष्टेष्टसाधनत्वज्ञानं प्रवृत्तिम्प्रति हेतु"रिति न भावियौवराज्ये प्रवृत्तिः । वस्तुतस्त्वेवं स्वाप्यम्—इदानीन्तनेच्छाविषयसाधनत्वेदानीन्तनकृतिसाध्यत्वेदानीन्तनबलवद्द्वेषविषयाननुबन्धित्वैतत्त्रितयविषयकज्ञानं प्रवर्त्तकम् । इष्टसाधनत्वघटकेच्छायां तद्विशेषणस्य प्रयोजनमाह—"एवं तृप्त" इति । "बलवदनिष्टे"त्यत्र बलवद्द्वेषे तद्विशेषणप्रयोजनमाह—"प्रवर्त्तते"ति । दोषदूषितेति—दोषेण सुरापानादिना दूषितं गर्हितं चित्तं यस्य स

तथा । विषादिभक्षणेति । आदिना मरणसाधनौषधपरिग्रहः । तदानीमिति—विषादिभक्षणप्रवृत्त्यव्यवहितपूर्वकाल इत्यर्थः । बलवदनिष्टाऽसम्बन्धित्वज्ञानात् क्रोधाक्रान्तोऽपि विषादिभक्षणे प्रवर्त्तते इति न तत्रापि कार्यकारणभावव्यभिचारः । तथाच—विषादिभक्षणविषयकबलवद्द्वेषस्य तदानीन्तनस्याभावेन तत्कालीनबलवद्द्वेषविषयपदार्थान्तराऽननुबन्धित्वस्य तत्र सत्त्वेन तदानीं तत्र तादृशज्ञानाऽसम्भवादिति भाव इति प्राचीना प्रभा । शङ्कते—"नचे"ति । नास्तिकस्य=नास्ति परलोक इति ज्ञानरहितस्य पुंसः । अगम्ये-तिअगम्या गन्तुं सम्बन्धुमयोग्या व्यभिचारिणीति यावत्, तस्या गमनं सम्भोगः । अत्र सप्तम्यर्थो विषयत्वम्—अगम्यागमनादिविषयकप्रवृत्तावित्यर्थः । नरकसाधनत्वज्ञानात्=प्रवृत्तेः पूर्वं नरकरूपबलवदनिष्टसाधनत्वज्ञानाच्च स्याचस्य प्रवृत्तिरिति भावः । समाधत्ते—"उत्कटरागादिने"ति । अगम्यागमनादिसुखे उत्कटरागादिनेत्यर्थः । अगम्यागमनसाधनपरभार्यारूपविषयस्य यत्पुनः पुनरनुरञ्जनं तद्विषयकोत्कटेच्छयेत्यर्थः । "पुनः पुनः विषयानुरञ्जनेच्छा रागः" इत्याह प्रशस्तपादाचार्यः । तथाच तदानीमुत्कटरागस्तादृशज्ञानस्य प्रतिद्वन्द्वीति भावः । नरकसाधनताधीतिरोधानात्=बलवदनिष्टसाधनताबुद्धेरनुत्पादादित्यर्थः । तादृशसुखे उत्कटरागसत्त्वे अगम्यागमनजन्यनरके बलवद्द्वेषानुदयादिति भावः । कृतिसाध्यताज्ञाननिवेशस्य फलमाह—"वृष्ट्यादौ त्वि"ति । "किन्त्विच्छामात्रमि"ति । इष्टसाधनत्वप्रकारकज्ञानात् "वृष्टिर्भवेद्" इत्याकारकेच्छामात्रमित्यर्थः । "कृतिश्चे"ति—"कृतिसाध्यताज्ञान"मित्यत्र कृतिपदेन प्रवृत्तिरूपाया एव कृतेर्ग्रहणम् । तस्य फलमाह—"तेनेति । "इत्थञ्चे"ति—प्रवृत्तिंप्रतीष्टसाधनताज्ञानस्य कारणत्वे चेत्यर्थः । "विधेरपी"ति—"अग्निष्टोमेन यजेत स्वर्गकाम" इत्यादौ "यजेत" इत्यादिविधेरपि बलवदनिष्टाननुबन्धीष्टसाधनत्वविशिष्टकृतिसाध्यत्वमेवार्थः । तत्र हेतुः "प्रवर्त्तकत्वानुरोधादि"ति । अत्र वदन्ति—न विधिः साक्षात् प्रवर्त्तकज्ञानमुत्पादयति किन्तु विधिवाक्यादिष्टसाधनत्वे कृतिसाध्यत्वे चावगते "किमिष्ट" मित्याकाङ्क्षायां स्वर्गकामादिपदसमभिव्याहारात् स्वर्गसाधनमिति ज्ञानमानुमानिकं मानसं वोत्पद्यते अन्यथा विशेषरूपेण फलज्ञानाभावात् प्रवृत्त्यनुपपत्तेः । एवमिदानीन्तनत्वान्तर्भावेण कृतिसाध्यत्वादिज्ञानमनुमानादिति । अत एवोक्तं मणिकृतापि—"एवं विधिजन्यज्ञानजन्यं ज्ञानं प्रवर्त्तक"मिति ।

अत्राहुर्भट्टपादाः—लोके प्रवृत्तिर्द्वेधा स्वेच्छाधीना परप्रेरणाजन्या च । तत्र आद्यायां प्रवर्त्तनाया अनुपयोगेऽपि द्वितीयप्रवृत्तौ सा प्रयोजिका "आचार्यप्रेरणया इदं करोमि" इति व्यवहारात् । प्रवर्त्तना च प्रवर्त्तयितुः प्रवृत्त्यनुकूलो व्यापारविशेषः । सच चेतनस्याभिप्राय एव । अचेतनस्य तु वेदस्य अभिधानामकः कश्चिच्छब्दसमवेतः । तथाच आचार्याभिप्रायज्ञानाद्यथा शिष्यः प्रवर्त्तते तथाऽभिधाज्ञानाद्विधिस्थले (पुंसां) प्रवृत्तिरिति । सैव ( अभिधैव ) लिङर्थः, सैव च शब्दभावना लिङ्त्वांशेनोच्यते ।

अर्थभावनात्वाश्यासत्वांशेव । तदुक्तम्—

अभिधां भावनामाहुरन्यामेव लिङादयः ।
अर्थात्मभावनात्वन्या सर्वाख्यातस्य गोचरः ॥ इति ।

अभिधा=शब्दः तन्निष्ठा भावना अभिधाभावना, अर्थो यागादिरात्मा वा । अर्थात्मकत्वञ्चार्थगोचरत्वमर्थाश्रितत्वं वा । तथाच यागादिगोचरात्माश्रिता प्रवृत्तिरर्थभावना । अत्र च शब्दभावनाया अर्थात्मभावनैव भाव्या । अर्थभावनायाश्च फलं स्वर्गादीति बोध्यम् । तदुक्तम्—

लिङोऽभिधा सैव च शब्दभावना
भाव्या च तस्याः पुरुषप्रवृत्तिः ।
सम्बन्धबोधः करणं तदीयं
प्ररोचना चाङ्गतयोपयुज्यते ॥ इति ।

अस्यार्थः—लिङोऽभिधा वाच्या, तस्याः किं भाव्यमित्याकाङ्क्षायामुक्तं भाव्या च तस्या इति । केन भाव्या इत्याकाङ्क्षायां सम्बन्धेति । सम्बन्धबोधः = लिङादिपदशक्तिज्ञानम् । तत्रालस्येन निवर्त्तमानं पुरुषं स्तुतिरुत्तेजयतीति सा सहकारिणीत्याह प्ररोचनेतीति वदन्ति । तच—लोके स्वेच्छाधीनप्रवृत्तौ इष्टसाधनताज्ञानस्य हेतुत्वेन क्लृप्तत्वादन्यत्रापि प्रवृत्तौ तदेव हेतुरस्तु किमतिरिक्तप्रवर्त्तनाज्ञानस्यातिरिक्तहेतुत्वेन, अत एव वेदेऽपि न प्रवर्त्तनाज्ञानं हेतुः शब्दशक्तिभिन्नायामभिधायां मानाभावाच्च । अत एव विधिविवेके मण्डनमिश्राः—

पुंसां नेष्टाभ्युपायत्वात् क्रियास्वन्यः प्रवर्त्तकः ।
प्रवृत्तिहेतुं धर्मञ्च प्रवदन्ति प्रवर्त्तनाम् ॥

इत्यादिना प्रवृत्त्यनुकूलत्वेनेष्टसाधनत्वमेव प्रवर्त्तनेत्युक्तवन्तः ।

( मु० ) इत्थं च विश्वजिता यजेतेत्यादौ यत्र फलं न श्रूयते तत्रापि स्वर्गः फलं कल्प्यते । नन्वहरहः सन्ध्यामुपासीतेत्यादाविष्टानुत्पत्तेः प्रवृत्तिः कथम् ? नचार्थवादिकं ब्रह्मलोकादि प्रत्यवायाभावो वा फलमिति वाच्यम्, तथासति काम्यत्वे नित्यत्वहान्यापत्तेः । कामनाभावे चाकरणापत्तेः । इत्थं च यत्र फलश्रुतिस्तत्रार्थवादमात्रमिति चेन्न, ग्रहणश्राद्धादौ नित्यत्वनैमित्तकत्वयोरिव ( भरणीश्राद्धे काम्यत्वनैमित्तिकत्वयोरिव ) नित्यत्वकाम्यत्वयोरप्यविरोधात् । नच कामनाभावेऽकरणतापत्तिः, त्रिकालस्तवपाठादाविव कामनासद्भावस्यैव कल्पनात्, नतु वेदबोधितकार्यताज्ञानात्प्रवृत्तिरिति सम्भवति स्वेष्टसाधनत्वमविज्ञाय तादृशकार्यताज्ञानसहस्रेणापि प्रवृत्तेरसम्भवात् । यदपि पण्डापूर्वं फलमिति तदपि न कामनाभावेऽकरणापत्तेस्तौल्यात् । कामनाकल्पने त्वार्थवादिकफलमेव रात्रिसत्रन्यायात्कल्प्यताम्, अन्यथा प्रवृत्त्यनुपपत्तेः ।

( प्र० टी० ) नन्वेवं सति "विश्वजिता यजेत" इत्यादौ विशेषतः फलाश्रवणात् इष्टसाधनताज्ञानानुत्पत्त्या प्रवृत्त्यनुपपत्तिः स्यादत आह—"इत्थञ्चे"ति । "यजेत" इत्यादिवाक्येषु विधिप्रत्ययस्येष्टसाधनत्वादिरूपेऽर्थेऽवगते सतीत्यर्थः । तत्रापि स्वर्गः फलं कल्प्यत इति । स्वर्गस्येष्टत्वात् यागस्य च तत्साधनत्वादिति भावः । अयमेव "विश्वजिन्न्याय" इत्युच्यते । अस्य प्रपञ्चः पूर्वमीमांसायां दर्शितः "स स्वर्गः सर्वान् प्रत्यविशिष्टत्वात्" । ( ४ अ० । ३ पा० १३ सू० ) इत्यधिकरणे । यत्र विश्वजिदादिवाक्येषु फलं न श्रूयते तत्र सर्वाभिलषणीयत्वात्स्वर्ग एव फलं कल्प्यत इत्युक्तसूत्रार्थः । ननु—नित्ये सन्ध्यावन्दनादौ फलाभावान्नेष्टसाधनत्वज्ञानं प्रवर्त्तकं नवा तद्विषयो विध्यर्थ इत्याशयेन ( प्राभाकरमतानुयायी ) शङ्कते "नन्वि"ति तत्तश्च सन्ध्यादिषु प्रवृत्तिर्न स्यात् कामाश्रवणात् ।

ननु———सन्ध्यामुपासते ये तु सततं संशितव्रताः ।
विधूतपापास्ते यान्ति ब्रह्मलोकमनामयम् ॥

इत्यर्थवादवाक्यबोधितं ब्रह्मलोकप्राप्तिरूपं फलमस्तु नित्यानामत इष्टसाधनत्वधिया प्रवृत्तिर्भविष्यतीत्यत आह—"प्रत्यवायाभावो वे"ति । नित्याकरणे यः प्रत्यवायस्तिष्ठति, तत्करणे नासौ स्यादितीदमेव वा नित्यानां फलमस्त्वित्यर्थः । अत्र दोषमाह—"तथासती"ति । एवं सति सन्ध्यादीन्यपि काम्यान्येव कर्माणीति मन्यतामिति भावः । अत्र हेतुमाह—"नित्यत्वहान्यापत्ते"रिति । नित्यत्वकाम्यत्वयोर्विरोध इत्यभिमानः अर्थात् सफलत्वे सति विधिप्रतिपाद्यत्वरूपकाम्यत्वस्य निष्फलत्वे सति विधिप्रतिपाद्यत्वरूपनित्यत्वस्य च विरोधः । दोषान्तरमप्याह—"कामनाभाव" इति । फलेच्छाभाव इत्यर्थः । अकरणे प्रत्यवायानुत्पत्तेरित्यर्थः । कामनाधिकाराभावात् । अनधिकृताकरणस्य प्रत्यवायजनकत्वाभावादिति भावः । फलश्रुतेस्तर्हि का गतिरित्याशङ्कायामाह—"इत्थञ्चे"ति । केवलं नित्यकर्मप्रशंसार्थं तद्वाक्यमिति भावः । सिद्धान्ती खण्डयति—"ने"ति । "ग्रहणश्राद्धादावि"ति । अस्यायमाशयः—नित्यश्राद्धमग्निष्वात्तादिषड्देवताकं भवति, तथा ग्रहणादिनिमित्तप्राप्तमपि षड्देवताकमेव । अर्थात् ग्रहणकालिकश्राद्धे नित्यत्वनैमित्तिकत्वयोरविरोधो मीमांसकैः स्वीक्रियते—उक्तञ्च मात्स्ये—

नित्यश्राद्धं न कुर्वीत प्रसङ्गाद्यत्र सिद्धयति ।
श्राद्धान्तरे कृतेऽन्यत्र नित्यत्वात्तन्न हापयेत् ॥

इति । एवम्---

भरण्यां पितृपक्षे तु महती परिकीर्तिता ।
अस्यां श्राद्धं कृतं येन स गयाश्राद्धकृद्भवेत् ॥ इति—

भरणीश्राद्धे नैमित्तिकत्वकाम्यत्वयोरप्यविरोधः । यतः "उद्धरेत् सप्तगोत्राणि

कुलमेकोत्तरं शतम्" इति वचनाद्यथाश्राद्धं काम्यमेव तद्वत् सन्ध्यादिनित्यकर्मस्वपि काम्यत्वनित्यत्वरूपधर्मद्वयसमावेशे नैव विरोधः । यत्तु कामनाभावेऽकरणापत्तिरित्युक्तं तत्राह—"नचे"ति । "त्रिकालस्तवपाठादावि"ति—यथा विष्णुसहस्रनामस्तवादिपाठो विधिप्राप्तत्वात् न काम्यं कर्म तथापि फलकामनया पुरुषास्तत्र प्रवर्त्तन्ते, फलमपि च तथा भवति, तद्वत्सन्ध्यादिनित्यकर्माधिकारेऽपि फलकामना कल्पनीयेति भावः । ननु नित्यगोचरप्रवृत्तौ इष्टसाधनताज्ञानं कारणमेव नेत्यनेनैवोपपत्तौ किमर्थं नित्यस्यापि काम्यत्वं कल्पनीयमत आह—"नन्वि"ति । "स्वेष्टसाधनत्वमि"ति । अन्वयव्यतिरेकाभ्यां प्रवृत्तित्वावच्छिन्नं प्रति इष्टसाधनताज्ञानस्य हेतुत्वादिति भावः ।

यच्च पत्यवायपूर्वं स्वतः प्रयोजनं नित्यस्य कर्मणः इति प्राभाकरमतं तदपि दूषयति—"यद्पी"ति । फलविशेषानाधायकमपूर्वं "पत्यवायपूर्व" मित्युच्यते । अपूर्वन्तु क्रियाजन्यःसंस्कारविशेषः । इदमेव नित्यस्य सन्ध्यादेः फलं स्यादिति प्राभाकराशयः तन्न युक्तमित्याह—"कामनाभाव" इति । तथासति तेषां नित्यत्वमेव व्याहन्येतेति भावः । अपिच पत्यवायपूर्वफलकल्पनापेक्षया रात्रिसत्रन्यायेन आर्थवादिकफलकल्पनमेव वरं नित्यत्वक्षेमकरमित्याशयेनाह—"कामनाकल्पन" इति ।

* "रात्रिसत्रन्यायादि"ति–तथाहि रात्रिसत्रवाक्यानां "ज्योतिगौं" रित्यादिवाक्योत्पन्नकर्मणां फलजिज्ञासायामत्यन्ताश्रुतस्वर्गादिकल्पने गौरवात् विश्वजिन्न्यायापवादेन "प्रतितिष्ठन्तीह वा य एता रात्रीरुपयन्ती" त्यर्थवादश्रुतौ प्रतिष्ठैव फलमिति सिद्धान्तितं तथाऽत्राप्यार्थवादिकब्रह्मलोक एव फलं लाघवादित्यर्थः । अन्यथा = फलाभावे प्रवृत्त्यनुपपत्तेः = सन्ध्यादिषु प्रवृत्तेरभावः स्यादित्यर्थः ।

---

* अयं रात्रिसत्रन्यायः पूर्वमीमांसायाः चतुर्थाध्यायीयतृतीयपादे सूत्रत्रयात्मकेऽष्टमाधिकरणे प्रपञ्चितः । रात्रिशब्देन "ज्योतिर्गौरायु" रित्यादिवाक्योत्पादितानि सौत्यानि कर्माणि उच्यन्ते तानि च "त्रयोदशरात्रसंज्ञकानि सत्रनाम्नापि व्यवह्रियन्ते द्वादशसत्रादूर्ध्वंभाविनस्त्रयोदशरात्रचतुर्दशरात्रादयः सर्वे सत्रविशेषाः । त्रयोदशसङ्ख्याका रात्रयो यस्मिन्सत्रविशेषे सोऽयं "त्रयोदशरात्रः । एवमन्यत् । तत्र "प्रतितिष्ठन्ति" "ब्रह्मवर्चसिनोन्नादा भवन्ति ये एता उपयन्ति" इत्यादीनि वाक्यान्यस्याधिकरणस्य विषयः । तत्र किं प्रतिष्ठारूपफलकथनेन स्तुतिपरमिदं वाक्यं यथा "यस्य पर्णमयीजुहूर्भवति न स पापꣳ श्लोकं शृणोति" इत्यादि वाक्यं पर्णमय्या जुह्वाः स्तावकत्वेन वर्त्तते नतु फलबोधनतात्पर्यकम् । तत्रापि स्तुतिपरतया विश्वजिन्न्यायेन स्वर्गार्थं सुत ? प्रतिष्ठार्थमिति संशयः । तदर्थः "प्रतितिष्ठन्ति" इति किमयं फलविधिः कल्प्य उतार्थवाद इति । अत्र पूर्वपक्षिणोऽयमाशयः—अपापश्लोकवत् वर्त्तमानकालिकप्रयोगापदेशात् नेदं वाक्यं फलविधिबोधनसमर्थं किन्तु अर्थवाद एव, ततश्च विश्वजिन्न्यायेन श्रुतः स्वर्ग एव कल्प्यः ।

(मु० ) तेनानुत्पत्तिं प्रत्यवायस्यान्ये मन्यन्ते । एवम्—

सन्ध्यामुपासते ये तु सततं शंसितव्रताः ।
विधूतपापास्ते यान्ति ब्रह्मलोकमनामयम् ॥ एवम् ।
दद्यादहरहः श्राद्धं पितृभ्यः प्रीतिमावहन् ।

इति प्रीत्यात्मकमेव फलमस्तु । नच पितृप्रीतिः कथं फलं व्यधिकरणत्वादिति वाच्यम्, गयाश्राद्धादाविवोद्देश्यत्वसम्बन्धेनैव फलजनकत्वस्य क्वचित्कल्पनात् । अत एवोक्तं शास्त्रदर्शितफलमनुष्ठानकर्तरीत्युत्सर्ग इति । पितॄणां मुक्तत्वे तु स्वस्य स्वर्गादिफलं यावन्नित्यनैमित्तिकानुष्ठानस्य सामान्यतः स्वर्गजनकत्वात् । पण्डापूर्वार्थे प्रवृत्तिश्च न सम्भवति नहि तत्सुखदुःखाभाववत्स्वतः पुरुषार्थो न वा तत्साधनम्, प्रत्यवायानुत्पत्तौ कथं प्रवृत्तिरिति चेदित्थम्, यथा हि नित्ये कृते प्रत्यवायाभावस्तिष्ठति तदभावे तदभावः । एवं प्रत्यवायाभावसत्त्वे दुःखप्रागभावसत्त्वं तदभावे तदभावे इति योगक्षेमसाधारणकारणतया दुःखप्रागभावं प्रत्यपि सुवचत्वात् । एवमेव प्रायश्चित्तस्यापि दुःखप्रागभावहेतुत्वमिति ।

( प्र० टी० ) "तेने"ति । आर्थवादिकफलकल्पने लाघवेन । कामनाभावे प्रवृत्त्यभावेन इति तु वयम् । प्रत्यवायस्य=पापस्य अनुत्पत्तिं नित्यकर्मणां फलमित्यन्ये आचार्या मन्यन्ते । सन्ध्यादिनित्यकर्मणामार्थवादिकफलबोधकवाक्यं दर्शयितुमाह—"एवमि"ति । दद्यादिति नित्यश्राद्धस्यार्थवादः । श्राद्धस्य पितृतृप्तिरूपं फलमसहमानः शङ्कते—"नचे"ति । शङ्कापक्षे व्यधिकरणत्वादिति हेतुः । नह्यन्यकृतेरन्यः फलं भोक्तुमीष्टे । अनुभवविरुद्धमिति भावः । समाधत्ते "गयाश्राद्धादाविवे"ति । "उद्देश्यत्वसम्बन्धेनैवे"ति । उद्देश्यतावच्छेदकसम्बन्धद्वारापि क्वचित् फलं कल्प्यते । अर्थात् शास्त्रं यदुद्देश्यतावच्छेदकसम्बन्धेन यत्कर्मफलमाह तत्फलं

---

सिद्धान्तस्तु—"श्रुतानुमानयोः श्रुतसम्बन्धो बलीयान्" इति न्यायेन प्रतिष्ठैव श्रुतं फलं वरं नतु कल्प्यः स्वर्गो दुर्बलत्वात् । यत्तु वर्त्तमानापदेशः तत्र फलत्वसिद्ध्यर्थं सनन्तविपरिणाममात्रं लघीयः । "उपयन्ति" इत्यस्य विधिरूपेण परिणामश्च स्यात् । तदयमर्थः सम्पद्यते—यत् "ये प्रतितिष्ठासन्ति ते एता रात्रीरुपेयुः" इति । अत्र सूत्रे—"क्रतौ फलार्थवादमङ्गवत् कार्ष्णाजिनि" ॥ क्रतौ=रात्रिसत्रादिके, फलश्रुतिं=पर्णतादावङ्ग इव फलार्थवादे कार्ष्णाजिनिराचार्यो मन्यते इति पूर्वपक्षे सिद्धान्तमाह—"फलमात्रेयो निर्देशादश्रुतौ ह्यनुमानं स्यात्" ॥ फलं प्रतिष्ठाफलं बोध्यम् इत्यात्रेयो मन्यते तत्र हेतुः—निर्देशादिति फलत्वेन निर्देशयोग्यत्वादित्यर्थः । अथ विधिप्रत्ययो न श्रूयते इति कथं प्रतिष्ठाफलं विधेयं स्यादित्याह—"अश्रुतौ ह्यनुमानं स्यादि"ति ॥ विधेयश्रुतावनुमानं स्याल्लाघवेनेति भावः । अधिकं शास्त्रार्थदीपिकादौ द्रष्टव्यम् ।

तस्यैव भवति, यथा पितृकृताया जातेष्टेरोजस्वितादि पुत्रनिष्ठं फलम् तस्माद्यः करोति स भुङ्क्ते इत्युत्सर्ग एवेति भावः।

"अत एवे"ति। पितृप्रीतेः श्राद्धफलत्वादेवेति वेत्यर्थः। "शास्त्रदेशितं फलमनुष्ठातरि ( ) इतिमीमांसकानामुत्सर्ग एव सच सापवादः एतेन मृतानुद्दिश्य क्रियमाणे श्राद्धकर्म नैव पितृनिष्ठफलकं भवतीति वदन्तः केचनात्यर्वाञ्चः परास्ताः, सामान्यविशेषविधिसत्त्वात्। ननु येषां पितरो मुक्ताः तदर्थं कृतस्य का गतिरिति शङ्कायामाह—"पितृणामि"ति। तत्र हेतुमाह—"यावन्नित्ये"ति। "सामान्यत"इति। विश्वजिन्न्यायेन बोध्यम्।

सिंहावलोकन्यायेन पुनः प्राभाकरमतं निरस्यति—"पराडापूर्वार्थमि"ति। अत्र हेतुमाह—"नही"ति। सुखे दुःखाभावे सुखसाधने दुःखाभावसाधने वा पुंसां प्रवृत्तिरिति राजमार्गः। पराडापूर्वन्तु न कथमपि पुरुषार्थ इति तदर्थं कथं प्रवर्त्तेत। शङ्कते प्राभाकरः—"प्रत्यवायानुत्पत्तावि"ति। यथा तव नैयायिकस्य मते सन्ध्यादिनित्यफलं प्रत्यवायाभावः सच न सुखं नापि दुःखाभावः, नवा सुखसाधनं दुःखाभावसाधनं तथापि तदर्थं पुरुषः ( द्विजातिः ) सन्ध्यादिषु तत्फलकामः प्रवर्त्तते तद्वन्ममापि किं न स्यादिति भावः। समाधत्ते नैयायिकः—"इत्थमि"ति। शृणु यथा प्रवृत्तिरस्तीत्यर्थः। यथा हि नित्ये सन्ध्यादिकर्मणि कृत अनुष्ठिते सति तदनुष्ठातरि प्रत्यवायाभावः=प्रत्यवायप्रागभावः तिष्ठति, तदभावे = सन्ध्यावन्दनादिनित्याभावे सति तदननुष्ठातरि पुरुषे, तदभावः=प्रत्यवायाभावस्याभावः प्रत्यवायस्वरूपो वर्त्तते। एवमेव प्रत्यवायाभावस्य दुःखप्रागभावेन सह व्याप्तिरस्ति अर्थात् नित्यकर्मानुष्ठानद्वारा यस्मिन् कर्त्तरि प्रत्यवायाभावो भविष्यति नियमेन तत्र दुःखप्रागभावोऽपि स्थास्यति। यत्र तु प्रत्यवायाभावस्याभावः तत्र दुःखप्रागभावस्याप्यभावः अर्थात् "दुःखमिति" योगक्षेमसाधारणकारणताया दुःखप्रागभावं प्रत्यपि सुवचत्वात्।

अयमाशयः—अप्राप्तप्राप्तिर्योगः, प्राप्तस्य संरक्षणं क्षेमः। प्रत्यवायाभावो न स्वतः पुरुषार्थो नापिच तत्साधनम् अतस्तस्य प्रवृत्तिम्प्रति कारणता अप्राप्तैव तथापि दुःखप्रागभावेन सह तस्य व्याप्तिरस्तीति कृत्वा तस्यापि प्रवृत्तिम्प्रति कारणता नीतैवेत्ययमेवात्र योगः। इष्टसाधनताज्ञानस्य प्रवृत्तिम्प्रति हेतुता तु पूर्वसिद्धैव परं प्राभाकरकुतर्कनिरासेन तस्या एव यत्प्रकृते संरक्षणं स क्षेमः। अनया रीत्या दुःखप्रागभावेऽपि योगक्षेमसाधारणकारणता सिद्ध्यतीति कृतं बहुप्रपञ्चेन ग्रन्थगौरवकरेण। उक्तां रीतिं चान्द्रायणादिप्रायश्चित्तकर्मस्वपि अतिदिशति—"एवमेव प्रायश्चित्तस्यापी"ति। योगक्षेमसाधारणमेवेत्यर्थः।

( मु० ) ननु न कलञ्जं भक्षयेदित्यत्र विध्यर्थे कथं नञर्थान्वयः, इष्टसाधनत्वाभावस्य कृतिसाध्यत्वाभावस्य च बोधयितुमशक्यत्वादिति

चेन्न, तत्र बाधादिष्टसाधनत्वं कृतिसाध्यत्वं च न विध्यर्थः, किन्तु बलवदनिष्टाननुबन्धित्वमात्रं तदभावश्च नञा बोध्यते । अथवा बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वे सति कृतिसाध्यत्वं विध्यर्थः तदभावश्च नञा बोध्यमानो विशिष्टाभावो विशेष्यवति विशेषणाभावे विश्राम्यति ।

(प्र० टी० ) विध्यर्थे इष्टसाधनत्वरूपे नञर्थान्वयोऽसम्भवीति शङ्कते—"नन्वि"ति । विध्यर्थनञर्थयोः कथमन्वयः=विध्यर्थेष्टसाधनत्वाद्यन्वितनञर्थस्याभावरूपस्य कथमन्वयः, अर्थात् यदि विध्यर्थेन सह नञर्थस्यान्वयः स्यात् तदा "न कलञ्ज" मिति निषेधवाक्यात् "कलञ्जभक्षणं पुरुषेष्टसाधनत्वाभाववत् कृतिसाध्यत्वाभाववच्च" इत्याकारक एव बोधः स्यात् सच न सुशकः, यतस्तस्मिन् शुष्के मांसविशेषे पुरुषस्येष्टसाधनत्वं कृतिसाध्यत्वञ्चेत्युभयमपि न प्रतीयत इत्युक्तो बोधः प्रतीतिबाधित एवेति नास्ति निषेधवाक्ये विध्यर्थेन सह नञर्थान्वय इति शङ्काग्रन्थार्थः । समाधत्ते—"इतिचेत् न" इति । "तत्र बाधादि"ति । बाधादिति—इष्टसाधनत्वाद्यन्विताभावस्याऽसत्त्वादित्यर्थः । न विध्यर्थ इति । न प्रकृतविधितात्पर्यविषय इत्यर्थः । स्वीक्रियते मयाप्येतादृशस्थले दर्शितरीत्याऽर्थबाधः, परन्तु तत्रेष्टसाधनत्वादिकं न विध्यर्थो मयाङ्गीक्रियते । किन्तर्हीत्याकाङ्क्षायामाह—"बलवदनिष्टाननुबन्धित्वमात्र" मिति । तदभावश्च कलञ्जभक्षणे नञा बोध्यते ।

इष्टसाधनत्वं कृतिसाध्यत्वं बलवदनिष्टाननुबन्धित्वञ्चेति त्रयोंऽशा विध्यर्थस्य, तद् यत्र यस्यांशस्य बोधो जायते तत्र यदि नञ् आपतेत् तर्हि तस्यांशस्यैव नञाऽभावो बोध्यते नत्वितरस्यापीति । प्रकृते कलञ्जभक्षणवाक्ये बलवदनिष्टाननुबन्धित्वमात्रं विध्यर्थः, तदभावश्च नञा "कलञ्जभक्षणं बलवदनिष्टाननुबन्धित्वाभाववत्" इत्याकारो बोध्यते तस्मान्न विध्यर्थेन सह नञाऽनन्वय इति भावः ।

लाघवमाश्रित्याह—"अथवे"ति । "विशेषणाभावे विश्राम्यती"ति । एवञ्चेष्टसाधनत्वादिमति कलञ्जभक्षणादौ विशिष्टाभावो बोध्यमानो बलवदनिष्टाननुबन्धित्वाभावे पर्यवस्यतीति भावः । एवंविधस्थले विशेषणाभावप्रयुक्तविशिष्टाभावलाभ इति तु रहस्यम् ।

(मु० ) ननु श्येनेनाभिचरन् यजेतेत्यादौ कथं बलवदनिष्टाननुबन्धित्वमर्थः श्येनस्य मरणानुकूलव्यापारस्य हिंसात्वेन नरकसाधनत्वात्, नच वैधत्वान्न निषेध इति वाच्यम्, अभिचारे प्रायश्चित्तोपदेशात्, नच मरणानुकूलव्यापारमात्रं यदि हिंसा तदा खड्गकारस्य कूपकर्तुश्च हिंसकत्वापत्तिर्गलग्रहभक्षणजन्यमरणे स्वात्मवधत्वापत्तिश्चेति वाच्यम्, मरणोद्देश्यकत्वस्यापि विशेषणत्वात्, अन्योद्देश्यकहिंस-

नाराचहतब्राह्मणस्य तु वाचनिकं प्रायश्चित्तमिति चेन्न, श्येनवारणाया-दृष्टाद्वारकत्वेन विशेषणात्। अत एव काशीमरणार्थं कृतशिवपूजादेरपि-न हिंसात्वम्। नच साक्षान्मरणजनकस्यैव हिंसात्वं श्येनस्तु न तथा किन्तु तज्जन्यापूर्वमिति वाच्यम्, खड्गाघातेन ब्राह्मणे व्रणपाकपरम्परया मृते हिंसात्वानापत्तेः।

( प्र० टी० ) विशिष्टस्य विध्यर्थत्वे श्येनयागे बलवदनिष्टाननुबन्धित्वरूपविशेषणबाधात् कथं विशिष्टस्य विध्यर्थस्य बोध इत्याक्षिपति—"नन्वि"ति। "श्येने"ति *कर्मनामधेयं यागविशेषस्य। अभिचरन्=वैरिमारणं कामयमानः। "कथमि"ति। श्येने तस्य बाधित्वादिति भावः। स्वप्रतिज्ञायां हेतुमाह—"श्येनस्ये"त्यादि। "हिंसात्वेन नरकसाधनत्वादि"ति। तथाच शाबरभाष्यम्—"हिंसा च प्रतिषिद्धे"ति। यस्मान्नरकसाधनं तस्मान्न बलवदनिष्टाननुबन्धि, किन्तु बलवदनिष्टसम्बन्ध्येव श्येनकर्म अतस्तत्र विशिष्टविध्यर्थस्य बाध इति भावः। विशिष्टविध्यर्थवादी शङ्कते—"नच वैधत्वादि"ति। विधिस्पृष्टे दोषानवकाश इत्यर्थः। यज्ञीयपशवालम्भनानुरोधेन "मा हिंस्या"दिति निषेधस्य वैधहिंसेतरहिंसापरत्वादिति भावः। आक्षेप्ता वारयति—"अभिचार"इति। "अभिचारमहीनञ्च त्रिभिः कृच्छ्रैर्व्यपोहति" इति प्रायश्चित्तोपदेशात् श्येनस्यास्त्येव हिंसात्वेन नरकं फलम्, अन्यथा प्रायश्चित्तोपदेश एव व्यर्थः स्यादिति भावः। नन्वेवमग्नीषोमीयहिंसापि नरकसाधने स्यात्, तस्या अपि सामान्यशास्त्रेण निषेधप्रतिपादनादिति चेन्न, मा हिंस्यादितिशास्त्रस्यानुपदिष्टप्रायश्चित्तहिंसेतरहिंसानिषेधपरत्वम्, अग्नीषोमीयहिंसाया अनुपदिष्टप्रायश्चित्तहिंसारूपत्वेन सामान्यशास्त्राप्रवृत्तेः, श्येननामकाभिचारकर्म तु उपदिष्टप्रायश्चित्तहिंसारूपम्, अतस्तत्र सामान्यशास्त्रप्रवृत्तिरेवेति भावः।

विशिष्टविध्यर्थवादी हिंसानिर्वचनेन आक्षेप्तारं व्याकुलीकर्त्तुकामः शङ्कते—"नचे"ति। "मरणानुकूलव्यापारमात्रं यदि हिंसे"ति—यदि साक्षात्परम्परासाधारणः सर्वोऽपि व्यापारो हिंसा तदा खड्गकर्त्तुः कूपकर्त्तुश्च हिंसकत्वापत्तिः खड्गेनापि परम्परया जीवानां हननात्, कूपेऽपि क्रियमाणे कृते च केषाञ्चिन्मरणदर्शनात्। दोषान्तरमप्याह—"गललग्नान्ने"ति। आक्षेप्ता शङ्कां निराकुरुते—"मरणोद्देश्यकत्वस्यापी"ति। "मरणोद्देश्यकत्वे सति मरणानुकूलव्यापारत्वं हिंसे"त्यर्थः।

---

* एतञ्च पूर्वमीमांसायाः प्रथमाध्याये चतुर्थे पादे पञ्चमाधिकरणे "तद्व्यपदेशञ्च" इति न्यायेन निर्णीतम्। "यथा वै श्येनो निपत्याऽऽदत्ते, एवमयं द्विषन्तं भ्रातृव्यं निपत्यादत्ते यमभिचरति श्येनेन" इति वाक्येनोक्त उपमानोपमेयभावो नह्येकस्मिन्पक्षिणि युज्यते, नचात्रा नन्वयः। तस्मात्पक्षिण उपमानस्य गुण उपमेये कर्मण्यस्तीति श्येनशब्दस्याभिचार कर्मनामत्वं तद्व्यपदेशेन बोध्यम्।

खड्गकाशादौ तदुद्देश्यकत्वाभावान्नास्ति दोष इति भावः। ननु—मरणोद्देश्यकत्वनिवेशे अन्योद्देशेन प्रक्षिप्तनाराचेन यत्र ब्राह्मणमृतिः तत्र प्रायश्चित्तं न स्यात् तस्य हिंसात्वाभावेन "मा हिंस्यादि"ति निषेधाविषयत्वादत आह—"अन्योद्देश्यके"ति। वाचनिकमि"ति—स्मृतिवाक्यप्राप्तम्, अर्थात् "सेतौ च स्नानमात्रेण ब्रह्महत्यां व्यपोहति" इति वचनेन ब्राह्मणमात्रवधस्य सेतुस्नानादिरूपप्रायश्चित्तप्रतिपादनादित्यर्थः। नतु "मा हिंस्यादि"ति निषेधविषयतयेति भावः। तदेतत् खण्डयति सिद्धान्ती—"इति चेन्ने"ति। "श्येनवारणाये"ति—अर्थात् "अदृष्टारकं यच्छत्रुमरणानुकूलं कर्म तद्धिंसे"ति हिंसालक्षणम्। श्येनस्य तु अदृष्टद्वारकत्वेन शत्रुनाशकत्वाद्धिंसात्वाभावः। तथाच न तत्र विधिलक्षणाक्रान्तौ दोष इति भावः।

नन्वस्तु श्येनस्य हिंसात्वं किमदृष्टाद्वारकत्वविशेषणेनेति अत आह—"अत एवे"ति। अदृष्टाद्वारकत्वविशेषणानवशादेवेत्यर्थः। काशीमरणार्थमिति स्पष्टम्। तटस्थः शङ्कते—"नचे"ति। श्येनस्तु न साक्षान्मरणजनको व्यापार इति न हिंसा किन्तु श्येनजन्यापूर्वमेव मरणजनकमित्यर्थः। समाधत्ते—"खड्गाघातेने"ति। "हिंसात्वानापत्ते"रिति। अस्ति सापि क्रिया हिंसात्मिकैव सम्मतेति भावः। एवञ्च हिंसास्वरूपोपसङ्ग्रहाय श्येनादिवारणाय च "अदृष्टाद्वारकं" विशेषणं हिंसालक्षणे देयमेवेति भावः। अत एव कर्ममीमांसकाः "चोदनालक्षणोऽर्थो धर्मः" (पू० मी० १।१।२) इत्याधिकरणे "अर्थत्वे सति चोदनागम्यो धर्मः" इति धर्मलक्षणमाचक्षाणा "अर्थो धर्मः" इत्युक्ते ब्रह्मणि चैत्यवन्दनादौ घटादौ चातिव्याप्तिः तद्व्यवच्छेदाय "चोदनागम्य" इत्युक्तम्। "चोदनागम्यो धर्मः" इत्युक्तेः विधिगम्येऽनर्थफलत्वेनानर्थरूपे श्येनाद्यभिचारकर्मणि अतिव्याप्तिः तद्व्यवच्छेदाय "अर्थ" इत्युक्तम्। यद्यपि श्येनस्य शत्रुवधः फलं नतु नरकं तथापि तस्य बधस्य नरकहेतुत्वाद्वधद्वारा श्येनोऽनर्थ इत्याहुः, तस्माद् "अदृष्टाद्वारकं" विशेषणं युक्तमेव। सविस्तरं प्रपञ्चितोऽयमर्थोऽस्माभिः "प्रस्तावचन्द्रिकायाम्" इति विशेषजिज्ञासवस्तामालोकयन्तु।

(मू०) केचित्तु श्येनस्य हिंसा फलं न तु मरणम्। तेन श्येनजन्यखड्गघातादिरूपा हिंसाऽभिचारपदार्थः। तस्य च पापजनकत्वम्। अतः श्येनस्य वैधत्वात्पापाजनकत्वेऽपि अग्रिमपापं प्रतिसन्धाय सन्तो न प्रवर्तन्त इत्याहुः।

(प्र० टी) अदृष्टाद्वारकविशेषणं विनैव श्येने बलवदनिष्टाननुबन्धित्वमुपपादयतां मतमाह—"केचित्त्वि"ति। प्राचीनैकदेशिनः। हिंसाफलम्=साक्षान्मरणफलकव्यापारः फलम्, अर्थात् यं शत्रुमुद्दिश्य श्येनः कृतः तदुपरि खड्गाघातादिस्तन्मरणकारी जायते एवं खड्गाघातादेव श्येनफलम् नतु शत्रुमरणात्मकम्। तेन=हेतुना।

"श्येनजन्ये"ति—श्येनक्रियाजन्या या खड्गाघातादिरूपा क्रिया सैव हिंसा, साच प्रकृते अभिचारपदार्थः। "तस्य चे"ति—तस्यैव खड्गाघातादिरूपाभिचारस्य पापजनकत्वं "अभिचारमहीनञ्चे"त्यादिशास्त्रेण पापजनकत्वबोधनात्। नतु साक्षात् श्येनक्रियायास्तत्त्वम्, विधिदृष्टे दोषानवकाश इति मत्वाह—"अतः श्येनस्ये"ति। कुतस्तर्ह्यास्तिकानां श्येने प्रायिकी न प्रवृत्तिरत आह—"अग्रिमे"ति। खड्गाद्यभिघातजन्यपापं ज्ञात्वेत्यर्थः। तथा च पातकप्रयोजकत्वान्न तत्रास्तिकानां प्रवृत्तिरिति भावः। * चिन्त्यमिदम्। विस्तरस्तु दिनकर्यां द्रष्टव्यः।

(मु०) आचार्यास्तु आप्ताभिप्रायो विध्यर्थः। पाकं कुर्या इत्यादावाज्ञादिरूपेच्छावाचित्ववल्लिङ्मात्रस्येच्छावाचित्वं लाघवात्। एवं च स्वर्गकामो यजेतेत्यादौ यागः स्वर्गकामकृतिसाध्यतया आप्तेष्ट इत्यर्थः। ततश्चाप्तेष्टत्वेनेष्टसाधनत्वादिकमनुमाय प्रवर्तते। कलञ्जभक्षणे तदभावान्न प्रवर्तते।

(प्र० टी०) विध्यर्थश्चाप्ताभिप्रायः। सच स्वेष्टसाधनतानुमापकः, इष्टसाधनताज्ञानञ्च प्रवर्त्तकमित्युदयनाचार्यमतमाह—"आचार्यास्त्व"ति। "पाकं कुर्याः" इत्यादिवाक्ये लिङः आज्ञादिरूपेच्छावाचित्वम्। तद्वत्सर्वत्रैव लिङ्मात्रस्येच्छावाचकत्वं बोध्यम्। "लाघवादि"ति—बलवदनिष्टाननुबन्धीष्टसाधनत्वाद्यपेक्षया इच्छात्वेन विधिशक्तौ लाघवादित्यर्थः। वैदिकलिङ्वाक्ये उक्तार्थे शाब्दबोधमाह—"एवञ्चे"ति। अनुमायेति। तत्प्रकारश्च—"यागो मम स्वर्गकामस्य बलवदनिष्टाननुबन्धीष्टसाधनं मत्कृतिसाध्यतयाप्तेनेष्यमाणत्वात् मन्मात्रकृतिसाध्यतयेष्यमाणमद्भोजनवदिति। कलञ्जभक्षणे तदभावात्=आप्तेष्टत्वाभावेन तद्धेतुकेष्टसाधनत्वज्ञानाभावान्न प्रवर्त्तते इत्यर्थः। एतच्च—

विधिर्वक्तुरभिप्रायः प्रवृत्त्यादौ लिङादिभिः।
अभिधेयाऽनुमेया तु कर्त्तुरिष्टाभ्युपायता॥

इत्यादिना कुसुमाञ्जल्याः पञ्चमे स्तबके तत्प्रकाशे च बहु विस्तृतं प्रत्यपाणाचार्येण। तत्तत एव कण्ठेहत्य निरीक्षणीयम्।

(मु०) यस्तु वेदे पौरुषेयत्वं नाभ्युपैति तं प्रति विधिरेव तावद्गर्भ इव श्रुतिकुमार्याः पुंयोगे मानम्। नच कर्त्रस्मरणं बाधकं, कपिलकणादादिभिरद्यपर्यन्तं कर्तृस्मरणस्यैव प्रतीयमानत्वात्। अन्यथा स्मृतीनामप्यकर्तृकत्वापत्तेः। तत्रैव कर्तृस्मरणमस्तीति चेद्वेदेऽपि "छन्दांसि जज्ञिरे तस्मात्" इत्यादिकर्तृस्मरणमस्त्येव। एवं "प्रतिमन्वन्तरं चैषा

---

* उत्कटरागादिनाऽऽस्तिकानामपि तत्र प्रवृत्तिदर्शनादुक्तप्रायत्वाच्चेत्याशयवानाह— "चिन्त्य"मिति।

श्रुतिरन्या विधीयते" इत्यपि द्रष्टव्यम् ।

( प्र० टी० ) ननु—वेदे वक्तुरभावात् कस्येच्छा लिङा बोधनीया इत्यत आह—"यस्त्वि"ति । मीमांसक इत्यर्थः । *पौरुषेयत्वम्=पुरुषप्रणीतत्वम् । श्रुतिकुमार्याः= श्रुतिर्वेद एव कुमारीति रूपकम् । वक्तृभिन्नेच्छाया बोधने विधेः सामर्थ्याभावात् विधिरेव वेदवक्तुरीश्वरे मानमिति भावः । यथा विना पुंयोगं कुमार्या गर्भो नार्हति भवितुमेवमेव वेदवक्तुरभावे वेदे विधिरेव भवितुं नार्हतीति तत्त्वम् । शङ्कते—"नचे"ति । कर्त्रस्मरणं=वेदकर्त्तुरस्मरणं स्मृतिभिरबोधनमित्यर्थः । अर्थात् वेदस्याद्यापि कोऽपि कर्त्ता न स्मर्यते यद्यभविष्यत् तर्हि केनाप्यस्मरिष्यत् । तथाच "वेदोऽपौरुषेयोऽस्मर्यमाणकर्त्तृकत्वात्" इत्यनुमानं वेदस्य कर्त्तृत्वे बाधकमिति मीमांसकाशयः । समाधत्ते—"कपिलकणादादिभि"रिति । कपिलकणादगौतमादिभिस्तच्छिष्यैश्चाद्यपर्यन्तमित्यर्थः । कर्तृस्मरणस्य=सकर्त्तृकत्वबोधकस्मृतेरित्यर्थः । अन्यथा= वेदे सकर्त्तृकत्वानङ्गीकारे ।

( मु० ) स्वयम्भूरेष भगवान्वेदो गीतस्त्वया पुरा ।
शिवाद्या ऋषिपर्यन्ताः स्मर्तारोऽस्य न कारकाः ॥

इति तु वेदस्य स्तुतिमात्रम् । नच पौरुषेयत्वे भ्रमादिसम्भवादप्रामाण्यं स्यादिति वाच्यम्, नित्यसर्वज्ञत्वेन निर्दोषत्वात् । अत एव पुरुषान्तरस्य भ्रमादिसम्भवान्न कपिलादेरपि कर्तृत्वं वेदस्य । किञ्च वर्णानामेवानित्यत्वस्य वक्ष्यमाणत्वात्सुतरां तत्सन्दर्भस्य वेदस्यानित्यत्वमिति सङ्क्षेपः ॥ उपादानस्येति । उपादानस्य समवायिकारणस्याध्यक्षं प्रत्यक्षं प्रवृत्तौ कारणमिति ॥

( प्र० टी० ) ननु—न स्मृतिषु कर्त्तृस्मरणं स्मृतिष्वेव स्मृतिकर्त्तृणां प्रसिद्धिः । यथा च मन्वादौ स्पष्टमित्याशयवाञ्शङ्कते—"तत्रैवे"ति । सिद्धान्ती समं समाधिं

---

* वेदस्य पौरुषेयत्वापौरुषेयत्वविषये वादिनामतिविस्तृतो विचारोऽस्ति, तत्रास्तिकपक्षमाश्रित्य सिद्धान्तसारस्तु इत्थं बोध्यः—येषां नैयायिकानां नये पौरुषेयत्वं तेषां नयेपीश्वररचितत्वेन भ्रमप्रमादविप्रलिप्सादिदोषराहित्यमेव वेदस्य । येषां मीमांसकानां नये सर्वथा पुरुषमात्रप्रणयनसम्बन्धराहित्यरूपमपौरुषेयत्वं तेषामपि मते पुरुषचिततया सम्भाव्यमानोक्तदोषाणां तत्र गन्धराहित्येन प्रामाण्यविषये नैवाऽस्ति विवादः । येषाञ्चौपनिषदानां मते शास्त्रयोनित्वेऽपि वेदस्यापौरुषेयत्वं तेषामपि ईश्वरनिश्वासभूतानां तेषां पुरुषकृतरचनास्वातन्त्र्याभावरूपौरुषेयत्वं द्रढयति भ्रमादिदोषराहित्येन प्रामाण्यञ्चोपोद्बलयत्येवेति तात्पर्येऽविवाद एव सर्वेषाम् । अत एव "यस्नतः प्रतिषेध्या नः पुरुषाणां स्वतन्त्रता" इति भट्टोक्तिरपि सङ्गता भवति । अधिकजिज्ञासवो मम "विवृत्ति" ग्रन्थमालोकयन्तु । विस्तरस्तु मया प्रमेयकमलमार्त्तण्डोक्तिखण्डनपुरःसरं "वेदान्ततत्त्वसमीक्षायां" कृतः ।

दर्शयति—"वेदेपी"ति । "छन्दांसी"ति पुरुषसूक्तम् । यजु० ३१ । म० ७। वेदस्य सकर्तृकत्वे श्रुतिं प्रदर्श्य स्मृतिमपि प्रदर्शयति—"एवमि"ति । *"प्रतिमन्वन्तरमि"ति । मन्वन्तरं मन्वन्तरं प्रतीति प्रतिमन्वन्तरमिति सर्वकल्पादावित्यर्थः। ननु "स्वयम्भूरेष" इत्यादिमहाभारतादौ स्पष्टमेव वेदस्याकर्तृकत्वं तत्कथमुच्यते तस्य पौरुषेयत्वमिति शङ्कायामाह—इति तु वेदस्य स्तुतिमात्रम् । तथाच पूर्वोक्तश्रुतिस्मृत्योर्विरोधेन अस्य भारतवाक्यस्य न स्वार्थे तात्पर्यमपितु स्तुतिरेव वेदस्येति भावः । शङ्कते—"नचे"ति । भ्रमादिसम्भवात् = पुरुषस्य भ्रमप्रमादविप्रलिप्सादिदोषसम्भवात्तत्कर्तृकत्वे वेदवाक्यस्याप्रामाण्यं स्यादित्यर्थः ।

प्रतिमन्वन्तरं चैषा श्रुतिरन्या विधीयते ॥
ऋचो यजूंषि सामानि यथावत्प्रतिदैवतम् ।
आभूतसंप्लवस्थायि वर्ज्यैकं शतरुद्रियम् ॥
विधिर्होत्रं तथा स्तोत्रं पूर्ववत्सम्प्रवर्त्तते ।
द्रव्यं स्तोत्रं गुणस्तोत्रं कर्मस्तोत्रं तथैव च ॥
चतुर्थमाभिजनिकं स्तोत्रमेतच्चतुर्विधम् ।
मन्वन्तरेषु सर्वेषु यथा देवा भवन्ति ये ॥
प्रवर्त्तयति तेषां वै ब्रह्मा स्तोत्रं चतुर्विधम् ।
एवं मंत्रगुणानाञ्च समुत्पत्तिश्चतुर्विधा ॥
अथर्वयजुषां साम्नां वेदेष्विह पृथक् पृथक् ।
ऋषीणां तप्यतामुग्रं तपः परमदुश्चरम् ॥
मंत्राः प्रादुर्बभूवुर्हि पूर्वमन्वन्तरेष्विह ॥

इत्यादि । ५६ श्लोकादारभ्य ६० श्लोकान्तम् । विस्तरस्तु तत्रैव ॥

समाधत्ते—"नित्यसर्वज्ञानत्वेने"ति । नित्यसर्वविषयकज्ञानवत्त्वेन वेदकर्तुरीश्वरस्य भ्रमादिदोषसम्भावनैव नास्तीति कुतोऽप्रामाण्यापत्तिः तथाच पारमर्षं सूत्रम् "तद्वचनादाम्नायस्य प्रामाण्यम्" ( वै० १ । १ । ३ ) इति तेनेश्वरेण प्रणयनादाम्नायस्य वेदस्य प्रामाण्यमित्यर्थः । अत एवेति–नित्यसर्वज्ञत्वाभावादेवेत्यर्थः । स्पष्टमन्यत् । वेदस्य पौरुषेयत्वे युक्त्यन्तरमप्याह–"किञ्चे"ति । "तत्सन्दर्भस्येति" । तन्निष्ठानुपूर्वीविशेषस्येत्यर्थः । इति सङ्क्षेप इति । विस्तरस्तु आकारेषु द्रष्टव्य इति भावः । मत्प्रणीत "वेदान्ततत्त्वसमीक्षायां" वा विलोक्यम् । उपादानस्येतीत्याद्युक्तार्थम् ।

( का० ) निवृत्तिस्तु भवेद्द्वेषाद्द्विष्टसाधनताधियः ॥१५१॥

( मु० ) निवृत्तिरिति । द्विष्टसाधनताज्ञानस्य निवृत्तिं प्रति जनकत्व-

* इदम् वायुपुराणे ऋषिलक्षणनामक एकपञ्चाशत्तमेऽध्याये उक्तम् ।

मन्त्रयत्नव्यतिरेकाच्छ्वासमवधारितमिति भावः ॥ १४१-१५१ ॥

( प्र० टी० ) द्वितीये निवृत्तिरूपे प्रयत्ने हेतुमाह—"निवृत्तिस्त्वि"ति । द्विष्टसाधनताज्ञानाद् द्वेषः द्वेषाच्च निवृत्तिरित्यर्थः । यथा परद्रव्यदारापहरणादौ द्विष्टसाधनत्वं बन्धनागारपातादिकं ज्ञात्वा द्वेषेण ततो निवर्त्तते एवं सर्पादिदुष्टजन्तुग्रहणे-"मामयं दंशयति" इति ज्ञात्वा ततोऽपसर्पति । एवमन्यत्रापि बोध्यम् । लक्षणन्तु-"द्वेषजनितः प्रयत्नविशेष" इति बोध्यम् । साङ्ख्यास्तु संयोगाभाव एव निवृत्ति" रित्याहुः । "प्रवृत्त्यभाव एव निवृत्ति" रिति केचित् ॥ १४१—१५१ ॥

( का० ) यत्नो जीवनयोनिस्तु सर्वदातीन्द्रियो भवेत् ।

( मु० ) यत्न इति । जीवनयोनियत्नो यावज्जीवनमनुवर्तते । स चातीन्द्रियः ॥

( का० ) शरीरे प्राणसञ्चारे कारणं परिकीर्तितम् ॥ १५२ ॥

( मु० ) तत्र प्रमाणमाह—शरीर इति । प्राणसञ्चारो हि अधिकश्वासादिः यत्नसाध्यः । इत्थं च प्राणसञ्चारस्य सर्वस्य यत्नसाध्यत्वानुमानात्प्रत्यक्षयत्नबाधाच्चातीन्द्रिययत्नसिद्धिः । स एव जीवनयोनिर्यत्नः ॥ १५२ ॥

( प्र० टी० ) तृतीयं प्रयत्नमाह--"जीवनयोनि"रिति । जीवनकारणमित्यर्थः । यावदायुरयं वर्त्तत इत्यर्थः । अस्मिन् यत्ने प्रमाणं दर्शयति—"शरीर"इति । प्राणसञ्चारे इत्यादेरयमाशयः—नेत्रनिमीलनोन्मीलनयोरिव श्वासप्रश्वासयोरपि यत्नसाध्यत्वात् तत्र यो यत्नः स एव जीवनयोनिः । तस्यानुमानविषयत्वात्प्रत्यक्षाभाव इत्याह—"अतीन्द्रिययत्नसिद्धि"रिति । तथाचोक्तमुपस्कारे—जीवनयोनिश्च यत्नोऽतीन्द्रियः प्राणसञ्चारानुमेयः कथमन्यथा सुषुप्त्यवस्थायामपि श्वासप्रश्वासगतागतमिति भावः ॥ १५२ ॥

(का०) अतीन्द्रियं गुरुत्वं स्यात्पृथिव्यादिद्वये तु तत् ।
अनित्ये तदनित्यं स्यान्नित्ये नित्यमुदाहृतम् ॥१५३॥
तदेवासमवायि स्यात्पतनाख्ये तु कर्मणि ।

( मु० ) गुरुत्वं निरूपयति—अतीन्द्रियमिति । अनित्ये इति । अनित्ये द्व्यणुकादौ तद्गुरुत्वमसमवायि, असमवायिकारणम् । पतनाख्य इति । आद्यपतन इत्यर्थः ॥

( प्र० टी० ) क्रमप्राप्तं गुरुत्वं निरूपयति—"अतीन्द्रियमि"ति । "आद्यपतनासमवायिकारणं गुरुत्व"मिति लक्षणम् । तदतीन्द्रियम् रूपादिवत् चक्षुरादिभिः प्रत्यक्षं कर्त्तुमशक्यम् । तस्याश्रयं दर्शयति--"पृथिव्यादिद्वय" इति । पृथिव्यां

जले च तद्वर्त्तत इत्यर्थः । तद्विभजते—"अनित्य" इति । अनित्ये घटादावनित्यमाश्रयानित्यत्वात् नित्ये पार्थिवपरमाणौ जलपरमाणौ च नित्यमाश्रयानित्यत्वात् । "तदेवे"ति—पतनाख्ये आद्यपतनक्रियामित्यर्थः । अनन्तरपतने तु द्रव्यक्रियादिकमप्यसमवायीत्यर्थः ।

(का०) सांसिद्धिकं द्रवत्वं स्यान्नैमित्तिकमथापरम् ॥१५४॥
सांसिद्धिकं तु सलिले द्वितीयं क्षितितेजसोः ।

( मु० ) द्रवत्वं निरूपयति—सांसिद्धिकमिति । द्रवत्वं द्विविधं सांसिद्धिकं नैमित्तिकं चेति । द्वितीयं नैमित्तिकम् ॥

( प्र० टी० ) द्रवत्वं विभजते—"सांसिद्धिकमि"ति । आद्यस्यन्दनासमवायिकारणं द्रवत्वमिति तस्य लक्षणम् । स्पष्टम् ।

(का०) परमाणौ जले नित्यमन्यत्रानित्यमुच्यते ॥१५५॥

( मु० ) परमाणाविति । जलपरमाणौ द्रवत्वं नित्यमित्यर्थः । अन्यत्र पृथिवीपरमाण्वादौ जलद्व्यणुकादौ च द्रवत्वमनित्यम् । कुत्रचित्तेजसि कुत्रचित्पृथिव्यां च नैमित्तिकं द्रवत्वम् ॥ १५३—१५५ ॥

( प्र० टी० ) नैमित्तिकमिति—निमित्तजन्यमित्यर्थः ॥ १५३—१५५ ॥

(का०) नैमित्तिकं वह्नियोगात्तपनीयघृतादिषु ।

( मु० ) नैमित्तिकमिति । वह्नीति । अग्निसंयोगजन्यं नैमित्तिकं द्रवत्वम् । तच्च सुवर्णादिरूपे तेजसि घृतजतुप्रभृतिपृथिव्यां च वर्त्तते इत्यर्थः ॥

(का०) द्रवत्वं स्यन्दने हेतुर्निमित्तं सङ्ग्रहे तु तत् ॥१५६॥

( मु० ) द्रवत्वमिति । हेतुरिति । असमवायिकारणमित्यर्थः । सङ्ग्रहे सक्तुकादिसंयोगविशेषे तद्द्रवत्वं स्नेहसहितमिति बोद्धव्यम् । तेन द्रुतसुवर्णादीनां न सङ्ग्रहः ॥ १५६ ॥

( प्र० टी० ) स्पष्टम् । उक्तञ्चर्षिणा—सर्पिर्जतुमधूच्छिष्टानामग्निसंयोगाद्द्रवत्वमद्भिः सामान्यम् ( वै० २ । १ । ७ ) सर्पिरादीनां यद् द्रवत्वमस्ति तदग्निसंयोगान्निमित्तात् नतु सांसिद्धिकं, तादृशं चापां लक्षणं, द्रवत्वमात्रन्तु पृथिव्यो अग्निः सामान्यम्, नतु सांसिद्धिकं द्रवत्वमपीति नापां लक्षणस्य पृथिव्यामतिव्याप्तिरिति सूत्रार्थः ।

(का०) स्नेहो जले स नित्योऽणावनित्योऽवयविन्यसौ
तैलान्तरे तत्प्रकर्षाद्दहनस्यानुकूलता ॥१५७॥

( मु० ) स्नेहं निरूपयति—स्नेह इति । जले इति । जल एवेत्यर्थः ।

असौ स्नेहः । ननु पृथिव्यामपि तैले स्नेह उपलभ्यते, न चासौ जलीयः, तथा सति दहनप्रातिकूल्यं स्यादत आह तैलान्तर इति । तत्प्रकर्षात्स्नेहप्रकर्षात् । तैले उपलभ्यमानस्नेहोऽपि जलीय एव । तस्य प्रकृष्टत्वादग्नेरानुकूल्यम् । अपकृष्टस्नेहं हि जलं वह्निं नाशयतीति भावः ॥ १५७ ॥

( प्र० टी० ) "स्नेह"इति । "असावि"ति । तैलादौ प्रतीयमानः । "जलीय" इति—तैलान्तर्गतजलभागनिष्ठः । स्पष्टमन्यत् ॥ १५७ ॥

( का० ) संस्कारभेदो वेगोऽथ स्थितिस्थापकभावने
मूर्तमात्रे तु वेगः स्यात्कर्मजो वेगजः क्वचित् ॥१५८॥

( मु० ) संस्कारं निरूपयति—संस्कारेति। वेगस्थितिस्थापकभावनाभेदात्संस्कारस्त्रिविध इत्यर्थः । मूर्तमात्र इति । कर्मजवेगजभेदाद्वेगो द्विविध इत्यर्थः । शरीरादौ हि नोदनजनितेन कर्मणा वेगो जन्यते तेन च पूर्वकर्मनाशस्तत उत्तरं कर्म । एवमग्रेऽपि । विना त्र वेगं कर्मणः कर्मप्रतिबन्धकत्वात्पूर्वकर्मनाश उत्तरकर्मोत्पत्तिश्च न स्यात् । यत्र वेगवता कपालेन जनिते घटे वेगो जन्यते स वेगजो वेगः ॥१५८॥

( प्र० टी० )संस्कारं विभजते—"संस्कारभेद"इति । वेगोऽपि द्विविधः तस्य विषयतामाह—"मूर्तमात्र"इति । "तेन चे"ति । कर्मनाशाख्यस्योत्तरसंयोगस्य तदानीमभावात् वेगस्यैव कर्मनाशकत्वं कल्प्यत इति भावः द्वितीयस्याश्रयतामाह—परममूले "क्वचिदि"ति—क्वचिदाधारे तिष्ठतीत्यर्थः । वेगवत्कपालजनितघटे यो वेगः स कपालनिष्ठवेगजन्यत्वाद्वेगजो वेग इत्यर्थः ॥ १५८ ॥

(का०) स्थितिस्थापकसंस्कारः क्षितौ केचिच्चतुर्ष्वपि
अतीन्द्रियोऽसौ विज्ञेयः क्वचित्स्पन्देऽपि कारणम् ॥१५९॥

( मु० ) स्थितिस्थापकेति । अतीन्द्रिय इति । आकृष्टशाखादीनां परित्यागे पुनर्गमनस्य स्थितिस्थापकसाध्यत्वात् ।केचिदिति । चतुर्षु क्षित्यादिषु स्थितिस्थापकं केचिन्मन्यन्ते तदप्रमाणमिति भावः । असौ स्थितिस्थापकः । क्वचिदाकृष्टशाखादौ ॥ १५९ ॥

( प्र० टी० ) स्थितिस्थापकेति । अन्यथाकृतस्य पुनस्तदवस्थापादकः स्थितिस्थापकः । यथा—कुसुमानामवचिचीषया कान्तया करेणावनम्रतां नीता कुसुमिततरुशाखा करवियोगे स्थितिस्थापकसंस्कारवशात् सरलीभवति । स्पष्टमन्यत् ॥१५९॥

(का०) भावनाख्यस्तु संस्कारो जीववृत्तिरतीन्द्रियः ।

उपेक्षानात्मकस्तस्य निश्चयः कारणं भवेत् ।१६०॥

( मु० ) भावनाख्य इति । तस्य संस्कारस्य । उपेक्षात्मकज्ञानात्संस्कारानुत्पत्तेरुपेक्षानात्मक इत्युक्तम् । तत्संशयात्तस्यानुत्पत्तेर्निश्चय इत्युक्तम् । तेनोपेक्षान्यनिश्चयत्वेन संस्कारं प्रति हेतुतेति भावः । ननु स्मरणं प्रत्युपेक्षान्यनिश्चयत्वेन हेतुत्वम्, तेनोपेक्षादिस्थले न स्मरणम्, इत्थं च संस्कारं प्रति ज्ञानत्वेनैव हेतुतास्त्विति चेन्न, विनिगमनाविरहेणापि संस्कारं प्रति उपेक्षान्यनिश्चयत्वेन हेतुतायाः सिद्धत्वात् । किञ्चोपेक्षास्थले संस्कारकल्पनाया गुरुत्वात्संस्कारं प्रति चोपेक्षान्यनिश्चयत्वेन हेतुतायाः सिद्धत्वात् ॥१६०॥

( प्र० टी० ) तृतीयं संस्कारमाह—"भावनाख्य"इति । "अनुभवजन्यत्वे सति स्मृतिहेतुत्वं भावनाया लक्षणम् । "अतीन्द्रिय"इति । स्मृतिरूपकार्यगम्य इत्यर्थः । मूले "उपेक्षात्मके"ति । असावधानतया यद्वस्तुनो ग्रहणं सोपेक्षा । उपेक्षात्मकेन ज्ञानेन संस्कारो भावनाख्यो नोत्पद्यते, अतस्तद्भिन्नो निश्चयः संस्कारस्य हेतुरित्यर्थः । उपेक्षा नास्ति आत्मा स्वरूपं यस्य सः । अपेक्षासहकृतमेव वस्तुप्रत्यक्षं भावनाजनकमिति भावः । शङ्कते—"नन्वि" ति । "संस्कारं प्रति ज्ञानत्वेने"ति । ज्ञानत्वरूपसामान्यधर्मेणेत्यर्थः । समाधत्ते—"इति चेन्न"ति । "विनिगमनाविरहेणे"ति । तथाच न ज्ञानत्वेन कारणतेति भावः । वस्तुतः संस्कारं प्रति उपेक्षान्यनिश्चयत्वेन हेतुत्व एव विनिगमकमस्तीत्याह—"किञ्चे"ति ॥१६०॥

[ का० ] स्मरणे प्रत्यभिज्ञायामप्यसौ हेतुरुच्यते ।

( मु० ) असौ संस्कारः । तत्र प्रमाणं दर्शयति—स्मरण इति । यतः स्मरणं प्रत्यभिज्ञानं च जनयत्यतः संस्कारः कल्प्यते । विना व्यापारं पूर्वानुभवस्य स्मरणादिजननासामर्थ्यात्स्वस्वव्यापारान्यतराभावे कारणत्वासम्भवात् । नच प्रत्यभिज्ञायाः संस्कारजन्यत्वेन स्मृतित्वापत्तिरिति वाच्यम्, अप्रयोजकत्वात् । परे त्वनुद्बुद्धसंस्कारात्प्रत्यभिज्ञानुदयादुद्बुद्धसंस्कारस्य हेतुत्वापेक्षया तत्तत्स्मरणस्यैव प्रत्यभिज्ञां प्रति हेतुत्वं कल्प्यत इत्याहुः ॥

( प्र० टी० ) "असा"विति । असौ=संस्कारः; स्मरणे=संस्कारमात्रजन्यज्ञाने "यमहमद्राक्षं तमहं स्मरामी"त्याकारके । प्रत्यभिज्ञायामपि तत्तेदन्तावगाहिज्ञाने "सोऽयं देवदत्त" इत्याकारके कारणमित्यर्थः । इन्द्रियसहकृतसंस्कारजन्यं ज्ञानं प्रत्यभिज्ञा । मूले युक्तिमाह—"विना व्यापार"मिति । शङ्कते—"नचे"ति । समाधत्ते—"अप्रयोजकत्वादि"ति । संस्कारजन्यत्वस्य स्मृतित्वे प्रयोजकत्वाभा-

वादित्यर्थः । चिन्तामणिकारमतं दर्शयति—"परेत्वि"ति । "तत्स्मरणस्यैवे"ति । तथाच संस्कारजन्यत्वाभावात्प्रत्यभिज्ञायां न स्मृतिलक्षणातिव्याप्तिरिति भावः । आहु-रित्यनेन अस्वरसः । तद्बीजन्तु—त्वन्मतेऽन्तराकल्पनीयस्मृतिव्यक्तावुद्बुद्धसंस्कारस्य हेतुत्वकल्पनं, मन्मते तु प्रत्यभिज्ञायां तद्धेतुत्वकल्पनमिति समानम् । अन्त-रास्मृतिव्यक्तिकल्पने प्रत्यभिज्ञायां तद्धेतुत्वकल्पने च तवाधिकं गौरवमिति ध्येयम् ।

(का०) धर्माधर्मावदृष्टं स्याद्धर्मः स्वर्गादिसाधनम् ॥१६१॥
गङ्गास्नानादियोगादिव्यापारः स तु कीर्तितः

( मु० ) अदृष्टं निरूपयति—धर्माधर्माविति । स्वर्गादीति । स्वर्गादि-सकलसुखानां स्वर्गसाधनीभूतशरीरादीनां च साधनं धर्म इत्यर्थः । तत्र प्रमाणं दर्शयितुमाह । यागादीति । यागादिव्यापारतया धर्मः कल्प्यते । अन्यथा यागादीनां चिरविनष्टतया निर्व्यापारतया च कालान्तरभावि-स्वर्गजनकत्वं न स्यात् । तदुक्तमाचार्यैः—

चिरध्वस्तं फलायालं न कर्मातिशयं विना । इति ।

ननु यागध्वंस एव व्यापारः स्यात्, नच प्रतियोगितद्ध्वंसयोरेक-त्राजनकत्वं, सर्वत्र तथात्वे मानाभावात्, नच त्वन्मते फलानन्त्यम्, मन्मते चरमफलस्यापूर्वनाशकत्वान्न तथात्वमिति वाच्यम्, कालविशे-षस्य सहकारित्वादित्यत आह—गङ्गास्नानेति । गङ्गास्नानस्य हि स्वर्ग-जनकत्वेऽनन्तानां जलसंयोगध्वंसानां व्यापारत्वमपेक्ष्यैकमपूर्वमेव कल्प्यते लाघवादिति भावः ।

( प्र० टी० ) "अदृष्टमि"ति—धर्माधर्मयोरुभयोः "अदृष्ट"मिति नाम । तत्र को धर्म इत्याकाङ्क्षायामाह—"स्वर्गादीति" । "यागादिव्यापारतये"ति । गङ्गा-स्नानादेर्योगादेश्च स्वजन्यफलोत्पत्तिं प्रति यो व्यापारः स एव "धर्मः" । आदिना होमदानादिपरिग्रहः । अन्यथा = धर्माभावे । "यागादीनामि"ति—अस्यायमाशयः —यदि धर्मो न स्यात् तर्हि शास्त्रादौ प्रतिपादितं यागादेः स्वर्गादिकं प्रति कारणत्वं नोपपद्यते, तेषां चिरविनष्टत्वेन कालान्तरभाविस्वर्गादिफलम्प्रति पूर्ववृत्तित्वाभावात्, स्वाव्यवहितपूर्ववर्त्तिन एव कारणत्वात् । तस्मात्स्वर्गादिफललाभाय यागादेर्व्यापारतया धर्मः कल्पनीयः । अत्रार्थे उदयनाचार्यसम्मतिमाह—"चिरध्वस्तमिति । फलस्य स्वर्गादेः कालान्तरभावितया न तत्राशुविनाशिनः साक्षात्साधनत्वमिति प्रतीतसाधन-त्वानुपपत्त्या तज्जन्यापूर्वकल्पनमित्यर्थः । इदञ्च कुसुमाञ्जलौ प्रथमस्तबके स्फुटम् । "सुखासाधारणकारणतावच्छेदकजातिमत्त्वं धर्मत्व"मिति धर्मलक्षणम् । विहितक्रियैव स इति मीमांसकाः । मनसः परिणामविशेष इति साङ्ख्याः । चित्तस्यैव

चिन्तान्तरे आहिता शुभवासनेति शाक्याः। कार्यारम्भकः सूक्ष्मो मूर्त्तिमान् सुखहेतुः पुद्गलनामधेय इत्यार्हताः।

ननु ध्वंसोऽपि न व्यापारोऽस्तु, नच निर्व्यापारस्य चिरध्वस्तस्य कथं कारणत्वमिति वाच्यम्, अनन्यथासिद्धनियतपूर्ववर्तित्वस्य तत्रापि सत्वात्, अव्यवहितपूर्ववर्तित्वं हि चक्षुःसंयोगादेः कारणत्वे न तु सर्वत्र कार्यकालवृत्तित्वमिव समवायिकारणस्य कारणत्वे इत्यत आह—

(का०) कर्मनाशाजलस्पर्शादिना नाश्यस्त्वसौ मतः ॥१६२॥

(मु०) कर्मनाशेति। यदि ह्यपूर्वं न स्यात्तदा कर्मनाशाजलस्पर्शादिना नाश्यत्वं धर्मस्य न स्यात्, नहि तेन यागादेर्नाशः प्रतिबन्धो वा कर्तुं शक्यते तस्य पूर्वमेव वृत्तत्वादिति। एतेन देवताप्रीतिरेव फलमित्यपास्तम्। गङ्गास्नानादौ सर्वत्र देवताप्रीतेरसम्भवाच्च। देवतायाश्चेतनत्वेऽपि तत्प्रीतेरनुद्देश्यत्वात्। प्रीतेः सुखस्वरूपत्वेन विष्णुप्रीत्यादौ तदसम्भवात्। जन्यसुखादेस्तत्राभावात्। तेन विष्णुप्रीतिजन्यत्वेन पराभिमतस्वर्गादिरेव विष्णुप्रीतिशब्देन लक्ष्यते ॥ १६१ ॥ १६२ ॥

(प्र० टी०) "कर्मनाशादि"ति--ध्वंसस्य तत्र न व्यापारता यागादेर्व्यापारस्य कर्मनाशाजलस्पर्शादिना शास्त्रे नाश्यत्वाभिधानेन नित्यस्य ध्वंसस्य नाशायोगात्। आदिना करतोयाविलङ्घनादि ग्राह्यम्। उक्तञ्च—

कर्मनाशाजलस्पर्शात् करतोयाविलङ्घनात्।
गण्डकीबाहुतरणाद्धर्मः क्षरति कीर्त्तनात् ॥ इति।

केचित्तु यागादिशुभक्रियाया देवताप्रीतिरेव फलमिति मन्यन्ते तान् प्रत्याह—"एतेने"ति। पूर्वकथनेनेत्यर्थः। तत्र हेतुमाह—"गङ्गास्नानादावि"ति। ननु चेतना देवता कथं न तस्याः प्रीतिः फलं स्यादित्याशङ्कायामाह—"देवतायाश्चेतनत्वेपी"ति। स्वर्गादिरेवोद्देश्यमिति तदेव प्रयोजनं फलं वेति भावः। युक्त्यन्तरमप्याह—"प्रीतेश्चे"ति। यत्र च "विष्णुप्रीति" रित्येवमाद्याः शब्दाः फलार्थत्वेन श्रूयन्ते तत्र लक्षणया स्वर्गादिरेव बोध्य इति भावः। स्वर्गस्य देवताप्रसादलभ्यत्वादिति तु रहस्यम्।

इदञ्च "यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः। (कणा० १। १। २) इत्यार्षसूत्रमूलकम्। अभ्युदयस्तत्त्वज्ञानं निःश्रेयसमात्यन्तिकी दुःखनिवृत्तिः तदुभयं यतः स धर्मः। सच प्रवृत्तिनिवृत्तिलक्षणभेदात् द्विविधः। यागादिः स्वर्गफलः प्रवृत्तिरूपः, भगवदर्पणादिसन्न्यासादिस्वरूपो निवृत्तिरूपः। क्वचित्तु "अयन्तु परमो धर्मो यद्योगेनात्मदर्शनम्" इत्यादिनात्मसाक्षात्कारोऽपि धर्मपदेनोक्त इति दिक्।

(का०) अधर्मो नरकादीनां हेतुर्निन्दितकर्मजः

(मु०) अधर्म इति। नरकादिसकलदुःखानां नारकीयशरीरादीनां च साधनमधर्म इत्यर्थः।

[का०] प्रायश्चित्तादिनाश्योऽसौ जीववृत्ती त्विमौ गुणौ१६४

(मु०) तत्र प्रमाणमाह—प्रायश्चित्तेति। यदि ह्यधर्मो न स्यात्तदा-प्रायश्चित्तादिनाश्यत्वं न स्यात्। नहि तेन ब्रह्महननादीनां नाशः प्रतिबन्धो वा विधातुं शक्यते तस्य पूर्वमेव विनष्टत्वादिति भावः॥ जीवेति। ईश्वरस्य धर्माधर्माभावादिति भावः॥१६३॥

(प्र० टी०) अधर्मं निरूपयति—परममूले "अधर्म"इति। "निन्दितकर्मज"इति—वेदादिशास्त्रनिषिद्धाभक्ष्यभक्षणागम्यागमनापेयपानलक्षणेभ्यः कर्मभ्यो जायत इत्यर्थः।

तं प्रमाणेन साधयति—"प्रायश्चित्ते"ति। असावधर्मः प्रायश्चित्तेन मन्वादिधर्मशास्त्रोपदिष्टपापनिवर्त्तकप्राजापत्यादिकर्मविशेषेण नाश्यः। आदिना ज्ञानभोगादिसमुच्चयः। "जीवे"ति—जीवात्ममात्राधाराविमौ गुणौ स्तः। "निषिद्धक्रियाजन्यो गुणविशेषो ऽधर्म" इति तु फलितम्॥ १६३॥

का० इमौ तु वासनाजन्यौ ज्ञानादपि विनश्यतः।

(मु०) इमौ धर्माधर्मौ। वासनेति। अतो ज्ञानिना कृते अपि सुकृतदुष्कृतकर्मणी न फलायालमिति भावः। ज्ञानादपीति। अपिना भोगपरिग्रहः। ननु तत्त्वज्ञानस्य कथं धर्माधर्मनाशकत्वं "नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि" इति वचनविरोधात्। इत्थं च तत्त्वज्ञानिनां झटिति कायव्यूहेन सकलकर्मणां भोगेन क्षय इति चेन्न, तत्र भोगस्य वेदबोधितनाशकोपलक्षकत्वात्, कथमन्यथा प्रायश्चित्तादिना कर्मणां नाशः। तदुक्तम्—ज्ञानाग्निः सर्वकर्माणीत्यादिना। क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे इति।

ननु तत्त्वज्ञानिनस्तर्हि शरीरावस्थानं सुखदुःखादि च न स्याज्ज्ञानेन च सर्वेषां कर्मणां नाशादिति चेन्न, प्रारब्धेतरकर्मणामेव नाशात्। तत्तच्छरीरभोगजनकं हि यत्कर्म तत्प्रारब्धं तदभिप्रायमेव नाभुक्तमिति वचनमिति॥

(प्र० टी०) अधर्मस्य नाशकान्तरमप्याह—"ज्ञानादपी"ति। "वासनाजन्या"विति कथनेन ईश्वरे मिथ्याज्ञानजन्यवासनाविरहान्न धर्मादेरुत्पत्ति"रिति भावः। शङ्कते—"नन्वि"ति समाधत्ते—"इति चेन्ने"ति "वेदबोधिते"ति—"नाऽभुक्त"मित्यादिवाक्ये भोगपदं वेदबोधितनाशकहेतूपलक्षकमिति भावः। विपर्यये बाधकमाह—"कथमन्यथे"ति। अन्यथा = उपलक्षकत्वाभावे। "सर्वकर्माणी"ति—

सर्वकर्मजन्यादृष्टानीत्यर्थः। भस्मसात्कुरुते = नाशयतीत्यर्थः। स्मृतिं दर्शयित्वा श्रुतिं दर्शयति--"क्षीयन्त"इति। शङ्कते—"ननु तत्त्वज्ञानिन"इति। समाधत्ते—"नेति"। प्रारब्धभिन्नकर्मणां सञ्चितानामेव ज्ञानेन नाशो ननु प्रारब्धस्यापीति। "तदभिप्रायमेवे"ति—प्रारब्धकर्माभिप्रायमेवेत्यर्थः। अत्र बहुवक्तव्यं ग्रन्थ गौरव-भयान्नोक्तम्।

(का०) शब्दो ध्वनिश्च वर्णश्च मृदङ्गादिभवो ध्वनिः ॥१६४॥
कण्ठसंयोगादिजन्या वर्णास्ते कादयो मताः
सर्वः शब्दो नभोवृत्तिः श्रोत्रोत्पन्नस्तु गृह्यते ॥१६५॥
वीचीतरङ्गन्यायेन तदुत्पत्तिस्तु कीर्तिता।

(मु०) शब्दं निरूपयति--शब्द इति। नभोवृत्तिराकाशसमवेतः। दूरस्थशब्दस्याग्रहणादाह श्रोत्रेति। ननु मृदङ्गाद्यवच्छेदेनोत्पन्नेशब्दे श्रोत्रे कथमुत्पत्तिरत आह। वीचीति। आद्यशब्दस्य बहिर्दशदिगव-च्छिन्नोऽन्यः शब्दस्तेनैव शब्देन जन्यते तेन चापरस्तद्व्यापकः। एवं क्रमेण श्रोत्रोत्पन्नो गृह्यते इति।

(का०) कदम्बगोलकन्यायादुत्पत्तिःकस्यचिन्मते ॥१६६॥

(मु०) कदम्बेति। आद्यशब्दाद्दशदिक्षु दश शब्दा उत्पद्यन्ते। तैश्चा-न्ये दश शब्दा उत्पद्यन्त इति भावः। अस्मिन्मते गौरवादुक्तं कस्यचि-न्मत इति ॥ १६४ ॥ १६५ ॥ १६६ ॥

(प्र० टी०) "शब्द"इति। "श्रोत्रग्राह्यत्वे सति गुणत्वं" शब्दस्य लक्षणमि-त्यर्थः। स द्विविधः ध्वनिवर्णभेदादित्याशयेनाह—"ध्वनिश्चे"ति। ध्वनिर्नाम यो दूरादाकर्णयतो वर्णविशेषमनधिगच्छतः कर्णपथमवतरति, प्रत्यासीदतश्च तारत्वादि-विशेषमवगमयति" इति शारीरकभाष्यव्याकर्त्ता श्रीवाचस्पतिमिश्रः। प्रतीतपदा-र्थको लोके ध्वनिः शब्द" इति महाभाष्यकारः। ध्वनेरुत्पत्त्यादिप्रकारादिकमुक्तं "शारदातिलके"—

"सा प्रसूते कुण्डलिनी शब्दब्रह्ममयी विभुः।
शक्तिं ततो ध्वनिस्तस्मात् नादस्तस्मान्निरोधिका ॥
ततोऽर्धेन्दुस्ततो बिन्दुस्तस्मादासीत्परा ततः।
पश्यन्ती मध्यमा वाचा वैखरी शब्दजन्मभूः" ॥ इति।

भर्तृहरिप्याह वाक्यपदीये—

स्फोटस्य ग्रहणे हेतुः प्राकृतो ध्वनिरिष्यते।
स्थितिभेदे निमित्तत्वं वैकृतः प्रतिपद्यते ॥ इति।

अत्रायं विवेकः "स्फोटस्याभिव्यक्तौ प्राकृतस्य ध्वनेः कारणत्वम्, चिर-चिरतर-कालस्थितौ तु प्राकृतध्वनिजातवैकृतध्वनेः कारणत्व"मिति शब्दार्थरत्ने । "ध्वनिः काव्यविशेष" इत्यालङ्कारिकाः । सर्वथाऽपि न्यायमतवर्णात्मकशब्दभिन्नः (वैखरीभिन्नः) तारत्वादिधर्मवानभिघातादिजन्यः शब्दविशेषो "ध्वनि"रिति ज्ञेयम् ।

अत्रेदमवधार्यम्—शब्दोत्पत्तिं द्विधा स्वीकुर्वन्ति तार्किकाः । कदम्बमुकुलन्यायेन जलतरङ्गन्यायेन वा । आद्यन्यायेन तु यथा कदम्बगोलकं युगपद्विकसितं, तत्पत्राणि चतुर्दिक्षु विस्तृतानि तथा एकशब्द उत्पन्नो दशदिक्षु दशशब्दानुत्पादयति, तेपि दशदिक्षु दश शब्दानुत्पादयन्त्येवं दश दिक्षु व्याप्ताः शब्दाः । द्वितीयेन न्यायेन तु प्रथमः शब्दः प्रथमक्षण उत्पन्नो द्वितीयक्षणे शब्दान्तरमुत्पादयति तृतीयक्षणे तस्यापि ध्वंसः । एवं सोपि द्वितीयः शब्दः प्रथमक्षणे उत्पन्नो द्वितीयक्षणे शब्दान्तरमुत्पादयति तृतीयक्षणे तस्यापि ध्वंसः । एवं पूर्वपूर्वशब्दस्योत्तरोत्तरशब्दजनकत्वम् । उत्तरोत्तरशब्दस्य पूर्वपूर्वशब्दनाशकत्वम् । अन्त्यशब्दस्योपान्त्यशब्दनाशकत्वमुपान्त्यशब्दस्य चान्त्यशब्दनाशकत्वं परस्परं तयोर्नाश्यनाशकभावः सुन्दोपसुन्दन्यायादिति । अत एव नव्यनैयायिकैर्जगदीशभट्टाचार्यादिभिरन्त्यशब्दस्याप्रत्यक्षता स्वीकृता तस्योत्पत्तिनाशमन्तराऽन्यव्यापाराभावात् । परन्त्वेवंरीत्याऽन्त्यशब्दस्य द्वितीयक्षण एव ध्वंसस्य स्वीकर्त्तव्यत्वेन योग्यविभुविशेषगुणानां तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वमिति नियमस्य भङ्गप्रसङ्गः । एतन्नियमपरिपालनार्थञ्च वेदान्तिभिरुपान्त्यशब्दनाशस्यान्त्यशब्दनाशकत्वं स्वीकृतं, तथाच प्रथमक्षणे ऽन्त्यशब्द उत्पन्नो द्वितीयक्षणे उपान्त्यशब्दस्य नाश स्तृतीयक्षणेऽन्त्यशब्दस्य नाशः । ननु—यत्रैकोवर्णात्मक शब्दस्तत्र द्वितीयवर्णरूपशब्दाभावात्तस्य नित्यत्वं स्यादिति चेन्न —कण्ठवायुसंयोगाद्दलद्वयविभागाद् भेरीदण्डसंयोगाद्वा कदम्बमुकुलन्यायेन वीचीतरङ्गन्यायेन वा अनेकशब्दोत्पत्तिस्वीकारात्, एकशब्दस्याप्रसिद्धेः । अत एव कर्णविवरोत्पन्नशब्दस्यैव प्रत्यक्षत्वं नतु भेरीदेशोत्पन्नप्रथमशब्दस्य प्रत्यक्षता तार्किकैः स्वीकृतेति भावः ।

**(का०) उत्पन्नः को विनष्टः क इति बुद्धेरनित्यता ।**

( मु० ) ननु शब्दस्य नित्यत्वादुत्पत्तिकथनमसङ्गतमत आह—उत्पन्न इति । शब्दानामुत्पादविनाशप्रत्ययशालित्वादनित्यत्वमित्यर्थः ॥

( प्र० टी० ) शब्दनित्यत्ववादिना मीमांसकस्य मतं खण्डयति—"उत्पन्नः क" इति । स्पष्टम् । तथाच पारमर्षं सूत्रम्—"आदिमत्त्वादैन्द्रियकत्वात्कृतकवदुपचाराच्च" ( न्या० २ । २ । १३ ) ऐन्द्रियकत्वञ्च—"सामान्यवत्त्वे सति बहिरिन्द्रियजन्यलौकिकप्रत्यक्षविषयत्वम् । तेन सामान्यादौ न व्यभिचार इति भावः । अधिकन्तु भाष्यादौ द्रष्टव्यम् ।

**(का०) सोऽयं क इति बुद्धिस्तु साजात्यमवलम्बते ॥१६७॥**

(मु०) ननु स एवायं ककार इत्यादिप्रत्यभिज्ञानाच्छब्दानां नित्यत्वम्, इत्थं

चोत्पादविनाशबुद्धिर्भ्रमरूपैवेत्यत आह। सोऽयं क इति ॥ साजात्यमिति । तत्र प्रत्यभिज्ञानस्य तत्सजातीयत्वं विषयो न तु तद्व्यक्त्यभेदो विषयः उक्तप्रतीतिविरोधात् । इत्थं च द्वयोरपि प्रतीत्योरभ्रमत्वमिति ॥१६७॥

( प्र० टी० ) प्रत्यभिज्ञाबलाच्छब्दस्य नित्यत्वमस्तीत्यपि नेत्याशयेनाह---"सोऽयं क" इति । "साजात्य" मिति पदस्यार्थः । "तत्सजातीयत्वमि"ति । "द्वयोरपीति---उत्पाद्यप्रतीतिप्रत्यभिज्ञानयोरित्यर्थः ॥ १६७ ॥

(का०) तदेवौषधमित्यादौ सजातीयेऽपि दर्शनात् ।
तस्मादनित्या एवेति वर्णाः सर्वे मतं हि नः ॥१६८॥

इति श्रीविश्वनाथपञ्चाननकृतकारिकावली समाप्ता ॥

---

ननु-सजातीये सोऽयमिति प्रत्यभिज्ञा कुत्र दृष्टेत्यत आह--यदौषधं मया कृतं तदौषधमन्येनापि कृतमित्यादिदर्शनादिति भावः ॥ १६८ ॥

इति श्रीमहामहोपाध्यायविद्यानिवासभट्टाचार्यसुतश्रीविश्वनाथपञ्चानन-
भट्टाचार्यविरचितायां सिद्धान्तमुक्तावल्यां गुणनिरूपणम् ॥

॥ समाप्तश्चायं ग्रन्थः ॥

---

( प्र० टी० ) साजात्ये प्रत्यभिज्ञामुपपादयति--"तदेवौषधमि"ति । स्वमतमुपसंहरति-"तस्मादनित्या" इति । व्याख्यात प्रायमधस्तात्। आदिना दीपकलिकादीनां परिग्रहः । तत्रापि 'सैवेयं दीपकलिका" इत्याकारा प्रतिभिज्ञा न व्यक्त्यभेदनियन्धना किन्तु साजात्यविषयपरैवेति शम ॥ १६८ ॥

व्योमवस्वङ्कचन्द्रेऽब्दे ( १९८० ) वैक्रमे युवनामके ।
माघे शुक्लदले कुम्भ-सङ्क्रान्त्यां भौमवासरे ॥ १ ॥
पञ्चमे जार्जभूपेन्द्रे भारते सति शासति ।
मुक्तावल्याः प्रभां टीकां पिपर्मि स्म महाशयाः ! ॥ २ ॥
अल्पप्रज्ञा अपि जना एतामाश्रित्य पाठमे ।
अतिप्रज्ञा भविष्यन्ति तेन तुष्यतु माधवः ॥ ३ ॥

इतिश्रीमहाकविभगवद्दत्तश्रीन्यायाम्भोनिधि-उष्णाकरायशिष्येण श्रीपण्डित-
—देवीदासतनुजनुषा सती–विष्णुदेवीगर्भजेन स्यालकोटवास्तव्य-श्री-
जैनन्यायविशारद-कवितार्किक-दर्शनाचार्यनृसिंहदेवशास्त्रिणा
विरचितायां सिद्धान्तमुक्तावल्याः प्रभाख्यायां
व्याख्यायां गुणनिरूपणम् ।

समाप्तश्चायं ग्रन्थः ।

समाप्ता च गुणग्रन्थनाम्नी अष्टमी मुक्ता ।

# विशिष्ट प्रकाशन

(१) साङ्ख्यकारिका  मू० १००-००

स्वामीनारायण भाष्य, गौडपादाचार्य भाष्य, एवं श्रीकृष्ण वल्लभाचार्य विरचित तत्वकौमुदी तथा किरणावली टीकाओं सहित

(२) भुवनेश लौकिक न्याय साहस्री  मू० ८०-००

पण्डित ठाकुरदत्त शर्मा द्वारा एक हजार न्यायों का संग्रह

(३) वेदस्तुतिः  मू० २०-००

श्रीधरी व्याख्या एवं श्रीधरीप्रकाश व्याख्या सहित

(४) दीक्षाप्रकाशिका  मू० १५-००

(५) यज्ञकर्म पद्धति  मू० २५-००

डा० उमेश मिश्रकृत

(६) ईशाद्यष्टोत्तरशतोपनिषद  मू० ५०-००

१०८ उपनिषद मूल

श्रीमत्पतञ्जलिमहर्षिप्रणीतम्

**योगदर्शनम्**

पण्डित श्रीकृष्ण वल्लभाचार्य

विचरित "किरण" सहितम

खण्डेलवाल प्रेस, मानमन्दिर, वाराणसी